॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

काशिकराजकीयप्रधानपाठशालायां आङ्गलसंस्कृताविभागे अध्यापकेन जोश्युपाह्वविश्वनाथ शास्त्रिण ।

संशोधितम् ।

इत्युपाह्व प्रोभूदत अग्निहोतरी संशोधिताद्वितीयावृत्तिः

---

# SHRAUTAPADARTHANIRVACHANAM.

## A DICTIONARY OF SACRIFICIAL TERMS,

edited by

VISHWANATH SHASTRI,

*2nd Edition 1919.*

Revised by

PT. PROBHUDATT AGNIHOTRI,

BENARES.





Printed and Published by H. N. Bagchi,
at the Medical Hall Press, Benares Cantt.,
for E. J. LAZARUS & Co., Proprietors.

 1919. [*2nd edition, 1,000* copies.

Price Rs. 6. [ मूल्यम् ६)

॥ श्रीः ॥

# अथाकारादिक्रमेण पदार्थनामानि ।

॥ इति ॥

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

---

१ इष्टिशब्द ऋत्विक्चतुष्टयसंपाद्यसपत्नीकयजमानकर्तृककर्मनामधेयम् ॥

२ तत्र यजते ऽसौ यजमान इतिविग्रहे यजमानशब्दः स्वार्थकर्मानुष्ठानकर्तृवाचकः ॥ *

३ ऋत्विङ्मध्ये यजमानो यं पूर्वं वृणीते कर्मण आरम्भसमाप्ती च यः करोति अध्वरं यज्ञं युनक्तीतिविग्रहेण † सोऽध्वर्युरित्युच्यते ॥

४ कर्मकाले यजमान आहवनीयस्य दक्षिणत उदङ्मुख उपविशतितस्य पूर्वस्यां दिशि तत्रैवोदङ्मुखो दक्षिणोत्तरिणोपस्थेन ‡ दक्षिणेऽङ्के उत्तानं सव्यं पाणिं प्रागग्रं निधाय तदुपरि तथैव न्यञ्चं § दक्षिणं

---

* कर्म जन्य फल भोक्तेति यावत् ।

† अयं विग्रहो यास्काचार्येण प्रदर्शितः । अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वाऽपि वाऽधीयाने युरुपबन्धोऽध्वर इति यज्ञ नाम ध्वरति हिंसाकर्मातत्प्रतिषेध इति । इदमयुक्तमित्यपरे यजमानस्याध्वरमिच्छतीत्यर्थे छन्दसिपरेच्छायामपि क्यज्वक्तव्य इति वार्तिकेनाध्वरशब्दात्क्यचि क्याच्छन्दसीत्यनेनोप्रत्यये ऽतो लोपे कव्यध्वरपृतनस्यर्चिलोप इति सूत्रेणाध्वराकारस्य लोपेऽध्वर्युशब्दः सिद्धो भवतीति कव्यध्वरेतिसूत्रस्योदाहरणमध्वर्युं वा मधुपाणिमिति प्रदर्शयतः कौमुदीकारस्य संमतम् ।

अथवा कव्यध्वरेति सूत्रे मनोरमायां "मृगय्वादिगणेऽप्यध्वर्युशब्दः पठ्यते तत्र व्युत्पत्त्यन्तरं बोध्य" मित्युक्तेर्मृगं यातीतिवद् अध्वरं यातीत्यध्वर्युशब्दः कुप्रत्ययान्तः । तत्राध्वराकारलोपोपि निपातनाद्विति, उभयथापि मूलप्रदर्शितव्युत्पत्त्याऽध्वर्युशब्दस्य सिद्धेः ॥ चरणव्यूहे तु "मन्त्रब्राह्मण कल्पानामङ्गानां यजुषामृचाम् । षण्णां यः प्रविभागज्ञः सोऽध्वर्युः कृत्स्नमुच्यते" इत्युक्तम् ।

‡ गार्हपत्यादिषु प्रायश्चित्ताहुतिदातृत्वं ब्रह्मणः केवलं बौधायनीयानामेव न त्वापस्तम्बक्रियायकेशिप्रभृतिसूत्रानुसारिणामिति सामान्य ब्रह्मलक्षणे चिन्त्यमेतत् ॥ कातीयानां त्वनादिष्टहोममात्रं ब्रह्मकर्तृकम् ।

§ दक्षिणं च तदुत्तरं च दक्षिणोत्तरं तद्वता जानुना । उत्तरं सव्यजानोरुपरिस्थापितम् ॥

निधाय य आस्ते सर्वदा कर्माणि दत्तचित्तः प्रणीताप्रणयनादौ * अभ्यनुज्ञाकर्ता ऋग्यजुःसाममन्त्रकर्मभ्रेषे गार्हपत्यदक्षिणाग्न्याहवनीयेषु क्रमेण प्रायश्चित्ताहुतिहोमकर्ता † च स ब्रह्मपदवाच्यः ॥

५ यस्तु वेद्युत्तरश्रोण्युत्तरतः प्राङ्मुखो दक्षिणोत्तरिणोपस्थेन उपविशति अवकाशवदङ्गुली संहितौ पाणी हृदयदेशे अङ्के वा धारयति सामिधेनीः प्रयाजान् आज्यभागयाज्यापुरोनुवाक्याः सूक्तवाकं शंयुवाकं ‡ च पठति च स होतृपदवाच्यः ॥

६ यश्च ऊर्ध्वाग्रमसिवत् स्फ्यं § दक्षिणहस्ते धारयन् उत्करदेशे च दक्षिणामुखस्तिष्ठति अध्वर्युणा आश्रवणे कृते अस्तुशब्दपूर्वकश्रौषट्शब्दोच्चारणरूपप्रत्याश्रवणं करोति स आग्नीध्र इति अग्नीदिति चोच्यते ।

७ यजमानस्य स्त्री यजमानवद्यज्ञफलभोक्त्री गार्हपत्यस्य पश्चिमदक्षिणे देशे पूर्वमुदङ्मुखी ऊर्ध्वजानुरुपविशति ततः पयस्वत्याचमनादि गार्हपत्ये समिदाधानान्तं कर्म करोति ततस्तृणनिरसनं कृत्वा तत्रैवोर्ध्वजानुः प्राङ्मुख्युपविशति पत्नीसंयाजप्रचारानन्तरं अवभृथस्थानीये अग्निहोत्रहवणीजलनिनयने पत्न्यञ्जलौ योक्त्र ‖ माधाय होत्रा कृते स्वयं पूर्ववत्समिदाधानं पुनःपरिषेकान्तं कृत्वा पूर्वं यथा वेद्युत्करयो ¶ र्मध्यमार्गेण प्रविष्टा तथा तेनैव मार्गेण विहारान्निर्गच्छति सा पत्नी भवति ॥

८ यागार्थं यत्र यत्र यावती भूमिः श्रुत्यादिभिः परिमाणविशेषविशिष्टत्वेन विहिता तत्र तत्र तावती भूमिः विहारपदवाच्या ॥

९ परस्परसंश्लिष्टानां चतुर्दशसंख्याकानां अणुनामकानां धान्यविशेषाणां यत्परिमाणं तद्, अथवा कोशसंस्थानवत् स्थापितानां पृथुप्रदेशेन संश्लिष्टानां चतुस्त्रिंशत्संख्याकानां तिलानां यत्परिमाणं तदङ्गुलपदवाच्यं परिमाणमिति बौधायनशुल्बसूत्रे प्रसिद्धम् ॥

१० पञ्चदशाङ्गुलं पदमुच्यते ॥

११ + शुद्धे रमणीये देशे समचतुरस्रा दीर्घचतुरस्रा वा अग्निहोत्र-

---

* न्युब्जम् । † पश्य वाक्यम् (५८) । ‡ पश्य । १८५ । २४७ । २३३ । २५७ । § पश्य । ३४ । ‖ पश्यवाक्यम् ६५ । ¶ पश्य वाक्ये, ३२ । २५ ।

+ कातीयानां दर्शपूर्णमास विहार निर्माणप्रकारः । गार्हपत्यस्य (प्रत्यक्स्थस्य) मध्यादाहवनीय स्य (प्राक्स्थस्य) मध्यपर्यन्तमन्तरमेकादश द्वादश वा प्रक्रमाः

होमशाला कर्तव्या वास्तुशास्त्रोक्तरीत्या तस्याः प्राच्यां दक्षिणस्यां च दिशि एकैकं द्वारं कार्यं सा अग्निहोत्रशालेति गीयते ॥ †

१२ तस्यां शालायां पश्चिमभागे मध्यदेशे सप्तविंशत्यङ्गुलव्यासं मण्डलाकारं गार्हपत्यायतनं भवति ॥

१३ ‡ तस्य बाह्यतः शुद्धमृत्तिकानिर्मिता षडङ्गुलपरिमितोच्छ्राया

---

प्रक्रमो द्वादशाङ्गुल इति परिशिष्टे । प्रक्रमः पदमित्यनर्थान्तरम् । गार्हपत्य कुण्डं सार्द्धत्रयोदशाङ्गुलमितकर्कटकभ्रामणेन वृत्तं कार्यम् । आहवनीयस्यतु समचतुरस्रं तस्य व्यासविस्तृती चतुर्विंशाङ्गुलमिते । गार्हपत्याहवनीययोर्मध्ये यावतीरज्जुस्तावत्या रज्ज्वाः षड्भागान्कृत्वा स्वषष्ठभागं तस्यां संयोजयेत् एवं सप्तभागाः समाजाताः । ततः सप्तमभाग सहितां रज्जुं त्रेधाविभज्य तृतीयांश द्वयेऽपि चिह्नं कृत्वा प्रान्तयोः पाशौ कृत्वा गार्हपत्यमध्यस्थित शङ्कौ आहवनीयमध्यस्थित मध्यशङ्कौ च पाशौ दत्वा गार्हपत्यात्प्रथमचिह्ने दक्षिणस्यां कर्षिते तत्र चिह्नं कार्यम् ( अयं दक्षिणाग्नि कुण्डमध्यः ) तच्चिह्नादुत्तर भागे सार्द्धनवाङ्गुल प्रदेशे शङ्कुर्देयः । तत्र पूर्वापरं रज्जुर्देया । शङ्कुसकाशाच्चवाधिकैकोनविंशाङ्गुलैर्भ्रमणं कार्यमुराद्धस्य त्यागस्तेन अर्द्धचन्द्राकारो दक्षिणाग्निखरः सम्पद्यते । आहवनीय मध्यशङ्कोः सकाशात्पश्चिमस्यां त्र्यरत्निपरिमिते देशे शङ्कुर्देयः । तत्सकाशाद्दक्षिणस्यामुत्तरस्यां द्व्यरत्निपरिमितेदेशे शङ्कुर्देयः । आहवनीयमध्यशङ्कुसकाशात्सार्द्धारत्निपरिमितेदेशे दक्षिणत उत्तरतश्च शङ्कुर्देयः । चतुष्कोणस्थ शङ्कुषुसूत्रार्पणाद्विषम चतुरस्रावेदिः सिद्ध्यति । ततः प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यन्तं कोणद्वयवेष्टनेन सूत्रं प्रदेयतस्यार्द्धं कर्तव्यम् । अर्द्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य आग्नेयस्थशङ्कुवेष्टनेन दक्षिणतः, एवमीशान कोणस्थशङ्कुवेष्टनेनोत्तरतश्च शङ्कुः पृथक्पृथग्देयः । (इदमेव सङ्पक्षमध्यम्) ताभ्यां शङ्कुभ्यां दलीभूतरज्जु चतुर्थांशेन वेदिमध्ये सङ्पक्षौ (अर्द्धचन्द्राकारौ) कार्यौ । तत्पश्चात्द्व्यशाङ्गुलमवशिष्टाभूमिः श्रोणिरित्यभिधीयते । पुरस्तादाहवनीयं यावदंस इत्यभिधीयते । तत आहवनीयमध्यात्प्रथमचिह्ने उत्तरस्यां कर्षिते तत्र चिह्नं कार्यं ( अयमुत्करमध्यः ) तच्चिन्हात् त्र्यङ्गुलकर्कटभ्रामणेन वृत्तउत्करः कार्यः । अयं च द्व्यङ्गुलखातो भवति । तत अग्निकोणादारभ्य ईशानकोणपर्यन्तं वेद्यां संयोज्य (मिश्रयित्वा) सार्द्धत्रिहस्ता वेदिः सम्पादनीया । सङ्पक्षौ वर्जयित्वा वेद्यां सर्वत्र त्र्यङ्गुलः खातो विधेयः । कुण्डेषु मेखलाद्वा दशाङ्गुलोच्चा चतुरङ्गुलविस्तारा एकैव भवतीति ।

† कातीयानां तु "विंशत्यरत्निः शालास्यात्तदर्धेन तु विस्तृता । त्रिमितं च तुरसंस्याद्वशारत्नि प्रमाणत" इति परिशिष्टोक्तपरिमाणमर्थात्परिमाणं वाऽन्यगारद्वयं पूर्वापरं कृत्वा पूर्वेऽन्यगारे पूर्वपश्चिमेचेति द्वारद्वयं, द्वितीयेऽग्यगारे पूर्वदक्षिणे चेति द्वारद्वयं कुर्यात् ।

‡ कातीयानां त्वेकैव मेखलेत्युक्तम् ।

षडङ्गुलपरिमितायामा प्रथमा मेखला भवति ॥

१४ तस्या उपरि पूर्वोक्तोच्छ्राया चतुरङ्गुलपरिमितायामा द्वितीया मेखला भवति ॥

१५ तदेतन्मेखलाद्वयसंस्थानं कुण्डमित्युच्यते ॥

१६ गार्हपत्यायतने स्थापितोऽग्निर्गार्हपत्यनामको गृहपतिना यजमानेन संयुक्त इतिव्युत्पत्त्या गृहपतिना संयुक्ते ञ्य इतिसूत्रेण ञ्य प्रत्ययात् ॥

१७ गार्हपत्यस्य मध्यादारभ्य पूर्वस्यां दिशि ऋजुत्वेन नीयमानं आहवनीयमध्यपर्यन्तं सूत्रं पृष्ठ्यासूत्रमित्युच्यते ॥

१८ तादृशसूत्रस्य आधारभूतत्वेनोपलक्षिता भूमिगता रेखा पृष्ठ्या इति व्यवह्रियते ॥

१९ पृष्ठ्यासूत्रस्य यस्मिन् देशे पूर्वोऽन्तःपतति स आहवनीयमध्यो भवति। आहवनीयमध्यशङ्कोः पूर्वस्यां दिशि एकः शङ्कुस्तथा पश्चिमायां दिशि च एकः शङ्कुः प्रादेशमात्रे देशे निखेयः । अरत्निद्वयायामा उभयतःपाशा रज्जुः कर्तव्या तस्या एकस्मात्पाशादारभ्य द्वादशाङ्गुलमिते देशे किंचिद्वर्णचिह्नं कार्यं तथा अष्टादशाङ्गुलमिते भागे चिह्नं कर्तव्यम्। पूर्वनिखातपाश्चात्यपौरस्त्यशङ्क्वोः पाशौ प्रतिमोचनीयौ। तत्र चिह्नसमीपवर्ती पाशः पाश्चात्यशङ्कौ निधेयः । ततो द्वितीयचिह्ने सूत्रं गृहीत्वा दक्षिणत आकर्षणं कार्यं यस्मिन् देशे प्रथमलक्षणसंबन्धो भवेत्स आहवनीयायतनस्य नैर्ऋतकोणः । एवमुत्तरतो द्वितीयलक्षणे धृत्वा सूत्रमाकृष्य प्रथमं चिह्नं यत्र पतेत्स आहवनीयवायव्यकोणः । ततः तयोरेव शङ्क्वोः तस्या एव रज्जोः पाशौ विपरीतौ निधाय अष्टादशाङ्गुलमिते चिह्ने रज्जुं धृत्वा दक्षिणत आकृष्य प्रथमचिह्नपातस्थानमाहवनीयस्याग्नेयकोणःएवमेवोत्तरतः द्वितीयचिह्ने धृत्वा आकृष्य प्रथमलक्षणपातस्थानमाहवनीयस्यैशानः कोणः । एवं रीत्या संपन्नं चतुष्कोणमाहवनीयायतनमुच्यते ॥

२० तस्य बाह्यतः गार्हपत्यकुण्डवद् द्विमेखलं चतुरस्रमाहवनीयकुण्डं भवति ॥

२१ तन्मध्ये स्थापितोऽग्निः आहूयते ऽस्मिन्नितिव्युत्पत्त्या मुख्य* होमाधारत्वाद् आहवनीयपदवाच्यः ॥

---

* प्रधानः ।

२२ पृष्ठ्यासूत्रस्य पञ्चमं षष्ठं वा भागं आगन्तुकं अधिकं पृष्ठ्यासूत्रे संयोज्य उभयतःपाशां रज्जुं कृत्वा पुनः सर्वस्य सूत्रस्य पञ्चभागान् कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ प्रतिमुच्य पञ्चधा विभाजितायां रज्जोरपरस्मादन्ताद् भागद्वये गते सति चिह्नं कृत्वा द्वितीयं पाशं आहवनीयमध्यशङ्कौ नियोज्य चिह्ने सूत्रं धृत्वा दक्षिणत आकृष्य तत्तत्संपातस्थाने शङ्कुं निहन्यात् । ततः पञ्चदशाङ्गुलपरिमितां रज्जुं एकतः पाशां कृत्वा तस्मिन्निहते शङ्कौ तं पाशं प्रतिमुच्य तया रज्ज्वा मण्डलं परिलिखेत् तस्य मण्डलस्यान्तररेखायाः पूर्वनिहितशङ्कोश्च मध्ये अन्यं शङ्कुं निहन्यात् । तस्या एव रज्ज्वाः पाशं तस्मिन् शङ्कौ प्रतिमुच्य पञ्चदशाङ्गुलपरिमितया तयैव रज्ज्वा अन्यन्मण्डलं परिलिखेत् । अस्य मण्डलस्य रेखा पूर्वकृतमण्डलरेखाया उपरि दक्षिणभागे उत्तरभागे च पतति तयोः संसर्गस्थानयोरेकं सूत्रं धृत्वा पश्चिमपूर्वायतसूत्रकृतरेखात उत्तरतो विद्यमानमण्डलभागं त्यजेत् मण्डलस्य दक्षिणतो विद्यमानो भागः पूर्वकृतमण्डलस्य च दक्षिणो भागः शूर्पाकारः संपद्यते स दक्षिणाग्नेरायतनं भवति ॥

२३ तस्य बाह्यतः गार्हपत्यकुण्डवद् द्विमेखलं शूर्पाकारं दक्षिणाग्निकुण्डमित्युच्यते ॥

२४ तन्मध्ये स्थापितोऽग्निर्दक्षिणाग्निरन्वाहार्यपचन इति चोच्यते ॥

२५ पूर्वं पञ्चधा विभाजितायां रज्जोर्दक्षिणाग्न्यायतनसाधने यः पाशो गार्हपत्यमध्यशङ्कौ प्रतिमुक्तस्तं पाशं आहवनीयमध्यशङ्कौ प्रतिमुच्य आहवनीयमध्यशङ्कुपाशं गार्हपत्यमध्यशङ्कौ प्रतिमुच्य पञ्चधा विभाजितरज्जोः द्वयोर्भागयोर्गतयोर्यत्पूर्वं चिह्नं कृतं तत्र सूत्रं धृत्वा उत्तरत आकर्षणीयं चिह्नसंस्पृष्टा भूमिः स्तम्बयजुर्हरणसमये दर्भशकलानि मृत्तिकासहितानि यथा क्षिप्तेऽवकाशे लोके प्रक्षिप्यते तथा विधिवशात् तस्यां भूमौ प्रक्षिप्यन्ते अत उत्किरन्त्यस्मिन् वेद्यादिसंबन्ध्यवकरादिकमिति व्युत्पत्त्या उत्कर इति गीयते ॥

२६ तथास्थितं तदेव सूत्रं तस्मिन्नेव चिह्ने धृत्वा दक्षिणत आकर्षणीयं चिह्नसंस्पृष्टा भूमिः यागकाले यजमानस्य तत्रोपवेशनविधानाद्यजमानस्थानमित्युच्यते ॥

२७ आहवनीयायतनात्पश्चिमदिशि षण्णवत्यङ्गुलपरिमिते देशे शङ्कुर्निखातव्यः तद्दक्षिणतो द्वात्रिंशदङ्गुलपरिमिते देशे एकः शङ्कुर्निखेयः तथैवोत्तरतस्तावत्येव देशे द्वितीयः शङ्कुर्निखेयःदक्षिणशङ्कुस्थानं दक्षिणश्रोणिरित्युच्यते ॥

२८ उत्तरशङ्कुस्थानमुत्तरश्रोणिरिति गीयते ॥

२९ आहवनीयमध्यशङ्कोर्दक्षिणतश्चतुर्विंशत्यङ्गुलपरिमितदेशे एकः शङ्कुर्निखेयः तथैवोत्तरतस्तावत्येव देशे अपरः शङ्कुर्निखेयः दक्षिणशङ्कुस्थानं दक्षिणांस इत्युच्यते ॥

३० उत्तरशङ्कुस्थानमुत्तरांस इति गीयते ॥

३१ ततः षण्णवत्यङ्गुलपरिमितां रज्जुं तावदागन्तुकभागामुभयतःपाशां कृत्वा मध्ये लक्षणं कृत्वा दक्षिणश्रोण्यंसशङ्क्वोः पाशौप्रतिमुच्य लक्षणे रज्जुं गृहीत्वा दक्षिणत आकृष्य शङ्कुं तत्र निहन्यात् । तत उभौ पाशौ समस्य लक्षणशङ्कौ पाशद्वयं प्रतिमुच्यरज्जुमध्येन दक्षिणश्रोणिशङ्कोरारभ्य दक्षिणांसशङ्कुपर्यन्तं लिखेत् । एवंकृते या रेखा उत्पद्यते सा वेद्या दक्षिणं पार्श्वमिति व्यवह्रियते ॥

३२ तथैव तस्या रज्ज्वाः पाशौ उत्तरश्रोण्यंसशङ्क्वोः प्रतिमुच्य रज्जुमध्येन चिह्नितेन रज्जुमुत्तरत आकृष्य चिह्नसंपातस्थाने शङ्कुं निहन्यात् तत उभौ समस्य अस्मिंश्चिहते शङ्कौ प्रतिमुच्य मध्यभागस्थचिह्नेन सूत्रं धृत्वा उत्तरश्रोणिशङ्कोरारभ्य उत्तरांसशङ्कुपर्यन्तं लेखां लिखेत् । सा लेखा वेद्युत्तरपार्श्वमित्युच्यते ॥

३३ अनया रीत्या दक्षिणोत्तरपार्श्वयुक्ता दक्षिणोत्तरश्रोणिसहिता दक्षिणोत्तरांसयुक्ता उरोरूपशरीरावयवत्वेन उपनिषद्युक्ता यागकाले दर्भैराच्छादिता आज्यवपुरोडाशादिरूपहविरासादनाश्रयभूतावेदिरित्युच्यते । तस्या बाह्यतः प्रथमा मेखला चतुरङ्गुलोत्सेधा चतुरङ्गुलायामा मृत्तिकानिर्मिता भवति तस्या मेखलाया उपरि द्व्यङ्गुलोत्सेधा द्व्यङ्गुलायामा तथैव द्वितीया मेखला भवति ॥

३४ खदिरकाष्ठनिर्मित अरत्निपरिमितो दीर्घश्चतुरङ्गुलपरिमितविस्तार आकारेण खड्गसदृशः स्फ्य इत्युच्यते ॥

३५ पुरोडाशभर्जनार्थं मृत्तिकया निर्मितानि वह्नौ परिपक्वानि द्व्यङ्गु-

लोक्तायाणि यस्मिन् पुरोडाशे यावन्ति विहितानि तानि सर्वाणि मिलित्वा गार्हपत्यपश्चाद्भूमौ गार्हपत्यायतनान्तः पश्चिमभागे वा उपधीयमानानि कपालपदवाच्यानि ॥

३६ कस्मिंश्चित्पुरोडाशे एकमेव कपालं भवति तत्र तदेकं कपालं अश्वशफपरिमाणं अश्वशफाकारं उपधीयते स च पुरोडाशः श्रुतौ एककपाल इति गीयते ॥

३७ पुरोडाशस्यानेककपालत्वे तु अश्वशफाकारता अश्वशफपरिमाणता च कपालसमूहे बोद्धव्या । तत्राष्टाकपाले प्रकृतिभूते पुरोडाशे प्रथमं कपालं चतुरस्रं मध्ये उपधीयते तस्य पुरस्ताद् द्वितीयं शफाकारतासंपादनाय अर्धचन्द्राकारं तृतीयं तु मध्यमस्य पश्चाद्द्वितीयसदृशं चतुर्थं तु मध्यमस्य दक्षिणतस्तादृशमेव पञ्चमं तु दक्षिणस्य पुरस्तादाग्नेयकोणे शफाकारतासंपत्तियोग्यं षष्ठं तु दक्षिणस्य पश्चाद् नैर्ऋतकोणे समुदितस्य शफाकारतासंपत्तियोग्यं सप्तमं तु मध्यमस्योत्तरार्धे पश्चिमभागे शफाकारतासंपत्तियोग्यं अष्टमं तु मध्यस्योत्तरार्धे पूर्वभागे एवमष्टौ कपालानि समुदितानि अश्वशफपरिमितानि अश्वशफाकाराणि भवन्ति । एवं नवकपालादिषु अष्टाकपालन्यूनकपालादिषु च कपालरचना कपालविभागश्च अश्वशफाकारतातत्परिमाणसंपत्तिसंभवेन कर्तव्यो । एते च पुरोडाशास्तावत्सु कपालेषु भर्जनीयत्वादष्टाकपालादिपदवाच्या भवन्ति ॥

३८ दैर्घ्ये प्रादेशमात्री अरत्निमात्री बाहुमात्री वा हस्त्योष्ठीत्वपक्षे अष्टाङ्गुलपरिमितबिला हंसमुखीत्वपक्षे वायसपुच्छकात्वपक्षे च पञ्चाङ्गुलपरिमितबिला चतुरङ्गुलपरिमितबिला वा बिलावशिष्टभागेन दण्डयुक्ता विकङ्कतकाष्ठेन निर्मिता अग्निहोत्रहोमसाधनत्वादग्निहोत्रं हूयतेऽनयेति करणव्युत्पत्त्याऽग्निहोत्रहवणीत्युच्यते ॥

३९ वंशनिर्मितं व्रीह्यादीनां पुरोडाशादिसंबन्धिनां निस्तुषकरणोपयोगि शूर्पमित्युच्यते ॥

४० कृष्णमृगस्य चर्म व्रीह्याद्यवघातकाले उलूखलस्याधःस्थापनोपयोगि कृष्णाजिनमिति कथ्यते ॥

४१ खादिरकाष्ठनिर्मिता षट्त्रिंशदङ्गुलपरिमितायामा अग्रभागे

अग्रा स्वङ्गुलिषु कुम्बा*ष्टकयुता तण्डुलादिपेषणकाले दृषदो ऽधस्तात्
स्थापनायोपयुज्यमाना आग्नीध्रकर्तृकदृषदुपलादिसमाहननादौ करण-
भूता शम्यापदवाच्या ॥

४२ पलाशकाष्ठनिर्मितं द्वादशाङ्गुलपरिमितोच्छ्रायं उपरितनार्धभागे बिलयुक्तं चरुपुरोडाशसंबन्धिव्रीह्यादिकण्डनोपयोगि उलूखलमित्युच्यते ॥

४३ उलूखलार्धत्रिगुणायामं खदिरकाष्ठनिर्मितं कण्डनोपयोगि मुसलमित्युच्यते ॥

४४ पाषाणमयी पेषणकाले पेषणीयद्रव्याश्रयभूता दृषदित्युच्यते ॥

४५ पाषाणनिर्मिता पेषणसाधनभूता उपला कथिता ॥

४६ पलाशकाष्ठनिर्मिता अग्निहोत्रहवणीसदृशी मुख्यहोमकरणत्वात् हूयते ऽनयेति व्युत्पत्त्या जुहूपदवाच्या ॥

४७ अश्वत्थकाष्ठनिर्मिता जुहूतुल्या उप समीपे भ्रियते ध्रियत इतिव्युत्पत्त्या होमकाले अध्वर्युणा सव्यहस्तेन होमार्थधृतदक्षिणहस्तसंबन्धिजुह्वाः समीपे धारणात् उपभृदिति भण्यते ॥

४८ खदिरकाष्ठनिर्मितः अरत्निमात्रो दीर्घः अग्रभागे अङ्गुष्ठपर्वमात्रवर्तुलबिलयुक्तः आज्यहोमादौ करणभूतः स्रवत्याज्यादिद्रव्यमस्मादिति व्युत्पत्त्या स्रुवपदवाच्यः ॥

४९ विकङ्कतवृक्षसंबन्धिकाष्ठेन निर्मिता जुहूसदृशी होमाद्यर्थं स्रुवेण गृह्यमाणस्याज्यस्याधारभूता यागसमाप्तिपर्यन्तं वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति अप्रचलिता भवतीति व्युत्पत्त्या ध्रुवापदवाच्या ॥

५० खदिरकाष्ठनिर्मितं प्रादेशपरिमितं गोकर्णाकारं चतुरङ्गुलपरिमितदण्डयुक्तं प्राशित्रं नाम ब्रह्मणे दीयमानो हुतशेषहविर्भागः स ह्रियते ऽनेनेति करणव्युत्पत्त्या प्राशित्रहरणपदवाच्यम् ॥

५१ अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलपरिणाहं पदपरिमितायामबिलयुक्तं चतुरङ्गुलदण्डं इडाया आधारत्वात् इडापात्रमित्युच्यते ॥

५२ हुतहविःशेषादवदाय इडापात्रे स्थाप्यमानो हविर्भाग इडेत्युच्यते ॥

---

*कुम्बो वर्तुलग्रन्थिसदृशाकारः ।

५३ अश्वत्थकाष्ठनिर्मितं अरत्निपरिमितं अग्रभागे चतुरङ्गुलचतुरस्र-फलकयुतं भर्जनपात्र्यां समुप्तस्य पिष्टस्य मदन्तीभिरद्भिः संमेलनकर्म-णा-दौ करणतया विहितं फलकाविशिष्टभागदण्डयुतं मेक्षणपदवाच्यम् ॥

५४ गार्हपत्ये भर्जनपात्रीमधिश्रित्य तस्यां तप्तायां सत्यां अध्वर्युः सव्यहस्तेन उदगग्रं पवित्रं धृत्वा दक्षिणहस्तेन कृष्णाजिनात् पिष्टानि क्षिपति तत्क्षेपणं संवाप इत्युच्यते ॥

५५ भर्जनपात्र्यधिश्रयणकाले यज्जलपात्रमधिश्रितं भवति तत्रत्यं जलं अप्शब्दविशेषणत्वाद्बहुवचनान्तेन मदन्तीशब्देनोच्यते ॥

५६ अनखच्छिन्नं साग्रं प्रादेशमात्रं मन्त्रसंस्कारयुक्तं समपरिमाणं प्रोक्षणादौ प्रायः उपयोगि दर्भद्वयं पवित्रसंज्ञं भवति ॥

५७ गार्हपत्याधिश्रितायां यस्यां पात्र्यां पिष्टानि समुप्यन्ते सा पिष्टोद्वपनीति पठ्यते ॥

५८ अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलदण्डं अष्टाङ्गुलबिलं प्रादेशमात्रं प्रणीतानामकं जलं नीयते ऽनेनेति करणव्युत्पत्त्या प्रणीताप्रणयनमि-त्युच्यते ॥

५९ पूर्वोक्तं पवित्रमन्तर्धाय मन्त्रेण प्रायश्चित्तादिहोमार्थं जुह्वा-दिषु तिसृषु स्रुक्षु पूरणार्थं च यस्यां स्थाल्यामाज्यं गृह्यते सा आज्य-स्थालीपदवाच्या ॥

६० कर्म द्विविधं समन्त्रकममन्त्रकं च । तत्र समन्त्रके कर्मणि यस्मिन् कर्मणि यो मन्त्रः श्रुत्यादिना मन्त्रान्ते कर्म कुर्वीतेत्यादिव-चनात् क्वचित्कर्मण आरम्भादादौ क्वचित्तु उपस्थानादिकर्मसु कर्मसम-कालमेव करणत्वेन विनियुक्तस्तस्य मन्त्रस्योक्तस्थाने पाठाभावः अवि-हितस्थाने पठनंच एवं कर्मणोऽकरणं अस्थाने कर्मानुष्ठानं च अनयैव रीत्या मन्त्रक्रिययोरुभयोरननुष्ठानं अस्थाने तयोरनुष्ठानं विहिताकरणं निषिद्धाचरणं च प्रायश्चित्तपदैकदेशस्य प्रायःपदस्य नष्टशब्दापरपर्या-यस्य वाच्यम् ॥

६१ प्रायो नाम नष्टं तस्य चित्तं नाम पुनः संधानं अकृतस्य कृत-त्वसंपादकं अन्यथा कृतस्य सुष्ठुकृतत्वसंपादकं कृतस्य निषिद्धस्याकृत-त्वसंपादकं कर्म विधायकश्रुत्यादिनैव तथा प्रतिपादनात् तच्च जपहो-

मादिरूपं तीर्थयात्रास्नानादिरूपं दोषानुसारेण श्रुत्यादिप्रतिपादितं प्रायश्चित्तमिति गीयते ॥

६२ ध्रुवोपभृज्जुहूनां तु स्रुवो भेदाः स्रुचः स्त्रियामिति श्रौतव्यवहारमूलककोशाद् ध्रुवोपभृज्जुहूस्रुवाणां चतुर्णां वाचकः स्रुक्शब्दः ॥

६३ दर्भमुष्टिः प्रदक्षिणमावेष्ट्य द्विगुणः कृतः प्रादेशमात्र उपविष्टवत्सजानुसदृशसंपन्नः समन्त्रकवेदिसंमार्जनादिकर्मोपयोगी पश्चिमायां वेद इत्युच्यते ॥

६४ इडापात्रतुल्यं भेदार्थं केनचिच्चिन्हेन युक्तं पक्वान् पुरोडाशान् कपालेभ्य उद्वास्य मन्त्रेणाज्योपस्तरणं कृत्वा यस्मिन्पात्रे कृतोपस्तरणस्थाने पुरोडाशान् स्थापयित्वा हविरासादनकाले वेद्यामासाद्य यागकाले तत्पात्रस्थानामेव पुरोडाशानामवदानं प्रधानहोमार्थं ब्रह्मभागार्थं यजमानभागार्थं स्विष्टकृदर्थं प्राशित्रनामकब्रह्मभागार्थं चतुर्धाकरणार्थं इडापात्रे यहणार्थं च क्रियते तत्पात्रं दारुपात्रीत्युच्यते ॥

६५ कर्मकाले आग्नीध्रोऽध्वर्युप्रेषितः पत्नीं मन्त्रेण येन गुणेन मुञ्जमयेन वेष्टनेन त्रिगुणितेन कटिदेशे संनह्यति स गुणो योक्त्रमित्युच्यते ॥

६६ वेदस्य यान्यग्राणि पूर्वं छिन्नानि तानि वेदस्य परिवासनानि इति षष्ठीसमासे परिवासनशब्दस्य कर्मल्युडन्ततया वेदपरिवासनानीत्युच्यन्ते ॥

६७ मेक्षणसदृश कपालोपधाने गार्हपत्यादङ्गारोद्धरणादौ उपयोगिनी धृष्टिरित्युच्यते ॥

६८ अध्वर्युर्यजमानो वाऽन्वाधानं करोति तत्र गार्हपत्यस्य पश्चात्पद्मासनेनोपविश्य त्रिभिः स्वाहाकारान्तैर्ऋङ्मन्त्रैः तिस्रः स्थूलाः समिधोऽभ्यादधाति ततो दक्षिणाग्नावूर्ध्वजानुरुपविश्य तथैवाभ्याधाय गार्हपत्यस्य पश्चान्मार्गेणागत्य आहवनीयाद् वायव्यदेशे प्रह्वोऽवस्थाय तथैव तिस्रः समिधोऽभ्यादधाति ततस्तत्रैव तिष्ठन् दशमेन ऋङ्मन्त्रेणोपस्थानं करोति तदेतत्सकलं कर्म अनुकूलं करिष्यमाणस्य कर्मणः समिधामाधानं इति व्युत्पत्त्या अन्वाधानमित्युच्यते ॥

६९ अनुकूलत्वं करिष्यमाणस्य कर्मणः अन्वाधाने कथमितिचेदित्थं यागात्पूर्वं अग्निषु प्रकृतोपयोग्यर्थकैर्मन्त्रैः समित्प्रक्षेपणेनाग्नयः करि

ध्यमाणयागे सावधाना आमन्त्रिता इव भवन्ति श्वः सद्यो वा अयमस्मासु होष्यतीति अत एव प्रक्षिप्तानां समिधां रक्षणमात्रमायतनेषु क्रियते यागकाल एव तु तासां प्रज्वलनम् अन्वाधानानन्तरमग्नीनां त्रिवारं परिसमूहनपर्युक्षणे विधीयेते तत्र जलसहितेन पाणिना अग्न्यायतनोपरिष्टाद्भागे ऐशानदिश आरभ्य पुनस्तद्दिक्पर्यन्तं प्रदक्षिणं संमार्जनं परिसमूहनमित्युच्यते ॥

७० तथैव दूरतोऽस्पर्शनेन प्रदक्षिणं जलपरिषेकमात्रं पर्युक्षणपदवाच्यम् ॥

७१ पर्युक्षणानन्तरं अग्न्यायतनानां अवतरकुवल्यादिभिर्यत्सुशोभितकरणं सकृद्गोमयसंमार्जनपूर्वकं अध्वर्युयजमानपत्नीकर्तृकं तत् अग्न्यलङ्करणमित्युच्यते ॥

७२ अग्न्यलङ्करणानन्तरं यजमानस्तीर्थेन निर्गत्य अग्रेणाहवनीयं परीत्य पूर्वोक्ते स्वायतने उपविश्य पाणौ साग्रं प्रादेशमात्रमुदगग्रं दर्भद्वयं धृत्वा तेनैव दक्षिणेन पाणिना पयस्वतीमन्त्रेण त्रिरप आचामति तत आहवनीयं तूष्णीं पर्युक्षणवत्सकृत्पर्युक्ष्य चतुर्भिर्मन्त्रैश्चतस्रः समिध आहवनीय आधाय पूर्ववत्परिषिञ्चति तदेतद्यजमानकर्म व्रतग्रहणं व्रतोपायनमिति चोच्यते ॥

७३ आहवनीयायतनस्योत्तरतः प्रागग्रेषु दर्भेषु प्रणीताप्रणयने प्रणीता नाम आप आसाद्यन्ते तासां पश्चिमदेशः उत्करस्य तु पूर्वदेशः विहारप्रवेशनिर्गमयोर्मार्गः तीर्थसंज्ञकः ॥

७४ प्रणीताऽभाववति कर्मणि आहवनीयोत्तरदेशे आसादितस्य इध्मस्य पश्चिमभाग उत्करस्य पूर्वदेशस्तीर्थमित्युच्यते ॥

७५ चात्वालवत्सु कर्मसु चात्वालपश्चिमदेश उत्करपूर्वदेश एव तीर्थपदवाच्यः ॥

७६ व्रतोपायनान्ते सत्रयति यजमाने अध्वर्युः प्राचीमुदीचीमैशानीं वा दिशं गत्वा पलाशस्य शम्या वा प्राचीमुदीचीमैशानीं वा शाखां असिदेन छिनत्ति समन्त्रकं ततस्तां शाखां मन्त्रेण विहारदेशं प्रत्याहरति तदेतत्कर्म शाखाहरणमित्युच्यते ॥

७७ यः सोमेनेष्टवान् तस्य यजमानस्य दर्शेष्टौ इन्द्राग्निदेवतास्थाने

इन्द्रो महेन्द्रो वा देवतात्वेन विहितः तत्र सत्यपि पुरोडाशद्वये अधिकं द्रव्यद्वयं विहितं तत्रैकं पयः द्वितीयं दधि तदेतद् द्वयं होमार्थं सम्यग् नयतीति कर्तृव्युत्पत्त्या तादृशो यजमानः सन्नयन्नित्यभिधीयते ॥

७८ दधिपयसी च पायसासान्नाय्येति सूत्रेण निपातनात् कर्मव्युत्पत्त्या सान्नाय्यपदाभिधेये ॥

७९ सान्नाय्यदधिपयसोः संपादने गवां संख्या अशक्तत्वात् न्यूना क्रियते चेत् षट्त्वसंख्यातो न्यूना न कार्या षड्भ्यो गोभ्यो न्यूनसंख्याका गावो न कर्तव्याः ततो ऽधिकाश्चेदिष्टापत्तिरेव । पूर्वमाहृतया शाखया एतासां गवां वत्सानां दूरीकरणं समन्त्रकं वत्सापाकरणमित्युच्यते ॥

८० ततस्तस्याः शाखायाः पर्णानि छित्त्वा यं मूलभागं प्रादेशमात्रं छित्त्वा धृष्ण्याकारं करोति सान्नाय्यसंस्कारकाले गार्हपत्याङ्गाराणामुद्-भिदश्चि निरूहणादौ उपयोगी स उपवेष इति गीयते ॥

८१ अग्रभागस्तु त्रिभिर्दर्भैर्वेण्याकारेण निबद्धः शाखापवित्रपद-वाच्यस्तस्य सायंदोहादावुपयोगः ॥

८२ असन्नयतस्तु यजमानस्य शाखाहरणाभावात् व्रतोपायनानन्तरं अध्वर्युः गार्हपत्यस्योत्तरतो विद्यमानमसिदं श्वपरशुं वादत्ते मन्त्रेण । लोहमयचतुरः छेदनोपयोगी असिद इत्युच्यते ॥

८३ एवं बर्हिश्छेदनाद्युपयोगी श्वसदृशः कुठारः श्वपरशुरित्युच्यते ॥

८४ तयोरन्यतरद् गृहीत्वा मन्त्रेणाहवनीयदेशं गत्वा मन्त्रेण वेदि-मवेत्य दर्भदेशं गत्वा प्रस्तरपर्याप्तं दर्भमुष्टिं परिगृह्णाति असिदादिना छेदनीयदर्भमुष्टेः आसमन्तात् भेदाय ग्रामणं परिग्रहणपदवाच्यम् ॥

८५ छिन्ने दर्भमुष्टौ भूमौ यो मूलभागो दृश्यते स छेदनक्रियाया आधारत्वात् अधिकरणे ल्युटा छेदनपदवाच्यः ॥

८६ छेदने भेदने चैव खनने पितृराक्षसोः । रौद्राभिचारणीयेषु उदकस्या-भिमन्त्रणमिति वचनात् छेदनभेदनखननपैतृकराक्षसरौद्राभिचारणकर्मसु कृतेषु शुद्ध्यर्थं विहितं दक्षिणकरस्य जलेन प्रक्षालनं उदकोपस्पर्शनमुच्यते ॥

८७ तत्र प्रकृतीष्टौ चतस्रो दर्भमुष्टयश्छिद्यन्ते प्रथमा दर्भमुष्टिर्मन्त्रैः संस्कृता वेद्यां जुहूर्यस्याच्छिधीयते विधृतिसंज्ञकयोः उदगग्रयोर्दर्भयोरु-परि या च प्रागग्रा स्थापिता भवति सा प्रस्तर इत्युच्यते ॥

८८ अन्यास्तिस्र अमन्त्रकसकलक्रियामात्रसाध्याः वेद्यास्तरणार्था हविषां पात्राणां स्थापनयोग्या बर्हिःपदवाच्याः ॥

८९ दर्भत्रयं गृहीत्वा प्रदक्षिणमावेष्ट्य अग्रभागे अन्यद्दर्भत्रयं मूलेन संयोज्य वेष्टनेन ग्रथितमिव कृत्वा तदपि तथैवावेष्ट्य तदग्रभागे अन्य-द्दर्भत्रयं तथैव कृत्वा पुनस्तदग्रभागे तथा करोति एवं कृते ग्रन्थित्रयं मध्ये संपद्यते तद्दर्भसूत्रं द्विगुणं कृत्वा अन्ते ग्रन्थिः कार्यः अनेन बर्हि-र्बध्यते अत एतद् बर्हिःसंनहनं नाम शुल्वनामकम् ॥

९० एवमिध्मबन्धनार्थं इध्मसंनहनं नाम शुल्वनामकम् ॥

९१ बर्हिःसंभरणानन्तरं अध्वर्युरिध्मदेशं गत्वा असिदेन स्वपरशुना वा इध्मं छिनत्ति तूष्णीं तस्मिन्नेकविंशतिसंख्याकानि काष्ठानि भवन्ति तत्र त्रितयं काष्ठानामाहवनीयस्य पश्चाद् दक्षिणत उत्तरतश्च प्रथम-मेखलाया उपरि स्थापनार्थं मेखलापरिमितायामं परित आहवनीयस्य निधानात् पुरस्तात्सूर्यस्य मनसा परिधित्वकल्पनात्परिधिसंज्ञकं भवति ॥

९२ अन्यानि काष्ठानि प्रादेशमात्राणि तत्र पञ्चदशसामिधेन्यर्थानि एक मनुयाजार्थं द्वे आहवनीयायतनस्यान्तरूर्ध्वाग्रे दक्षिणोत्तरयोर्भागयो रोपणार्थं एतान्यष्टादश काष्ठानि समित्पदवाच्यानि ॥

९३ क्वचिद्विकृतीष्ट्यादिषु अधिका अपि समिधः सामिधेनीवृद्धा गृह्यन्ते एवमेकविंशतिदारुकः संघ इध्मपदवाच्यः ॥

९४ इध्मस्य छेदनकाले यानि काष्ठशकलानि इतस्ततः पतन्ति तानि करणव्युत्पत्त्या इध्मप्रव्रश्चनपदेनाभिधीयन्ते ॥

९५ चतुर्णामप्यृत्विजां भोजने पर्याप्तः दक्षिणाग्नौ सुश्रुत ओदनः अनु पश्चात् यागानन्तरमृत्विग्भोजनार्थमाह्रियते इति कर्मव्युत्पत्त्या अन्वाहार्यपदवाच्यः ॥

९६ अन्वाहार्ये ओदनो यस्यां स्थाल्यां श्रप्यते सा अन्वाहार्यस्था-लीत्युच्यते ॥

९७ मदन्तीनामिका आपो यस्मिन्पात्रे संताप्यन्ते तत्पात्रमपि मद-न्तीपदेन व्यवह्रियते ॥

९८ पुरोडाशचरुसंबन्धिव्रीह्यादीन् उलूखले मुसलेनावहत्य प्र

शूर्पेण निस्तुषकरणरूपं फलीकरणं करोति तत्र ये तुषादयः पतन्तिते करणव्युत्पत्त्या फलीकरणपदवाच्याः ॥

९९ तेषां यागानन्तरं दक्षिणाग्नौ जुहूा चतुर्गृहीतेनाज्येन सह होमो विहितः अतः यागसमाप्तिपर्यन्तं तेषां स्थापनाय निर्मितं अश्वत्थमयं पात्रं फलीकरणपात्रमित्युच्यते ॥

१०० यदा गार्हपत्ये अध्वर्युः पत्नीसंयाजैः प्रचरति तदा देवानां पत्नीयागकाले स्वीयहविर्भागग्रहणार्थमागतानां देवानां पत्नीनां स्त्रीत्वात् लज्जया तिरोधानाय अश्वत्थकाष्ठनिर्मितं तिरोधानकरणयोग्यं कटाकारत्वात् अन्तर्धानकटमित्युच्यते ॥

१०१ अध्वर्युस्तीर्थप्रवेशानन्तरं गार्हपत्यस्योत्तरत उपविश्य इडाजपं कृत्वा देवा गातुविद इत्यृचं जपति तस्यामृचि यतो वातशब्दो वर्तते श्रुतौ वातशब्देन यागारम्भसमाप्त्योर्वर्णनात् इडा देवहूरिति यजुर्मन्त्रजप इडाजपपदेनोच्यते ॥

१०२ तत आहवनीयस्योत्तरतस्तिष्ठन् हस्तौ मन्त्रेण संमृशति एतत्कर्म पाण्योः सावधानत्वाय करिष्यमाणकर्मसुप्रेरणारूपं पाणिसंमर्शनमित्युच्यते ॥

१०३ * तत आहवनीयदक्षिणाग्निगार्हपत्यान् क्रमेण दर्भैः परिस्तृणाति अग्नेः षोडशभिर्दर्भैः प्राच्यादिषु परिस्तृतिरिति वचनात् प्राच्यां प्रथममेखलोपरि चतुर्भिर्दर्भैस्तथैव दक्षिणस्यां प्रतीच्यामुदीच्यां च क्रमेण स्तरणं परिस्तरणपदार्थः ॥

१०४ ततो गार्हपत्यस्य पुरस्ताद् वेद्यां परिभोजनीयदर्भानास्तीर्य तेषु द्वन्द्वं न्यञ्चि प्रक्षालितानि यज्ञपात्राणि प्राक्संस्थान्युदगपवर्गाणि स्थापयति तदेतत्कर्म पात्रासादनपदार्थः ॥

१०५ ततो ब्रह्मणि स्वायतने उपविष्टे यजमानेन च समन्त्रकद्वितीयवरणेन वृते परिभोजनीयदर्भैः संततां पृष्ठ्यां गार्हपमध्यादारभ्याहवनीयमध्यपर्यन्तं स्तृणाति मन्त्रेण एतत् कर्म पृष्ठ्यास्तरणमित्युच्यते ॥

---

* कर्कदेवयाज्ञिकादयस्तु कार्यक्रमेणाग्नीनां परिस्तरणमाहुः । तेना दावाहवनीयस्य परिस्तरणं ततो गार्हपत्यदक्षिणाग्न्योरिति क्रमः कर्काद्यनुयायिनाम् ।

१०६ ततो मन्त्रेण पूर्वं निहतं पवित्रमादाय समन्त्रकं सव्यहस्ते पवित्रं धृत्वा दक्षिणहस्तेन जलेनानुमार्ष्टि यतत्कर्म पवित्रकरणं नाम ॥

१०७ अभिमर्शनं नाम यदभिमृशेदिति विधीयते मन्त्रजपसमकालं तत्पदार्थस्पर्शनम् ॥

१०८ चित्तिरित्यादीनि दश वाक्यानि दशहोतृपदवाच्यानि ॥

१०९ अध्वर्युः पवित्रवत्यामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय तया शूर्पे तन्मुष्टिमात्रं व्रीह्यादिकं प्रक्षिपति एतत्कर्म निर्वापपदवाच्यम् ॥

११० ततः सशूकायामेवाग्निहोत्रहवण्यां तिरःपवित्रमप आनीय त्रिरुत्पूय उन्म*हयन्नुपस्थायतेन जलेन सपवित्रेणोत्तानेन दक्षिणपाणिना सेचनं पुरोडाशी†यादीनां यत् तत् प्रोक्षणमित्युच्यते ॥

१११ स्फ्यः कपालानि अग्निहोत्रहवणी शूर्पं कृष्णाजिनं शम्या उलूखलं मुसलं दृषत् उपला जुहूः उपभृत् स्रुवः ध्रुवा प्राशित्रहरणं इडापात्रं मेक्षणं पिष्टोद्वपनी प्रणीताप्रणयनं आज्यस्थाली वेदः दारु-पात्री योक्त्रं वेदपरिवासनानि धृष्टिः इध्मप्रव्रश्चनानि अन्वाहार्यस्थाली मदन्ती फलीकरणपात्रं अन्तर्धानकटं च एते पदार्था अन्ये च ये विकृतिषु उपयुक्तास्ते सर्वे यज्ञायुधपदेन यज्ञपात्रपदेन च श्रुतौ गीयन्ते ॥

११२ उत्पवनं नाम द्रवद्रव्यस्याज्यादेः कस्मिंश्चित्पात्रे स्थितस्य दक्षिणोत्तराभ्यां हस्ताभ्यां परस्परं असंसृष्टे पवित्रे धृत्वा ताभ्यां तस्य द्रव्यस्य ऊर्ध्वभागे प्लवनं उत्पवनमित्युच्यते ॥

११३ उन्महनं नाम स्तुतियुक्तमन्त्रोच्चारणेन पूजनरूपम् ॥

११४ समाहननं नाम आग्नीध्रकर्तृकं शम्याकरणकं यज्ञपात्राणां वादनम् ॥

११५ परापवनं नाम अध्वर्युकर्तृकं व्रीह्यादीनामुलूखले अवहतानां शूर्पेण फलानामन्तर्व्यवस्थितिर्यथा स्यात्तथा तुषादेर्निरसनम् ॥

११६ व्रीह्यादेरवघातानन्तरं यजमानो यं मन्त्रं किंयव्द्वन्तं जपति स मन्त्रो यज्ञयोगमन्त्र इत्युच्यते ॥

११७ पुरोडाशीयानां पेषणार्थं दृषदि स्थापनमधिवपनमित्युच्यते ॥

११८ दृषदि अध्युप्तानां पुरोडाशीयतण्डुलादीनामुपर्युभाभ्यां हस्ता-

* उन्महनं धाये वक्ष्यते । † हविषा मित्यर्थः ।

श्यामुपलायाः तिर्यक्स्थापितायाः पूर्वस्यां दिशि कर्षणं ततः प्रतीच्यां कर्षणं च प्रोहणमित्युच्यते ॥

११९ दृषदः सकाशात् उपलया पिष्टानां दृषदधःस्थापितकृष्णाजिने पातनं यस्य कस्यापि द्रव्यस्य पात्रात् हस्ताद्वाऽधः पतनं च प्रस्कन्दनमित्युच्यते ॥

१२० अध्वर्युः पेषणानन्तरं गार्हपत्यस्य पश्चात् धृष्ट्या पुरोडाशभर्जनार्थं गार्हपत्याङ्गारैः संतापयितुं यथाविहितानि प्रतिपुरोडाशं समुदितानि अश्वशफमात्राण्यश्वशफाकारतामापन्नानि कपालानि मन्त्रैर्विहितक्रमेण स्थापयति तदेतत्कपालोपधानमित्युच्यते ॥

१२१ उपधानं नाम उपधानं तूपबर्हः शय्यायां शयनीयवदिति कोशात्कस्यचित्पूजनीयस्य पदार्थस्य स्थापनार्थं उपबर्हस्थानीयाधाररचनम् ॥

१२२ एवमासादनं नाम यज्ञपात्रादीनां सुशोभिततया रचनम् ॥

१२३ निधानं यथाकथंचित्स्थापनमात्रम् ॥

१२४ उपहितानि कपालानि येन मन्त्रेण परस्परसंयुक्तानि क्रियन्ते स मन्त्रो योग इत्युच्यते ॥

१२५ अधिश्रयणं नाम वह्नौ स्थापयित्वा संतापनम् ॥

१२६ परिकर्माङ्गसंस्कार इति कोशात्परिकर्मशब्द ऋत्विग्यजमानभिन्नस्य कर्तव्यत्वेन विहितस्य कर्मणो वाचकः ॥

१२७ तत्कर्मकर्ता परिकर्मी भवति ॥

१२८ अनुमन्त्रणं नाम स्वयमन्येन वा कर्मणि कृते पश्चात्तत्कर्मकरणमन्त्रोच्चारणम् ॥

१२९ मन्त्राश्च कर्मकरणा इति सूत्रात् यैः कर्म क्रियते ते मन्त्रपदवाच्याः ॥

१३० गार्हपत्यस्य पश्चात् शकटं स्थापितं भवति तत्र विद्यमानस्य व्रीह्यादिद्रव्यस्य सर्पवित्रायामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय तथा मन्त्रेण कांचिद्देवतामुद्दिश्य शूर्पे प्रक्षेपोऽथवा शकटाभावपक्षे गार्हपत्यस्य पश्चादुदगग्रं स्फ्यं निधाय तदुपरि दारुपात्रीं प्रागग्रां निधाय तस्यां पुरोडाशीयानोप्य तस्याः सकाशात् गृहीत्वा अग्निहोत्रहवण्यां निधाय पूर्ववत् शूर्पे प्रक्षेपणं निर्वाप इत्युच्यते ॥

१३१ यत्र अनधः सादयतीति विधीयते तत्र दर्भतृणादिकं किंचित् निधाय तदुपरि स्थापनमनधः सादनमुच्यते ॥

१३२ गार्हपत्यमभिमन्त्रयत इत्यादौ अभिमन्त्रणं नाम गार्हपत्यादेरवेक्षणसमकालं मन्त्रजपः ॥

१३३ यस्मिन्यागे व्रीह्यादेर्द्रव्यस्य निर्वापानन्तरमन्यद्रव्यनिर्वापः कर्तव्यो भवति तत्र एकस्य निर्वापानन्तरं निर्वापे करणभूताया अग्निहोत्रहवण्या वस्त्रादिना संमार्जनं पश्चान्निरुप्यमाणद्रव्ये पूर्वनिरुप्तद्रव्यसंबन्धितुषादिसंसर्गाभावार्थं क्रियते तत् यच्च तादृशयागे निरुप्तद्रव्यप्रोक्षणात्प्राग्वस्त्रसंमार्जनं तदपि प्रोञ्छनमित्युच्यते ॥

१३४ व्रीह्यादिप्रोक्षणार्थं अग्निहोत्रहवण्यां गृहीताः संस्कृता आपः प्रोक्षणीपदवाच्याः ॥

१३५ मन्त्रं विना क्रियमाणं कर्म तूष्णीमित्युच्यते ॥

१३६ हविः करोतीति हविष्कृदितिव्युत्पत्त्या ऐष्टिकादिकर्मणि अध्वर्योः कार्ये हविःसंपादने सहायत्वमात्रेण सोमे तु सवनीयनिर्वापप्रभृतिपुरोडाशाद्यासादनान्तस्य हविःसंपादनस्य स्वकर्तृकत्वेन सोमाङ्गभूते प्रवर्ग्याख्ये कर्मणि रौहिणसंज्ञकपुरोडाशाधिश्रयणादिकर्मकर्तृत्वेन च आग्नीध्र एव हविष्कृत्पदवाच्यः ॥

१३७ समाहननं नाम यज्ञपात्राणां तूष्णीं शम्यया ताडनं तत्र दृषदुपलयोः तु त्रिः समन्त्रकम् ॥

१३८ अवहननं नाम उलूखले उप्तानां व्रीह्यादीनां नैस्तुष्यसिद्ध्यर्थं मुसलेन कण्डनम् ॥

१३९ परापवनं नाम कण्डनेन पृथग्भूतानां तण्डुलादीनामेव शूर्पे स्थितिर्यथा स्यात्तुषादीनां तु अधःपतनं तथा कौशलेन शूर्पचालनम् ॥

१४० पात्रीस्थानां पिष्टानामुपरि संतप्तमदन्तीजलप्रक्षेपः आप्लावनमित्युच्यते ॥

१४१ मेक्षणेन जलपिष्टयोर्मिश्रणं संयवनमुच्यते ॥

१४२ मदन्तीजलेन सिक्तस्य पिष्टपिण्डस्य चतुर्थ्यन्तदेवतानामपूर्वं कल्वेतिपदान्तेन मन्त्रेण अभिमर्शनानन्तरं कूर्मवदाकारे कृते पुरोडाशपदवाच्यता ॥

१४३ गार्हपत्यादेः सकाशाद् बहिष्कृतानामङ्गाराणां पुनर्गार्हपत्यादौ प्रक्षेपः प्रत्यूहनम् ॥

१४४ पुरोडाशस्य सर्वकपालस्पर्शनं प्रथनमित्युच्यते पुरोडाशस्य त्वक्सिद्ध्यर्थं पिष्टोद्वपनीस्थजलेन सर्वतः संमर्शनं त्वग्ग्रहणमित्युच्यते ॥

१४५ हविषामासमन्तात्प्रादक्षिण्येन उल्मुकस्य परिभ्रमणं पर्यग्निकरणमित्युच्यते ॥

१४६ संतप्तेषु कपालेषु निहितस्य पुरोडाशस्य गार्हपत्यस्य भस्मना तूष्णीं प्रच्छादनं अभिवासनमित्युच्यते ॥

१४७ ततोऽध्वर्युर्मन्त्रेण साङ्गारं भस्म वेदेन पुरोडाशस्योपरि प्रक्षिप्य परिकर्मिणः संप्रेष्यति ते च यथा सुशृतः स्यात्तथा श्रपयन्ति तदेतत्पुरोडाशश्रपणमित्युच्यते ॥

१४८ गार्हपत्याङ्गारान् मन्त्रेण गार्हपत्यायतनाद्बहिःपश्चाद्विरूह्यते चाङ्गारा यथा मध्ये स्युस्तथा चुल्लीं स्थापयित्वा तस्यां नपुंसकलिङ्गस्थाने स्त्रीलिङ्गवत्पदघटितप्रथमकपालोपधानमन्त्रेण सजलां स्थालीमधिश्रित्य तस्यां मन्त्रेण पूर्वसंस्कृतानां तण्डुलानां प्रक्षेपणं क्रियते ते च परिपक्वास्तण्डुलाः चरुपदवाच्याः ॥

१४९ यदि पयःसहितां स्थालीमधिश्रित्य चरुः साध्यते तदा स पयसिचरुरित्युच्यते ॥

१५० हविःश्रपणानन्तरं पात्रीसंक्षालनोदकं गार्हपत्योल्मुकेनाभितप्यान्तर्वेदि स्फ्येन प्राचीस्तिस्रो लेखाः कृत्वा प्रत्यक् त्रिर्निनयति त्रिभिः स्वाहान्तैर्मन्त्रैः एतादृशं कर्म अन्यत्रापि क्रियमाणं यथा उल्मुकं प्राच्यां निरस्येदित्यादौ कस्यचिद्वस्तुनो जाते कार्ये विधिप्राप्तविनियोगकरणं प्रतिपत्तिकर्मेत्युच्यते ॥

१५१ अध्वर्युर्मन्त्रेण वेदमादाय मन्त्रेण सकृत् द्विस्तूष्णीं वेदेन उदगपवर्गं प्रागवसक्तं वेदिं संमृज्य वेद्याःपश्चादुपविश्य मन्त्रेण दर्भाभ्यां सह स्फ्यमादाय अन्यतरेण दर्भेण स्फ्यं निमृज्य अवशिष्टं दर्भं वेदिपूर्वतृतीयभागे मन्त्रेण उदगग्रं निधाय मन्त्रेण तस्मिन् स्फ्येन प्रहृत्य मन्त्रेण मृदासहितं स्फ्यमादाय मन्त्रेण मृदं हृत्वा मन्त्रेण वेदिमवेक्ष्य मन्त्रेण मृदमुत्करे निवपति आग्नीध्रस्तां मृदं तत्रैवोत्तानाभ्यां पाणिभ्यां

गृह्णाति एवं प्रहरणादि मृद्विवपनान्तं समन्त्रकं त्रिवारं कृत्वा तूष्णीं चतुर्थं करोति तत्र चतुर्थे मृदो हरणे प्रहृतस्य दर्भस्थापितया सह हरणं क्रियते तदनन्तरं मन्त्रेण स्फ्येन वेदिदक्षिणांसमारभ्य दक्षिणश्रोणिपर्यन्तं वेदिदक्षिणप्रान्तं स्पृशति तथैव दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं वेदिपश्चिमप्रान्तं स्पृशति तथैव उत्तरश्रोणिमारभ्य उत्तरांसपर्यन्तं वेद्युत्तरप्रान्तं स्पृशति इदं स्फ्येन वेदिप्रान्तभागस्पर्शनं वेद्याः परितो यागार्थं करणरूपत्वात् उत्तरपरिग्राहापेक्षया पूर्वत्वाच्च पूर्वपरिग्राह इत्युच्यते ॥

१५२ पूर्वपरिग्राहानन्तरं यं मन्त्रं जपति स मन्त्रो वेदिः क्रियते अनेनेति करणव्युत्पत्त्या वेदिकरणं इत्युच्यते ॥

१५३ वेदिकरणजपानन्तरं स्फ्येन मन्त्रेण प्राक्संस्थं वेदिं त्रिः खनति एतादृशं खननं उद्धननमित्युच्यते ॥

१५४ अध्वर्युप्रेषित आग्नीध्रः उद्धतदेशात् त्रिर्मृदमुद्धृत्य उत्करे निवपति ततोऽध्वर्युरुत्तरपरिग्राहग्रहणार्थं ब्रह्माणमनुज्ञापयति तेनानुज्ञातः पूर्ववत् स्फ्येन अन्यैस्त्रिभिर्मन्त्रैर्दक्षिणपश्चिमोत्तरप्रान्तभागान् स्पृशति एतत्स्पर्शनं पूर्वपरिग्राहापेक्षया उत्तरत्वादुत्तरपरिग्राह इत्युच्यते ॥

१५५ उत्तरपरिग्राहानन्तरं उत्करे न्युप्तां मृदं वेद्यामानीय स्फ्येन मन्त्रेण समीकरोति वेदिसंमार्जनप्रभृति समीकरणपर्यन्तं वेदेः करणमिति व्युत्पत्त्या वेदिकरणमित्युच्यते ॥

१५६ पलाशस्य अन्यस्य वा यज्ञियवृक्षस्य प्रादेशपरिमाणं काष्ठं समित्पदवाच्यम् ॥

१५७ अध्वर्युप्रेरणया वेद्यां विद्यमानस्य आज्यस्य समन्त्रकं अधोमुखतया यजमानकर्तृकमीक्षणं आज्यावेक्षणमित्युच्यते ॥

१५८ आज्यं पुनराहारमुत्पुनातीत्यत्र पवित्राभ्यामाज्यं प्राङ् नीत्वा पुनः पश्चादानयनं पुनराहारपदवाच्यम् ॥

१५९ आज्यस्थाल्या उत्तरतो वेद्यां प्रागग्रमुदग्रं वा वेदं निधाय तस्मिन् प्रागग्रां जुहूं स्थापयित्वा तस्यां मन्त्रावृत्त्या आज्यस्थाल्याः सकाशात् स्रुवेणाज्यं गृह्णाति यजमानः प्रतिग्रहणमनुमन्त्रयते अध्वर्यु-

दक्षिणहस्तेन जुहूं संमृज्य परिकर्मिणे प्रयच्छति स च प्रणीतोत्तरतः स्थापितयोरिध्मबर्हिषोः पश्चिमदेशे जुहूप्रभृतीः स्रुव उदक्संस्थाः स्थापयति अध्वर्युः पूर्ववत् उपभृति आज्यं अष्टकृत्वो गृह्णाति ततस्तथैव संमृज्य पूर्ववत् प्रयच्छति स च परिकर्मी तथैव सादयति अध्वर्युः पूर्ववत् चतुष्कृत्वो ध्रुवायामाज्यं गृह्णाति तूष्णीं पूरयति तथैव प्रयच्छति अन्यश्च तथैव सादयति तदेतत्कर्म आज्यग्रहणमित्युच्यते ॥

१६० प्रोक्षणीनामुत्पवनादि कृत्वा समन्त्रकं इध्मवेदिबर्हींषि क्रमेण प्रोक्ष्य बर्हिरिध्मप्रणीतयोर्मध्येन प्राङ् नीत्वा प्रणीताहवनीययोर्मध्येन पुनराहृत्य वेद्यां पुरोग्रन्थ्यूर्ध्वाग्रं निधाय तिष्ठन्नग्राणि मन्त्रेण प्रोक्ष्य प्रह्वो मन्त्रेण मध्यानि प्रोक्ष्य आसीनो मन्त्रेण मूलानि प्रोक्ष्य प्रत्यङ्मुखाभ्यां स्रुक्पाणिभ्यां ग्रन्थिमासिच्य शिष्टं दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं प्रथमं प्रस्तरं गृहीत्वा मन्त्रेण मन्त्रेण निनयति ततः प्रोक्षणीधानं निरस्य बर्हिर्विस्रस्य मन्त्रेण तस्मिन् पवित्रे संयोज्य प्रस्तरं यजमानाय ब्रह्मणे वा दत्त्वा बर्हिःसन्नहनं विस्रस्य दक्षिणश्रोणिमारभ्य उत्तरांसपर्यन्तं निधाय तदुपरि प्रथमं दर्भमुष्टिं मन्त्रेण स्तृणाति तस्य पश्चात् द्वितीयं प्रागास्तृतदर्भमूलानि आच्छादितानि यथा स्युः ततस्तृतीयं तथैव स्तृणाति तदेतत्कर्म बर्हिरास्तरणं नाम ॥

१६१ ततः प्रस्तरं गृहीत्वा प्राङभिसृप्य मन्त्रेण आहवनीयस्य पश्चात् प्रथममेखलोपरि उदगग्रं मध्यमं परिधिं परिदधाति यजमानोऽनुमन्त्रयते एवं दक्षिणोत्तरौ परिधी दक्षिणोत्तरयोः क्रमेण प्रागग्रौ स्थापयति अग्रे सूर्ये मन्त्रेण परिधिं कल्पयति एतत्कर्म अग्निपरिधानमित्युच्यते ॥

१६२ परिभोजनीयेभ्यो मध्यमबर्हिर्मुष्टेर्वा अन्यतो वा आहृतं सारं दर्भद्वयं विशेषेण धृतिः धारणं प्रस्तरादीनां धारणं यस्मिन् इति व्युत्पत्त्या विधृतिपदवाच्यम् ॥

१६३ ते च विधृती वेद्यां मन्त्रेण उदगग्रे निधाय तयोरुपरि मन्त्रेण प्रागग्रं प्रस्तरं तदुपरि मन्त्रेण जुहूं प्रागग्रां तस्या उत्तरतो विधृत्योरधस्तात् मन्त्रेणोपभृतं तदुत्तरतस्तथैव ध्रुवां निधाय मन्त्रेणाभिमृशति तदेतत् स्रुगासादनमुच्यते ॥

१६४ स्रुगासादनानन्तरं स्रुचामुत्तरतः सस्रुवामाज्यस्थालीं निधाय सर्वाण्याज्यान्यभिमन्त्र्य दक्षिणेन सस्रुवामाज्यस्थालीं सव्येन दारुपात्रीं वेदं चादाय प्रदक्षिणमावृत्य प्रत्यङ् आहृत्य गार्हपत्यस्य पश्चादुपविश्य दारुपात्र्यां पुरोडाशसंख्यया मन्त्रावृत्त्योपस्तृणाति ततः प्रथमं दक्षिणपुरोडाशस्याङ्गारानपोहति तत्र अपोहनं नाम पूर्वं प्रक्षिप्तानां भस्ममिश्राङ्गाराणां धृष्ट्या दूरीकरणम् ॥

१६५ मन्त्रेण पुरोडाशस्य प्रकटीकरणं पुरोडाशप्रकाशनमुच्यते ॥

१६६ ततो वेदेन विरजसं कृत्वा ऽभिघार्य मन्त्रेण पात्र्याः सकाशात्पुरोडाशमुद्गृह्णाति इदं पुरोडाशोद्वासनमुच्यते ॥

१६७ ततो मन्त्रेण पुरोडाशस्योपरि सर्वत आज्यप्रक्षेप आर्द्रीकरणमित्युच्यते ॥

१६८ तथैव ततः अधोभागे आज्यलेपनं अधस्तादभ्यञ्जनमित्युच्यते ॥

१६९ ततः पुरोडाशं पात्र्यां तूष्णीं निधाय अन्यानपि पुरोडाशादीन् एवमेव उद्वास्य पात्र्यां निधाय स्रुवमभिपूर्य पुरोडाशयोर्मध्ये स्थापयित्वा सर्वाणि हवींष्यादाय वेदिमध्ये स्रुचां पश्चात्तूष्णीं सादयति यजमानस्तु व्याहृतिमन्त्रेण एतद् हविरासादनमित्युच्यते ॥

१७० आमन्त्रणं नाम संबोधनप्रथमान्तपदोच्चारणानन्तरं एहीत्यस्यानुषङ्गेणाकारणम् ॥

१७१ प्राद्गाहवनीयादवस्थायेत्यादौ अधोमुखतया स्थानं अवस्थानमित्युच्यते ॥

१७२ उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे इति कोशात् दक्षिणबाहुना उद्धृतं सव्यांसस्थितं स्मृत्युक्तरीत्या निर्मितं यज्ञोपवीतमित्युच्यते॥

१७३ एतद्विपरीतं सव्योद्धृतं दक्षिणांसस्थितं प्राचीनावीतमित्युच्यते॥

१७४ मालावत्कण्ठलम्बितं निवीतमित्युच्यते ॥

१७५ केशवादिभिस्त्रिभिर्नामभिश्चतुर्थ्यन्तैरुदकं ब्राह्मेण तीर्थेन पीत्वाद्वाभ्यां करौ प्रक्षाल्य द्वाभ्यामोष्ठौ संमृज्य द्वाभ्यां मुखमवाङ्निमृज्य एकेन वामकरं प्रक्षाल्य एकेन पादौ संप्रोक्ष्य एकेन मूर्धानं संस्पृश्य एकेन ऊर्ध्वोष्ठमङ्गुल्यग्रैः संमृज्य द्वाभ्यां क्रमेण अङ्गुष्ठतर्जनीभ्यां दक्षि-

णवामनासारन्ध्रे संमृज्य द्वाभ्यां क्रमेण दक्षिणवामाक्षिणी अङ्गुष्ठानामिकाभ्यां निमृज्य द्वाभ्यां क्रमेण दक्षिणवामश्रोत्रे अङ्गुष्ठकनिष्ठिकाभ्यां संमृज्य एकेन अङ्गुल्यग्रैर्नाभिं संमृज्य एकेन पाणितलेन हृदयं एकेन अङ्गुल्यग्रैः शिरः संमृज्यद्वाभ्यां क्रमेण तैरेव दक्षिणवामभुजौ संमार्ष्टि तदेतत्स्मृत्युक्तं आचमनमित्युच्यते ॥

१७६ दक्षिणेनाङ्गेन य आवर्त्तते पर्यावृत्तो भवति स दक्षिणावृदित्युच्यते ॥

१७७ एवं सव्येनावर्तमानः सव्यावृत्पदवाच्यः ॥

१७८ सव्योत्तरेणोपस्थेन दक्षिणोत्तरेणोपस्थेन वा आसनं अङ्कधारणापदवाच्यम् ॥

१७९ विहारसंमुखस्वपृष्ठभागो यथा न भवेत् तथा कर्मकाले इतस्ततो गमनं विहाराव्यावृत्तिरित्युच्यते ॥

१८० वेदिश्रोण्योत्तरया पार्ष्णी समां निधायेत्यादौ तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णीरधस्तयोरित्यमरकोशात्पुल्लिङ्गोऽपि अत्र स्त्रीलिङ्गः पार्ष्णीशब्दो घुटिकाधोभागवाचकः ॥

१८१ प्रपदेन बर्हिराक्रम्येत्यादौ प्रपदशब्दः पादाग्रं प्रपदं पाद इति कोशात् अङ्गुलिपश्चाद्भागस्य पादाग्रस्य वाचकः ॥

१८२ तत्रैव आक्रमणं नाम बर्हिष उपरि प्रपदस्थापनम् ॥

१८३ अङ्गुल्यग्राण्यवकृष्येत्यत्र अवकर्षणं नाम आकुञ्चनम् ॥

१८४ एवं प्रति संदध्यादित्यत्र प्रसारणं प्रतिसंधानमित्युच्यते ॥

१८५ सामिधेनीरन्वाहेत्यादौ अध्वर्युप्रेषितो होता उत्तरया वेदिश्रोण्या समां पार्ष्णीं निधाय प्रपदेन बर्हिराक्रम्य संहितौ करौ हृत्प्रदेशे अङ्कदेशे वा प्राञ्चौ धारयन् प्राङ्मुखस्तिष्ठन् प्रकृतौ पञ्चदश विकृतौ पाशुकादौ च ताभ्यो न्यूना अधिका वा या ऋचो मन्द्रस्वरेण पठति ता ऋचः समिधः आधीयन्ते याभिरिति करणव्युत्पत्त्या सामिधेनीपदेनोच्यन्ते ॥

१८६ अन्वाहेत्यनुवचनं विधीयते तत्र सामिधेनीनामनुवचने ऋक्पाठात्पूर्वं त्रिमात्रं हिं इत्युच्चार्य उपांशुसंहितया प्रणवान्ता व्याहृतीः

पठति तस्य उच्चैरुपांशु पठ्यमानस्य समुदितस्य आश्वलायनसूत्रे व्यवहारार्थं अभिहिंकार इति संज्ञा कृता ॥

१८७ तदनन्तरं पठ्यमानायाः प्रथमाया ऋचः त्रिवारं पाठो विहितः एवमन्तिमाया अपि अस्य त्रिःपाठस्य तत्रैव सूत्रे अभ्यास इति संज्ञा कृता ॥

१८८ सामिधेनीनां प्रथमाया ऋचः द्वयोरर्धर्चयोः संहितया पाठः ऋगन्ते टेः स्थाने त्रिमात्रः प्रणवः तदन्ते मकारः तेन च मकारेण सह उत्तरस्या ऋचः प्रथमार्द्धर्चेन संधानं कार्यं समाप्ते द्वितीयसामिधेन्यर्द्धर्चे उच्छ्वासः कार्यः एतदेकमवसानं ततः द्वितीयार्द्धर्चेन तृतीयसामिधेन्यर्द्धर्चं संधाय तेन च द्वितीयार्द्धर्चं प्रणवान्तं संधाय प्रणवान्तिममकारेण चतुर्थसामिधेन्यर्द्धर्चं तस्मिन्नेवार्धर्चे उच्छ्वसेत् एतद् द्वितीयमवसानम् । एवं च प्रथमोच्छ्वासे त्रयोऽर्धर्चाः द्वितीये तु चत्वारः संपद्यन्ते संकलनेन सप्त संपन्नाः तत्र त्रिः पठ्यमानायाः प्रथमाया ऋचः षड् अर्धर्चाः द्वितीयस्या ऋच एकोऽर्धर्चः एतदनन्तरं प्रत्युच्छ्वासं द्वावर्धर्चौ भवतः । एवं प्रथमावत् उपान्त्याया द्वितीयार्धर्चमारभ्य तदीयप्रणवमकारेण अन्तिमाया अर्धर्चं संधाय तेन च द्वितीयार्धर्चं संधाय तदन्तिमप्रणवेन उत्तरस्या अर्धर्चं संधाय तदन्ते विरमेत् अन्तिमायां त्रिः पठ्यमानायां एतदेकमवसानं ततो द्वितीयार्धर्चमारभ्य तदन्तिमप्रणवमकारेण उत्तरस्या अर्धर्चं संधाय तेन च द्वितीयार्धर्चं संधाय तदन्तिमप्रणवमकारेण द्वादशाक्षरं निगदभागं संधाय तदन्ते विरमेत् एतत् अन्तिमायां द्वितीयमवसानं अनया रीत्या सामिधेनीनामाद्यन्त्ययोर्ऋचोः पठनं अन्यासामृचामपेक्षया अधिकस्य अर्धर्चस्य एकैकस्मिन् उच्छ्वासे उच्चारणात् अध्यर्धकारमन्वाहेति यामुक्तेन अध्यर्धकारमित्यनेन पदेन आश्वलायनसूत्रे व्यवहृतम् ॥

१८९ ऋगारम्भे प्रथमार्धर्चे ऽवसाय ततो द्वितीयार्धर्चप्रणवमकारेण उत्तरस्या ऋचः प्रथमार्धर्चं संधाय तदन्ते विरमेत् एवं सर्वा ऋचः पठित्वा अवशिष्टं अन्तिमाया ऋचः द्वितीयार्धर्चं केवलं चतुर्मात्रप्रणवान्तं उक्त्वा विरमेत् एतादृशं पठनं तत्रैव सूत्रे संततमित्युच्यते ॥

१९० एतस्य सामिधेन्यनुवचनस्य अध्यर्धकारं पठनरहितस्य अभिहिंकार पूर्वकस्य चतुर्मात्रप्रणवान्तस्य शस्त्रे याज्यायां निगदे अनुवचने अभिष्टवने संस्तवने च अतिदेशः आश्वलायनसूत्रे कृतः अन्वाह अनुब्रूयात् इत्यादिशब्दैर्विहितं अभिहिंकारपूर्वकं अभ्यासविशिष्टं प्रथमाया ऋचः प्रथमार्धर्चं अवसाय द्वितीयार्धर्चान्त्यप्रणवेन प्रथमाया एव ऋचः द्वितीयपाठगतप्रथमार्धर्चं संधाय तदन्ते ऽवस्येत् अनया रीत्या सर्वा ऋचः पठित्वा अन्तिमाया ऋचः तृतीयपाठगतद्वितीयार्धर्चस्य अन्ते चतुर्मात्रप्रणवविशिष्टस्य परिशेषात् केवलस्य तावन्मात्रस्य पठनं अनुवचनमित्युच्यते ॥

१९१ एकस्या ऋचः द्वयोर्वा ऋचोरनुवचने अभ्यासो न भवति सामिधेन्यनुवचने अध्यर्धकारं पठनं विशेषः अनुवचनमात्रे अवसाने यः प्रणवः स चतुर्मात्रो भवति अन्यत्र तु त्रिमात्र एव तदन्तिमस्य मकारस्य स्थाने स्पर्शेषु परेषु तत्तद्वर्गस्य पञ्चमो वर्णआदेशो भवति यवलेषु परेषु क्रमेण अनुनासिकायवला आदेशा भवन्ति रेफोष्मसु परेषु अनुस्वार आदेशो भवति अन्यत्र अविकृत एव मकारः एतस्य विकारमात्रस्य आश्वलायनसूत्रे अन्तापत्तिरिति संज्ञा ॥

१९२ एकश्रुति अनुब्रूयात् इति उच्यते तथा च अनुवचनमात्रे एकश्रुतिः सिद्ध्यति तत्र एकश्रुतिर्नाम उदात्तानुदात्तस्वरितानां स्वराणामभावः ॥

१९३ अध्वर्युः सामिधेन्यारम्भे एकां समिधमाहवनीये ऽभ्याधाय प्रणवेप्रणवे द्वितीयाद्येकादश समिधो ऽभ्याधाय उपान्त्यायाः प्रणवे तिस्रः समिधः सहैवाभ्याधाय आहवनीयस्योपरि प्रक्षिप्तानां समिधां प्रदीपनानुकूलवातोत्पादनार्थं अन्तिमायाः ऋचः अभ्यासकाले वेदं त्रिवारं प्राक् कम्पयति एतत्कम्पनं वाजनमित्युच्यते ॥

१९४ ध्रुवाज्यात् स्रुवेणोपहत्यैत्यादौ उपहननं ग्रहणमेवोच्यते ॥

१९५ वह्नेः कंचिद्देशमारभ्य देशान्तरपर्यन्तं समन्वकं आज्यधारया आहरणं प्रक्षेपणं आघार इत्युच्यते ॥

१९६ स्रुवस्याधस्ताद् वेदं धृत्वा तेन दक्षिणं परिधिमारभ्य उत्तर-

पर्यन्तं समन्त्रकं आज्यधाराहरणं स्रौवाघार इति तिर्यगाघार इति वोच्यते ॥

१९७ प्रादेशतालगोकर्णास्तर्जन्यादियुते तते अङ्गुष्ठे इति कोशात् विस्तृताङ्गुष्ठाग्रमारभ्य विस्तृततर्जन्यग्रपर्यन्तः प्रादेश इत्युच्यते ॥

१९८ तस्य वेद्यां प्रागग्रतया मन्त्रेण स्थापनं प्रादेशकरणमित्युच्यते ॥

१९९ प्रादेशकरणे पर्याप्तवेद्यन्तर्गतभूमेः सकाशाद् वेद्यास्तृतबर्हिषः उदग्देशे वेद्यामेव नयनं व्यूहनमित्युच्यते ॥

२०० सामिधेन्यनुवचनानन्तरं होतृकर्तृकं प्रवरप्रवरणं विहितं तत्र प्रवरो नाम आश्वलायनादिभिः प्रवराध्याये यद्गोत्रस्य यावन्तः प्रकर्षेण वराः ऋषयः संबुद्ध्यन्तपदेन उक्तास्ते यथा शाण्डिलानां शाण्डिलासित देवलेति ।।

२०१ तेषामुच्चारणं प्रवरणमित्युच्यते ॥

२०२ तत्र क्षत्रियवैश्ययोर्यजमानयोः पुरोहितस्य प्रवरा वक्तव्याः प्रवरसंशये मानव इत्येव प्रवरो वक्तव्यः । प्रवरानन्तरं असौ निगदशेषो वक्तव्यः, तत्र गायत्र्यादिच्छन्दोरहितः ऋग्वेदे विहितः यजुर्मन्त्रः निगद इत्युच्यते ॥

२०३ होता निगदपाठानन्तरं द्वितीयान्तं देवतावाचकं शब्दमुच्चार्य संबुद्ध्यन्तमग्निशब्दमुच्चार्य आवहेति पदं प्लुताक्षरं पठित्वा अवस्यति ततः द्वितीयादिदेवतावाचकानि पदानि पूर्ववत् अग्निपदरहितानि आवहशब्दान्तानि पठति एतद्देवताह्वानमित्युच्यते ॥

२०४ आह्वानानन्तरं त्रयोदशाक्षरं निगदशेषं ब्रूयात् अयं सर्वो निगदः देवताह्वानगर्भत्वात् आवाहननिगद इत्युच्यते ॥

२०५ अध्वर्युप्रेषितः आग्नीध्रः इध्मसंनहनवेष्टितेन स्फ्येन मूलमारभ्य अग्रपर्यन्तं मध्यमदक्षिणोत्तरान् परिधीन् क्रमेण संमृज्य मन्त्रेणाहवनीयं संमार्ष्टि यागापेक्षया पूर्वत्वादयं पूर्वोऽग्निसंमार्ग इत्युच्यते ॥

२०६ ततोऽध्वर्युः जुहूप्रभृतीरग्रे प्राञ्चमञ्जलिं निधाय अग्निं नमस्करोति मन्त्रेण एतत्कर्म अञ्जलिकरणमित्युच्यते ॥

२०७ देवताह्वानकाले दक्षिणहस्तेन मन्त्रेण जुहूमादाय सव्येन तथैवोपभृतमादाय दक्षिणेन सव्येन वा पादेन अग्न्याज्ययोर्मध्यमार्गेण मन्त्रेण वेद्या दक्षिणतो गच्छति तदेतत्सर्वं समन्त्रकं गमनं द्वितीयादिकममन्त्रकं गमनं च अत्याक्रमणमित्युच्यते ॥

२०८ तत आहवनीये आहुतिप्रक्षेपार्थं तस्य दक्षिणतः मन्त्रेण स्वस्य स्थानं कल्पयति एतदध्वर्युस्थानमित्युच्यते ॥

२०९ ततः यजमानेन स्रुचि अन्वारब्धः सन् मध्यमपरिधेर्मध्यं जुह्वग्रेण संस्पृश्य मन्त्रेण अविच्छिन्नं प्राक्संस्थमाघारमाघारयति अयमाघारो नाहव आघारः प्राक्संस्थ आघार इति चोच्यते ॥

२१० आघारहोमार्थं वन्हेः संनिधौ अधःकृतां जुहूं मन्त्रेण ऊर्ध्वां करोति एतत् उद्ग्रहणमित्युच्यते ॥

२११ ततः सव्यपादेनैव प्राङ्मुख एव मन्त्रेण पूर्वमार्गेणैव वेद्या उत्तरत आगच्छति तदेतदागमनं द्वितीयादिकममन्त्रकं चागमनं प्रत्याक्रमणमित्युच्यते ॥

२१२ ततः सकृत् मन्त्रेण द्विस्तूष्णीं जुह्वा ध्रुवायामाज्यं स्रावयति एतद् ध्रुवासमञ्जनमित्युच्यते ॥

२१३ यथायतनं स्रुचौ सादयतीत्यादौ पूर्वं यस्मात् स्थानात् स्रुचौ गृहीते तस्मिन्नेव स्थाने पुनः स्थापनं यथायतनसादनमित्युच्यते ॥

२१४ ततः उत्करदेशे संसृष्टं ऊर्ध्वाग्रं स्फ्यं धृत्वा स्वपृष्ठभागे आग्नीध्रमुपश्लिष्टं कृत्वा आश्राव्य आग्नीध्रेण प्रत्याश्राविते एकश्रुत्या मन्त्रं पठति तस्य मन्त्रस्य भरतवत्पदानन्तरं यजमानप्रवरान् तद्धितप्रत्ययरहितान् होतुर्विपरीतान् वतिप्रत्ययान्तान् पठित्वा अवशिष्टं ब्रह्मवदित्यादिमन्त्रभागं पठति तदेतत् अध्वर्युकर्तृकप्रवरणमित्युच्यते ॥

२१५ ततो ऽमुकशर्मा मानुष इति होतुर्नाम गृह्णाति तत् श्रुत्वा होता मन्त्रेण उत्थाय अन्यं मन्त्रं जपति एतदुपोत्थानमित्युच्यते ॥

२१६ ततो मन्त्रेण अध्वर्युसमीपं गच्छति एतद्गमनं अभिक्रमणमित्युच्यते ॥

२१७ तत एकेनैव मन्त्रेण दक्षिणहस्तेन दक्षिणेंऽसे अध्वर्युं दक्षि-

णेनोदण्डा सव्यहस्तेन वा आग्नीध्रं च स्पृशति अयमध्वर्ध्वाग्नीध्रान्वारम्भ इत्युच्यते ॥

२१८ ततः स्फ्यवेष्टनेध्मसंनहनाद्यैः सकृन्मन्त्रेण द्विस्तूष्णीं स्वमुखमध्यात्मं स्पृशति तन्मुखसंमार्ग इत्युच्यते ॥

२१९ ततो होतृषदनं होता अभिमन्त्रयते तत्र होतृषदनं नाम वेद्युत्तरश्रोण्युत्तरदेशः होतुरुपवेशनस्थानम् ३

२२० होतृषदने उपवेशनार्थमास्तीर्णानां दर्भाणां किञ्चिदेकं तृणं अङ्गुष्ठानामिकाभ्यां गृहीत्वा मन्त्रेण नैर्ऋत्यां प्रक्षिपति तत् प्रक्षेपणं निरसनमित्युच्यते ॥

२२१ करणव्युत्पत्त्या मन्त्रोऽपि निरसन इत्युच्यते ॥

२२२ ततो मन्त्रेण होता स्वस्थाने उपविशति दक्षिणोत्तरिणोपस्थेन उपविश्यतेऽनेनेति करणव्युत्पत्त्या स मन्त्र उपवेशन इत्युच्यते ॥

२२३ ततो वेद्यास्तृतबर्हिः दक्षिणजानुशिरसा मन्त्रेण स्पृशति तदेतद्बर्हिरुपस्पर्शनमित्युच्यते ॥

२२४ होता इध्मप्रदीपनसमये एकं यजुर्मन्त्रं पञ्च ऋचश्च जपित्वा इध्मे प्रदीप्ते सति यस्य निगदस्य षडक्षरो मध्यभागः उपांशु पठ्यते तं निगदमुच्चैः एकश्रुत्या पठति तन्निगदघटकघृतीवतीशब्दस्य श्रवणानन्तरं अध्वर्युः प्रयाजहोमार्थं जुहूपभृतौ गृहीत्वातिक्रामति स्रुचौ जुहूपभृतौ आदाप्येते अनेनेति करणव्युत्पत्त्या स निगदः स्रुगादापन इत्युच्यते ॥

२२५ अध्वर्युर्जुहूपभृतावादाय अत्याक्रम्य स्वस्थाने तिष्ठन् आश्रावयति तत्र आश्रावणं आश्रुतं इति च प्लुताकार पूर्वकप्लुतादिश्रावयेति पदोच्चारणं आश्वलायनसूत्रे तु प्लुतो य ओकारस्तत्पूर्वकश्रावयेतिपदोच्चारणम् ।

२२६ आग्नीध्र इध्मसंनहनवेष्टितं स्फ्यमूर्ध्वाग्रं धृत्वा उत्करे दक्षिणामुखः तिष्ठन् सर्वदा आश्रावणानन्तरं अस्तुशब्दपूर्वकप्लुतादिश्रौषट्पदमुच्चारयति तदेतत् प्रत्याश्रवणं प्रत्याश्रुतमिति चोच्यते ॥

२२७ यजेत्यादिलोण्मध्यमपुरुषान्तपदघटितेन येन वाक्येन अध्वर्य्वादिना होत्रादिः प्रेर्यते तद्वाक्यं प्रैष इत्युच्यते ॥

२२८ अध्वर्युप्रेषितो होता एकश्रुत्या पुरोनुवाक्यां पठति सा च प्रायः एकैव ऋक् भवति तस्याः प्रथमार्धर्चे एकमवसानं चतुर्मात्रप्रणवान्तद्वितीयार्धर्चे द्वितीयमवसानं यस्मिन् यागे मैत्रावरुणो भवति तत्र स एव पुरोनुवाक्यां पठति पुरः पूर्वं यागाद् देवतां अनुकूलयितुं या ऋगुच्यते इति व्युत्पत्त्या पुरोनुवाक्यापदं अनुवाक्यापदं च ऋग्विशेषबोधकम् ॥

२२९ यच्छब्दस्य प्रथमाबहुवचने ये इति भवति तत्र एकारः प्लुतः पाठ्यः तत्पूर्वकं यजामहे इति तिङन्तं रेफान्तेन आगूःशब्देनोच्यते ॥

२३० पित्र्यायामिष्टौ तु यजामहे इत्यस्य स्थाने स्वधामहे इति पठ्यते सैव तत्र आगूरित्युच्यते ॥

२३१ वकारोत्तरवर्त्यकारस्य स्थाने प्लुतमोकारं कृत्वा वषट् इति शब्दः पठ्यते स वषट्कार इत्युच्यते ॥

२३२ पित्र्यायां तु वषट्कारस्थाने स्वधापदपूर्वकं नम इति पदं पठ्यते स एव तत्र वषट्कारो भवति ॥

२३३ आगूःपूर्विका वषट्कारान्ता प्रायशोऽर्धर्चावसाना बहुस्थानेषु एकैव ऋक् क्वचिदनृगपि याज्यापदेनोच्यते ॥

२३४ याज्याया ऋचां मध्ये अन्त्योऽच् प्लुतो भवति रस्थानिको विसर्गः याज्याया अन्ते भवति चेत् वषट्कारेण संधौ अवसानाभावात् रेफ एव विसर्गस्थानेऽवतिष्ठते रेफस्थानिको विसर्गो यत्र तत्र लोप एव विसर्गस्य भवति याज्यान्तानामन्येषां तु व्यञ्जनानां यथाव्याकरणं वषट्कारेण सह संधिर्भवति एकारस्य ऐकारस्य वा याज्यान्तत्वे तयोः संध्यक्षरत्वात् प्लुतमकारं पृथगुच्चार्य इकारं ह्रस्वमेव अन्ते पठित्वा वषट्कारं पठेत् एवं ओकारस्य औकारस्य वा तथात्वे तयोरपि प्लुतं अकारं पृथगुच्चार्य उकारमन्ते पठित्वा वषट्कुर्यात् तत्र केवलः रकार रेफ इत्युच्यते ॥

२३५ कादयो मान्ताः यादयो हान्ताश्च वर्णा व्यञ्जनपदवाच्याः।

२३६ एकारादयश्चत्वारः अइउऋऌ इति च पञ्च वर्णाः अच् इति स्वरा इति चोच्यन्ते ॥

२३७ संधिसंपन्नानि अक्षराणीतिसमासे एकारादयश्चत्वारो वर्णाः संध्यक्षराणीत्युच्यन्ते ॥

२३८ सामिधेनीप्रभृतिप्रयाजान्तं शंयुवाकानन्तरं च मन्द्रस्वरेण पठ्यते मारुतस्त्वरसि चरन्मन्द्रं जनयति स्वरं प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितमिति शिक्षोक्त्या मन्द्रस्तु गम्भीरे इत्यमरोक्त्या च कायाग्निप्रेरितो वायुः उरोदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र गम्भीरे स्वरे वर्णानुत्पादयति गानशास्त्रे यं प्रथमयाम इति वदन्ति स मन्द्रस्वर इत्युच्यते ॥

२३९ तस्य सप्त यमा भवन्ति तत्र षष्ठेन यमेन याज्या पठ्यते सप्तमेन वषट्कारः उच्चैस्तरां बलीयान् याज्याया इत्याश्वलायनसूत्रात् उच्चैस्तरां वा वषट्कार इति पाणिनिसूत्राच्च तत्र उच्चनीचभावेन आरोहणावरोहणक्रमेण संपाद्यमानाः गानशास्त्रे षड्जादिनामभिः प्रसिद्धा यमा इत्युच्यन्ते ॥

२४० दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथक् इति कोशात् अमावास्यायामन्वाधानं कृत्वा प्रतिपदि यागः क्रियते स यागो दर्श इत्युच्यते ॥

२४१ पौर्णमास्यामन्वाधाय प्रतिपदि क्रियमाणो यागः पौर्णमासेनेष्टपशुसोमा उपदिष्टा इति सूत्रात् पूर्णमासे भव इति व्युत्पत्त्या पौर्णमासशब्दप्रतिपाद्यः दर्शशब्दवत् लक्षणया पूर्णमासशब्दप्रतिपाद्यश्च भवति ॥

२४२ दर्शपूर्णमासयोरेव श्रुत्यादिषु सर्वविधेरुपदेशात् अन्यत्र च अन्यस्य सर्वेतिकर्तव्यताकलापस्य अतिदेशात् दर्शपूर्णमासौ प्रकृतिपदवाच्यौ ॥

२४३ यत्रयत्र अतिदेशः प्रवर्तते स यागो विकृतिपदेन व्यवह्रियते॥

२४४ तत्र प्रकृतौ पञ्च प्रयाजा भवन्त्यन्ये च आगुरादयो यजूरूपाः वषट्कारान्ताः याज्यात्वात् भवन्ति तेषामन्ते वषट्कारात्पूर्वं सूत्रे वेतु वीतां व्यन्तु इति पदत्रयमध्ये अन्यतमं पदं पठितमस्ति याज्यान्तत्वप्रयुक्ता प्लुतिश्च तस्यैव भवति ॥ चतुर्णां प्रयाजानां वषट्का-

इह भूरि द्वीवसरावामिति याज्या । अबोध्यग्निः समिधा जनानामिति स्विष्टकृतो ऽनुवाक्या । अवोचाम कवये मेध्यायेति याज्या । अन्यत्सर्वं हौत्रं प्रकृतिवत् । इयं प्रजाकामेष्टिरित्युच्यते ॥

५१५ धर्मसभायां व्यवहारादिभाषणायेन्द्रियवीर्यप्रतिष्ठार्थमिष्ट्या यक्ष्ये इति संकल्पः । इन्द्राग्नी रोचनादिव इति प्रधानानुवाक्या । श्नथद्वृत्रमिति याज्या । अन्यत्सर्वं प्रजाकामेष्टिवत् । इयमिन्द्रियवीर्य-प्रतिष्ठाकामेष्टिरुच्यते ।

५१६ एतदिष्टिविधानानन्तरं श्रुतौ पौष्णं चरुमनुनिर्वपेदित्युक्तम् । इन्द्रियवीर्यप्राप्त्यर्थमिष्ट्या यक्ष्य इति संकल्पः । पूषा देवता । चरुर्द्रव्यम् । वयमु त्वा पथस्पत इति प्रधानानुवाक्या । पथस्पथः परिपतिं वचस्येति याज्या । पुष्टिमान्पशुमानित्यनुमन्त्रणम् । यत्र विशेषतः संयाज्ये नोक्ते तत्र पूर्वेष्टिगते संयाज्ये भवतः । अन्यत्प्रकृतिवत् । इयमनुनिर्वापपौष्णेष्टिः ।

५१७ जनसमूहं प्राप्तो यजमानः प्रतिष्ठाकाम इष्ट्या यक्ष्य इति संकल्पयति । क्षैत्रपत्यश्चरुः । क्षेत्रस्य पतिना वयमित्यनुवाक्या । क्षेत्रस्य पते मधुमन्तमूर्मिमिति याज्या । अन्नाद इत्यनुमन्त्रणम् । अन्यत्प्राकृतम् । इयं क्षैत्रपत्येष्टिः ॥

५१८ रक्षोगणपीडानिवृत्त्यर्थममावास्यायां महारात्रे रक्षोहननार्थ-मिष्ट्या यक्ष्य इति संकल्पयति । अग्नये रक्षोघ्ने ऽष्टाकपालः पुरोडाशः । वस्त्रादिना परितः श्रपणं कृत्वा प्रधानयागः । देवताया यद्विशेषणं स गुण इत्युच्यते ॥

५१९ तथा च प्रकृते ऽग्ने रक्षोहेति विशेषणं गुणस्तस्य विशेष्यवि-भक्त्यन्तस्य विशेष्योद्देशानन्तरं गुणस्यापि निर्देशः । एवं सर्वगुणानाम् । कृणुष्व पाजः प्रसितिमिति पञ्चदशर्चः आद्यावृत्त्यभ्यासरहिताः सामिधेन्यः । रक्षोहणं वाजिनमाजिघर्मि इति पुरोनुवाक्याऽविज्योतिषा बृहतेति याज्या अन्नाद इत्यनुमन्त्रणम् । प्राक् स्विष्टकृतः स्रुवाहुतिमुपजुहोत्यध्वर्युर्हत स्वानास इत्यृचा । परिश्रपणं दूरीकृत्य स्विष्टकृदादि । अन्यत्प्राकृतम् । इयं राक्षोघ्नेष्टिः ॥

५२० गोमरणनिवृत्त्यर्थं पुरुषमरणनिवृत्त्यर्थं भयनिवृत्त्यर्थं पूतिग-न्धनिवृत्त्यर्थं च पृथगिष्टिसंकल्पः अग्नये सुरभिमते ऽष्टाकपालः । प्रोक्ष-

णीषु सुगन्धान्विक्षिपति । सुगन्धवन्त ऋत्विजः कर्म कुर्वन्ति । अग्निर्होतान्यसीददित्यनुवाक्या । साध्वीमकर्देववीतिमिति याज्या । उक्तमनुमन्त्रणम् । प्राकृतमन्यत् । इयं सुरभिमदिष्टिः ॥

५२१ शेषजातिमरणनिवृत्त्यर्थं संकल्पः । अग्नये क्षामवते ऽष्टाकपालः । अक्रन्ददग्निस्स्तनयन्नित्यनुवाक्या । त्वे वसूनि पुर्वणीकेति याज्या । अग्निर्देवताक्षयागे प्रायो ऽचाद इत्यनुमन्त्रणम् । गृहदाहनिवृत्तये ऽपीयमेवेष्टिः । इयं क्षामवदिष्टिः ॥

५२२ प्रतिबन्धकनिवृत्त्या काम्यकर्मफलसिद्ध्यर्थं संकल्प्य । अग्नये कामायाष्टाकपालः । तुभ्यं ता अङ्गिरस्तमेत्यनुवाक्या । अश्याम तं काममग्नेति याज्या । इयं कामेष्टिः ॥

५२३ सर्वायुः सिद्ध्यर्थं संकल्पः । अग्नय आयुष्मते ऽष्टाकपालः । इन्द्राय त्रात्रे एकादशकपालः । आनो अग्ने सुकेतुनेत्यग्नेराज्यभागस्यानुवाक्या । त्वं सोम महे भगमिति सोमस्य । अनयोर्जीवातुपदसत्त्वादिमौ जीवातुमन्तावुच्येते ॥

५२४ आयुष्टे विश्वतो दधदित्यग्नेरायुष्मतो ऽनुवाक्या । आयुर्दा अग्नइति याज्या । त्रातारमिन्द्रमिति त्रातुरिन्द्रस्यानुवाक्या । मा ते अस्यामिति याज्या । उभयत्रायुष्मानित्यनुमन्त्रणम् । पाहि नो अग्नएकयेति अग्ने त्वं पारयानव्यो अस्मानिति च संयाज्ये । इयमायुष्कामेष्टिः ॥

५२५ भूतिकाम इष्ट्या यत्यरति संकल्पः । अग्नये जातवेदसे ऽष्टाकपालः । तस्मै ते प्रतिहर्यतेत्यनुवाक्या । दिवस्परि प्रथमं जज्ञइति याज्या । भूतिमानित्यनुमन्त्रणम् । इयं भूतिकामेष्टिः ॥

५२६ रुचं कामयमानः संकल्प्य । अग्नये रुक्मवते ऽष्टाकपालः । शुचिः पावकवन्द्य इत्यनुवाक्या । दृशानो रुक्म उर्व्या व्यद्यौदिति याज्या । इयं रुक्कामेष्टिः ॥

५२७ तेजस्कामः संकल्प्य । अग्नये तेजस्वते ऽष्टाकपालः । आयदिषे नृपतिं तेज आनडित्यनुवाक्या । स तेजीयसा मनसेति याज्या । इयं तेजस्कामेष्टिः ॥

५२८ अन्नकामेष्टिः । अग्नये ऽन्नवते ऽष्टाकपालः । उक्षान्नाय वशान्नायेत्यनुवाक्या । वद्माहि सूनो अस्यैति याज्या । इयमन्नकामेष्टिः ॥

५२९ अन्नाद्यकामः संकल्प्य । अग्नये ऽन्नादायाष्टाकपालः । तुभ्यं ता अङ्गिरस्तमेति पुरोनुवाक्या । तं अश्याम तं काममग्नइति याज्या । इयमन्नाद्यकामेष्टिः ॥

५३० अन्नपतित्वकामस्य । अग्नये ऽन्नपतये ऽष्टाकपालः । पूर्वेष्टिगते याज्यानुवाक्ये । इयं अन्नपतित्वकामेष्टिः ॥

५३१ दीर्घरोगमुक्त्यर्थं संकल्प्य । अग्निः पवमानः अग्निः पावकः अग्निः शुचिः । एतास्तिस्रो देवताः । द्रव्याण्यष्टाकपालाः पुरोडाशाः । अन्वाहार्यमासाद्य हिरण्यं दक्षिणां ददाति । अग्न अग्नेः पवमानस्य आयूंषि पवस इत्यनुवाक्या । अग्ने पवस्वेति याज्या । अग्ने पावक रोचिषेत्यनुवाक्या । सनः पावकदीदिव अग्नेः पावकस्य इति याज्या । अग्निः शुचिव्रततम इत्यनुवाक्या । उदग्ने अग्नेः शुचेः शुचयस्तवेति याज्या । इयं चिररोगमुक्तिकामेष्टिः ॥

५३२ चक्षुष्कामस्य । चक्षुर्दोषनिवृत्त्यर्थं इष्ट्या यक्ष्ये इति संकल्पः । पूर्वेष्टिवत्सर्वम् । इयं चक्षुष्कामेष्टिः ॥

५३३ पुत्रकामस्य अग्नये पुत्रवते ऽष्टाकपालः । इन्द्राय पुत्रिणे ऽष्टाकपालः । यस्त्वा हृदा कीरिणेति प्रथमस्यानुवाक्या । यस्मै त्वं सुकृते जातवेद इति याज्या । त्वे सुपुत्र शवस इति द्वितीयस्यानुवाक्या । उक्थउक्थे सोम इन्द्रं ममादेति याज्या । स्विष्टकृतो ऽग्निस्तुविश्रवस्तममित्यनुवाक्या । अग्निर्ददाति सत्पतिमिति याज्या । इयं पुत्रकामेष्टिः ॥

५३४ रसकामस्य । अग्नये रसवते ऽजक्षीरे चरुः । अत्र पयसः प्रणयनं नापाम् । अग्ने रसेन तेजसेत्यनुवाक्या । आपो अद्यान्वचारिषमिति याज्या । इयं रसकामेष्टिः ॥

५३५ वसुकामस्य । अग्नये वसुमते ऽष्टाकपालः । वसुर्वसुपतिर्हिकमित्यनुवाक्या । त्वामग्ने वसुपतिं वसूनामिति याज्या । इयं वसुकामेष्टिः ॥

५३६ पतितत्वेन जनैरभिशस्यमानस्येष्टिः । वैश्वानराय द्वादशकपालः । वरुणाय चरुः । दधिक्राव्णश्चरुः । वैश्वानरो न ऊत्येत्यनुवाक्या वैश्वानरस्य । त्वमग्ने शोचिषेति याज्या । वरुणस्यावते हेडा वरुणेत्यनुवाक्या । उदुत्तमं वरुणेति याज्या । दधिक्राव्णो अकारिष-





मिति दधिक्राव्णो ऽनुवाक्या । आदधिक्राः शवसा पञ्च कृष्टीरिति याज्या । अन्वाहार्यमासाद्य हिरण्यं दक्षिणा । इयमभिशापनिवृत्तीष्टिः ॥

५३७ ग्रामकामस्य । अग्नये वैश्वानराय द्वादशकपालः । मरुद्भ्यः सप्तकपालः । आहवनीयायतनाद् बहिः वैश्वानराय द्वादशकपालान्युपधाय प्रदक्षिणमावृत्य गार्हपत्यस्य पश्चान्मरुद्भ्यः सप्तकपालान्युपदधाति । तत्तदग्निना पर्यग्निकरणम् । दक्षिणं परिधिसन्धिं विमुच्य वैश्वानरमुद्वासयति । दक्षिणपरिधिमयेण वा । पात्रान्तरे मारुतमुद्वास्य गार्हपत्यसमीपे स्थापयति । वेद्यां वैश्वानरमासादयति । सामिधेन्यनुवचनकाले वेद्यां मारुतं सादयति । वैश्वानरयागः पूर्ववत् । द्वैधसूत्रे ऽत्र देवताविपर्यासः । मारुतस्यावदायान्यत्र निधाय वैश्वानरस्यावदायान्यत्र निधाय प्रथमं मारुतस्य यागः । ततो वैश्वानरस्य । अथ वा मारुतस्यावदानादि यागान्तं कृत्वा वैश्वानरस्यावदानादियागः । वैश्वानरस्य वैश्वानरो न ऊत्येत्यनुवाक्या । पृष्टो दिवीति याज्या । मरुतां तु मरुतो यद्व वो दिव इत्यनुवाक्या । या वः शर्म शशमानायेति याज्या । मरुतामनुमन्त्रणं प्राणेर्ध्वयासमिति । इयं ग्रामकामेष्टिः ॥

५३८ भिद्यमानाद्द्रव्यप्राप्तिकामस्य । अग्नये वैश्वानराय द्वादशकपालः । वैश्वानरो न ऊत्येत्यनुवाक्या । वैश्वानरस्य सुमताविति याज्या । इयं भिद्यमानाद्द्रव्यप्राप्तिकामेष्टिः ॥

५३९ भिक्षितद्रव्यप्राप्त्यनन्तरं वैश्वानर्या यजेत । प्रतिष्ठाकाम इष्ट्यायत्यदति संकल्पः । पूर्ववदिष्टिः पशुकामस्य । ऐन्द्रश्चरुः । इन्द्रं वो विश्वतस्परीत्यनुवाक्या । इन्द्रं नरो नेमधितेति याज्या । इयं पशुकामेष्टिः ॥

५४० अथ द्वितीया । इन्द्रायेन्द्रियावते एकादशकपालः । इन्द्रियाणि शतक्रतो इत्यनुवाक्या । अनुते दायिमहइन्द्रियायेति याज्या । इन्द्रियाव्यवाद इत्यनुमन्त्रणम् । इयं द्वितीया पशुकामेष्टिः ॥

५४१ ब्रह्मवर्चसकामस्य । इन्द्राय घर्मवते एकादशकपालः । आर्यास्मनुत्स्याप्तेत्यनुवाक्या । आमासु पक्वमिति याज्या । ब्रह्मवर्चसीत्यनुमन्त्रणमिन्द्रायेन्द्रियावते तथा इन्द्रायार्कवते च तथैव । इयं ब्रह्मवर्चसकामेष्टिः ॥

५४२ अन्नकामस्य । इन्द्रायार्कवतएकादशकपालः । इन्द्रमिद्गाथिनो बृहदित्यनुवाक्या । गायन्ति त्वा गायत्रिण इति याज्या । इन्द्रियाव्यन्नाद इत्यनुमन्त्रणम् । इयमन्नकामेष्टिः ॥

५४३ भूतिकामस्य त्रिहविष्का । इन्द्राय घर्मवते एकादशकपालः । पूर्वोक्ता याज्यानुवाक्याः । इन्द्रियाव्यन्नाद इति सर्वेषामनुमन्त्रणम् । इयं भूतिकामेष्टिः ॥

५४४ पापक्षयकामस्य । इन्द्रायांहोमुचे एकादशकपालः । अंहोमुचे प्रभरेमामनीषेत्यनुवाक्या दिदेव यन्मेति याज्या । अंहोमुगित्यनुमन्त्रणम् । इयं पापक्षयकामेष्टिः ॥

५४५ बद्धो वा शत्रुवेष्टितो वा तन्मोक्षार्थं संकल्प्य । इन्द्राय त्रात्रे एकादशकपालः । त्रातारमिन्द्रमवितारमिन्द्रमित्यनुवाक्या । मा ते अस्यां सहसावन्निति याज्या । त्रातइत्यनुमन्त्रणम् । इयं बन्धादिमोक्षकामेष्टिः ॥

५४६ महायज्ञान्वाजपेयादीन्कर्तुमशक्तस्तत्काम इष्टिं संकल्प्य । इन्द्रायार्काश्वमेधवते एकादशकपालः । अनवस्ते रथमित्यनुवाक्या । वृष्णे यत्ते वृषेति याज्या । महायज्ञवानित्यनुमन्त्रणम् । इयं महायज्ञकामेष्टिः ॥

५४७ ग्रामकामस्य द्वितीया । इन्द्रायान्वृजवे एकादशकपालः । अन्वहमासा अन्वित्यनुवाक्या । अनु ते दायिमहइति याज्या । ग्रामवानित्यनुमन्त्रणम् । द्वितीया ग्रामकामेष्टिः ॥

५४८ दत्तद्रव्यप्राप्तिकामस्य । इन्द्राय प्रदात्रे एकादशकपालः । प्रदातारं हवामह इत्यनुवाक्या । प्रदाता वज्री वृषभ इति याज्या । प्रदातृमानित्यनुमन्त्रणम् । दत्तद्रव्यप्राप्तिकामेष्टिः ॥

५४९ तुल्येभ्यो ऽधिकश्रीकामस्य । इन्द्रायैकादशकपालः । रेवतीर्नः सधमाद इत्यनुवाक्या । प्रोष्वस्मादिति याज्या । अधिकश्रीमानित्यनुमन्त्रणम् । अधिकश्रीकामेष्टिः ॥

५५० साधारणज्योतिष्टोमादियज्ञकामस्य । आग्नावैष्णव एकादशकपालः । अग्नाविष्णूसजोषसेत्यनुवाक्या । अग्नाविष्णूमहितद्वामिति याज्या । यज्ञवानित्यनुमन्त्रणम् । इयं यज्ञकामेष्टिः ॥

५५१ ब्रह्मवर्चसकामस्य द्वितीया । पुष्यनक्षत्रयुक्तपौर्णमास्यां प्रात-

रुद्रौ देवता । चरुर्द्रव्यम् । श्वेतवत्साया: श्वेतवर्णायागोर्दुग्धं मथितं सदाज्यं भवति । तेनाज्येन हविषः पात्राणां प्रोक्षणं मार्जनं च । अतः प्रोक्षणीपात्रे तदाज्यमेव जलस्थानआनयति । उन्महतमन्त्रे अप्‌शब्दस्य स्थाने आज्यपदस्योहः तद्विशेषणानां क्लीबत्वमेकवचनान्तता प्रोह्या । प्रोक्षणमन्त्रे ऽपि तथैव । बुधसूत्रे ऽनुक्रमण्डलौ सुवेण तदाज्यं प्रक्षिप्य तेन जलेन प्रोक्षणमार्जनानि विहितानि प्रोक्षणीरासादयेति प्रैषे प्रोक्षणामासादयेत्यूहः निनयनमन्त्रे गच्छतेत्यस्यस्थाने गच्छेतिपदम् । प्रधानयागकाले विहारस्य कटादिभिः परिश्रयणम् । तदपहाय स्विष्टकृदादि । सामिधेनीषु पृथुपाजा इत्यस्याः पूर्वं मरू देववत इति न यजमान रिष्यसीति च द्वे ऋचौ प्रक्षेप्तव्ये तथा च सप्तदश सामिधेन्यः । सोमारुद्राविवृहतमित्यनुवाक्या । सोमारुद्रायुवमिति याज्या । ब्रह्मवर्चसीत्यनुमन्त्रणम् ॥

५५२ भाविदुश्चर्मत्वाभावकामस्य सोमापौष्णश्चरुः । सोमापूषणा जननेत्यनुवाक्या । इमौ देवौ जायमानावित याज्या । सुचर्मेत्यनुमन्त्रणम् । इयं दुश्चर्मत्वाभावेष्टिः ॥

५५३ समाने श्रैष्ठ्यमिच्छन् संकल्प्य । अग्नये वसुमते ऽष्टाकपालः । सोमाय रुद्रवते चरुः । इन्द्राय मरुत्वतएकादशकपालः । वरुणायादित्यवते चरुः । सर्वासां तन्त्रेण युगपत्प्रधानयागः । सर्वा देवताश्चतुर्थ्यन्ता उद्दिश्य अनुब्रूहीति प्रैषः । एवं सर्वत्र । उपस्तीर्य सर्वेषां क्रमेण द्विर्द्विरवदाय युगपद्यजति । पञ्चमे प्रयाजे स्वाहाग्निं वसुमन्तं सोमं रुद्रवन्तमिन्द्रं मरुत्वन्तं वरुणमादित्यवन्तं स्वाहेति सर्वेषां सकृत्स्वाहाशब्दः सर्वासामेकैवाग्निः प्रथमो वसुभिरित्यनुवाक्या । सनो देवो वसुभिरिति याज्या । श्रेष्ठ इत्यनुमन्त्रणम् । सप्तदश सामिधेन्यः । वार्त्रघ्नावाज्यभागौ । प्रेद्धो अग्नइमोअग्न इति संयाज्ये । इयं संज्ञानीष्टिरुच्यते ॥

५५४ यो मृत्यो बिभेति स पूर्णायुःप्राप्त्यर्थं संकल्पयत्यायुष्कामः शतकृष्णलया यजते । प्रजापतिर्देवता । आज्ये हिरण्यनिर्मितगुञ्जाप्रमाणकृष्णलमयश्चरुर्द्रव्यम् । पात्रासादने एका चरुस्थाली अवहननाभावादुलूखलादेर्नासादनम् । घृतस्यैव प्रणीतापात्रे आनयनम् । घृतं

प्रथिव्यामीति प्रभृति भवति। दक्षिणाप्स्यां कृष्णलान्याप्य प्रक्षालितान्यवपति। ध्रुवासीतिमन्त्रेण नवं चरुपात्रमधिश्रित्य तिरःपवित्रे प्रणीताज्यमानीय घर्मास्थेत्यादिमन्त्रेण कृष्णलानीप्य श्रपयति। चरुधर्मेणोद्वास्य वेद्यामासादयति। उपस्तरणाभिधारणे यागकाले न भवतः। चतुर्णां कृष्णलस्थालीगतमेकमवदानम्। तथाज्येन सह एवं द्विरवदाय हवनकाले आज्यमेव जुहोति न कृष्णलानि। तूष्णीमवदानं प्रत्यञ्जनं च। पञ्चावत्तिनां त्रीण्यवदानानि तथा च द्वादश कृष्णलानि संपद्यन्ते। कृष्णलमेकं जुहुयाद्वा। हिरण्यगर्भः समवर्तताग्र इत्यनुवाक्या। प्रजापते न त्वदेतान्यन्य इति याज्या। आयुष्मानित्यनुमन्त्रणम्। चत्वारि कृष्णलानि स्विष्टकृते ऽवद्यति। पञ्चावत्तिनस्त्वष्टौ। इडापात्रे अष्टौ पञ्चावत्तिनो द्वादश। चत्वार्यवान्तरेडायै। प्राशित्रे एकम्। ब्रह्मयजमानभागयोरेकैकम्। सर्वत्राज्येन सह। चतुर्धाकरणं नास्ति। अवत्तानि ब्रह्मणो हस्ते दत्तानि च सर्वाणि समं विभज्य ऋत्विजो गृह्णन्ति। सामान्यदक्षिणाविकल्पः। फलीकरणहोमो न। इयं शतकृष्णलेष्टिः॥

५५५ हिरण्यलाभकामस्य। आग्नेयो ऽष्टाकपालः। सावित्रो द्वादशकपालः। भूम्यै चरुः। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्। इत्यनुवाक्या। निकाव्या वेधसः शश्वत इति याज्या। हिरण्यपाणिमूतय इति सवितुरनुवाक्या। वाममद्य सवितरिति याज्या। भूमेर्बलित्थापर्वतानामित्यनुवाक्या। स्तोमासस्त्वा विचारिणीति याज्या। स्वस्तिमानिति सवितुरनुमन्त्रणम्। अन्नाद इत्यग्नेः। हिरण्यवानिति भूमेः। अन्वाहार्यमासाद्य हिरण्यं दक्षिणां ददाति। इयं हिरण्यलाभकामेष्टिः॥

५५६ हिरण्यलाभे जाते तत्प्रतिष्ठार्थं पुनरेतयेष्ट्या यजते। सा लब्धहिरण्येष्टिरुच्यते॥

५५७ क्लीबत्वनाशपूर्वकपुंस्त्वकामस्य। सोमाय वाजिने श्यामाकश्चरुः। आप्यायस्व स मे तु त इत्यनुवाक्या। सन्ते पयांसीति याज्या। प्रप्रजया च पशुभिश्च जभिषीयेत्यनुमन्त्रणम्। इयं पुंस्त्वकामेष्टिः॥

५५८ चक्षुष्कामस्य। अग्नये भ्राजस्वते ऽष्टाकपालः। सौर्यश्चरुः। पूर्ववदग्नेर्भ्राजस्वतो यागः। आग्नीध्रः षडवत्तदानात्पूर्वं इडावत्तचरोर्यजमानाय त्रीन् पिण्डान्प्रतिमन्त्रं प्रयच्छति। उद्धुत्यं जातवेदसमिति



प्रथमम् । सप्त्वा हरितो रथइत्यृचा द्वितीयम् । चित्रं देवानामित्यृचा तृतीयम् । यजमानः पिण्डान् प्राश्याचम्येडाभागं प्राश्नाति । उदग्ने शुचयस्तवेत्यग्नेर्भ्राजस्वतो ऽनुवाक्या । विज्योतिषेति याज्या । उदुत्यं जातवेदसमिति सूर्यस्यानुवाक्या । चित्रं देवानामिति याज्या । चक्षुष्मानित्यनुमन्त्रणम् । इयं द्वितीया चक्षुष्कामेष्टिः ॥

५५९ कामसिद्ध्यर्थे या इष्टयो विहितास्ताः काम्येष्टिपदार्थैः सिद्धः ।

श्रीपरमेश्वरः प्रसीदतु ॥

॥ शिवम् ॥



॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## अथ पाशुकपदार्थानां नामान्युच्यन्ते ।

---

१ उत्तरायणं शुक्लपक्षो देवनक्षत्रं रेवती वाऽमावास्या यजनीयदिनं वाऽनुष्ठानसमयः । अयं पशुबन्धकाल इत्युच्यते ॥

२ आद्यप्रयोगे तु पूर्वेद्युर्नान्दीश्राद्धं रात्रावुदकशान्तिः प्रतिसरबन्धश्च क्रियते । परेद्युःस्नानादिपञ्चकानन्तरं पुण्याहवाचनम् । तत्र पशुदेवतायाः प्रथमान्तं नामोच्चार्य प्रीयतामिति यथार्थमूहनीयम्। इदं प्रथमप्रयोगपूर्वाङ्गमित्युच्यते ॥

३ दर्शपौर्णमासयागकालो यजनीयदिनमित्युच्यते ॥

४ गार्हपत्यस्य पश्चात्सपत्नीको यजमानो दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य विष्णुं स्मृत्वा यः पुरस्तादित्यादि पठित्वा स्वर्गकामः श्रीपरमेश्वरप्रीत्यर्थं वा ऐन्द्राग्नेन निरूढपशुबन्धेन यक्ष्ये इति त्रिरुपांशु त्रिरुच्चैर्वदति । अयं पशुबन्धसङ्कल्प इत्युच्यते ॥

५ प्रतिप्रस्थातृप्रशास्तृसहितान् षडृत्विजो वृत्वाऽर्हयित्वा प्रथमानुष्ठाने पशुना यक्ष्यमाणोऽन्वारम्भणीयया यक्ष्य इति सङ्कल्पपूर्वकमन्वारम्भणीयां समाप्याग्नीनरण्योः समारोप्योदवसाय मन्थति । यक्ष्ये करिष्ये इत्यादिपदोच्चारणसमकालीनदक्षिणहस्तकरणकपात्राधिकरणकजलप्रक्षेपसहितकरिष्यमाणकर्मानुष्ठानप्रतिज्ञा सङ्कल्प इत्युच्यते ॥

६ समारोपिताग्निमदरणीग्रहणपूर्वकं देवयजनदेशं प्रति गमनमुदवसानमित्युच्यते ॥

७ मन्थनानन्तरमध्वर्युरग्नीन् विहृत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये मनस्वत्या हुत्वा उद्धरणपक्षे पुनर्विहृत्य षड्ढोतारं मनसाद्रुत्यान्वारब्धे यजमाने चतुर्गृहीतेनाहवनीये जुहोति । स्रुवेण चतुर्वारं गृहीतमाज्यादि चतुर्गृहीतमित्युच्यते ॥



८ सूर्यन्ते चक्षुरित्यादीदीनि नव वाक्यानि षड्ढोतेत्युच्यन्ते ॥

९ वाचस्पतये ब्रह्मणऽइदं न ममेति यजमानस्य त्यागः । पुनर्विहृत्योपस्थानवरदानान्तः कूष्माण्डहोमः । पुनर्विहृत्य प्रत्येकं चतुर्गृहीतेन सारस्वताहुती पुनर्विहृत्य चतुर्गृहीतेनाज्येन विष्णोर्विक्रमस्वेत्यृचा जुहोति विष्णवे इदमिति त्यागो यजमानस्य । इयमाहुतिः करिष्यमाणयूपग्रहणार्थत्वाद्यूपाहुतिरित्युच्यते ॥

१० अध्वर्युः पुनश्चतुर्गृहीतं गृहीत्वा सस्रुवामाज्यस्थालीं बर्हिर्हिरण्यमुदपात्रं चादाय सपरशुं तक्षाणमाहूय एहि यजमानेत्युक्त्वा पूर्वद्वारेण शालाया बहिर्निष्क्रम्य यस्माद्वृक्षाद्यूपग्रहणं चिकीर्षितं तस्य समीपं गत्वा प्रतीच्यां दिशि प्रह्वां शाखां स्वयं प्राङ्मुखोऽत्यन्यानगानित्यादियजुर्मन्त्रेणोपतिष्ठते । इदं यूपयोग्यशाखोपस्थानमित्युच्यते ॥

११ तत आज्यस्थाल्याः स्रुवेणोपहत्य शाखामूलमनक्ति । देवस्त्वा सवितामध्वेत्यादियजुषा । इदं यूपशाखाञ्जनमुच्यते ॥

१२ तत ओषधे त्रायस्वैनमितिमन्त्रेण यूपमूले ऊर्ध्वाग्रं बर्हिरन्तर्दधाति । तदुपरि स्वधितिना तिर्यक् छिनत्ति स्वधितेमैनꣳहिंसीरिति मन्त्रेण । आज्यस्थाल्यादेः सकाशात्स्रुवादिना पात्रान्तरे आज्यादेर्ग्रहणं उपहननमित्युच्यते ॥

१३ शाखाछेदनकाले यः प्रथमः शकलः परापतति तं यूपावटे प्रक्षेपार्थं क्व चित् प्रज्ञातं स्थापयति । कस्य चिदपि पदार्थस्य उपयोगकाले शीघ्रलाभार्थं अत्रेदं मया स्थापितमस्तीति शीघ्रस्मृतिजनकसङ्केतः प्रज्ञातमित्युच्यते ॥

१४ यूपशाखां छित्वा ऽप उपस्पृश्य प्राच्यामुदीच्यां वापतन्तं यूपं दिवमग्रेण मालेखीरित्यादियजुषा ऽनुमन्त्रयते । वृक्षस्य छेदनदेशे हिरण्यं निधाय परिस्तीर्य परिषिच्य पूर्वाहृतेन चतुर्गृहीतेन वनस्पते शतवल्शमित्यादियजुषा स्वाहान्तेन जुहोति । वनस्पतय इदमिति यजमानस्य त्यागः । अयं छेदनप्रयुक्तहोम उच्यते ।

१५ सहस्रवल्शा वीति पादेन स्वहृदयमभिमृशति । ततो ऽप उपस्पृश्य काष्ठतक्षा परशुना मूलादारभ्याग्रपर्यन्तं यूपशाखायाः सर्वा अवान्तरशाखा अध्वर्युश्छेदयति यं त्वायं स्वधितिरित्यादियजुषा ।

सकृन्मन्त्रपाठो न प्रत्यवान्तरशाखम् । हस्तपरिष्वङ्गादनधिकं प्रादेशपरिमाणादनूनं उपरेण पञ्चारत्निं चषालस्थापनार्थं चतुरङ्गुलाधिकमग्रतश्छिनत्त्यच्छिन्नो रायःसुवीर इति मन्त्रेण । छिन्नशेषस्य मूले चतुरङ्गुलमात्रमुपरं त्यक्त्वा ऽवशिष्टमष्टाश्रिं चतुरश्रिं वा तक्षति । स्वर्वेर्थमेकं शकलमधिमन्थनार्थं त्रीणि शकलानि स्थापयति । यूपाहुतिप्रभृत्येतावदन्तं कर्मयूपाहरणमित्युच्यते ॥

१६ तदनन्तरं पाशुकवेदिमानं उत्तरवेदितन्नाभ्योर्मानं चात्वालमानं उत्करकरणं च वरुणप्रघासवत्करोति । पाशुकवेदिमग्निवत्परिस्तृणाति । इदानीं यजमानो भोजनं वपनं नवनीताभ्यञ्जनमक्ष्णोरञ्जनं च करोति । इदानीं देवतासङ्कल्पं करोतीति केषां चिन्मतम् । अध्वर्युरिडाजपं कृत्वा ऽग्नीन् विहृत्यान्वाधाय व्रतग्रहणान्ते शाखाहरणपत्ने इषेत्वेत्यादियजुषा शाखामाच्छिनत्ति । तूष्णींप्रतशाखामाच्छिद्योभे शाखे तूष्णीमाहृत्य तूष्णीं यजमानमवेक्षयित्वोद्गूहति यजमानस्येत्यादिप्राकृतमन्त्रेण । ततो बर्हिः संभरणादि । ऐन्द्रवी विधृती भवतइति के चित् । पञ्चविधं बर्हिः । कार्ष्मर्यमयाः परिधयः । सप्तदश सामिधेन्यः । शाखापवित्रकरणमन्त्रे पशुं हव्यं करोतु मे इति विशेषः । सायमग्निहोत्रहोमानन्तरमुत्तरेण गार्हपत्यं दर्भान् संस्तीर्य तेषु पशुकुम्भीं शाखा पवित्रं च त्रिगुणां त्रिव्यायामां यूपरशनां द्विगुणां द्विव्यायामां पशुरशनां च कार्ष्मर्यमय्यौ वपाश्रपण्यौ विशाखामेकामपरामविशाखां कार्ष्मर्यमयं हृदयशूलं यजमानमुखसम्मितं मैत्रावरुणदण्डं चेति द्वन्द्वं सादयति । ततस्तान्युत्तानानि कृत्वा कमण्डलुगताभिरद्भिः शुन्धध्वमित्यादिप्राकृतमन्त्रेण प्रकृतिवत्प्रोक्षति । पशोरङ्गानां हृदयादीनां श्रपणार्थंभाण्डं पशुकुम्भीत्युच्यते ॥

१७ यूपस्य वेष्टनार्थं या रज्जुः सा यूपरशनेत्युच्यते ॥

१८ पशुबन्धनार्था रज्जुः पशुरशनेत्युच्यते ॥

१९ वपा श्रप्यते यस्यां सा वपाश्रपणीत्युच्यते ॥

२० यस्मिन् शूले पशुहृदयं प्रोतं भवति तत् हृदयशूलमित्युच्यते ॥

२१ अपरेद्युः प्रातरग्निहोत्रहोमानन्तरमन्वाधानव्रतराहितां बर्हि०

त्वरनादिब्राह्मणतर्पणान्तामाग्नेयीमिष्टिं करोति । सा च सर्वापि प्रकृतिवत् क्रियते इयं पशुपूर्वेष्टिरित्युच्यते ॥

२२ पश्वनुष्ठानस्य सद्यस्कालत्वपक्षे तु नान्दीश्राद्धादिवेदिमानं च पूर्वेद्युरेव क्रियते । अपरेद्युः स्नानादिपञ्चकं ततः पशुसङ्कल्पानन्तरमन्वारम्भणीयेष्टिः क्रियते । अग्नीनरण्योः समारोप्य प्रत्यक्षान्वा देवयजनदेशं प्रति नयति । मन्थनपक्षे ऽग्नीन्विहृत्य मनस्वत्या हुत्वा पुनर्विहृत्य षड्ढोतृकूष्माण्डसारस्वतहोमान्तं समानम् । तदनन्तरमाग्नेय्यां अन्यन्वाधानादिब्राह्मणतर्पणान्तां पशुपूर्वेष्टिं करोति । ततो यूपाहुत्यादिपाशुकवेदिपरिस्तरणान्तं करोति । ततः पशुदेवतासंकल्पं कृत्वा ऽन्वाधानादिकुम्भ्यादिप्रोक्षणान्तं करोति इति विशेषः । अयं सद्यस्कालपशुप्रकार इत्युच्यते ॥

२३ अपरेद्युराग्नेय्यादृष्टेरनन्तरं यजमानो देवतासङ्कल्पं करोति । पाशुकं हविः । वपापुरोडाशाङ्गानि हवींषि । एकादश प्रयाजाः । अग्नीषोमावाज्यभागौ । इन्द्राग्नी पशुदेवता । वनस्पतिः पृषदाज्यदेवता । देवा आज्यपाः अग्निः स्विष्टकृत् । एकादशानुयाजाः । एकादशोपयाजाः । सूक्तवाकशंयुवाकौ । चत्वारः पत्नीसंयाजाः । एवमात्मकेन साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये इति । अयं पशुदेवतासंकल्प इत्युच्यते ॥

२४ ततः पाणिसम्मर्शनादि । अग्नीन् परिस्तीर्याहवनीयस्य पुरस्ताद्दर्भान् संस्तीर्य तेषु स्फ्यमग्निहोत्रहवणीं जुहूं वसाहोमहवनीमुपभृतं पृषदाज्यग्रहणीं स्रुवं स्वधितिं ध्रुवां प्राशित्रहरणीमिडां वेदमाज्यस्थालीं दधिस्थालीमपूर्वाज्यस्थालीं योक्त्रं वेदाग्रं धृष्टिं उपवेषमिध्मप्रवृश्चनमन्वाहार्यस्थालीं च द्वन्द्वं सादयति । एतत्पाशुकपात्रासादनमुच्यते ॥

२५ इमानि स्फ्यादीन्येकविंशतिसंख्याकानि पूर्ववद्गार्हपत्यस्योत्तरत आसादितानि पशुकुम्भ्यादीनि चाष्टौ पाशुकपात्राणीति कथ्यन्ते ॥

२६ एतत्पाशुकपात्रासादनानन्तरं ब्रह्माणं दक्षिणतस्तूष्णीमुपवेश्य प्रणीताः प्रणीय पवित्रे कृत्वा यजमान वाचं यच्छेत्युक्त्वा वेषाय त्वेत्यग्निहोत्रहवणीमादाय प्रत्युष्टमित्यादिमन्त्रेण गार्हपत्ये प्रकृतिवत्प्रतितप्य प्रोक्षणीः संस्कृत्य प्रोक्षिताः स्थेत्यन्तं कृत्वा पाशुकपात्राणि प्रकृतिवत्प्रो-

स्याज्यं निरुप्य तूष्णीं दधि निरुप्यापूर्वाज्यं च निर्वपति । आज्यमधिश्रित्य पर्यग्नि करोति । पशुपूर्वेष्ट्यशक्तौ तु एतस्मिन् काले स्मार्तवत्संस्कृताज्येन चतुर्गृहीतेन अग्निपदं चतुर्थ्यन्तमुद्दिश्य स्वाहान्तेन पूर्णाहुतिहोममात्रं भवति । निर्वापानन्तरं प्राकृतमन्त्रेण वेदं हृत्वा प्रकृतिवत्पाशुकीं वेदिं त्रिः सम्मार्ष्टि । तस्याः पश्चादुपविश्य स्फ्यादानादि आग्नीदितस्त्रिर्हरेत्यन्तं प्रकृतिवत्करोति । अथस्फ्यमुदपात्रं बर्हिः शम्यामित्येतत्समादाय यजमानपत्नीभ्यां सह चात्वालदेशं गत्वा वरुणप्रघासवच्चात्वालं कृत्वा उत्तरवेदिनाभिप्रच्छादनान्तं करोति । ततो देवस्यत्वेत्यादिनाऽभ्रिमादायाऽभ्रिरसि नारिरसीभिमन्त्र्य तयाऽर्धमन्तर्वेदि अर्धं बहिर्वेदि पदमात्रविष्कम्भं यूपावटं परिलिखति । परिलिखितमित्यादि यजुषा सकृत् द्विस्तूष्णीम् । यूपरोपणार्थं यो गर्तः खन्यते स यूपावट इत्युच्यते ॥

२७ इदं यूपावटपरिलेखनमुच्यते ॥

२८ अथाग्नीध्रं संप्रैषमाह । आग्नीदेहीमं यूपावटं खनोपरसम्मितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमति खनतात् इति । आग्नीध्रो यूपावटं खनति खानयति वा । अध्वर्युर्यदा चात्वालकरणादिनाभिप्रच्छादनान्तं करोति तदा प्रतिप्रस्थाता त्रिप्रादेशप्रमाणैरनियतकाष्ठैरिध्मं बध्वाऽग्निप्रणयनार्थमाहवनीये प्रतिप्य ज्वलयति । चात्वालकरणादि उत्तरवेदिनाभिप्रच्छादनान्तं वरुणप्रघासपर्वोक्तं कर्म औत्तरवेदिकमित्युच्यते ॥

२९ यूपावटपरिलेखनानन्तरमाग्नीध्रश्चात्वालमृदा पूरितां पात्रीमग्न्युद्धरणपात्र्युपयमनार्थमग्निसमीपे स्थापयति । अध्वर्युस्तूष्णीमुत्पूताः प्रोक्षणीः प्रतिप्रस्थात्रे प्रयच्छतीत्यादियजमानकर्तृकाहुतिचयहोमान्तं कर्म वरुणप्रघास पर्वोक्तं अग्निप्रणयननामकमिदानीं करोति । अग्निप्रणयनानन्तरं ब्रह्मा पाशुकवेद्या दक्षिणतउत्तरवेद्याजेवन मन्त्रेणोपविशति । तस्य पश्चाद्यजमानः । अध्वर्युस्ततः परिग्राहं परिगृह्य प्रोक्षणीरुपयत्वा तिर्यञ्चं स्फ्यं प्रकृतिवत् स्तब्ध्वा सम्प्रैषमाह । प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्वधितिं च स्रुचश्चसंमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीं सन्नह्याज्येन दध्ना चोदेहीति । प्रोक्षण्यासादनादिप्रकृति वत् संमार्जने

विशेषः । शालामुखीये प्रतितप्य स्रुववत् स्वधितिं जुहूपभृतौ ...
उपभृद्वत्पृषदाज्यग्रहण्याश्च सम्मार्गः । जुह्वामाज्यग्रहणपर्यन्तं प्रकृतिवत् । उपभृति चतुर्गृहीतं गृहीत्वा महीनां पयोसीति मन्त्रेण पृषदाज्यग्रहण्यामाज्येनोपस्तृणीते । विश्वेषां देवानां तनूरसीति द्वितीयमुपस्तरणम् । ऋद्ध्यासमद्येत्यादियजुषा तस्यां दर्भद्वयान्तर्धानेन दधि गृह्णाति । बर्हिर्द्वयं दूरीकृत्य विष्णो हृदयमसीति प्रथममभिघारयति । एकमिषेत्यादिमन्त्रेण द्वितीयमभिघारणम् । यजमानश्चरोऽस्त्वित्यादिचतुर्भिरुपभृदाज्यग्रहानुमन्त्र्योत्तरैश्चतुर्भिर्मन्त्रैः पृषदाज्यग्रहाननुमन्त्रयते । अध्वर्युः पञ्चविधं बर्हिः पाशुकवेद्यां स्तीर्त्वा कार्ष्मर्यमयान् परिधीन् उत्तरवेद्यां परिधाय विधृत्योराश्ववालं प्रस्तरं निधायोपभृदनन्तरं तन्मन्त्रेणोपभृत उत्तरतः पृषदाज्यग्रहणीमासाद्य तदुत्तरतो ध्रुवामासादयति । एतत् जुह्वाद्यासादनं पाशुकस्रुगासादनमित्युच्यते ॥

३० आज्यस्थाल्याज्यपूरितं स्रुवं स्वधितिं चायेण स्रुचां दक्षिणतो नीत्वा प्रस्तरे जुह्वा दक्षिणतः सादयति । प्राकृते स्रुवासादनमन्त्रे स्योनादिपदानां यथार्थमूहो द्विवचनमेकवचनस्थाने भवति । स्रुवस्वधिती यथा दक्षिणतो नीतौ तथैवोत्तरत आनीय ध्रुवायामवदधाति । अत्रापि प्रकृतिप्राप्तमन्त्रे ऊहयोग्यानामृषभादि पदानां यथार्थं द्विवचनान्तता भवति । स्वधितेर्द्वितीयस्य सत्त्वात् । सर्वाज्याभिमन्त्रणान्तं प्रकृतिवत् । अन्वाधानप्रभृत्येतावदन्तं कर्म पश्वङ्गप्राकृतमुच्यते ॥

३१ (अथकेवलपाशुकम् ।) प्रदक्षिणमावृत्या प्रत्यङ्ङावृत्य तूष्णीं संस्कृता यवमतीः प्रोक्षणीर्बर्हिर्मुष्टिं सस्रुवां स्मार्ताज्यस्थालीं स्वरं रशने मैत्रावरुणदण्डं प्रथमपतितयूपशकलं हिरण्यमुदपात्रं चादायोत्तरवेदिसमीपे निधायोदपात्रोदकेन यूपं प्रक्षालयति यत्ते शिक्वः परावधीदित्यृचा । एतद्यूपप्रक्षालनमुच्यते ॥

३२ ततश्चात्वालोत्करयोर्मध्यमार्गेण यूपमानीय यूपावटस्य पुरस्ताद्यूपं प्रागग्रं शाययित्वोत्तरवेद्या उत्तरतस्तिष्ठन् पृथिव्यै त्वेत्यादिमन्त्रेण यवमतीभिः प्रोक्षणीभिर्मूलादारभ्याग्रपर्यन्तं सकृदेव प्रोक्षति । एतद्यूपप्रोक्षणमित्युच्यते ॥

३३ शुन्धतां लोक इत्यादिमन्त्रेण यूपावटे ऽवशिष्टाः प्रोक्षणी-

निनयति । यवोऽसि यवयेत्यादिमन्त्रेण यूपावटे यवान् प्रक्षिपति । प्राचीनावीती बर्हिर्मुष्टिं द्विधा कृत्वा एकं भागं प्रागग्रमपरं दक्षिणाग्रं च कृत्वा द्वयोर्भागयोर्मध्यं यूपावटस्य मध्ये यथा स्यात्तथा भागद्वयं निदधाति पितॄणां सदनमसीति मन्त्रेण । तस्य मध्ये हिरण्यं निधाय तस्योपरि पितृभ्यः स्वाहेति मन्त्रेण स्रुवाहुतिं जुहोति । यजमानोऽपि प्राचीनावीती भूत्वा पितृभ्य इदं न ममेति त्यागं पठति । अध्वर्युर्यज्ञोपवीती प्रथमपतितं यूपशकलं यूपावटे प्रक्षिपति स्वावेशोऽस्यग्रेगा इत्यादिमन्त्रेण । अयं यूपशकलप्रक्षेप इत्युच्यते ॥

३४ ततः सस्रुवां स्मार्ताज्यस्थालीं स्वरुं यूपरशनां मैत्रावरुणदण्डमुदपात्रं चादाय एहि यजमानेति यजमानमामन्त्र्याग्रेण यूपं परीत्य दक्षिणत उदङ्मुखस्तिष्ठति । यजमानो यूपस्यावटस्य च मध्येनोत्तरतो गत्वा ऽग्रेण यूपं परीत्याध्वर्योर्यूपस्य च मध्येन पश्चाद्गत्वोदङ्मुखस्तिष्ठति । पत्नी तु अध्वर्योरुत्तरतो यजमानस्य दक्षिणतः पश्चाद्गत्वोदङ्मुखी तिष्ठति । उपरसमीपे अध्वर्युश्चषालमुन्मुच्याज्येन यूपाग्रं स्रुवेणानक्ति देवस्त्वा सवितेत्यादिमन्त्रेण । चषालमन्तरतो बाह्यतश्च स्वभ्यक्तं कृत्वा यूपाग्रे प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वेत्यादिमन्त्रेण । चषालो यूपकटक इति कोशात् पञ्चारत्निपरिमाणयूपस्य अग्रभागे अधिके चतुरङ्गुलोच्चे सन्तक्षिते कटकवत् यः प्रवेश्यते स चतुरङ्गुलमात्रः सुबिलः चषाल इत्युच्यते ॥

३५ ततस्तत्क्षणकाले चिह्नितामग्निष्ठामस्रिं स्रुवेणाभिघारयन्नाह । यूपायाज्यमानायानुब्रू३हीति । अञ्जनप्रभृति स्वरुगूहनपर्यन्तं पत्नीयजमानौ यूपं नोत्सृजेताम् । अध्वर्युरुपर्याज्यमानयति । यजमानस्तेनाज्येन यूपमुपरवर्जं सर्वतः समनक्ति । पत्न्युपरमनक्ति । अत्र पञ्चारत्निपरिमाणयूपस्य मूलप्रदेशे प्रथमोऽरत्निपरिमितो भागो यो यूपावटे रोप्यते स उपर इत्युच्यते ॥

३६ अयं यूपायेत्यादिप्रैषो यूपाञ्जनप्रैष इत्युच्यते ॥

३७ यूपस्य चतस्रोऽष्टौ वा ऽस्रयो भवन्ति तत्राग्निसंमुखास्रिः अग्निष्ठास्रिरित्युच्यते ॥



३८ अध्वर्युरवटाद्बहिर्यूपमुच्छ्रयन्नाह । उच्छ्रीयमाणानुब्रूहीति । अयं यूपोच्छ्रयणप्रैष इत्युच्यते ॥

३९ अध्वर्युर्यजमानेन सह यूपमुच्छ्रयति उद्दिवं स्तभानेत्यादिमन्त्रेण । यातेधामानीति द्वाभ्यामृग्भ्यां यूपमवटे प्रवेशयति । अग्निष्ठामश्रिमाहवनीयस्याभिमुखीं करोति । एतद्यूपोच्छ्रयणमित्युच्यते ॥

४० ततः स्थिरस्य यूपस्य चषालं यजमानमवेक्षयति तद्विष्णोरित्यृचा । इदं चषालावेक्षणमित्युच्यते ॥

४१ ततो ब्रह्मवनिन्त्वेत्यादिमन्त्रेणावटे प्रदक्षिणं मृत्तिकां प्रवेशयति । मैत्रावरुणदण्डेन यूपमभितः संहन्ति ब्रह्म दृंह क्षत्रं दृंहेत्यादिमन्त्रेण । इदं यूपसंहननमित्युच्यते ॥

४२ अवटं पार्श्वभूम्यपेक्षया ऽन्यूनमनतिरिक्तं पुरीषेण प्रच्छाद्यतत्रोदपात्रोदकं प्रदक्षिणं नीय यूपरशनामादाय त्रिः संभुज्य मध्यमेन गुणेन यूपं नाभिदघ्ने त्रिः प्रदक्षिणं परिव्ययन्नाह परिवीयमाणायानुब्रूहीति । अयं परिव्ययणप्रैष उच्यते ॥

४३ ततः परिवीरित्यृचा परिव्ययति । यूपसमीपमारभ्य परस्परसंलग्नं कृत्वा ऽन्तं प्रवेश्य कुशलक्रियया ग्रन्थिं कृत्वा रशनाग्रं निर्भिद्य रशनामूलं प्रवेश्याग्निष्ठायामस्यां मध्यमं रशनागुणं निर्भिद्य तत्र स्वरुं प्रवेशयति । अन्तरिक्षस्येत्यादि गूहामीत्यन्तेन मन्त्रेण । यूपतक्षणकाले पतितं शकलं प्रकृते गूह्यमानं स्वरुपदवाच्यम् ॥

४४ यूपप्रक्षालनप्रभृत्येतावदन्तं कर्म यूपसंस्कार इत्युच्यते ॥

४५ अथैनं पशुं हरिद्रामलकादिभिः स्नापितमन्तरेण चात्वालोत्करौ प्रपाद्य यूपाहवनीययोर्मध्येन दक्षिणतो नीत्वा यूपस्य पुरस्तात् प्रत्यङ्मुखं यः कश्चिद्धारयति । पशोरुक्तो यो वर्णो विधिवाक्ये यथा वायव्यं श्वेतमालभेतेत्यादौ श्वेतवर्णस्तादृशवर्णविशिष्टपश्वभावे अथवा पशोः प्रतिषिद्धत्वेऽध्वर्युर्नित्याज्यस्थाल्याज्येन वसाहोमहवन्या प्रायश्चित्ताहुतीर्जुहोति । अग्निर्मूर्धेत्यृचा । अग्नय इदं न ममेति त्यागो यजमानस्य अग्नाविष्णू सजोषसेत्यृचा । अग्नाविष्णुभ्यामिति त्यागः । इन्द्रं विश्वा अवीवृधन्नित्यृचा । इन्द्रायेदमिति त्यागः । वायो शतं हरीणा-

मित्यृचा । वायवइदमिति त्यागः । प्रजापते न त्वदित्यृचा । प्रजापतय इदमिति त्यागः । एता आहुतयः पशुप्रायश्चित्ताहुतय उच्यन्ते ॥

४६ एकशृङ्गश्छिन्नकर्णोऽन्धो भग्नदन्तो वामनश्छिन्नपुच्छः शिपिविष्टो बधिरः कच्छनियुक्त एकखुरश्च पशुः प्रतिषिद्धपशुरुच्यते ॥

४७ प्रतिबर्हिर्मन्त्रं वदन्निषेत्स्येति मन्त्रेण द्वे बर्हिषी गृहीत्वा पशोः शृङ्गयोर्मध्ये बर्हिर्भ्यामन्वारभ्येन्द्राग्निभ्यां त्वा जुष्टमित्यादिमन्त्रेण यजमानेन सह मनसा सङ्कल्प्योपाकरोति उपवीरसीत्याद्यृचा प्रजापतेर्जायमाना इत्यृचा इमं पशुं पशुपते इत्यृचा अनुमन्यस्वेति यजुषा च । इदं पशूपाकरणमित्युच्यते ॥

४८ बर्हिषी अन्यैः पदार्थैरसंसृष्टे प्रज्ञाते निधायोत्तरवेदिसमीपे पूर्वपरिगृहीतशकलत्रयमध्ये एकमधिमन्थनशकलं प्रागायतं निदधाति अग्नेर्जनित्रमसीति मन्त्रेण । तस्य पार्श्वयोः प्रागायतौ वृषणौ हस्ताभ्यां युगपदन्वञ्चौ निदधाति वृषणौ स्थ इति मन्त्रेण । उर्वश्यस्यायुरसीत्यादिमन्त्रेण दक्षिणेन हस्तेनोत्तरारणिं सव्येनाधरारणिमादत्ते । घृतेनाक्ते इत्यादिमन्त्रेणारणिद्वयमपूर्वाज्यस्थाल्यां समनक्ति । अधिमन्थनशकले अरणी निधाय प्रजातीयं यजमानं वाचयति । गायत्रं छन्दोऽनुप्रजायस्वेत्यादियजुर्मन्त्रः प्रजात्यै अग्निप्रजननाय हितमिति व्युत्पत्त्या प्रजातीय इत्युच्यते ॥

४९ मन्थत्याह । अग्नये मथ्यमानायानुब्रू३हीति । अयं मन्थनप्रैष उच्यते ॥

५० अग्नौ जाते सत्याह । जातायानुब्रू३हीति । यजमानान्वारब्धोऽध्वर्युर्जातमग्निमाहवनीये भवतं नः समनसावित्यृचा प्रहरति । अस्मात्प्रहरणात्पूर्वं प्रह्रियमाणायानुब्रू३हीति प्रैषो होतारं प्रति सम्प्रहरणप्रैष इत्युच्यते ॥

५१ अपूर्वाज्येन सकृद्गृहीतेन आहवनीये प्रहृतस्याग्नेरुपरि अग्नावग्निश्चरतीत्यृचा जुहोति । ततो देवस्य त्वेति मन्त्रेण द्विगुणां रशनामादाय तया सव्यशृङ्गवर्जं पशुं अन्यया शिरसि बध्नाति ऋतस्य त्वा देवहविरित्यादिमन्त्रेण । द्विगुणायाः पशुरशनायास्त्रिगुणाया यूपरश-



पशुनियोजनमित्युच्यते ॥

५२ अद्भ्यस्त्वौषधीभ्य इत्यादिमन्त्रेण तूष्णीं संस्कृताभिरद्भिः पशुं प्रोक्षति । पात्रान्तरे जलमानीय अपां पेरुरसीति मन्त्रेण पशुं पाययति । तूष्णीं संस्कृताभिरद्भिः पशुमुपरिष्टात्प्रोक्ष्य स्वात्तं चिदित्यादिमन्त्रेण अधस्तात्प्रोक्षति प्रोक्षणीर्निधाति । एतत्पशुप्रोक्षणमित्युच्यते ॥

५३ अथेध्मात्समिधमाददान आह अग्नये समिध्यमानायानुब्रूहीत्यादि जौहवाघारपर्यन्तं प्रकृतिवत् । तदनन्तरमुदङ्ङागत्याघारशेषजौहवाज्येन पशुं ललाटे समनक्ति सन्ते प्राणो वायुनेत्यादिमन्त्रेण । सं यजत्रैरङ्गानीति मन्त्रेण ककुदि । सं यज्ञपतिराशिषेति मन्त्रेण दक्षिणश्रोण्याम् । इदं पशुसमञ्जनमित्युच्यते ॥

५४ ततो ध्रुवां समज्य यथायतनं स्रुचौ सादयित्वा प्रवरं प्रवृणीते । तत्र होतुःप्रवरानन्तरं आश्राव्य प्रत्याश्राविते मित्रावरुणौ प्रशास्तारौ प्रशास्तादित्युक्त्वा मैत्रावरुणस्य नाम गृह्णाति । अमुकशर्मा मानुष इति । घृतवतीशब्दश्रवणानन्तरं जुहूपभृतावादायात्याक्रम्याश्राव्य प्रत्याश्राविते आह समिद्भ्यः प्रेष्येति । द्वितीयादिप्रयाजेषु प्रेष्येत्येव वदति प्रशास्तृप्रैषान्ते तेन सह यजेति वदति न वा चतुर्थाष्टमयोः प्रयाजयोरौपभृदाज्यस्य जुह्वां समानयनम् । स्वाहा कृतीभ्यः संस्रावस्य जुह्वां रक्षणं पञ्चमप्रयाजे यो यजमानस्य त्यागः स एव षष्ठादिषु । दशप्रयाजानिष्ट्वोदङ्ङत्याक्रम्य स्वरुं स्वधितिञ्चादाय तौ सह जुह्वां समज्य ताभ्यां सहैव पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति मन्त्रेण । स्वधितिं शमितुर्हस्ते प्रयच्छति स्वरुं रशनायामवगूहति । यथायतनं स्रुचौ सादयित्वाह । पर्यग्नये क्रियमाणायानुब्रूहीति । अयं पर्यग्निकरणप्रैष इत्युच्यते ॥

५५ तत आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण शामित्रमग्रेण पशुं जघनेन स्रुव इत्येवंरीत्या त्रिः प्रदक्षिणं पर्येति । यथोल्मुकमन्तर्भवति स्वयं बहिर्भवति तथा । इदं पाशुकपर्यग्निकरणमुच्यते ॥

५६ ततोऽध्वर्युरपूर्वाज्यात्स्रुवगृहीतेन परिशरणत्रयमध्ये प्रथमे एकां

उत्तरयोः परिसरणयोर्द्वे द्वे एवं पञ्चापाव्यानि जुहोति । प्रजानन्तइत्येका येषामीशे पशुपतिरिति द्वितीया ये बध्यमानमिति तृतीया य आरण्याः पशवः इति चतुर्थी प्रमुञ्चमाना इति पञ्चमी । एता ऋचोपाव्यानी-त्युच्यन्ते ॥

५७ प्रजापतयइदमिति प्रथमयोस्त्यागः । अग्नये वायवे विश्वेभ्यो देवेभ्य इति क्रमेण तृतीयादीनाम् । आग्नीध्रस्य पर्यग्निकरणार्थं प्रद-क्षिणं गमनं परिसरणमित्युच्यते ॥

५८ अथ वा परिसरणानुसरणं विना यथासम्भवं होमः । अयम-पाव्यहोम इत्युच्यते ॥

५९ आग्नीध्र आहवनीयसमीपे उल्मुकं निधाय यथागतमेवः पुनः पर्येति । तदनन्तरं प्रतिप्रस्थाता उपवेषेण पुराणगार्हपत्यादुदीचो-ङ्गारानिरूहति मातरिश्वनो घर्मोसीति मन्त्रेण । तानादाय दक्षिणया द्वारा दक्षिणेन विहारं ब्रह्मयजमानयूपानामन्तरत आहरन् स्वयं बहि-र्गच्छन् अन्तरेण चात्वालोत्करावुदङ्गत्वा शामित्रशालायां निदधाति । अयं निहितो ऽग्निः शामित्र इत्युच्यते ॥

६० आग्नीध्रः यूपोत्तरवेद्योर्मध्येन शामित्रशालां प्रतिनीयमानस्य पशोरग्रत उल्मुकं गृहीत्वा गच्छति । अध्वर्युर्यजमानश्च पशुं वपाश्रप-णीभ्यामन्वारभेते । अध्वर्युराश्राव्य प्रत्याश्राविते आह । उपप्रेष्यहोत-र्हव्या देवेभ्यः इति । अयमुपप्रैष इत्युच्यते ॥

६१ अन्तरेण चात्वालोत्करावुदञ्चं नीयमानं पशुमनुमन्त्रयते नाना प्राणो यजमान इति मन्त्रेण । आग्नीध्र उदङ्मुखं निष्क्रम्य किञ्चिदग्रागत्वा शामित्रसकाशे उल्मुकं निदधाति । अध्वर्युस्तस्योल्मु-कस्योत्तरतः प्राग्रोदग्रोपाकरणबर्हिषोर्मध्ये एकं बर्हिरपास्यति पृथिव्याः सम्पृचः पाहीति मन्त्रेण । पूर्वं येन बर्हिर्द्वयेन पशोरुपाकरणं कृतं तदुपाकरणबर्हिरुच्यते ॥

६२ अध्वर्युः शमितारं प्रत्याह । अक्षण्वन्तं मायुं संज्ञपयतेति । अयं शमितृप्रैषइत्युच्यते ॥

६३ तस्मिन् बर्हिषि प्रतीचीनशिरसमुदीचीनपादं पशुं शाययित्वा शमितारः संज्ञपयन्ति एवंरीत्या पशोर्मारणं संज्ञपनमित्युच्यते ॥





६४ यजमान ऋत्विजश्च संज्ञप्यमानं पशुमनवेक्षमाणाः सन्तः संज्ञपनकाले पृषदाज्यसमीपे आसते इह प्रजा विश्वरूपा रमन्तामित्यृचं च जपन्ति । शमितारः संज्ञपनानन्तरं संज्ञप्त इत्याहुः । अध्वर्युरुपाकरणप्रभृति संज्ञपनपर्यन्तं पशोर्वाशने वेपने पलायने मरणे शकृत्कृतौ मूत्रकरणे च प्रतिनिमित्तं निमित्तक्रमेण तिस्रस्तिस्र आहुतीर्जुहोति यदस्य पारे रजस इत्यादितिसृभिर्ऋग्भिः । तत्र द्वितीयस्यामृचि वाशने निमित्ते यस्माद्भीषा वाशिष्ठा इति पाठः । वेपने तु वाशिष्ठा इति पदस्य स्थाने वेपिष्ठा इति पदमूहनीयम् । एवं सर्वनिमित्तेषु । अग्नये वैश्वानरायेदमिति यजमानस्य त्याग आद्ये । अन्त्ययोस्तु रुद्राय मीढुष इति । उदकोपस्पर्शश्च । एता वाशनादिनिमित्ताहुतय उच्यन्ते ॥

६५ ततोऽपूर्वाज्यात्सकृद्गृहीतेन यत्पशुर्मायुमकृतेत्यादिमन्त्रेण जुहोति । अग्नय इति त्यागो यजमानस्य इयं संज्ञप्ताहुतिरित्युच्यते ॥

६६ शमितार उगेत्यादिमन्त्रेण पश्वभिमुखं गच्छन्ति । अदितिः पाशमित्यादि मन्त्रेण पाशात्प्रमुच्यमानं पशुमनुमन्त्रयते । अविशाखया वपाश्रपण्या पाशमादायारातीयन्तमित्यादिमन्त्रेण नैर्ऋत्यां दिशि निरस्यति । अथ प्रतिप्रस्थाता पत्नीमुत्थाप्योदककमण्डलुं धारयित्वा नमस्त आतानेतिमन्त्रेणादित्यमीक्षयति । अन्तरेण चात्वालोत्करौ पत्नीमुदङ्मुपनिष्क्रमय्य प्राचीमुदानयन्ननर्वा प्रेहीत्यादिमन्त्रं वाचयति । अध्वर्युः पशुसमीपे अपो वीक्षमाणां पत्नीं आपो देवीरित्यादिमन्त्रं वाचयति । स्वयमेव मन्त्रं ब्रुवाणा पत्नी जलं सिञ्चन्ती सती क्रमेण पशोरङ्गान्याप्याययति । वाक् त आप्यायतामिति मन्त्रेण वाचं प्राणस्त इति नासिके । एवं चक्षुस्त इति चक्षुषी । श्रोत्रं त इति श्रोत्रे । चक्षुरादेर्द्वित्वात् मन्त्रे एकवचनान्तप्रयोगात्प्रतिस्थानं मन्त्रावृत्तिरिति केचित् । या ते प्राणाञ्छुगित्यादिमन्त्रं सकृदेव वदति । पूर्वमाप्यायितानि वागादीन्यङ्गानि संमृशति । ततो नाभिस्त आप्यायतामिति नाभिम् । पायुस्त इति गुदम् । ततः शुद्धाश्चरित्रा इत्यादिमन्त्रेण पशोश्चतुरः पादानेकीकृत्य प्रक्षालयति अतिशिष्टा अपः पशोः पृष्ठमूलादारभ्याग्रपर्यन्तं निनयति शं महोभ्यामिति मन्त्रेण । एतावत्कर्म संज्ञप्तपश्वाप्यायनमित्युच्यते ॥

६७ अध्वर्युः पत्नीमन्यत्र गमयित्वा पशोर्दक्षिणपार्श्वे द्वितीयमुपा-

करणमाह: ओषधे त्रायस्वैनमितिमन्त्रेण [illegible]
मैनं हिंसीरिति मन्त्रेण तस्योपरि स्वधितिं तिर्यञ्चं निदधाति । बर्हिषा सह त्वचं छित्वा बर्हिषोऽग्रं दक्षिणहस्ताङ्गुल्यन्तराले सक्तं कृत्वा बर्हिषोऽधोभागस्योभावन्तौ सह गृहीत्वा रुधिराक्तं छिन्नप्रदेशं नैर्ऋत्यां दिशि रक्षसां भागोसीत्यादिमन्त्रेण निरस्यति । इदं त्वक्छेदनमित्युच्यते ॥

६८ ततोऽप उपस्पृश्य छिन्नप्रदेशं पुनर्विस्तीर्णं कृत्वा इषेत्वेतिमन्त्रेण वपामुद्धरति । इदं वपोद्धरणं वपोत्खेदनमिति चोच्यते ॥

६९ हृन्मेदस्तु वपा वसेतिकोशात् मेदोविशेषः सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतवर्णो वपेत्युच्यते ॥

७० तया वपया सशाखां वपाश्रपणीं घृतेनेत्यादिप्रोर्णुवाथामित्यन्तेन मन्त्रेण प्रच्छादयति । अविशाखया वपाश्रपण्या वपाया अधोभागं गृहीत्वा वपां स्वधितिनाऽच्छिन्नो राय इत्यादिमन्त्रेण छिनत्ति । प्राङ्मुखः पर्यावृत्य वपामद्भिः प्रक्षालयति । एतद्वपाप्रक्षालनमित्युच्यते ॥

७१ अथैनां वपां शामित्राग्नौ प्रतितपति । एतद्वपाप्रतितपनमुच्यते ॥

७२ आग्नीध्रः शामित्रसकाशे पूर्वनिहितमुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरवेद्यभिमुखो गच्छति । तस्य पश्चादध्वर्युः उर्वन्तरिक्षमन्विहीतिमन्त्रेण गच्छति । यजमानो वपाश्रपणीमन्वारभते । आग्नीध्र उल्मुकमाहवनीये प्रक्षिपति । इदं पशूल्मुकप्रक्षेपणमित्युच्यते ॥

७३ अध्वर्युराहवनीयस्योत्तरपार्श्वस्थेष्वङ्गारेषु पूर्वमङ्गुल्यन्तराले स्थापितं बर्हिषोऽग्रं प्रक्षिपति वायो वीहीत्यादिमन्त्रेण । अयमुपाकरणबर्हिरग्रप्रक्षेप इत्युच्यते ॥

७४ प्रदीप्तस्य बर्हिरग्रस्य ज्वालायां वपां वपाश्रपण्या किञ्चित्प्रतितप्य यूपाहवनीययोरन्तरेण नीत्वा दक्षिणतः प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता आहवनीयस्य दक्षिणतः उदङ्मुखः स्थित्वा श्रपयति । अध्वर्युरासीनः श्रप्यमाणाया वपाया उपरि अपूर्वाज्येन स्रुवाहुते दधिरदत्यृचा स्रुवाहुतिं जुहोति । जातवेदसेऽग्नयइदमिति यजमानस्य त्यागः । इयं स्तोकाहुतिरित्युच्यते ॥



७५ अथाध्वर्युर्होतारं सम्प्रेष्यति । स्तोकेभ्योनुब्रूऽहीति इदं वपाश्रपणमुच्यते ॥

७६ वपायां शृतायां सत्यां पात्रान्तरेऽपूर्वाज्येन उपस्तीर्य वपाश्रपणीमकाशाद्वपामुद्धृत्य तस्मिन्पात्रेऽवधायाग्नावधिश्रित्य अपूर्वाज्येनाभिघार्योदगुद्वास्य तेनैवाज्येन सान्नाय्यवन्मन्त्रेणालङ्करोति । इदं वपालङ्करणमुच्यते ॥

७७ स्रुचां दक्षिणतः पञ्चहोत्रावपामासादयति । इदं वपासादनमुच्यते ।

७८ अग्निर्होतेत्यादीनि पञ्चवाक्यानि पञ्चहोतृपदवाच्यानि ॥

७९ यजमानेनासन्नाभिमन्त्रणे कृते स्रुगादापनमन्त्रगतघृतवतीशब्दं श्रुत्वा ऽध्वर्युर्जुहूपभृतावादायात्याक्रम्याश्राव्य प्रत्याश्राविते मैत्रावरुणं प्रत्याह । स्वाहा कृतीभ्यः प्रेष्येति अयमुत्तमप्रयाजप्रैषएव उच्यते ।

८० मैत्रावरुणेन प्रेषितो होता एकादशीं प्रयाजयाज्यां पठति । होत्रा वषट्कृतेऽध्वर्युरुत्तमप्रयाजेन प्रचरति । तत उदङ्ङत्याक्रम्य प्रयाजशेषेण ध्रुवामभिघार्य पृषदाज्यमभिघार्य दक्षिणतो गत्वा वपामभिघार्य यथागतं प्रतिनिवृत्य चतुर्वारं ध्रुवाया आज्यं गृह्णन आह । अग्नय आज्यस्यावदीयमानस्यानुब्रूऽहीति ततोऽत्याक्रम्याश्राव्य प्रत्याश्रावितआह । अग्नयआज्यं प्रस्थितं प्रेऽष्येत्ति । ततो मैत्रावरुणप्रेषितो होता यजति । होत्रा वषट्कृतेऽध्वर्युः प्रकृतिवत्प्रथमाज्यभागेन प्रचरति एवं द्वितीयाज्यभागेन । तत्र सोमायाज्यस्यावदीयमानस्यानुब्रूऽहि सोमायाज्यं प्रस्थितं प्रेऽष्येति प्रैषयोविशेषः । उभयत्र याजमानं प्रकृतिवत् । अथापूर्वाज्येन जुव्हामुपस्तीर्य तदुपरि हिरण्यशकलमवधाय वपामेकीकृत्य स्रुवेणादधान आह । इन्द्राग्निभ्यां छागस्य हविषो वपाया मेदसोनुब्रूऽहीति अयं वपानुयाज्याप्रैष उच्यते ॥

८१ वपां स्रुचि निधाय तदुपरि हिरण्यशकलं निधायापूर्वाज्येनाभिघार्यापूर्वाज्यस्थालीं सस्रुवामाहवनीयसकाशे निधायात्याक्रम्याश्राव्य प्रत्याश्रावितआह । इन्द्राग्निभ्यां छागस्यवपां मेदः प्रस्थितं प्रेऽष्येति अयं वपायाज्याप्रैष उच्यते ॥

८२ स्वाहा देवेभ्य इतिमन्त्रेण पुरस्तात् स्रुवेणाज्याहुतिं जुहोति । देवेभ्य इदमिति यजमानस्य त्यागः । अध्वर्युर्होतुर्याज्याया उपक्रमकाले जातवेदो वपयेत्यृचं स्वाहाकारान्तां पठन् वषट्कारसमकालं स्रुङ्मुखेन वपां जुहोति । याजमानं प्रकृतिवत् । देवेभ्यः स्वाहेति मन्त्रेणोपरिष्टात्स्रुवाहुतिं जुहोति । याजमानं पूर्ववत् । आज्यभागानन्तरमेतावत्कर्म वपायाग इति वपाप्रचार इति चोच्यते ॥

८३ ततो विशाखां वपाश्रपणीं प्रागग्रामविशाखां वपाश्रपणीं प्रत्यगग्रां च कृत्वाऽऽहवनीये स्वाहोर्ध्वनभसमित्यादृचा सस्वाहाकारयानुप्रहरति । इदं वपाश्रपण्यनुप्रहरणमुच्यते ॥

८४ ऊर्ध्वनभसे मारुतायेदमिति यजमानस्य त्यागः । वपाश्रपण्योरुपरि संस्रावेणाभिजुहोति । तत उदङ्ङुत्याक्रम्य यथायतनं स्रुचौ सादयित्वा षडृत्विजो यजमानः पत्नी च चात्वालदेशं गत्वा परस्पराह्वानं कुर्युः । तद्यथा पत्न्येहि । होतरेहि । ब्रह्मन्नेहि । प्रतिप्रस्थातरेहि । प्रशास्तरेहि । अग्नीदेहि । यजमान एहि । इत्यध्वर्युराह्वयति । ततः पत्नी होत्रादीनध्वर्य्वन्तानुक्रमेणाह्वयति । एवं होतृब्रह्मप्रतिप्रस्थातृप्रशास्त्रग्नीद्यजमानाः क्रमेण आत्मानं वर्जयित्वा सर्वेषामुक्तरीत्याह्वानं कुर्युः तत इदमापः प्रवहतेति निमुञ्चामि शपथादिति च द्वाभ्यामृग्भ्यां चात्वाले सर्वे मार्जयन्ते । यजमानः सुमित्रा न आप ओषधयः सन्त्वित मन्त्रेणाञ्जलिनापो गृह्णाति दुर्मित्रास्तस्मै भूयासुरित्यादिमन्त्रेण नैर्ऋत्यां दिशि ता अपो निरस्यति । सर्वे अपः स्पृष्ट्वा स्वेस्वे स्थानउपविशन्ति । इदं वपामार्जनमित्युच्यते ।

८५ अथाध्वर्युराह । अग्नीत्पशुपुरोडाशं निर्वप प्रतिप्रस्थातः पशुं विशाधि इति । अयं पशुपुरोडाशनिर्वापप्रैष उच्यते ॥

८६ तत आग्नीध्रः पाणी सम्मृश्य शालामुखीयस्य पुरस्ताद्दर्भेषु पात्राणि सादयति । स्फ्यमेकादशकपालानि शूर्पं कृष्णाजिनं उलूखलं मुसलं दृषदमुपलां मेक्षणं पिष्टोद्वपनीं प्रणीताप्रणयनं दारुपात्रीं मदन्तीं च । प्राकृत आहवनीयः शालामुखीय इत्युच्यते ॥

८७ ततो ब्रह्मोपवेशनादि प्रकृतिवत् । निर्वापादिषु अग्निपदस्य स्थाने इन्द्राग्निपदम् । शालामुखीयस्य पश्चादाज्यलेपनिनयनान्तं



करोति । प्रतिप्रस्थाता हविष्कृदन्ते आप्यनिनयनान्ते वा सम्प्रैषमाह । शमितर्हृदयं जिह्वां वक्षस्तानि सार्धं कुरुतात्तनिममतस्नौ तानि सार्धं सव्यं दोरेकचरं कुरुतात्पार्श्वे अवधताद्दक्षिणां श्रोणिमध्युद्धिं कुरुताद्दक्षिणं दोः सव्यां श्रोणिमणिमद्गुदस्य तानि अङ्गानि कुरुताद्वनिष्ठुं च जाघनीं चावधत्ताद्बहुरूपः कुरुतात्त्रिः पशुं प्रच्यावयतात्त्रिः प्रच्युतस्य पशोर्हृदयमुत्तमं कुरुतादिति । अयं पश्वङ्गग्रहणप्रैष इत्युच्यते ॥

८८ अध्वर्युः शमित्राग्नौ पशुकुम्भीमधिश्रति द्यौरसि पृथिव्यसीत्यादिमन्त्रेण पशुकुम्भ्यां शाखापवित्रमुदगग्रं निदधाति तस्यां प्रभूतमुदकमानीय सर्वाण्यङ्गानि निक्षिप्य सुशृतानि यथास्युस्तथा श्रपयति । पश्वङ्गेषु शृतेषु सत्सु आग्नीध्रो दक्षिणेनाज्यस्थालीं स्रुवां सव्येन दारुपात्रीं वेदमित्येतत्समादायान्तर्वेदि पुरोडाशासादनान्तं करोति । यजमानेनासन्नाभिमन्त्रणे कृते ऽध्वर्युर्जुहूपभृतोरुपस्तीर्य पुरोडाशस्य पूर्वार्धादवद्यन्नाह । इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रू३हीति अयं पशुपुरोडाशानुवाक्याप्रैष उच्यते ॥

८९ जुह्वां प्रकृतिवदवदाय प्रत्यञ्जनान्तं कृत्वोपभृति स्विष्टकृदर्थं पुरोडाशस्योत्तरार्धात्सकृदवदाय द्विरभिघार्य न प्रत्यनक्ति अत्याक्रम्याश्राव्य प्रत्याश्रावितआह इन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रे३ष्येति । अयं पशुपुरोडाशयाज्याप्रैष इत्युच्यते ॥

९० वषट्कृते जुहोति । इन्द्राग्निभ्यामिदमिति यजमानस्य त्यागोऽनुमन्त्रणं च प्राकृतम् । अध्वर्युरुपभृत्स्थं पुरोडाशं जुह्वां समावपमान आह । अग्नये नुब्रू३हीति । अयं पशुपुरोडाश स्विष्टकृदनुवाक्याप्रैष उच्यते ॥

९१ ततोऽत्याक्रम्य प्रत्याश्रावितआह अग्नये प्रे३ष्येति । अयं पशुपुरोडाशस्विष्टकृत्प्रैषप्रैष उच्यते ॥

९२ वषट्कृते प्रकृतिवज्जुहोति प्राकृताग्नेययागवद्यजमानस्य त्यागानुमन्त्रणे ततो हविरुच्छिष्टोद्वासनान्तं प्रकृतिवत् । ततः स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वाहार्यपचने इध्मप्रव्रश्चनान्यभ्याधाय फलीकरणहोमं कृत्वा प्रणीतानिनयनान्तं प्रकृतिवत् । अथ संप्रैषमाह । आग्नीदुत्तरं

बोहकमपसाद्य प्रतिप्रस्थातः पशा सवदस्वेति । अयं पाशुकहविरासादनप्रैष इत्युच्यते ॥

९३ तत आग्नीध्रः स्रुचां दक्षिणतो बर्हिरास्तीर्य तदुपरि यूपाहवनीययोरन्तरेणेडसूनुमाहृत्य कृष्णशाखायामुपगूहति । प्रतिप्रस्थाता आज्यस्थालीं स्रुवं चादाय पूर्वगृहीतात्पृषदाज्याज्जुहूं गृहीत्वान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य शमितारं पृच्छति । शृतꣳहविः३ शमितः इति । शमिता हृदयशूलं पुरतो धारयन् शृतं इति प्रत्याह । प्रतिप्रस्थाता पुनः किंचिद्गत्वा पूर्ववत्पृच्छति । शमिता तथैवप्रत्याह पुनः किंचिद्गत्वा तथैव तृतीयप्रश्नोत्तरे । इमे प्रश्नोत्तरे शमितृप्रश्नोत्तरे इत्युच्येते ॥

९४ अत्र प्रथमगमने पूषा मा पशुपाः पात्विति मन्त्रः । पूषा मा पथिपाः पात्विति द्वितीयगमने मन्त्रः । तृतीयगमने पूषा मा धिपाः पात्वितिमन्त्रः । अथ वा तूष्णीमेव गमनत्रयम् एते हविरानयनार्थगमनमन्त्रा इत्युच्यन्ते ॥

९५ प्रतिप्रस्थाता उक्तरीत्या शामित्राग्निसमीपं गत्वा शमितुर्हस्ताच्छूलमादाय तेन शूलेन हृदयरूपमवदानं भित्वा तच्छूलं शमितुर्हस्ते दत्वा पृषदाज्येन हृदयादीन्येकादशावदानानि युगपदभिघारयति सन्ते मनसा मन इत्यादिना स्वाहाकारान्तेन मन्त्रेण । पुनराज्यस्थाल्याज्येन स्रुवगृहीतेन सर्वाण्यवदानान्यभिघार्योदगुद्वास्य पुनराज्येनाभिघार्य एकादशावदानानि प्रत्येकं यस्त आत्मा पशुष्वित्यादिमन्त्रेणालङ्करोति । उक्तमन्त्रेणाभिघारणं हविरलङ्करणमित्युच्यते ॥

९६ ततो विपूः कृत्वा हरतेति परिकर्मिणः प्रतिप्रेष्यति अयमङ्गाहरणप्रैष उच्यते ॥

९७ अध्वर्युर्जुहूमुपभृतिं च ध्रुवाज्येनोपस्तृणाति । इडापात्रे आज्यस्थाल्याज्येनोपस्तृणाति वसाहोमहवन्यामपूर्वाज्येनोपस्तृणाति स्वयं यूपस्य बहिर्मार्गेण गच्छन् जुहूं उपभृतं वसाहोमहवनीं इडापात्रं प्राशित्रहरणं च यूपाहवनीययोरन्तरेणाहृत्य दक्षिणतो हविषः सादयति । परिकर्मिणस्तु अङ्गानियूष्णः पृथक् कृत्वा यूषं पात्रान्तरे गृहीतं स्थापयन्ति । पश्वङ्गानि यूपाहवनीययोरन्तरेणाहरन्ति । अध्व-



र्युक्तान्यङ्गानि स्रुचां दक्षिणतः प्लक्षशाखसमीपे पञ्चहोत्रासादयति । ततः पात्रान्तरस्थं यूषं यूपाहवनीयोरन्तरेणाहृत्याङ्गानां दक्षिणतः सादयति । आसन्नानिहवींषि यन्मे अग्नइत्यृचा यजमानोनुमन्त्रयते । इदं पाशुकहविरासादनमित्युच्यते ॥

९८ ततोऽध्वर्युः प्लक्षशाखायां हृदयं निधाय स्वधितिना तस्याग्रे छिन्नप्रदेशादवद्यन्नाह । मनोतायै हविषोवदीयमानस्यानुब्रू३हीति । अयमङ्गावदानप्रैषइत्युच्यते ॥

९९ हृदयाज्जुह्वां द्विरवद्यति ततो जिह्वायाः सकाशात् द्विरवद्यति । ततो वक्षसस्तनिम्नश्च वृक्क्ययोर्मेदसी पृथक् स्थापयित्वा दक्षिणवृक्क्यात्सव्यवृक्क्यात्सव्याद्दोष्णो दक्षिणात्पार्श्वात्सव्यात्पार्श्वाद्दक्षिणश्रोण्या अध्युध्याऊर्ध्वप्रदेशाद्गुदं त्रेधा कृत्वा मूलमुपयड्भ्योऽयं स्विष्टकृदर्थं निधाय मध्यं द्वेधा कृत्वा जुह्वामवदधाति । पूर्वस्यापितद्दक्षिणवृक्क्यमेदं यूष्णा निधाय प्रसार्य तेन जुहूं प्रच्छाद्य यूष्णोपसिच्य ध्रुवाज्येन पूरितेन यूपाहवनीययोर्मध्याहृतेन स्रुवेण जुह्वां गृहीतान्यङ्गान्यभिघारयति । सर्वाण्यङ्गानि द्विर्द्विरवद्यति । सर्वत्रोपस्थानाभिमर्शप्रत्यञ्जनानि न भवन्ति । तत उपभृति सकृद्दक्षिणस्य दोष्णः सकृत्सव्यश्रोणेः पिशितमवदाय पूर्वोनिहितं गुदस्याग्रं निधाय यूषमानीय तदुपरि सव्यवृक्क्यमेदो निधाय प्रसार्य तत्रोपभृतं प्रच्छाद्य यूष्णोपसिच्य पूर्ववद्द्विरभिघारयति । अवत्तावशिष्टेभ्योङ्गेभ्यः प्राशित्रमवदायाज्यस्थाल्याः सकाशाद्गृहीताज्येन स्रुवदण्डेन जुह्ववदानवत् द्विरभिघार्य निदधाति । इडापात्र्यां अवदान काले ऽवशेषितान् हृदयजिह्वावक्षोभागान् तनिमं मतस्नं वनिष्ठुं च द्विर्द्विरादाय अन्यैरप्यनुक्तैरस्थिवर्जितैरङ्गैरिडां वर्धयित्वा यूष्णोपसिच्य जुह्वङ्गवदाज्यस्थाल्याज्येन स्रुवेणाभिघारयति । वसाहोमहवन्यां वसां गृहीत्वा यूष्णोपसिच्य जुह्वङ्गवदपूर्वाज्येन स्रुवेणाभिघारयति इदं कर्म पश्वङ्गावदानमुच्यते ॥

१०० तत ऐन्द्रः प्राणो अङ्गे अङ्गइत्यादिमन्त्रेणावदानान्यभिमृशति । अयं मन्त्रोवदानाभिमर्शनमन्त्र इत्युच्यते ॥

१०१ अथ दक्षिणपार्श्वस्य मांसवत्प्रदेशेन वसाहोमहवन्यां गृहीतां वसां मिश्रयति श्रीरस्यग्निस्त्वेत्यादिमन्त्रेण । जाघनीं यथाहृतं प्रत्या-

हृत्य पश्चाद्वात्वा शालामुखीयस्य समीपे निदध्युः । पश्वङ्गानि जुहूं उपभृतं इडापात्रीं वसाहोमहवनीं प्राशित्रहरणं च यथाहृतं पर्याहृत्य यथास्थानं निदध्युः । अध्वर्युर्यथागतं प्रत्येत्य जुहूपभृतावाददान आह । इन्द्राग्निभ्यां छागस्य हविषोनुब्रू३हीति । अयं पश्वङ्गानुवाक्याप्रैष उच्यते ॥

१०२ अत्याक्रम्याश्राव्य प्रत्याश्रावितआह इन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रे३ष्येति । अयं हविर्याज्याप्रैषप्रैष उच्यते ॥

१०३ प्रतिप्रस्थाता आहवनीयस्योत्तरतस्तिष्ठन् याज्याया अर्धर्चे होत्रा पठिते वसाहोमं घृतं घृतपावानः पिबतेत्यृचा जुहोति । अन्तरिक्षायेदमिति यजमानस्य त्यागः । अयं वसाहोम इत्युच्यते ॥

१०४ होतुर्वषट्कारे अध्वर्युर्जुह्वा जुहोति । यजमान इन्द्राग्निभ्यामिदं न मम । इन्द्राग्नियोरहं देवयज्ययेन्द्रियावी भूयासमिति त्यागानन्तरमनुमन्त्रयते । अयमङ्गयाग इत्युच्यते ॥

१०५ ततः प्रतिप्रस्थातोपविश्य वसाहोमशेषेण दिशो जुहोति दिशः प्रदिश इत्यादि मन्त्रेण । दिग्भ्य इदमिति यजमानत्यागः । अयं दिग्घोम इत्युच्यते ॥

१०६ ततोऽध्वर्युः प्रदक्षिणमावृत्य जुह्वामुपस्तीर्य स्रुवेण पृषदाज्यं सकृद् गृहीत्वाऽऽह । वनस्पतयेनुऽब्रू३हीति । द्विरभिघार्य प्रसव्यमावृत्याश्राव्य प्रत्याश्रावितआह । वनस्पतये प्रे३ष्येति । वषट्कृते पूर्वा आहुतीरतिहाय जुहोति । वनस्पतयइदमिति यजमानस्य त्यागः आयुष्मानित्यनुमन्त्रणञ्च । अयं वनस्पतियाग इत्युच्यते ॥

१०७ अध्वर्युरुपभृति गृहीतान्यङ्गानि जुह्वां समावपमान आह । अग्नये स्विष्टकृतेनुब्रू३हीति । आश्राव्य प्रत्याश्रावितआह । अग्नये स्विष्टकृते प्रे३ष्येति । वषट्कृते पूर्ववज्जुहोति । संक्षालननिनयनानन्तरं होत्रकुलिपर्वाञ्जनादि करोति । उपहूतायामिडायां वनिष्ठुमग्नीधे षडवत्तं संपाद्य ददाति । इडाभागमपि ददातीति केषाञ्चिन्मते । षडृत्विजो यजमानश्चेडां भक्षयन्ति । इदं पशुइडाभक्षणमुच्यते ॥

१०८ मार्जनानन्तरं ब्रह्मणो प्राशित्रं परिहरेत्यादि कृत्वा ब्रह्मणो वसः परिहरेत्याह । तत आग्नीध्रस्तथा करोति । यजमानः अन्वाहार्यप्रति-





ग्रहानन्तरं ऋत्विग्भ्यो गां ददाति । देवस्येत्यादिप्रतिग्रहमन्त्रे ब्रह्मणा-ओदनमित्यस्य स्थाने रुद्रायगामिति विशेषः । अथाऽध्वर्युः सम्प्रेषमाह । अग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन् प्रस्थास्यामः समिध-माधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीति । अयमुपयाजप्रैष इत्युच्यते ॥

१०९ तत आग्नीध्रः शामित्राग्निसकाशादङ्गारानादाय होतुः पुरस्तादासादयति । प्रतिप्रस्थाता गुदतृतीयभागं वसाहोमहवनीञ्चादाय होतुरुत्तरपार्श्वे उपविश्य गुदं प्रत्यनुयाजमनुयाजप्रचारकाले स्वधितिनाऽसंभिन्दन् प्रच्छिद्य वसाहोमहवन्या पर्यावृत्य जुहोति । अध्वर्युः पृषदाज्यग्रहणीस्थं समस्तं पृषदाज्यं विहृत्य जुह्वां समानीय पृषदाज्य-ग्रहणीमुपभृत्स्थाने धृत्वाऽत्याक्रम्याश्राव्य प्रत्याश्रावितमाह देवेभ्यः प्रेष्येति । वषट्कारसमकालं अध्वर्युः पृषदाज्यं जुहोति प्रतिप्रस्थाता गुदखण्डं समुद्रं गच्छ स्वाहेति मन्त्रेण जुहोति । देवाय बर्हिष इद-मिति समुद्रायेदमिति च त्यागानन्तरं बर्हिषोऽहमित्यादि प्रकृतिवदनु-मन्त्रणं च यजमानस्य । अध्वर्युर्द्वितीयादिष्वनुयाजेषु मैत्रावरुणं प्रति-प्रेष्येत्येव प्रेष्यति । ऊर्जादिषु बर्हिर्वर्जेष्वनुयाजेषु प्रशास्त्रा सह यजेति वदति । प्रतिप्रस्थाता द्वितीयादिष्वनुयाजेषु अन्तरिक्षं गच्छ स्वाहे-त्यादि वैश्वानरं गच्छ स्वाहेत्यन्तैर्दशभिर्मन्त्रैर्होतुर्वषट्कारसमकालं क्रमेण दशगुदखण्डानि प्रच्छिद्य जुहोति । एते प्रतिप्रस्थातृकर्तृका गुदहोमा उपयाजा इत्युच्यन्ते ॥

११० यजमानस्य द्वितीयादिष्वनुयाजेषु त्यागाः क्रमेण । देवीभ्यो द्वार्भ्य इदम्० अन्तरिक्षायेदम्० प्रथमानुयाजे । देवीभ्यामुषासानक्ताभ्या-मिदम्० । देवाय सवित्र इदम्० द्वितीये । देवीभ्यां जोष्ट्रीभ्यामिदम्० अहोरात्राभ्यामिदम् तृतीये । देवीभ्यामूर्जाहुतिभ्यामिदं० मित्रावरुणा-भ्यामिदम्० चतुर्थे । देवाभ्यां दैव्याभ्यां होतृभ्यामिदम्० सोमायेदम्० पञ्चमे । देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्य इदम्० यज्ञायेदम्० षष्ठे । देवाय नराशंसायेदम्० छन्दोभ्य इदम्० सप्तमे । देवाय वनस्पतय इ-दम्० द्यावापृथिवीभ्यामिदम्० अष्टमे । देवाय बर्हिषेवारितीभ्य इदम्० दिव्याय नभस इदम्० नवमे । देवायाग्नये स्विष्टकृत इदम्० अग्नये वैश्वानरायेदम्० । दशमे । इति द्वितीयादिषु दशसु त्यागा एते ।

अथानुमन्त्रणानि क्रमेण प्रथमादीनामेकादशानामनुयाजानाम् । बर्हिषोहन्देवयज्यया प्रजावान् भूयासम् । द्वाराम्हन्देव० प्रजावा० । उषासानक्तयोरहम्० जोष्ट्र्योरहम्० । ऊर्जाहुत्योरहं० । पशुमान्० । दैव्ययोर्होत्रोरहम्० । तिसृणां तिसृणामहम्० नराशंसस्याहन्देवयज्यया० । वनस्पतेरहम्० आयुष्मान्० । बर्हिषोवारितीनामहं० प्रजावान्० । अग्नेः स्विष्टकृतोहं० आयुष्मान् यज्ञेन प्रतिष्ठां गमेयम् । तत प्रतिप्रस्थाता बर्हिषि हस्तौ निमार्ष्टि अद्भ्यस्त्वौषधीभ्य इत्यादि मन्त्रेण । तनूत्वचमित्यादि मन्त्रेण यजमान औपयजिकं धूममन्वीक्षते । अध्वर्युरुदङ्ङुत्याक्रम्य जुह्वां स्वरुमवधायोत्तरवेदेः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन् दिवन्ते धूमो गच्छत्वित्यादि मन्त्रेण जुहोति । यजमानः वायवइदमिति त्यागं पठति । अयं स्वरुहोम इत्युच्यते ॥

१११ अध्वर्युर्यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुग्व्यूहने उपभृदनन्तरं तेनैव मन्त्रेण पृषदाज्यग्रहणीं व्यूहति । सूक्तवाकप्रैषे ब्रूहीति पदस्य स्थाने प्रेष्येति वदति । उज्जितिवाचने आज्यभागानन्तरं इन्द्राग्नियोरहं० वनस्पतेरहं० । देवानामाज्यपानामित्यादि प्रकृतिवत् । प्रस्तरेण सह शाखापवित्रं प्रहरति । अग्नीदित्यादि संस्रावहोमान्तं प्रकृतिवत् । उत्करे स्रुचौ विमुञ्चति । तन्मन्त्रे वामित्यादीनां द्विवचनानां स्थाने व इत्यादीनां बहुवचनानामूहः । पृषदाज्यग्रहण्यास्तृतीयत्वात् । प्रदक्षिणमावृत्य प्रत्यङ्ङुद्रुत्य सोमं त्वष्टारं चाज्यस्थाल्याज्येन चतुर्गृहीतेनेष्ट्वा जुह्वामुपस्तीर्य जाघन्या अलोमप्रदेशात् द्विरवदायाभिघार्य देवानां पत्नीः पूर्ववद्यजति । पुनर्जुह्वामुपस्तीर्य जाघन्या अधोभागात् द्विरवदायाभिघार्याग्निं गृहपतिं यजति । अत्रैते चत्वार एव पत्नीसंयाजा भवन्ति । अन्तिमयोर्द्वयोर्होमद्रव्ये प्रकृत्यपेक्षया विशेषः प्रदर्शित एव । होतुर्हस्ते उपस्तीर्य जाघन्या अलोमप्रदेशात् द्विरवदाय दत्वाऽभिघार्य प्रकृतिवदिडामन्वारभते । इडोपह्वानानन्तरमग्नीधे जाघन्या अधोभागादेव षडवत्तं प्रकृतिवद्धुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वाहार्यपचने प्रकृतिवत्प्रायश्चित्तं हुत्वा पत्नीव्रतं विसर्ज्य प्राङेत्य ध्रुवामाप्याय्य दर्शपूर्णमासोक्तप्रायश्चित्तानि हुत्वाऽपञ्चधातून् समज्य प्रहृत्य दक्षिणेन पदा वेदिमाक्रम्य तिष्ठन् ध्रुवाज्यात्स्रुवेणोपहत्य जुहोति

यज्ञ यज्ञं गच्छेत्यादिमन्त्रेण । यज्ञायेदमिति यजमानस्य त्यागः । पुनस्तथैव जुहोति एषते यज्ञ इत्यादिमन्त्रेण । यज्ञपतय इदमिति यजमानस्य त्यागः । ततः स्रुवं निधाय ध्रुवामादाय प्रकृतिवत्समिष्टयजुर्जुहोति । ततो यजमानो विष्णुक्रमादिव्रतविसर्गान्तं प्रकृतिवत्करोति । ततोऽध्वर्युः स्फ्यमुदपात्रं हृदयशूलं चादाय एहि यजमानेति यजमानमामन्त्र्य पत्न्या सर्वैर्ऋत्विग्भिश्च सहान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति । अध्वर्युरग्रेण स्फ्येनोद्धृत्यावोक्ष्यशुष्कार्द्रयोः सन्धौ हृदयशूलमुपगूहति । सर्वे शुगसि तमभिशोचेत्यादिमन्त्रं पठन्ति एवं हृदयशूलोपगूहनमुच्यते ॥

११२ अध्वर्युर्हृदयशूलं धाम्नो धाम्नो राजन्नित्यादि मन्त्रेण प्रोक्षति । यजमानोऽञ्जलिना ऽपो गृह्णाति सुमित्रान आप ओषधय इत्यादिमन्त्रेण । ता अपो नैर्ऋत्यां दिशि दुर्मित्रास्तस्मै भूयासुरित्यादि मन्त्रेण प्रक्षिपति । सर्वे अप उपस्पृश्य हृदयशूलमनवेक्षमाणा आगच्छन्तः सन्तोऽर्धपथे आर्द्राः सपलाशास्तिस्रस्तिस्रः समिध आददते । प्रत्येकदाने एधोस्येधिषीमहीतिमन्त्रः । आगत्याहवनीये यथाक्रमेण समिधोऽभ्यादधति । तत्र तिसृणां समिधामाधाने प्रत्येकं क्रमेण समिदसि स्वाहा तेजोसि स्वाहा तेजो मयि धेहि स्वाहेति त्रयो मन्त्राः । ततः सर्वे अपो अन्वचारिषमित्यृचा आहवनीयमुपतिष्ठन्ते । औपयाजिकेऽग्नौ वेद्यां स्तीर्णं बर्हिरुपोषति यत्कुसीदमित्यादि भवामीत्यन्तेन मन्त्रेण । इदं बर्हिरुपोषणमुच्यते ॥

११३ ततो यजमानो व्रीहिसक्तून् यवसक्तून् वा अपूर्वाज्येनोपस्तीर्णाभिघारितान् बर्हिषा प्रदीप्ते आहवनीये अञ्जलिना विश्वतोपर्णीत्यादिमन्त्रेण जुहोति । अग्नय इदमिति त्यागः हस्तौ परस्परं संघृष्याश्वादेकइत्यादिमन्त्रं पठन् लेपमपनयति । अयं पाशुकसक्तुहोम इत्युच्यते ॥

११४ यान्ययामित्यादिमन्त्रेण पूर्ववत् द्वितीयं जुहोति । जीवेभ्य इदमिति त्यागः । पूर्वमन्त्रेण हस्तलेपमपनयति । अनृणाअस्मिन्नित्यादि मन्त्रेण तृतीयं जुहोति । अग्नयइदमिति त्यागः । हस्तलेपनि-

नयनं समन्त्रकं पूर्ववत् । वेद्यां तिष्ठन्नुत्तरवेद्यग्निमुपतिष्ठते अयं नोन-भेत्यादिमन्त्रेण इदमुत्तरवेद्यग्न्युपस्थानमुच्यते ॥

११५ अस्त्वं नोनभेत्यादि मन्त्रेण वायुमुपतिष्ठते । इदं वायूप-स्थानमित्युच्यते ॥

११६ देवस॒ंस्फानेत्यादिमन्त्रेणादित्यमुपतिष्ठते । इदं पाशुकादि-त्योपस्थानमित्युच्यते ॥

११७ आशासान इत्यादि यजमानाय तिष्ठेत्यन्तेन मन्त्रेण यूपमु-पतिष्ठते । इदमन्तिमयूपोपस्थानमित्युच्यते ॥

११८ बर्हिरुपोषणप्रभृत्येतावत्पर्यन्तं कर्माध्वर्युर्यजमानो वा करोति । समारोपणपक्षे पत्नीयजमानाभ्यामन्वारब्धो ऽध्वर्युः उत्तरवे-द्यग्निं अयन्तइत्यादिमन्त्रेण समिधि समारोपयति । तां समिधं आजु-ह्वान इत्यादि सीदतेत्यन्तेन मन्त्रेण शालामुखीये ऽभ्यादधाति । उद्बुध्यस्वाग्ने प्रतीत्यृचा अयस्त्वि॒ंशदिति यजुषा च शालामुखीयं ज्वलयित्वा ऽपूर्वाज्यं स्रुचि चतुर्गृहीतं गृहीत्वा सप्तमे अग्नइत्यृचा पूर्णाहुतिं जुहोति । सप्तवते ऽग्नयइदमिति यजमानस्य त्यागः । यज-मानो ऽध्वर्यवे गां वरं ददाति । ततो यज्ञो बभूवेत्यादि ब्राह्मणतर्प-णान्तं प्रकृतिवत् । अथ समारोपणपक्षे ऽग्नीत् समारोप्याग्निहोत्रशालां गत्वा मथित्वा विहृत्य मनस्वतीं हुत्वा होमकाले उपस्थिते सत्यग्नि-होत्रहोमं करोति । बौधायनसूत्रानुसारेण यजमानपत्नीप्रतिप्रस्थात्र-ध्वर्य्वाग्नीध्राणां पाशुकसम्बन्धिकर्माणि प्रतिपादितानि । आश्वला-यनसूत्रानुसारेण होतृमैत्रावरुणयोः कर्माणि प्रतिपाद्यन्ते । तत्र पश्व-नुष्ठानात्पूर्वं आग्नेयी आग्नावैष्णवीतीष्टिद्वयम् । अनयोरन्यतरा वा । अथवा क्वापि न । इति पक्षत्रयम् । एवं पश्वनुष्ठानानन्तरमपि पक्षत्र-यम् । तत्राग्नेयीष्टौ अग्निर्मूर्धा दिवः ककुदित्यग्नेः पुरोनुवाक्या । भुवो यज्ञस्य रजसश्चनेतेति याज्या । अन्यत्सर्वं प्रकृतिवत् । इयं पाशुकाग्नेये-ष्टिरित्युच्यते ॥

११९ आग्नावैष्णव्यामिष्टौ अग्नाविष्णू सजोषसेत्यग्नाविष्ण्वोः पुरोनुवाक्या अग्नाविष्णूमहिधामप्रियं वामिति याज्या । अन्यत्सर्वं

प्रकृतिवत् । अनया [illegible]

ष्टिरुच्यते ॥

१२० यूपायाज्यमानायानुब्रूहीति प्रेषितो होता पाशुबन्धिक्या वेदेः पश्चात् मन्त्रेण निरसनोपवेशने कृत्वा यूपाञ्जनीया ऋचोऽन्वाह । आदौ सामिधेनीवद्द्विंकृत्य अञ्जन्ति त्वामध्वरे देवयन्त इत्यृचं त्रिवारमनुब्रूयात् । तृतीये वचने अर्धर्चमुक्त्वा प्रेषान्तरश्रवणपर्यन्तं विरमेत् । यूपायोच्छ्रीयमाणायानुब्रूहीति प्रेषितो द्वितीयार्धर्चान्तिमप्रणवान्तेनोच्छ्रयस्व वनस्पते इत्यृचं सन्धाय तदन्तिमप्रणवेन समिद्धस्य श्रयमाणः पुरस्तादित्यृचं तत उक्तरीत्यैव ऊर्ध्वऊषुणऊतयइति द्वे ऋचौ ततो जातो जायते सुदिनत्वे अह्नामित्यृचं सन्धाय तस्या अर्धर्चं प्रेषान्तरश्रवणपर्यन्तं विरमेत् । ततो यूपाय परिवीयमाणायानुब्रू३हीति प्रेषितोऽवशिष्टार्धर्चप्रणवान्तेन युवासुवासाः परिवीत आगादित्यृचं परिधानीयां त्रिवारमनुब्रूयात् । समस्तव्याहृतिमन्त्रेण वाग्विसर्गः । इदं यूपाञ्जनीयानुवचनमित्युच्यते ॥

१२१ ततश्चातुर्मास्योक्तरीत्याऽग्निमन्थम् । पूर्वोक्ता ऋचो यूपाञ्जनाय हिता इति व्युत्पत्त्या यूपाञ्जनीया इत्युच्यन्ते ॥

१२२ अग्नये समिध्यमानायानुब्रूहीति प्रेषितः पृथुपाजा अमर्त्य इति द्वे धाय्यासंज्ञके ऋचौ अधिके कृत्वा वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय स्थित्वा सप्तदश सामिधेनीरनुब्रूयात् । आज्यभागदेवतानामावाहनानन्तरं इन्द्राग्नी आ३वह इति विशेषः । वनस्पतिमा३वह इति विशेषः । सम्मार्गैः सम्मृज्याप उपस्पृश्य प्रवृत्ताहुतीर्जुहोति प्रत्यगुदगाहवनीयादवस्थायाज्यस्थाल्याः स्रुवेणाज्यमादाय जुहोति । तत्र मन्त्राः । जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक् यद्वाचो मधुमत्तमं तस्मिन्मा धाः सरस्वत्यै वाचे स्वाहा । पुनः स्रुवेणाज्यमादाय षड्वाहुतीर्वियाहं जुहोति । स्वाहा वाचे । स्वाहा वाचस्पतये । स्वाहा सरस्वत्यै स्वाहा सरस्वते । महोभ्यः संमहोभ्यः स्वाहा । वाच इदमिति त्यागः प्रथमे । द्वितीयादिषु यथालिङ्गं यजमानस्य त्यागः । एताः षडाहुतयः प्रवृत्ताहुतय इत्युच्यन्ते ॥

१२३ ...
णां प्रत्याह । ततः प्रशास्ता तीर्थेन प्रपद्यते । होता प्राङ्मुखः प्रशास्त्रे दण्डं प्रददाति दक्षिणोत्तराभ्यां पाणिभ्यां मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामि इति मन्त्रेण । ततः प्रशास्ता मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रतिगृह्णाम्यवक्रो विथुरो भूयास मिति दण्डं प्रतिगृह्णाति । इदं कर्म मैत्रावरुणदण्डप्रदानमित्युच्यते ॥

१२४ प्रशास्ता दण्डं प्रतिगृह्योत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेन्न चानेन कञ्चिदपि संस्पृशेत् आप्रैषवचनात् । होतृषदनात् दक्षिणतः प्रह्वो ऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात् । प्रैषांश्चादेशमनुवाक्यां च सप्रैषे पूर्वां प्रैषात् पर्यग्निस्तो क्रमनेतोत्तीयमानसूक्तानि च सोमे । उपविश्यान्यत्पठेत् । अध्वर्युणा समिद्भ्यः प्रेषितः सन् आह । होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्याः सङ्गथेवामस्य वर्ष्मन् दिव इडस्पदे वेत्वाज्यस्य होतर्यज १ । १ ॥ अयं समित्प्रैष इत्युच्यते ॥

१२५ अध्वर्युणा प्रेष्येत्युक्ते आह । होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम् ॥ मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज ॥ २ ॥ अयं तनूनपात्प्रैष इत्युच्यते ॥

१२६ प्रेष्येत्युक्ते आह । होता यक्षन्नाराशंसं नृशस्तं नृःप्रणेत्रम् । गोभि र्वपावान् स्याद्वीरैः शक्तीवानथैः प्रथमयावा हिरण्यैश्चन्द्री वे० ॥ ३ ॥ अयं नाराशंसप्रैष उच्यते ॥

१२७ होता यक्षदग्निमिलईलितो देवो देवां आवक्षद्दूतो हव्यवालमूरः ॥ उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वा० ॥ ४ ॥ अयमिडप्रैष उच्यते ॥

१२८ होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन्यज्ञे विचप्रचप्रथतां स्वासस्थं देवेभ्यः ॥ एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियन्द्रस्यास्तु वे० ॥ ५ ॥ अयं बर्हिःप्रैष उच्यते ॥

१२९ होता यक्षद्दुरऋष्वाः कवष्योकोषधावनीरुदाताभिर्जिहतां विपक्षोभिःश्रयन्तां सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो व्यन्त्वा० ॥ ॥ ६ ॥ अयं द्वारां प्रैष उच्यते ॥



१३० होता यक्षदुषासानक्ता बृहती सुपेशसा नृःपतिभ्यो योनिं कृण्वाने ॥ संस्मयमाने इन्द्रेण देवैरेदर्चिः सीदतां वीतामाज्यस्य होत० ॥ ७ ॥ अयमुषासानक्ताप्रैष उच्यते ॥

१३१ होतायक्षद्दैव्याहोतारामन्द्रापोतारा कवीप्रचेतसा ॥ स्विष्टमद्यान्यः करदिषास्वभिगूर्तमन्यऊर्जासतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य० ॥ १३० ॥ अयं दैव्यहोतृप्रैष उच्यते ॥

१३२ होतायक्षत्तिस्रोदेवीरपसामपस्तमा अच्छिद्रमद्येदमपस्त्वताम् ॥ देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य० ॥ ९ ॥ अयं तिसृणां देवीनां प्रैष उच्यते ॥

१३३ होतायक्षत्त्वष्टारमचिष्टुमपाकंरेतोधां विश्रयवसं यशोधाम् ॥ पुरुरूपमकाममकर्शनं सुपोषः पोषैः स्यात्सुवीरो वीरैर्वेत्वा० ॥ १० ॥ अयं त्वष्टृप्रैष उच्यते ॥

१३४ होतायक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमं नरः ॥ स्वदात्स्वधितिर्ऋतुधाद्यदेवोदेवेभ्योहव्यावाड् त्वा० ॥ ११ ॥ अयं वनस्पतिप्रैष उच्यते ॥

१३५ होतातु दण्डप्रदानानन्तरं होतृषदनस्य पश्चादवस्थायाहे दैधिषव्य इत्यादि मन्त्रेण होतृषदनाभिमन्त्रणादि स्रुगादापनान्तं प्रकृतिवत् करोति । प्रयाजसम्बन्धिन्यो याज्या ऋचो यत्र पठितास्तानि सूक्तान्याप्रीसूक्तानीति गीयन्ते ।

१३६ शौनकगोत्रस्य यजमानस्य समिद्धो अग्निर्निहितः पृथिव्यामित्याप्रीसूक्तं भवति । वासिष्ठगोत्रस्य जुषस्व नः समिधमिति सूक्तम् । अन्येषां सर्वेषां समिद्धो अद्य मनुषो दुरोणइति सूक्तम् । इत्येकः पक्षः । सुसमिद्धो न आवहेति काण्वगोत्रस्याप्रीसूक्तम् । समिद्धो अग्न आवहेति आङ्गिरसगोत्रस्य । समिद्धो अद्य राजसीति आगस्त्यगोत्रस्य । समित्समित्सुमना बोध्यस्मे इति विश्वामित्राणाम् । सुसमिद्धाय शोचिषेत्यात्रेयगोत्रस्य । समिद्धो विश्वतस्पतीति काश्यपगोत्रस्य । इमां मे अग्ने समिधं जुषस्वेति वाध्र्यश्वगोत्रस्य । समिद्धो अद्य मनुषो दुरोणइति जामदग्न्यगोत्रस्यानुक्तानामन्येषां च । इति द्वितीयः पक्षः । अध्वर्युप्रेषितो मैत्रावरुणः पूर्वोक्तैः समित्प्रेषादिप्रैषैर्होतारं प्रेष्यति ।

होता यजमानगोत्रानुसारेण तत्तत्सूत्रगता आप्रीसंज्ञकयाज्याः पठति । पर्यग्नये क्रियमाणायानुब्रू३हीति प्रेषितो मैत्रावरुणः अग्निर्होता नो अध्वर इति तृचं सूक्तं अभिहिंकारानन्तरं आद्योत्तमे ऋचौ त्रिरभ्यस्यान्वाह । एतदनुवचनं पर्यग्निकरणसाधनत्वात्करणल्युटा पर्यग्निकरणमित्युच्यते ॥

१३७ ततो मैत्रावरुणो होतारं प्रेष्यति । अजैदग्निरसनद्वाजंनि-देवोदेवेभ्यो हव्यवाट् प्राञ्जोभिर्हिन्वानोधे नाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य होतर्हव्यादेवेभ्य इति । अयमध्रिगुप्रेषप्रैष इत्युच्यते ॥

१३८ ततो मैत्रावरुणप्रेषितो होता ऽध्रिगुप्रेषमाह । दैव्याः शमितार आरभध्वमुत मनुष्या उपनयतमेध्यादुर आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं मातामन्यताम् अनुपिता ऽनु भ्राता सगर्भ्यो ऽनु सखा सयूथ्यः । उदीचीनां अस्य पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् । एकधास्य त्वचमाच्छ्यतात्पुरानाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमस्य वक्षः कृणुतात्प्रशसाबाहूशलादोषणीकश्यपेवांसाच्छिद्रे श्रोणीकवषोरुस्रेकपर्णाष्ठीवन्ताषड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्रारक्षः संसृजतात् । वनिष्ठुमस्य मारा विष्टोरुकं मन्यमाना नेद्वस्तोकेतनये रविता रवत् शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ । अपाप॥ इति । अध्रिगो इत्यादि अपापेत्यन्तं त्रिवारं पठति । अयमध्रिगुप्रैष इत्युच्यते ॥

१३९ अत्रप्रैषे अस्रारक्षः संसृजतादिति वाक्यं उपान्त्यवाक्यस्थं शमितार इति पदं अन्त्यवाक्यस्थं अपापेति पदं चोपांशु प्रयुज्यते । ततः शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तदिति मन्त्रं जपित्वा यथोपविष्ट एव दक्षिणाङ्गेनावृत्य प्रत्यङ्मुखो निहारं पृष्टतः कृत्वास्ते । एवं मैत्रावरुणोपि । पशुसंज्ञपनानन्तरं होतृमैत्रावरुणौ तथैवावृत्य प्राङ्मुखावासाते । वपाश्रपणकाले अध्वर्युणा स्तोकेभ्यो ऽनुब्रूहीति प्रेषितो मैत्रावरुणो जुषस्व सप्रथस्तममित्यृचमिमं नो

वर्नामित्युच्यते ॥

१४० अध्वर्युणा स्वाहाकृतीभ्यः प्रेष्येति प्रेषितो मैत्रावरुणो होतारं प्रेष्यति । होतायक्षदग्निं स्वाहा ऽऽज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहा कृतीनां स्वाहा हव्यसूक्तीनां स्वाहा देवा आज्यपा जुषाणाअग्नआज्यस्य व्यन्तु होतर्यजेति । अयमेकादशस्य प्रयाजस्य प्रेषः स्वाहाकृतीप्रैष इत्युच्यते ॥

१४१ उक्तप्रैषेण प्रेषितो होता मन्त्रेण निरसनोपवेशने कृत्वा ऽग्निर्होतावेत्त्वित्यादि स्रुगादापनं पठित्वा एकादशीं प्रयाजयाज्यां पठति । वार्त्रघ्नावाज्यभागौ । मैत्रावरुणोनुवाक्यां पठति । प्रैषांश्चा-देशमनुवाक्यां चेत्याश्वलायनसूत्रे मैत्रावरुणो यत्र यागे भवति तत्र स एवानुवाक्यां पठेदित्युक्तत्वात् । होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यजेति प्रैषं मैत्रावरुणो ऽध्वर्युणाऽग्नयआज्यस्यावदीयमानस्या-नुब्रूहीति प्रेषितः पठति । अयंहोतायक्षदित्यादिप्रैष आग्नेयाज्यभाग-प्रैष इत्युच्यते ॥

१४२ अनेन प्रेषितो होता ऽग्निं जुषाणो अग्निराज्यस्येति याज्यां पठति । अध्वर्युणा सोमायाज्यस्यावदीयमानस्यानुब्रूहीति प्रेषितो मैत्रावरुणो ऽनुवाक्यां पठति । ततो ऽध्वर्युणा सोमायाज्यं प्रस्थितं प्रेष्येत्युक्ते प्रशास्ता होतायक्षत्सोमायाज्यस्य जुषतां हविर्होतर्यजेति प्रैषेण होतारं प्रेष्यति । अयं प्रैषः सौम्याज्यभागप्रैष इत्युच्यते ॥

१४३ अनेन प्रेषितो होता ये यजामहे सोमं जुषाणः सोम आज्यस्य हविष इति याज्यां पठति । अध्वर्युणा इन्द्राग्निभ्यां छागस्य वपाया मेदसोवदीयमानस्यानुब्रूहीति प्रेषितो मैत्रावरुण आवृत्रहणा वृत्रहभिः शुष्मैरित्यनुवाक्यां पठति । तत इन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्येति प्रेषितः सन् होता यक्षदिन्द्राग्नी छागस्य वपाया मेदसो जुषेतां हविर्होतर्यजेति प्रैषेण होतारं प्रेष्यति । अयं वपाया-ज्याप्रैष इत्युच्यते ॥

१४४ अनेन प्रेषितो होता शुचिं नु स्तोमं नवजातमद्येति याज्यां पठति । वपाहोमानन्तरं ब्रह्मा होता मैत्रावरुणश्च चात्वाले

मार्जयन्ते सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै सन्तु यो ऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति मन्त्रेण । मैत्रावरुणस्तु दण्डं निधाय । इदं ब्रह्मादिवपामार्जनमित्युच्यते ॥

१४५ ततः पुरोडाशश्रपणपर्यन्तं ब्रह्मादयस्तीर्थेन निष्क्रम्य तूष्णीमासते शृतेषु पशवङ्गेषु तीर्थेन प्रविश्य पुरोडाशेन प्रचरन्ति । तत्राभरतं शिशतं वज्रबाहू इति मैत्रावरुणो ऽनुवाक्यां पठति इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीत्यध्वर्युणा प्रेषितः सन् अध्वर्युणा इन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदिन्द्राग्नी पुरोडाशस्य जुषेतां हविर्होतर्यजेति वदति । अयं पशुपुरोडाशयाज्याप्रैष इत्युच्यते ॥

१४६ ततो होता गीर्भिर्विप्रः प्रमतिमिच्छमान इति याज्यां पठति । ततोऽध्वर्युणा ऽग्नये ऽनुब्रूहीत्युक्ते इलामग्ने पुरुदंसं सनिंगोरित्यनुवाक्यां मैत्रावरुणः पठति । अध्वर्युणा ऽग्नये प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यजेति पठति । अयं पुरोडाशस्विष्टकृत् प्रैष इत्युच्यते ॥

१४७ ततो होता स्वदस्वहव्यासमिषोदीदिहीति याज्यां पठति । अयं पशुपुरोडाशप्रचारइत्युच्यते ॥

१४८ इडाभक्षणान्ते मार्जनम् । मनोतायैहविषोवदीयमानस्यानुब्रूहीत्यध्वर्युणा प्रेषितो मैत्रावरुणः अभिहिंकृत्य अर्धर्चकारवर्जं सामिधेनीवत् त्वंह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह । इदं मनोतासूक्तमित्युच्यते ॥

१४९ अध्वर्युणा इन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीत्युक्ते मैत्रावरुण उभावामिन्द्राग्नी आहुवध्या इत्यनुवाक्यां पठति । अध्वर्युणा इन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेधउद्भृतं पुराद्वेषोभ्यः पुरापौरुषेय्यागृभः ॥ घस्तांनूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामतउत्सादतोङ्गादङ्गादवत्तानां करतएवेन्द्राग्नीजुषेतां हविर्होतर्यजेति प्रेषेण होतारं प्रेष्यति । ततो होता प्रचर्षणिभ्यः पृतनाहवेष्विति



याज्यां पठति अस्या अर्धर्चे पठित्वा यावत्प्रतिप्रस्थाता वसाहोमं करोति तावद्विरमति । जाते वसाहोमे उत्तरार्धर्चेन वषट्करोति । अध्वर्युणा वनस्पतयेऽनुब्रूहीत्युक्ते मैत्रावरुणो देवेभ्यो वनस्पते हवींषीति पुरोनुवाक्यां पठति । अध्वर्युणा वनस्पतये प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित ॥ यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्रसोमस्याज्यस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यजेति प्रैषेण होतारं प्रेष्यति अयं वनस्पतियाज्याप्रैष इत्युच्यते ॥

१५० ततोहोता वनस्पतेरशनया नियूयेति याज्यां पठति । अध्वर्युणाऽग्नये स्विष्टकृतेऽनुब्रूहीत्युक्ते मैत्रावरुणः पिप्रीहिदेवां उशतोयविष्ठेत्यनुवाक्यां पठति । अध्वर्युणाऽग्नये स्विष्टकृते प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदग्निं स्विष्टकृतमयाडग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाडिंद्राग्न्योश्छागस्य हविषः प्रियाधामान्ययाड्वनस्पतेः प्रियापाथांस्ययाड्देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानमायजतामेज्यादिषः कृणोतु सोअध्वराजातवेदा जुषतां हविर्होतर्यजेति होतारं प्रेष्यति । अयं पशुस्विष्टकृद्याज्याप्रैष इत्युच्यते ॥

१५१ ततो होतास्विष्टकृच्चिगदरहितामग्नेयदद्यविशो अध्वरस्य होतरिति याज्यांपठति । ततः पश्विडाभक्षणं मार्जनान्तं कृत्वाऽनुयाजैश्चरन्ति अध्वर्युणा देवेभ्यः प्रेष्येत्युक्ते मैत्रावरुणः देवं बर्हिः सुदेवन्देवैः स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान्रायाबर्हिष्मतोमदेवसुवनेवसुधेयस्यवेतु यजेति होतारम्प्रेष्यति । होताप्राकृतेनैव प्रथमानुयाजेन यजति । अध्वर्युणा प्रेष्येत्युक्ते मैत्रावरुणः देवीर्द्वारः संघाते विड्वीर्यामंछिथिराध्रुवादेवहूतौ वत्सईमे नास्तरुणामिमीयात्कुमारोवानवजातेमैनाअर्वारेणुककाटः पृणाग्वसुवने वसुधेयस्य व्यन्तु यजेति होतारं प्रेष्यति । होतादेवीर्द्वारोवसुवने वसुधेयस्यव्यन्तुवीअग्-

डिति याज्यां पठति । अध्व० रुणा:देवीउषासा नक्ता द्यास्मिन्यज्ञेप्रय-
त्यव्हेतामपिनूनं दैवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधे-
यस्य वीतां यजेति होतारं प्रेष्यति । सदेवीउषासानक्तावसुवने वसुधे-
यस्य वीतां वौषडिति यजति । अध्व०रुणा: देवीजोष्ट्री वसुधितीययोर-
न्याघाद्वेषांसि युयवदान्यावक्षद्वसुवार्याणि यजमानाय वसुवने वसुधेयस्य
वीतां यजेति होतारं प्रेष्यति । होतादेवीजोष्ट्रीव०वीतां०डिति यजति ।
अध्व०रुणा: देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीतिमन्यानवेन पूर्व
दयमाना: स्याम पुराणे ननवंतामूर्जमूर्जाहुतीऊर्जयमाने अधातां वसु-
वने वसुधेयस्य वीतां यजेति होतारं प्रेष्यति । होतादेवीऊर्जाहुती-
वसु०वीतां०डिति यजति । अध्व०रुणा: देवादैव्या होतारा नेष्टारा
पोतारा हताघशंसा वा भरद्वसूवसु०ष्यति । होता देवा दैव्याहो-
तारा वसु०वीतां०डिति यजति । अध्व०रुणा: देवीस्तिस्रस्तिस्रो देवी-
रिडासरस्वती भारती द्यांभारत्यादित्यैरस्पृक्षत्सरस्वतीमं रुद्रैर्यज्ञमावी-
दिहैवेलयावसुमत्या सधमादंमदेम वसुवने वसुधेयस्य व्यन्तु यजेति
होतारं प्रेष्यति । होता देवीस्तिस्रस्तिस्रोवसु०व्यंतु३वै३० डिति
यजति । अध्व०रुणा:देवो नराशंसस्त्रिशीर्षा षडक्ष: शतमिदेनं शिति-
पृष्ठा आदधति सहस्रमींप्रवहन्तिमित्रावरुणेदस्यहोत्रमर्हताबृहस्पति-
स्तोत्रमश्विनाध्वर्यवंवसु०वेतुयजेति०ष्यति । होतादेवोनराशंसोवसु०
वेत् ३०जति । अध्व०रुणा: देवोवनस्पतिर्वर्षप्रावाघृतनिर्णिग्द्यामग्रेणा-
स्पृक्षदान्तरिक्षंमध्येनाप्रा: पृथिवीमुपरेणादृंहीद्वसु०वेतुयजेति हो०ति ।
होतादेवोवनस्पतिर्वसुवेत् ३०जति । अध्व०रुणा: देवं बर्हिर्वारितीनां
निधेधासिप्रच्युतीनामप्रच्युतीनामप्रच्युतंनिकामधरणंपुरस्पार्हंयशस्वदेना
बर्हिषान्याबर्हींष्यभिष्यामवसु०वेतु यजे०ष्यति । होतादेवं बर्हिर्वारि-
तीनां वसु०वेत् ३० जति । अध्व०रुणा- देवोअग्निः स्विष्टकृत्सुद्रविणा-
मन्द्रः कविः सत्यमन्मायजीहोताहोतुर्होतुरायान ग्नेयान् देवान-
यजीषाड्ढ्यां अपिप्रेर्यतेहोत्रेअमत्सततांससनुषींहोत्रांदेवंगमां दिवि
देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्नेहोताभूर्वसुवनेवसुधेयस्य नमोवाके
वीहियजे०ष्यति । होताग्नेर्निगदेन आदै। होतायक्षदित्यस्य स्थाने

येयजामहइति पदं पठित्वा ऽन्तेयजेत्यस्य स्थाने वषट्कारं कृत्वा यजति । एते मैत्रावरुणेन पठ्यमाना एकादश अनुयाजप्रेषा इत्युच्यन्ते ॥

१५२ अध्वर्युणा इषिता दैव्या होतारौ भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता३ब्रूहीत्युक्तेमैत्रावरुणः अग्निमद्यहोतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशं गृह्णन्नग्नयआज्यं गृह्णन्त्सोमायाज्यं बध्नन्निन्द्राग्निभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभव दग्नयआज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनाघस्तां तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यऋषआर्षेयऋषीणां नपादवृणीतायं यजमानो बहुभ्यआसङ्गतेभ्यः ॥ एषमेदेवेषु वसु वार्यायक्ष्यत इति तायादेवादेवदानान्यदुस्ता न्यस्माआचशास्वाचगुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता३ब्रू३हीति प्रेषेण होतारं प्रेष्यति । ततो होता सूक्तवाकं पठति । तत्राज्यभागदेवतानन्तरं इन्द्राग्नीइदं हविरजुषेतामवीवृधेतां । वनस्पतिरिदं हविरजुषतावीवृधतमहोज्यायोऽकृत । ततो देवा आज्यपा इत्यादि प्रकृतिवत् संस्याजपवर्जं सर्वं अध्वर्युणा उपोह्यमानं हृदयशूलमनुमन्त्रयते होता मैत्रावरुणो ब्रह्मा च शुगसि योस्मान् द्वेष्टि यं च वयं द्विष्मस्तमभिशोचेति मन्त्रेण । ततः । द्रुपदाद्रोवरुणस्य गृहोमितो हिरण्ययः ॥ सनो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु ॥ धाम्नोधाम्नो राजन्नितो वरुण नोमुञ्च ॥ यदापोअघ्न्या इति वरुणेति शपामहे ततो वरुण नोमुञ्च ॥ मयि वायो मे॰पधीर्हिंसीरतो विश्वव्यचाभूस्त्वंवरुण नो मुञ्च ॥ सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै भूयासुर्योस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ एतैर्मन्त्रैस्तस्योपरिष्टादप उपस्पृशन्ति । शूलमनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तस्तिस्रस्तिस्रः समिधो गृह्णीयुः । अग्नेः समिदसि तेजोसि तेजोमयिधेहि इति प्रथमाम् । एधोस्येधिषीमहीति द्वितीयाम् । समिदसि समेधिषीमहीति तृतीयाम् । इत्योपतिष्ठन्ते आपोअद्यान्वचारिषमित्यृचा । ततो यहक्रमेण समिधोऽभ्यादधत्याहवनीये । अग्नेः समिदसि तेजोसि तेजोमेदाः स्वाहेति प्रथमाम् । सोमस्य समिदसि दुरिष्टेमो पाहि स्वाहेति

द्वितीयाम् । पितृणां समिदसि मृत्योर्मा पाहि स्वाहेति तृतीयाम् । इदं पाशुकसमिदाधानमित्युच्यते ॥

१५३ ततः संस्याजपेनोपतिष्ठन्ते । एतावान् अयमाश्वलायनसूत्रानुसारेणेत्यादि ग्रन्थः होतृब्रह्ममैत्रावरुणपाशुककृत्यमुच्यते ॥

---

१५४ इदं सर्वं पाशुकं कर्म निरूढपशुरिति पशुबन्धइति चोच्यते ॥

१५५ अथ सप्तमीहविर्यज्ञसंस्था पशुत्रयसाध्या सौत्रामण्याख्या तदीयपदार्थनामानि प्रोच्यन्ते । सा द्विविधा । एका कौकिली अपरा चरका सर्वापीयं नित्या हविर्यज्ञसंस्थान्तर्गतत्वात् । एतयाऽन्नाद्यकामो यजेत स्वर्गकामश्चेत्यादिना फलश्रवणात्काम्यत्वमपि । बार्हस्पत्यं पशुं चतुर्थं यदीत्यादिना नैमित्तिकत्वमपि श्रूयते । यजेत्सौत्रामण्यामपत्नीकोप्यसोमपइत्यैतरेयब्राह्मणोक्ताया अपत्नीकासोमपयजमानकर्तृका सौत्रामणी सा कौकिल्येव स्वतन्त्रा । अग्निं चित्वा सौत्रामण्या यजेतेत्यादौ अङ्गत्वेन श्रूयमाणा चरकैव । तत्र कौकिल्या बौधायनसूत्रस्य समग्रस्यानुपलभ्यमानत्वात् आपस्तम्बोक्तसूत्रानुसारेण बौधायनसूत्राविरुद्धः प्रयोगः अनुक्तौ चरकातिदेशः । तस्य निरूढपशुकालएवानुष्ठानकालः । पर्वणि यथा त्रिपशुरूपं प्रधानकर्म संपद्येत तथा कर्तव्यम् । तत्र च द्वादश्यां नान्दीश्राद्धोदकशान्तिप्रतिसरबन्धादिकृत्वा त्रयोदश्यामैन्द्रेण पशुना आदित्यचरुणा च प्रचर्य चतुर्दश्यां त्रिपशूपसदं कृत्वा पर्वणि त्रिपशुमवभृथं महापितृयज्ञं च कृत्वा प्रतिपदि वायोधसेन पशुना आदित्येन चरुणा च प्रचर्य समापयति । असम्भवे पितृयज्ञोपि प्रतिपदि कार्यः । त्र्यहेपुरस्तादिति वचनं सुरासन्धानकरणपक्षे नवम्यामारम्भपरम् : अयं सौत्रामणीकाल इत्युच्यते ॥

१५६ यद्यपि सुरोच्छेषणभक्षस्यैव निषेधो न तु स्वाद्वीन्त्वेत्यादिमन्त्रैः सुरासन्धानकरणादेस्तथापि कल्पोक्तसुरासन्धानप्रकारस्येदानीमुच्छिन्नत्वात् लोकविद्विष्टत्वात् पयोग्रहा वा स्युरित्यापस्तम्बवचनाच्च मुख्यसुराग्रहणमुपेत्य पयोग्रहग्रहणपक्षाश्रयणं क्रियते । यदि वपनं चिकिर्षति तर्हि त्रिपशौ प्रधानभूते एव कुर्यात् । आद्यन्तपश्वोस्तु न । तयोरङ्गत्वात् । समप्राधान्यपक्षे तयोरपि वपनं कुर्यात् । सुरा-

सन्धानपत्न्यामाश्रयणात् [illegible]
र्तते । पयसः सुराप्रतिनिधित्वात् स्थानापत्त्यासुराधर्मा अनूहश्च भवन्ति । न तु सान्नाय्यधर्मा आज्यधर्मा वा भवन्ति । यथा प्रयोगचातुर्मास्यवत् एकप्रयोगत्वात्सर्वार्थमुदवसानम् । प्राकृतविहारात् अन्यत्र गमनं कर्मानुष्ठानार्थं उदवसानमित्युच्यते ॥

१५७ ऋत्विग्वरणं षड्ढोतृकूष्माण्डादिहोमश्च सकृदेव सर्वपश्वर्थः । त एव विहाराः । दक्षिणतः पैतृकी वेदिः । आद्यन्तपशुद्वयोः पाशुकी वेदिस्तु द्वादशपदा भवति ॥ त्रिपशौ साग्निचित्ये निरग्निचित्ये वा ऽष्टादशपदा सा भवति । सौत्रामणीकर्मसम्बन्धिनः पदार्थाः । त्रयो यूपाः । चयनार्थे शर्कराः साग्निचित्ये । सुराग्रहार्थे क्रमेण पलाशन्यग्रोधाश्वत्थकाष्ठनिर्मितान्युलूखलाकाराण्यूर्ध्वमुखानि प्रादेशमात्राणि त्रीणि पात्राणि । एतान्येव सुराग्रहा इत्युच्यन्ते ॥

१५८ यज्ञियस्यफलेग्रहेः पलाशादिवृक्षस्य तादृशान्येव त्रीणि पात्राणि तानि पयोग्रहा इत्युच्यन्ते ॥

१५९ जुहूसदृशे महापुष्करे द्वे पात्रे ते द्रोणकलशपदवाच्ये ॥

१६० एकः कुम्भः । शतातृण्णास्थाली । नकलबदरकर्कन्धूनां सक्तवः । नकलादयोबदरभेदाः यवगोधूमोपवाकानां सक्तवः । हरितयवाः । श्येनस्य पक्षिणो द्वौ पक्षौ । सिंहव्याघ्रवृकाणां लोमानि । अजाविलोम्नां दशापवित्रमध्वर्योः । गवाश्वलोम्नां प्रतिप्रस्थातुः । नाभिदघ्नपादा अरत्निमात्रशीर्षण्यानूच्यामौञ्जविवयनाया सा आसन्दीत्युच्यते ॥

१६१ प्रभूतं पयः । अन्येपि यउपयुक्ताः पदार्थास्ते सम्पादनीयाः । श्रीपरमेश्वरप्रीत्यर्थं स्वर्गकामो वा कौकिल्या सौत्रामण्या यक्ष्ये त्रिरुपांशु त्रिरुच्चैः । अयं सौत्रामणीसङ्कल्प इत्युच्यते ॥

१६२ प्रशास्तृषष्ठानृत्विजो वृत्वा ऽर्हयित्वा । दृढाजपं कृत्वा । अन्वारम्भणीयामिष्टिं कृत्वा ऽरण्योरग्नीन् समारोप्य अथ वा ऽजस्नाग्नीन् गृहीत्वोदवसायमथित्वा मनस्वत्या जुहोति । साग्निचित्येतु योःपुरस्तादि जपित्वा स्वर्गकाम आरुणकेतुकमग्निं चेष्ये इत्ययमग्निचयनसङ्कल्प इत्युच्यते ॥

१६३ पुनर्याः पुरस्तादित्यादि । श्रीपरमेश्वरप्रीत्यर्थमैन्द्रेण पशुना यक्ष्ये इत्ययमैन्द्रपशुसङ्कल्प इत्युच्यते ॥

१६४ ततोऽग्नीन् विहृत्य सङ्कीर्तुकूष्माण्डसारस्वतहोमाः सर्वपश्वर्थमादावेव सकृत् । नतुप्रतिपश्वावर्तते । एकप्रयोगत्वात् । पशिवष्टिस्त्वावर्तते । परन्त्वाश्वलायनमते पूर्वोत्तरयोरैन्द्रपश्वोरङ्गत्वात् पशिवष्टिस्तयोर्न भवति । समप्राधान्ये तु सर्वपशुषु पशिवष्टिर्भवति । पशुचये च वेदियूपाहुत्यादि यूपोपस्थानान्तं निरूढवत्करोति । अस्मिन्नैन्द्रपशौ ऋषभो दक्षिणा । पुनरालम्भवर्जं सन्तिष्ठत एव पशुः । अयं सौत्रामणीपूर्वपशुरित्युच्यते ॥

१६५ अथ तदानीमेव पुनर्विहृत्यादित्येष्टिः । आदित्यौ द्वौ कौकिल्यां सौत्रामण्यामितिकर्मान्तसूत्रात् । अस्यामिष्टौ वत्सो दक्षिणा । वत्सं पूर्वस्यां ददाति मातरमुत्तरस्यामिति वचनात् । अंहसो मुच्येयमिति यजमानस्यानुमन्त्रणम् । पुनरालम्भवर्जं मियमिष्टिः सन्तिष्ठते । इयं सौत्रामणीपूर्वेष्टिरित्युच्यते ॥

१६६ ततोऽग्रहः सद्योवाग्निपशुः । श्री*परमेश्वरप्रीत्यर्थं त्रिपशुना पशुतन्त्रेण यक्ष्ये इति सङ्कल्प इदानीमेव वयनसङ्कल्प इत्येके । अयं त्रिपशुसङ्कल्प इत्युच्यते ॥

१६७ अथ त्रिपश्वनुष्ठानोपयोगिनी पाशुकी वेदिः । सा चेत्थं निर्मातव्या । प्राकृतविहारात्प्रत्रतः पूर्वनिर्मितामैन्द्रपश्वनुष्ठानोपयोगिनीं पाशुकवेदिमुद्वास्य यूपस्योद्वास्याहवनीयात्संचरमवशेष्यसौमिक्या वेदेर्द्विसप्तत्यधिकनवशतपदक्षेत्रफलायास्तृतीयां शक्षेत्रफलमूलषट्त्रिंशत्यङ्गुलदण्डेन द्वादशपदा प्राची दशपदा पश्चादष्टादशपदा पुरस्तादिति सौत्रामणिकी वेदिःकार्या । शम्यामात्रोत्तरवेदिर्भवति द्वादशाङ्गुलपदपक्षे षट्तिलो नैकविंशत्यङ्गुलदण्डेन दशाङ्गुलपदपक्षे सप्तदशाङ्गुलदण्डेनापि । तत्रैव त्रिभागदण्डादि । त्रयोदशाङ्गुलसमचतुरस्रोत्तरनाभिः । साग्नीमथि गृह्णामीत्युपधानमन्त्रप्रभृति ये ब्राह्मणाबहुविद इत्यन्तं कृत्वाग्रारुणकेतुकचयनपक्षे सद्यस्कालत्वपक्षे तु पशिवष्ट्यनन्तरं

---

* यत्करोषि यदश्नासि यज्जुहोषीत्यादिना सर्वकर्मणां परमेश्वर प्रीत्यर्थावगतेः ।





यूपाहुत्यादि भवति । अग्निचयनपक्षे तु वेदं विमाय परिस्तीर्य भौम-नखवपनस्नानवासः परिधानाञ्जनाभ्यञ्जनादि दीक्षायाङ्गं कुर्वन्ति । त्रिपशोर्देवतासङ्कल्पः । सोचामण्याः सप्तदश सामिधेन्यः । एकादश प्रयाजाः । आग्नीषोमावाज्यभागौ । अश्विनौ सरस्वती इन्द्रः सुत्रामा च पशुदेवताः । वनस्पतिः पृषदाज्यदेवता देवा आज्यपाः । अग्निः स्विष्टकृत् । समानं स्विष्टकृदिति पक्षे नात्र स्विष्टकृदुल्लेखः । इन्द्रः सविता वरुणश्च पुरोडाशानां देवताः । अग्निः स्विष्टकृत् । एकादशा-नुयाजाः । एकादशोपयाजाः सूक्तवाकशंयुवाकौ । अष्टौ पत्नीसंयाजाः एवमात्मकेनेत्यादिरूपः सङ्कल्पो वा यक्ष्येइति सङ्कल्प्य अग्नीन् विहृत्य अन्वाधानादिव्रतोपायनं शाखाहरणादि । चयनपक्षे मैत्रावरुण्याः शाखां प्लक्षशाखां चाहृत्य पञ्चविधं बर्हिः प्रसूमयं प्रस्तरं ऐक्षवी विधृती चयो-विंशतिदारुकमिध्मं चाहृत्य वेदं करोति । चयनपक्षे इदानीमेव वेदिक-रणम् । तदनन्तरं यूपावटीयाच्छङ्कोः प्रत्यक् त्रिभागास्वयस्युत्तमं चक्रं परिलिख्य कर्षूः खात्वोच्छ्रयंत्यपस्याः । अथ पात्रत्याज्यस्थालीमित्या-दिमयिषष्ठूणाम्यये अग्निमित्यादिनावभेस्तम्बे आहुतीर्हुत्वा अपपात्र-तिस्फ्यमुदपात्रं बर्हिः शम्यामित्यादि वात्वालनेखनप्रभृत्युत्तरवेदिना-भिप्रच्छादनान्तं करोति । उत्तरवेद्या दक्षिणतश्चात्वालपुरीषेण हस्त-मात्रं चतुरङ्गुलोन्नतं चतुरस्रमायतनं करोति तत् खर इत्युच्यते ।

१६८ तत्र स्रुचां स्थापनं करोति । तस्य खरस्य पश्चादपरः खरः क्रियते तस्मिन् ग्रहाः स्थाप्यन्ते । ततोऽभ्र्यादानादि यूपावटकरणा-न्तम् । तत इन्द्रघोषस्त्वेत्यादिना संस्रावाभिघारणादि सिकतासमी-करणान्तं ततः शाखापवित्रमुपवेषं च करोति । ततोऽग्निप्रणयनं करोति । ततो ब्रह्मयजमानयोः स्वायतने उपवेशनम् । ततोऽध्वर्युरुत्तरपरिग्र-हादि- स्फ्यप्रक्षालनान्तं करोति । आग्नीध्रः शालामुखीये स्रुचः प्रति-तप्य स्रुववत् स्वधितिं सम्मार्ष्टि । अध्वर्युः जुह्वाग्रहणादि सर्वाज्या-भिमन्त्रणान्तं करोति । ततः सायमग्निहोत्रं हुत्वा शालामुखीयस्यो-त्तरतः दर्भेषु तिस्रः पशुकुम्भीः त्रीणि शाखापवित्राणि तिस्रो यूपरशनाः पशुरशनाश्च त्रीणि वपाश्रपणी युग्मानि । त्रीणिहृदयशूलानि त्रीण्य-येरुहांस्तथा सुराग्रहांश्चनकलबदरकर्कन्धूनां यवगोधूमोपवाकानां च

सक्तून् द्वु श्येनपत्र द्वु दशापवित्रं द्वौद्रोणकलशौ शतातृण्णां स्थालीं चासादयति । एतानि सौत्रामणीपाशुकपात्राणीत्युच्यन्ते ॥

१६९ ततो मैत्रावरुण्याः सायंदोहः । श्वोभूते प्रातरग्निहोमानन्तरं प्रातर्दोहः । आरुणकेतुकचयनत्ते महारात्रे जागृतो भूत्वा तदानीमेवापकृष्य प्रातरग्निहोत्रं जुहोति । कर्मणो विहितकालात्पूर्वमेव यदनुष्ठानं तदपकर्ष इत्युच्यते ॥

१७० तत आग्नेयीं पशिवष्टिं समाप्य संमर्शनादि करोति । आज्यं दधि च निरूप्यापूर्वाज्यं च निर्वपति । आज्यमधिश्रित्य पर्यग्नि करोति । चयनाभावे इदानीं वेदिकरणं आग्नीदितास्त्रहरेत्यन्तम् । चयनपक्षे उत्तरपरिग्राहादि करोति । प्रतिप्रस्थाता स्फ्यमग्निहोत्रहवणीं जुहूद्वयमित्यादि पात्राण्यासाद्य कर्मणे वामित्यादि करोति । ऊर्ध्वमुखानां ग्रहाणां जुहूवत्संम्मार्गः । आज्यं निरूप्य महीनां पयोसीति पत्नीमाज्यमवेक्षयति । अध्वर्युर्द्रोणकलशे प्रभूतं पयो निर्वपति तूष्णीं । प्रतिप्रस्थाता सुरास्थानीयं पयः प्राक्तनवेद्यां निदधाति । अध्वर्युः पर्य्यग्निकरणादि करोति । प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढितूष्णीं पृषदाज्यग्रहणीं पत्नीं सन्नह्याज्येन दध्ना चोदेहि प्रतिप्रस्थातः सुरासोमस्य विद्धि इति प्रेष्यति । ततः प्रतिप्रस्थाता सुराकुम्भं दशापवित्रं श्येनपत्रं ग्रहान् द्रोणकलशं नक्तलबदरकर्कन्धूनां यवगोधूमोपवाकानां च सक्तून् सिंहव्याघ्रलोमानि शतातृण्णां स्थालीं चादाय पूर्वया द्वारा निष्क्रम्यान्तर्वेद्यासादयति । अथाध्वर्युः आज्यमुत्पूय स्वीयेनोदग्दशेनाजाविलोमनिर्मितेन दशापवित्रेण द्रोणस्थं पय उत्पुनाति पुनाति ते परिस्रुतमित्यृचा । प्रतिप्रस्थाता सुरास्थानीयं कुम्भस्थं पयः स्वीयेनोदग्दशेन गवाश्वलोमनिर्मितेन दशापवित्रेणान्तर्हिते स्वीयद्रोणकलशे ऽवनायोत्पुनाति ब्रह्मक्षत्रं पवते तेज इत्यादिना रसेनान्नं यजमानाय धेहीत्यन्तेन यजुषा । इदं सुरापयसोरुत्पवनमित्युच्यते ॥

१७१ सुरास्थानीयं पयः कुम्भे किञ्चित्परिशेषयति । ततोऽध्वर्युः प्रोक्षण्युत्पवनादि पवित्रे स्थ इत्यादियजुषा स्रुवस्वधितिसादनान्तं कृत्वा वेद्यामेव ग्रहेषु वक्ष्यमाणमन्त्रैः क्रमेण पयो गृह्णाति ।



कुविदङ्ग यवमन्त इत्यृचा उपयामगृहीतोस्यश्विभ्यां त्वा जुष्टं गृह्णामीति यजुषा च प्रथमे गृहीत्वा यवसक्तुभिः संश्रित्य स्वीयश्येनपत्रेण परिमृज्य एष ते योनिस्तेजसे त्वा इति मन्त्रेण स्रुचां पश्चात् खरे सादयति । अग्रेण दक्षिणाग्निं वेद्यामेव पूर्वकृते द्वितीयखरे सादयतीत्यन्विलायन्ये उक्तम् । ततः पूर्वोक्तयैवर्चा उपयामगृहीतोसि सरस्वत्यै त्वा जुष्टं गृह्णामीति यजुषा च द्वितीये ग्रहे गृहीत्वा गोधूमसक्तुभिः संश्रित्य पूर्ववत्परिमृज्य एष ते योनिर्वीर्याय त्वा इति मन्त्रेण पूर्ववत्सादयति । ततस्तयैवर्चा उपयामगृहीतोसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति यजुषा च गृहीत्वोपवाकसक्तुभिः संश्रित्य परिमृज्य एष ते योनिर्बलाय त्वा इति मन्त्रेण सादयति । प्रागपवर्गमुदगपवर्गं वा ग्रहाणां खरे सादनम् । एतत्पयोग्रहासादनमित्युच्यते ।

१७२ ततः सत्रान् ग्रहानुपतिष्ठते । तेजोसि तेजो मयि धेहि इति मन्त्रेण प्रथमग्रहम् वीर्यमसि वीर्य्यम्मयि धेहि इति मन्त्रेण द्वितीयम् । बलमसि बलं मयि धेहि इति मन्त्रेण तृतीयम् । आग्नीध्रः द्रोणकलशस्थं सुरापयः पात्रान्तरे कृत्वा द्रोणोपरि धृतगोवालपवित्र-मवनीय धारां करोति प्रतिप्रस्थाता धारायां गृह्णाति । नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमन् सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसीः स्वां योनिमाविशन् । उपयामगृहीतोस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामि । आभ्यामृग्यजुर्भ्यां पर्णमये पात्रे गृहीत्वा बर्हिषी अन्तर्धाय नकुलसक्तुभिः सिंहलोमभिश्च संश्रित्य बर्हिषी दूरीकृत्य स्वीयेन श्येनपत्रेण परिमृज्य पयोग्रहाणां पुरतः उत्तरतो वा प्रागपवर्गमुदगपवर्गं वा सादयति एष ते योनिर्मोदाय त्वेति मन्त्रेण । नैयग्रोधे पात्रे द्वितीयं गृह्णाति । नाना हि वामित्यृचं पठित्वा उपयामगृहीतोसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति यजुषा । ततो बर्हिषी अन्तर्धाय बदरसक्तुभिः व्याघ्रलोमभिश्च संश्रित्य अपोद्धृत्य बर्हिषी स्वीयश्येनपत्रेण परिमृज्य एष ते योनिरानन्दाय त्वेति मन्त्रेण सादयति । आश्वत्थे पात्रे तृतीयं गृह्णाति नाना हि वामित्यृचा उपयामगृहीतोस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति यजुषा च । बर्हिषी अन्तर्धाय कर्कन्धुसक्तुभिर्वृकलोमभिश्च

संश्रित्य चापोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य एष ते योनिर्महसे त्वेति मन्त्रेण सादयति । सिंहादिलोमाभावे सिंहव्याघ्रवृकान् ध्यायति । एतत्कर्म सुरास्थानीयपयोग्रहासादनमित्युच्यते ॥

१७३ सन्नान् ग्रहानध्वर्युः प्रतिप्रस्थाता यजमानश्चोपतिष्ठन्ते । ओजोसीत्यादि सुरावन्तमित्यन्तैर्वाक्यमन्त्रैः । तेषु तु वसुवाक्यसमूहेषु प्रथमवाक्यसमूहान्तपठितस्य ऋतेन सत्यमिन्द्रियमित्यादिवाक्यत्रय-स्यानुषङ्गः क्रियते । तथाहि । ओजोस्योजो मयि धेहि । मन्युरसि मन्युं मयि धेहि । महोसि महो मयि धेहि । सहोसि सहो मयि धेहि । या व्याघ्रं विषूचिका । उभौ वृकं च रक्षति । श्येनं पतत्रिणं सिंहं सेमं पात्वंहसः । संपृचःस्थ सम्माभद्रेणपृंक्त । विपृचःस्थ विमा-पाप्मना पृंक्त । सोमो राजा मृतं सुतः । ऋजीषेणाजहान्मृत्युम् ऋतेन सत्यमिन्द्रियम् । विपानं शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोमृतं मधु ॥ १ ॥ सोममद्भ्यो व्यपिबत् । छन्दसा हंसः शुचिषत् । ऋतेन० ॥ २ ॥ अद्भ्यः क्षीरं व्यपिबत् । क्रुङ्ङांगिरसो धिया । ऋतेन० ॥ ३ ॥ अन्नात्परिस्रुतो रसम् । ब्रह्मणाव्यपिबत्क्षत्रम् । ऋतेन० ॥ ४ ॥ रेतो मूत्रं विजहाति । योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणा वृतः । उल्वं जहाति जन्मना । ऋतेन० ॥ ५ ॥ वेदेन रूपे व्यकरोत् । सता-सती प्रजापतिः । ऋतेन० ॥ ६ ॥ सोमेन सोमौ व्यपिबत् । सुतासुतौ प्रजापतिः ऋतेन० ॥ ७ ॥ दृष्ट्वा रूपे व्याकरोत् । सत्यानृते प्रजापतिः ऋतेन० ॥ ८ ॥ दृष्ट्वा परिस्रुतो रसम् । शुक्रेण शुक्रं व्यपिबत् । पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । विपानं शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोमृतं मधु ॥ ९ ॥ एतत्सुराग्रहोपस्थान-मित्युच्यते ॥

१७४ उपस्थायाप उपस्पृशन्ति । ततः प्रतिप्रस्थाता ग्रहान् गृहीत्वाऽवशिष्टसुरं कुम्भद्रोणकलशं चादायाहवनीयस्याग्रतः दक्षिण-खरस्याग्निसमीपे सादयति । विशाखयोः शिक्यं शतमानं पवित्रं शता-तृण्यास्वासाद्य खरस्य पूर्वतः पुराणभस्मना खरान्तरं कृत्वा तस्मिन् वल्मीकवपां निदधाति । ब्रह्माणं चोपवेशयति । अप उपस्पृश्य यन्मे अग्नदत्यादिमन्त्रं श्रावयति यजमानम् । ततो यूपप्रक्षालनादि पशुकर्म

कर्म चरकवत्करोति । त्रयः पशव आलभ्यन्ते । तत्राश्विभ्यां धूम्रवर्णश्छागः । सरस्वत्यै मेषश्छागो वा । इन्द्राय ऋषभः । कलियुगे तु गवालम्भनिषेधादृषभप्रतिनिधित्वेन छागो भवति । छागऋषभकार्ये इति गोपालकारिकोक्तत्वात् । वृष्ण्यावेत्यापस्तम्बसूत्रोक्तत्वान्मेषो वा भवति । प्रतिनिधित्वोकारेऽपि पशुनामादेशादौ ऋषभशब्द एव प्रयोक्तव्यः । न तु वृष्णिशब्द उक्षशब्दो गोशब्दो वा मन्त्रपाठे ऋषभशब्ददर्शनात् । एते सौत्रामणीपशव इत्युच्यन्ते ॥

१७५ पर्यग्निकरणे विशेषः । आग्नीध्रो द्वितीये पर्याये पर्यग्निकुर्वन् प्रतिप्रस्थात्रा उत्तरवेदेर्दक्षिणेन पथा गत्वा तत्र खरे उल्मुकैकदेशं प्रक्षिप्य करीषादिनोपसमाधायोपसमाहिते सति आग्नीध्रः शेषेणोल्मुकेन पर्यायान् समाप्य तदेवोल्मुकं पृथङ्निधाय पशुश्रपणकाले तदर्थं प्रणयति । अथोल्मुकप्रथमा इत्यादिना विहितस्य शामित्रशालां प्रति पशुनयनस्याङ्गभूतमुल्मुकं पूर्वाङ्गविहितस्यैवैकदेशो गृह्यते । तमेकदेशं कार्यानन्तरमाहवनीये प्रक्षिपति । ऋषभे निवपणे सति तमुदुत्तिष्ठेत्यादिमन्त्रेणोत्थापयति । ततो वपाप्रचारान्तं पाशुकं चरकवद्भवति । पश्वङ्गमन्त्रेषु पशुबोधकशब्दानां पशुबहुत्वाद्बहुवचनान्तत्वेन सर्वत्रोहः कार्यः । अश्विभ्यां छागस्य वपाया मेदसोनुब्रू३हि इत्यनुवाक्याप्रैषः । अयमश्व्यनुवाक्याप्रैष इत्युच्यते ॥

१७६ अश्विभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्येति मैत्रावरुणं प्रत्यध्वर्युः प्रेष्यति । अयमश्वियाज्याप्रैषप्रैष इत्युच्यते ॥

१७७ सरस्वत्यै मेषस्य वपाया मेदसोनुब्रू३हि इति । अयं सरस्वत्यनुवाक्याप्रैष इत्युच्यते ॥

१७८ सरस्वत्यै मेषस्य वपां मेदःप्रस्थितं प्रेष्येति अयं सरस्वतीयाज्याप्रैषप्रैष इत्युच्यते ॥

१७९ यजमानः अश्विभ्यामिदम्० । अश्विनोरहन्देवयज्ययेन्द्रियावी भूयासम् । तेमानं महिमानं गमेय मिति वा । सरस्वत्या इदम्० । सरस्वत्या अहं देवयज्ययेन्द्रियावी भूयासम् । तेमानमित्यादिविकल्पः पूर्ववत् । अनुमन्त्रयते । एतद्यागद्वयानन्तरं अध्वर्युः इन्द्राय ऋषभस्य वपाया मेदसोनुब्रू३हि इत्यय्मैन्द्रानुवाक्याप्रैष इत्युच्यते ॥

१८० इन्द्राय ऋषभस्य वपां मेदः प्रस्थितं प्रेष्येत्ययमैन्द्रयाज्याप्रैषप्रैष इत्युच्यते ॥

१८१ ततो वपामार्जनान्तं समानम् । इदानीमेव वा पयोग्रहादिग्रहणम् । ततः प्रतिप्रस्थातः पशून् विशाधि इत्यादि करोति । नैतेषु पशुपुरोडाशा विद्यन्ते । ग्रहपुरोडाशा ह्येते इति वचनात् । शमितर्हृदयानि जिह्वावक्षांसि तानि कुरुतात्तनिमानिमतस्नूस्तानि साधं सव्यानि दोषाण्येकचराणि कुरुताच्चानां पार्श्वाण्यवघतादच्छिद्याः श्रोणीरध्युद्धीः कुरुताद्दच्छिद्यानि दोषाणि सव्या श्रोणीरणिमन्ति गुदानां तानि अङ्गानि कुरुताद्दनिष्टूश्च जाघनीश्चावधत्ताद्दहुरूपाः कुरुतात् त्रिः पशून् प्रच्यावयतात् त्रिःप्रच्युतानां पशूनां हृदयान्युत्तमानि कुरुतात् । तस्य तस्य पशोरित्यध्याहारं तु एकवत्प्रैषोऽप्यन्वेतीत्यनूहो वा । अयं सौत्रामणीपशुश्रपणप्रैष इत्युच्यते ॥

१८२ इदानीमप्रेषित एवाग्नीध्रः त्रीन्पुरोडाशान्निर्वपति । इन्द्रायैकादशकपालम् । सवित्रे द्वादशकपालम् । वरुणाय दशकपालम् । सर्वाणि कपालानि त्रयस्त्रिंशद्भवन्ति । अत्रैव वरुणमेककपालं निर्वपति । आमिक्षाश्रपणं साग्नौ आप्यानिनयनान्तङ्करोति । पशवङ्गश्रपणाकाले ग्रहैः प्रचरन्ति । अध्वर्युः पयोग्रहान्वंशरज्ज्वादिना युगपद्धोमार्थमेकत्र बध्वा आदत्ते । प्रतिप्रस्थाता तथैवैकीकृत्य सुराग्रहानादत्ते अध्वर्युर्मैत्रावरुणं सम्प्रेष्यति । अश्विभ्यां सरस्वत्या इन्द्राय सुरासोमानामनुब्रूहि । अयं सुराग्रहानुवाक्याप्रैष इत्युच्यते ।

१८३ अत्याक्रामतोऽध्वर्युप्रतिप्रस्थातारौ । अध्वर्युराश्रावयति । आग्नीध्रेण प्रत्याश्राविते अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान्प्रस्थितान् प्रेष्य । इत्ययं प्रैषः सुराग्रहयाज्याप्रैषप्रैष इत्युच्यते ॥

१८४ होतृवषट्कारसमकालं प्रतिप्रस्थाता सुराग्रहान् अध्वर्युः पयोग्रहान् सहोभौ स्वाहान्ताभ्यां जुहुतः । सुरावन्तं बर्हिषदं सुवीरं यज्ञं हिन्वन्ति महिषानमोभिः । दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः स्वाहा । इत्यध्वर्योः यस्ते रसः सम्भृत ओषधीषु सोमस्य शुष्मःसुरया सुतस्य । तेन जिन्व यजमानं मदेन सरस्वत्यश्विनाविन्द्रमग्निं स्वाहा । इति प्रतिप्रस्थातुः । चाक्षोक्तयोर-

होत्यग्नेर्हविर्यस्मिन्नश्वास इत्यनयोर्निवृत्तिः । इमौ सुराग्रहहोममन्त्रावित्युच्येते ॥

१८५ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इदम् न ममेति त्यागो यजमानस्य । अत्र हुतानुमन्त्रणं नास्ति । सोमधर्मत्वात् । करणपक्षे आपस्तम्बसूत्रोक्तं अनुमन्त्रणं सान्नाय्यवत् ग्राह्यम् । होत्यग्नेर्हविरास्येते सुवीव घृतं चमू इव सोमः । वाजसनीं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ १ ॥ यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः । कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥ २ ॥ इति मन्त्राभ्यां सुराग्रहान् हूयमानाननुमन्त्रयते यजमानः । इदं मन्त्रद्वयं सुराग्रहहोमानुमन्त्रणमित्युच्यते ॥

१८६ होतुरनुवषट्कारे तु उभौ तूष्णीं जुहुतः । यजमानः अग्नय इदम्० । अग्नेरहन्देवयज्ययायुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्यनुमन्त्रयते । प्रतिप्रस्थातुर्दक्षिणखरस्थाग्नौ वा होमः । तत्पक्षे शालामुखीयादग्नेरिध्मं प्रणीयोत्तरवेदिवत्सम्भारनिधानं अध्वराहुत्यादि परिस्तरणपरिधीध्मादिसम्मार्गान्तं तूष्णीमध्वर्युपुरुषाः कुर्वन्तीति विशेषः प्रतिप्रस्थाता श्विनं सग्रहं सारस्वते ऽवनयति सारस्वतमैन्द्रे । ततः प्रत्याक्रम्याश्विनं पयोग्रहमध्वर्युर्भक्षयति । यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय । इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि इति मन्त्रेण । प्रतिप्रस्थाताग्नीध्रश्च सारस्वतं भक्षयतः । यदत्र रिप्तं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति मन्त्रेण । इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये । आत्मसनि पशुसन्यभयसनि लोकसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा । आभ्यामृग्भ्यामैन्द्रं ब्रह्मयजमानौ भक्षयतः । प्रतिप्रस्थाता ऐन्द्रं सुराग्रहं होत्रे हरति । पयोग्रहत्वात् होता प्रत्यक्षं भक्षयति । प्राणभक्षो वा यदि होता न भक्षयति तदा खरे उपविष्टः कश्चिद् ब्राह्मणो भक्षयति । नानाहिवामित्यृचा यदत्र शिष्टमित्यृचा च । यदि ब्राह्मणं न विन्देत्तर्हि आहवनीयस्य

दक्षिणतो भस्मनिर्मितखरस्थवल्मीकवपायामवनयति एताभ्यामेव मन्त्राभ्याम् । अयं सुराग्रहभक्षविधिरित्युच्यते ॥

१८७ अत्र ग्रहपात्राणां सुरानिनर्दनं पूरणं श्येनपत्रावगूहनञ्च । वंशपादानुच्छ्रित्य तयोरुपरि दक्षिणाग्रं दीर्घवंशं निधाय वंशशिक्यं च बध्वा शिक्ये शतातृण्णां कुम्भं निधाय दक्षिणाग्रगोवालपवित्रान्तर्हितं कृत्वा पवित्रे शतमानं हिरण्यं निधाय तत्रावशिष्टं सुरास्थानीयं पयोऽवनयति । यत्पतितं द्रोणे धाराशेषं तद्दक्षिणामुखः प्राचीनावीती तिष्ठन् सोमप्रतीकाः पितरस्तृप्णुत इति मन्त्रेण शतातृण्णकुम्भतो धारा अग्नौ पातयति । तासु पतितासु अध्वर्युर्ब्रह्मा होता यजमानश्च प्राचीनावीतिनो दक्षिणामुखा उपतिष्ठन्ते । पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ १ ॥ पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्व आयवः ॥ २ ॥ जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूंरनु ॥ ३ ॥ यत्ते पवित्रमर्चिष्वि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे ॥ ४ ॥ उभाभ्यान्देवसवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे ॥ ५ ॥ वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सधमाद्येषु । वयं स्याम पतयो रयीणाम् ॥ ६ ॥ वैश्वानरो रश्मिभि र्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् ॥ ७ ॥ बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्ने दक्षैः पुनाहि मा ॥ ८ ॥ एतैरष्टाभिर्मन्त्रैः एतत्सुराधारोपस्थानमित्युच्यते ॥

१८८ उपस्थानानन्तरं प्रत्यङ्मुखो ऽध्वर्युः त्वं सोम प्रचिकितो मनीषेति त्वया हि नः पितर इति वन्वन्नवात इति त्वं सोमपितृभिः संविदान इति तस्मै त इन्दो हविषा विधेमेति पञ्चभिर्ऋग्भिरुपतिष्ठते । उदङ्मुखो ब्रह्मा बर्हिषदः पितर ऊत्यर्वागिति त आगता वसेति आहं पितॄन्त्सुविदत्रानित्युपहूताः पितरः सोम्यास इति चतसृभिर्ऋग्भिरुपतिष्ठते । प्राङ्मुखो होता अग्निष्वात्ताः पितर एहगच्छतेति ये अग्निष्वात्ता ये ऽनग्निष्वात्ता इति वान्यायै दुग्धे इति अग्निष्वात्ता इति चतसृभिर्ऋग्भिरुपतिष्ठते । अत्र सुराग्रहस्थापनं





... भिषज्यन् स्वाहा ॥१॥
अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इदं न ममेति यजमानस्य त्यागः । सम्पातमवनीय कुष्टिकशफावग्नावनुप्रहरति । एवं सर्वत्र । तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य मांसमभवन्न लाजाः स्वाहा ॥ २ ॥ सर्वत्र यथालिङ्गत्यागः । तत्तत्पशुदेवतानाम्नेति केचित् । तदश्विना भिषजा रुद्रवर्त्तनी सरस्वती वयति पेशो अन्तरः । अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि स्वाहा ॥ ३ ॥ सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः । रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम स्वाहा ॥ ४ ॥ पयसा शुक्रममृतं जनित्रं सुरया मूत्राज्जनयन्त रेतः । अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातं सब्वं तदारात् स्वाहा ॥ ५ ॥ इन्द्रः सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान । यकृत्क्लोमानं वरुणो भिषज्यन्मतस्ने वायव्यैर्न मिनाति पित्तं स्वाहा ॥ ६ ॥ आन्त्राणि स्थालीर्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः । श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी नाभिरुदरं न माता स्वाहा ॥ ७ ॥ कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः । प्लाशिर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः स्वाहा ॥ ८ ॥ एते मन्त्रा अश्विनकुष्ठिकशफहोममन्त्रा इत्युच्यन्ते ।

१९३ अथ द्वितीयस्य । मुखं सदस्य शिर इत्सदेन जिह्वा पवित्रमश्विनासन्त्सरस्वती ॥ चप्यं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी स्वाहा ॥ १ ॥ अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन । पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते स्वाहा ॥ २ ॥ अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् ॥ सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान स्वाहा ॥ ३ ॥ इन्द्रस्य रूपमृषभो बलाय कर्णाभ्यां श्रोत्रममृतं ग्रहाभ्याम् । यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् स्वाहा ॥ ४ ॥ आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम । केशा न शीर्षन् यशसे श्रियै शिखा सिंहस्य लोम त्विषिरिन्द्रियाणि स्वाहा ॥ ५ ॥ अङ्गान्यात्मन्भिषजा तदश्विनात्मानमङ्गैः समधात्सरस्वती । इन्द्रस्य रूपं शत-

मानमायुश्चन्द्रेण ज्योतिरमृतं दधाना स्वाहा ॥ ६ ॥ सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति । अपां रसेन वरुणो न साम्नेन्द्रं श्रियै जनयन्नप्सु राजा स्वाहा ॥ ७ ॥ तेजः पशूनां हविरिन्द्रियावत्परिस्रुता पयसा सारघं मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुःस्वाहा ॥ ८ ॥ एते सारस्वतकुम्भिकशफहोममन्त्रा इत्युच्यन्ते ॥

१९४ अथ तृतीयस्य । तत्र सीसेन तन्त्रं मनसा मनीषिण इत्यादीनां षोडशानामृचां द्वाभ्यां द्वाभ्यामृग्भ्यां एकैकाहुतिर्भवति । तद्यथा । सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति । अश्विना यज्ञं सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥ तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य मां समभवन्लाजाः स्वाहा ॥ १ ॥ अनया रीत्या ऽष्टौ होमान् करोति । एते ऋग्द्वयात्मका मन्त्राः ऐन्द्रकुम्भिकशफहोममन्त्रा इत्युच्यन्ते ॥

१९५ अथा ऽध्वर्युः । मित्रोसि वरुणोसि । समहं विश्वैर्देवैः । इति द्वाभ्यां वाक्यमन्त्राभ्यां पूर्वं संपादितामासन्दीं यजमानायतने प्रतिष्ठापयति एतत्कर्म आसन्दीप्रतिष्ठापनमित्युच्यते ॥

१९६ ततः क्षत्रस्य नाभिरसि । क्षत्रस्य योनिरसि । एतद्वाक्यद्वयात्मकमन्त्रेण तस्यामासन्द्यां वास आस्तृणाति । एतदासन्द्यास्तरणमित्युच्यते ॥

१९७ चत्वारोपि वाक्यमन्त्रा आसन्दीप्रतिष्ठापने विनियुक्ता इति केचित् । तन्मते वासआस्तरणं न भवति । यजमानः स्योनामासीद । सुषदामासीद । मा त्वा हिंसीत् । मा मा हिंसीत् । इति वाक्यचतुष्टयात्मकेन मन्त्रेण उपविशति । एतदासन्द्युपवेशनमित्युच्यते ॥

१९८ अध्वर्युः निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः । इत्यृचा आसन्द्यामासीनं यजमानमभिमन्त्रयते । एतदासन्द्यासीनयजमानाभिमन्त्रणमित्युच्यते ॥

१९९ अध्वर्युः प्रत्यङ्मुखस्तिष्ठन् आसन्द्यामासीनं यजमानं आश्विनपात्रस्थसंस्रावेणाभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेश्विनो-

र्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामीति मन्त्रेण । ततः सारस्वतपात्रस्थसंस्रावेणाभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीति मन्त्रेण । ततः ऐन्द्रपात्रस्थसंस्रावेणाभिषिञ्चति । देवस्यत्वा० हस्ताभ्यां । इन्द्रस्येन्द्रियेण श्रियै यशसे बलायाभिषिञ्चामीति मन्त्रेण । तदनन्तरं कोसि कतमोसि । कस्मै त्वा कतमाय त्वा । इति वाक्यद्वयेन यजमानस्य हस्तौ सम्मृशति । एतद्यजमानहस्तसम्मर्शनमित्युच्यते ॥

२०० व्यस्ताभिर्व्याहृतिभिस्तिस्रः स्रुवाहुतीर्जुहोति । तद्यथा । भूः स्वाहा । भुवः स्वाहा । सुवः स्वाहा यथालिङ्गत्यागो यजमानस्य । अयं व्यस्तव्याहृतिहोमइत्युच्यते ॥

२०१ यजमानो राजसूयवन्मङ्गलनाम्ना ऽऽह्वयति । अन्त स्माव, यन् । सुश्लोकाँ३इति सङ्ग्रहीतारम् । सुमंगलाँ३ इति भागदुघम् । सत्यराजाँ३इति चत्तारं । एतत्कर्म मङ्गलनामाव्हानमित्युच्यते ॥

२०२ ततो यथालिङ्गमङ्गानि सम्मृशति । शिरो मे श्रीः । इति शिरः । यशो मुखम् । मुखम् । त्विषिः केशाश्च श्मश्रूणि । इति केशश्मश्रूणि । राजा मे प्राणो अमृतम् । इति नासिकाम । सम्राट् चक्षुः । इति चक्षुषी । विराट् श्रोत्रम् । इति श्रोत्रं । जिह्वा मे भद्रम् । इति जिह्वाम् । वाङ्महः इति वाचम् । मनो मन्युः इति मनः । स्वराड्भाजः इति हृदयललाटे । मोदाः प्रमोदा अङ्गुलीरङ्गानि इत्यङ्गुलीरङ्गानि च । चित्तं मे सहः । इति चित्तम् । अभिसन्धाय हृदयम् । बाहू मे बलमिन्द्रियम् । इति बाहू । हस्तौ मे कर्मवीर्यम् इति हस्तौ । आत्मक्षत्रमुरो मम । इति मध्यशरीरमुरश्च । पृष्ठीर्मे राष्ट्रमुदरमंसौ । इति पृष्ठमुदरमंसौ च । ग्रीवाश्च श्रोण्यौ । इति ग्रीवाश्रोण्यौ । ऊरू अरत्नी जानुनी । इत्यूरू अरत्नी जानुनी विशोमेऽङ्गानि सर्वतः । इति सर्वाङ्गानि । नाभिर्मे चित्तं विज्ञानम् । इति नाभिम् । पायुर्मे पचितिर्भसत् । इति पायुम् । आनन्दनन्दावाण्डौ मे । इति वृषणौ । भगः सौभाग्यं पसः । इति प्रजननं । असम्भवतामभिसन्धाय

जपेत् । एवम् यथालिङ्गमङ्गानि संस्पृश्याप उपस्पृशति । इदमङ्गसंस्पर्शनमित्युच्यते ॥

२०३ अथासन्द्याः प्रत्यवरोहति । जङ्घाभ्यां पद्भ्यां धर्मोऽसि । विशि राजा प्रतिष्ठतीति वाक्यद्वयेन मन्त्रेण । अवरुह्य जपति । प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठामि पुष्टे । प्रतिद्यावापृथिव्योः प्रतितिष्ठामि यज्ञे । एतत्कर्म आसन्दीप्रत्यवरोहणमित्युच्यते ॥

२०४ अथाध्वर्युराज्याहुतिं जुहोति । त्रयो देवा एकादश । त्रयस्त्रिंशाः सुराधसः । बृहस्पतिपुरोहिताः । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाहुतयो मे कामान् समर्धयन्तु स्वाहा ॥ देवेभ्य इदम्० इति यजमानस्य त्यागः । अध्वर्युः पुनराज्याहुतिं जुहोति । भूः स्वाहा । यजमानः अग्नय इदं न ममेति, यजमानस्य त्यागः । अथ यजमानो यथालिङ्गमङ्गानि सम्मृशति । लोमानि प्रयतिर्मम । इति लोमानि । त्वङ्म आनतिरागतिः । इति त्वचम् । मांसं म उपनतिः । इति जिह्वाम् । वस्वस्थि मज्जा म आनतिः । इति मज्जानम् । लोमादीनि मज्जान्तान्यङ्गानि सम्मृश्याप उपस्पृशति । इदं लोमादिसम्मर्शनमित्युच्यते ॥

२०५ ततः चयनपक्षे स्विष्टकृतः पुरस्तान्मृत्युग्रहहोमो भवति । विद्युदसि विद्य वृष्टिरसि वृश्चमे० । आग्नीध्रः सुचावादाय स्विष्टकृत्प्रभृति इडान्तैः पशुभिः प्रचरति । मृत्युग्रहभक्षश्च । अथैनान्पुरोडाशान्प्रचरति । ऐन्द्रमेकादशकपालम् । सावित्रं द्वादशकपालम् । वारुणं दशकपालं च । आग्नीत्पुरोडाशानाहरेति प्रेषित अग्नीध्रो दक्षिणेनाज्यस्थालीमित्यादिरीत्या व्याहृतिमन्त्रेण हर्विष्यन्तर्वेद्यासादयति । यजमानः यन्मे अग्ने इत्यादिनाऽभिमन्त्रयते । अप्रैषः सप्रैषो वा प्रचारः । अप्रैष इति तु युक्तम् । अतएव होतुरादेशो ऽपि भवति अश्विनोरहन्देवयज्ययेन्द्रियावी भूयासम् सरस्वत्या अहं देवयज्यया स्वस्तिमान् पशुमान्भूयासम् । इन्द्रस्य सुत्राम्णोहन्देवयज्यया धर्मभाग्भूयासम् । एतानि क्रमेण आश्विनसारस्वतेन्द्रयागानां यजमानस्यानुमन्त्रणानि । सर्वेषां यागानामन्वादद्त्येव वऽानुमन्त्रणम् इडामार्जनान्ते

तन्त्रेण स्विष्टकृदिडान्तम् इत्यापस्तम्बोक्तपक्षे अत्र मृत्युग्रहभक्षः। गर्भिणीं वडवामत्र वा ददाति । ततो हविरुच्छिष्टमुद्वासयति । चयनपक्षे मैत्रावरुण्यामिक्षया प्रचर्य वाजिनेनेष्ट्वा अग्नीदीपधानङ्गारानित्यादि करोति । समुदितैस्त्रयाणां पशूनां गुदकाण्डैरुपयाजप्रचारो भवति । दिवं वो धूमो गच्छत्वन्तरिक्षम्० पृणध्वं स्वाहेत्यूहः । यद्येकस्तदा प्रकृतिवत् । सूक्तवाके यथालिङ्गमूहः । आज्यभागदेवतानन्तरं अश्विनोरहमुज्जितिमनूज्जेषम् । सरस्वत्या अहमुज्जितिमनूज्जेषम् । देवानामाज्यपानमित्यादि प्रकृतिवत् । त्रीणि समिष्टयजूंषि भवन्ति । यजमानो विष्णुक्रमान् क्रान्त्वा व्रतं विसृज्य यज्ञविमोकान्तं करोति । अथाध्वर्युः स्फ्यमुदपात्रं हृदयं शूलमित्यादि शूलोद्वासनान्तं कर्म करोति इदम् शूलकर्मेत्युच्यते ॥

२०६ अथावभृथेन चरन्ति । सामचैव नारुदेवीराप एष वो गर्भ इति चेति बौधायनचरकसौत्रामणीसूत्रात् सौमिको ऽवभृथ इति ज्ञेयम् । परिभोजनीयान्वेदं च कृत्वा पाणी सम्मृश्याग्नीन् परिस्तीर्य गार्हपत्यस्योत्तरतस्तृणेषु पात्राण्यासाद्योत्तरवेदिसमीपे ब्रह्माणमुपवेश्य पृष्ठयास्तरणादि करोति । उत्तरवेदिसमीपे प्रणीतासादनम् । प्रोक्षणीभिर्वा संयवनम् । पुराणगार्हपत्ये निर्वापादि । वारुणमेककपालं पुरोडाशं निर्वपति । आप्यनिनयनान्ते । प्रोक्षणीरासादय स्रुवं च स्रुचं च संमृड्ढि पत्नीं सन्नह्याज्येनोदेहि इत्यध्वर्युराग्नीध्रं प्रेष्यति । प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो ऽग्नेर्वातेजिष्ठेन तेजसा निष्टपामीत्यूहितमन्त्रेण स्रुवस्रुचोर्निष्टपनम् । पत्नीं सन्नह्याज्यमवेक्षयित्वा यजमानं चाज्यमवेक्षयित्वा ऽज्यं प्रकृतिवदुत्पुनाति । विष्णवसि वैष्णवं धामासि प्राजापत्यम् । इत्यनेन मन्त्रेणाज्यमभिमन्त्रयते । स्योनं ते सदनमित्यादिमन्त्रेण एककपालमाविः पृष्टं कृत्वा यन्मे अग्ने इत्यादिनाभिमन्त्रयते। आज्यस्थालीं स्रुवं जुहूं स्फ्यं बर्हिर्मुष्टिमेककपालं पुरोडाशं प्रतिवसनीये वाससी सुराग्रहपात्राणि वालानि शततृण्णां स्थालीं हृदयशूलादीन्यादाय अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्ति । द्वे स्रुती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । याभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरञ्चेति मन्त्रेण । उरुं हि राजा वरु-

श्चकार सूर्याय पन्थामन्वेतवाउ । अपदे पादाप्रतिधातवेऽक- रुतापवक्ता हृदया विधश्चित् । इत्यनेन यथापस्तत्र यन्ति । न सामानि गायन्ति । शतन्ते राजन् भिषजः सहस्रमुर्वी गम्भीरासु मतिष्टे अस्तु । बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्य- स्मत् । इत्यृचमपो दृष्ट्वा जपन्ति । यथामन्तमधितिष्ठन्ति । अत्र प्रसिद्धं दृस्यशूलैश्चरित्वा स्फ्येनोद्धृत्यावोद्य शुष्कस्य चार्द्रस्य च सन्धा- वित्यादि० वरुण नो मुञ्चेत्यन्तम् शूलानां कर्म करोति । तत उदक- समीपे दक्षिणापवर्गाणि वायव्यानि सादयति । षट् यज्ञपात्राणि द्वौ द्रोणकलशौ । एकं कुम्भम् । दशापवित्रादि एतानि पात्राणि वायव्या- नीत्युच्यन्ते ॥

२०७ यस्ते देव वरुण गायत्री छन्दाः पाशः । ब्रह्मन्प्रतिष्ठितः । तं त एतेनावयजे । इत्यनेन मन्त्रेण पर्णमयं सादयति । यस्ते देव वरुण त्रिष्टुप् छन्दाः पाशः । क्षत्रे प्रतिष्ठितः । तं त एतेनावयजे । एतावन्मन्त्रेण नैयग्रोधम् । यस्ते देव वरुण जगती छन्दाः पाशः । विशु प्रतिष्ठितः । तं त एतेनावयजे इति मन्त्रेणाश्वत्थम् । यस्ते देव वरुणानुष्टुप्छन्दाः पाशः । । पशुषु प्रतिष्ठितः । तं त एतेनावयजे । इत्यनेन मन्त्रेण शतातृण्णां स्थालीं यज्ञाणां दक्षिणतः । तद्दक्षिणत- स्तूष्णीं सतन्द्रोणकलशौ बालानन्यच्च यत्सोमावलिप्तं तत्सर्वं निद- धाति । एतदवभृथीयवायव्यासादनमित्युच्यते ॥

२०८ अथ बर्हिः प्रासनादि करोति । अपस्त्रिः संमृज्य बर्हिर्वे- षोंश्चतुरः प्रयाजानिष्ट्वा आज्यभागाभ्यां प्रचर्य वारुणमेककपालं पूर्वा- र्धादपरार्धाच्चावदाय उच्चैर्जुहोति । अथते स्विष्टकृति स्रुवेण पञ्चा- हुतीर्जुहोति । यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः स्वाहा । यदिदिवाय० कमेना व० । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः स्वाहा । यदि जाग्रद्यदि स्वप्न० वयम् । सूर्यो मातस्मादेनसो० सः स्वाहा । अत्र क्रमेण अग्नये वायवे सूर्यायेति यथालिङ्गं यजमानस्य त्यागाः । यद्ग्रामे यदरण्ये यत्सभायांयदिंद्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् । यदेकस्याधि- धर्मणि तस्याऽवयजनमसि स्वाहाप्रजापतय इदं न ममेति त्यागः ।

यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च स्वाहा । वरुणायेदं न ममेति त्यागः एताः पञ्चाहुतयः सौत्रामण्यवभृथाहुतय इत्युच्यन्ते ॥

२०९ ततः स्विष्टकृदादि । अपः सक्तून्संमृज्यापबर्हिषौ द्वावनुयाजौ यजति । समुद्रे ते० स्रुवं प्रतिष्ठाप्य अभिपूर्वं हुत्वा ऽवभृथं यजमानो ऽनुमन्त्रयते । अवभृथनिचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयाट् । अव मर्त्यैर्मर्त्यकृतम् । उरोराणो देवरीरिषस्पाहि । अयमवभृथानुमन्त्रणमन्त्र इत्युच्यते ॥

२१० ततः सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भूयासुः । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः । द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाज्यम् । आपः शुन्धन्तु मैनसः । इति द्वाभ्यां मन्त्राभ्यामाप्लुत्य शालीनप्सु सम्प्रकीर्य अञ्जलिनोपसिच्य इमं विष्यामीति मन्त्रेण योक्त्रं विसृज्य अन्योन्यं धावयन्ति । ततोऽभिषेकादि । स्नात्वा प्रतिवसनीये वाससी परिधाय उद्वयन्तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् इत्यादित्यमुपतिष्ठते । प्रतियुतो वरुणस्य पाशः । प्रत्यस्तो वरुणस्य पाशः । इति मन्त्रेणोदकान्तं प्रत्यस्यति । ततः प्रतिप्रस्थानहरचो नय । तिस्रस्तिस्रः समिधः कुर्वत इत्यादि । अपो अन्वचारिषं रसेन समसृक्ष्महि । पयस्वां अग्न आगमन्तं मा संसृज वर्चसा । प्रजया च धनेन च । समाववर्त्ति पृथिवी । समुषाः समु सूर्यः । समु विश्वमिदं जगत् । वैश्वानरज्योतिर्भूयासम् । विभुं कामं व्यश्नवै । एतैर्वाक्यमन्त्रैराहवनीयमुपतिष्ठते । अध्वर्युः स्रुवाहुतिं जुहोति । भूः स्वाहा । अग्नय इदम्० इति त्यागः । व्रतविसर्गादि पुनरालम्भब्राह्मणतर्पणान्तं कृत्वा औपयजिके औत्तरवेदिके वा ऽग्नौ उत्तरवेदिदर्विणसे बर्हिरुपोषति । यत्कुसीदमित्यादिहोम औत्तरवेदिके वा । वाय्वादित्ययूपोपस्थानसमारोपणाभ्याधानपूर्णाहुतिवरदानञ्चेति । व्रतविसर्गादि पुनरालम्भवर्जं ब्राह्मणतर्पणान्ता सन्तिष्ठते त्रिपशुसौत्रामणी । तदानीमेव असंभवे श्वो वा विहृत्य महापितृयज्ञवदनुष्ठानं भवति । याः पुरस्तादित्यादि । महापितृयज्ञहविर्भिर्यक्ष्ये इति सङ्कल्पः । प्रजापते न

स्वदेतानि यदन्तरिक्षं पृथिवीमुत द्यामित्युपस्थानान्तं करोति । अयं सौत्रामणीसम्बन्धिमहापितृयज्ञ इत्युच्यते ॥

२११ अथ प्रतिपदि ऐन्द्रपशुवत्सङ्कल्पप्रभृति । इन्द्राय वयोधसे पशुमालभते । नात्र समारोपः । सौत्रामणीचिपशुवेदिमुद्धास्य यूपं चोद्धास्य आहवनीयस्याग्रे द्वादशपदां वेदिं विमायोत्तरवेदिं शम्यामात्रीं प्रादेशमात्रीं योनिं च करोति । नात्र सौमिकी वेदिर्न चयनम् । ऋषभो दक्षिणा । पूर्णाहुत्यन्तं पुनराधानवर्जं ऐन्द्रं पशुं समापयति । अयं सौत्रामण्युत्तराङ्गैन्द्रपशुरित्युच्यते ॥

२१२ तदनन्तरं पुनर्विहृत्य पूर्ववदादित्येष्टिं करोति । समाप्तरं गां दक्षिणां ददाति । पुनराधानवर्जं ब्राह्मणतर्पणान्तं करोति । इयं सौत्रामण्युत्तरादित्येष्टिरिति गीयते ।

२१३ तदनन्तरं अग्नीन् समारोप्य स्वान्यग्न्यायतनानि सम्प्राप्य मथित्वाऽग्नीन् विहृत्याग्निहोत्रं जुहोति । एतावता यन्थेन कौकिल-सौत्रामणीसम्बन्धियजमानब्रह्माध्वर्य्वाग्नीध्रप्रतिप्रस्थातॄणां कर्माणि प्रतिपादितानि ।

अथ होत्रमैत्रावरुणयोः कर्माश्वलायनसूत्रानुसारेण प्रोच्यते ॥

ऐन्द्रस्य पशोः पशिवष्ट्यादि सर्वं निरूढवद्भवति । आवाहनकाले होता आज्यभागदेवतावाहनानन्तरं इन्द्रमा३वह । वनस्पतिमा३वह । देवाँ आज्यपाँ इत्यादि प्रकृतिवत् । अध्रिगुप्रैषे मेधपतये मेधमित्यूहः । अध्रिगुप्रैषात्पूर्वमेव प्रयाजाः । आश्वलायनानुक्तत्वात् यजुर्वेदोक्तप्रकारेण । तद्यथा ये३ यजामहे भूर्भुवः स्वः समिद्धइन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः । गोभिर्वयावान् मधुना समञ्जन् त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं विदुरो ववाराद् वौ३० ॥ १ ॥ वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीः । इति वषट्कारानन्तरं जपति । ये३ यजामहे नराशंशः प्रतिशूरो मिमानस्तनूनपात्प्रतियज्ञस्य धाम । गोभिर्वपावान्मधुना समंजन् हिरण्यैश्चन्द्री यजति प्रचेता३ वौ३० ॥ २ ॥ वाग्वष० । ये३य०सुवरीडितो देवैर्हरिवां अभिष्टिराजुव्हानो हविषा शर्धमानः । पुरन्दरो मघवान्वज्रबाहुरायातु यज्ञमुप नो जुषाणा३ वौ३० । वाग्वष० ॥ ३ ॥ ये३ य० सुवर्जुषाणो बर्हि-

हरिवान् इन्द्रः प्राचीनं सीदत्प्रदिशा पृथिव्याः । उरुव्यचाः प्रथमानं स्योनमादित्यैरक्तं वसुभिः सजोषाः स्वाहा ॥ ४ ॥ वाग्वष० । येड् य० सुवरिन्द्रं दुरःकवष्यो धावमाना वृषाणं यन्तु जनयः सुपत्नीः । द्वारो देवी-रभितो विश्रयन्तां सुवीरा वीरं प्रथमानामहोभीड् वौ० ॥५॥ वाग्वष० । येड् य० सुवदुषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् । पेश-स्वती तन्तुना संव्ययन्ती देवानां देवी यजतः सुरुक्मेड् वौ३० ॥ ६ ॥ वाग्वष० । नचैद्वैतन्वत इति वचनात् । येड् य० सुवद्दैव्याभिमाना प्रथमा पुरुचा होताराविन्द्रं प्रथमा सुवाचा० । मूर्धन्यज्ञस्य मधुना प्राचीनं ज्योतिर्हविषा वृधाताड् वौ३० । वाग्वष० । अत्र याज्यान्त-विसर्गलोपः । इतरस्त्र रेफीति वचनात् । येड् य० सुवस्तिस्रो देवीर्ह-विषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नी । अच्छिन्नं तन्तुं पयसा सरस्वतीडादेवी भारती विश्वतूर्ती३० वौ३० ॥ ८ ॥ वाग्वष० । येड् य० सुवस्त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे पुरूणि । वृषा यजन्वृ-षणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवाड्न्वौ३० ॥ ९ ॥ वाग्वष० । येड् य० सुववनस्पतिरवसृष्टो न पाशैस्त्मन्यासमञ्जन् चमिता न देवः । इन्द्रस्य हव्यैर्जठरं पृणानः स्वदाति हव्यं मधुना घृतेनाड् वौ३० ॥१०॥ वाग्वष० । तत आश्वलायनसूत्रपठितमध्रिगुप्रैषेन पठति । अध्रिगुश्चा-पापश्चोभौ देवानां शमितारौ ताविमं पशुं श्रपयतां प्रविद्वांसौ यथा यथास्य श्रपणं तथा तथेति श्रुत्युक्तत्वादध्रिग्वपापनामकौ देवशमिता-रावुच्येते ॥

२१४ दशप्रयाजाः पूर्वमनुष्ठिताः । इदानीमेकादशेन यजति । स यथा । येड् य०सुवस्तोकानामिन्दुं प्रतिशूर इन्द्रो वृषायमाणो वृष-भस्तुराषाट् । घृतप्रुषा मधुना हव्यमुन्दन्मूर्धन्यज्ञस्य जुषतां स्वाहाड् वौ३० ॥ ११ ॥ वाग्वष० । एते एकादश आपस्तम्बसूत्रपठिता मन्त्राः सौत्रामणीप्रयाजा इति गीयन्ते ॥

२१५ अथैतेषां प्रैषा उच्यन्ते । ते च यथा । होतायक्षत्समिधे-न्द्रमिडस्पदेनाभापृथिव्या अधि । दिवो वर्ष्मन् त्समिध्यत ओजिष्ठश्च-र्षणीसहान्वेत्वाज्यस्य होतर्यज ॥ १ ॥ होता यक्षत्तनूनपातमूतिभिर्जे-तारमपराजितमिन्द्रं देवं सुवर्विदं पथिभिर्मधुमत्तमैर्नराशंसेन तेजसा

वेत्वाज्यस्य होतर्यज ॥ २ ॥ होता यक्षदिडाभिरिन्द्रमिन्द्रमीडितं मा-
जुह्वानममर्त्यम् । देवो दैवैः सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य
होतर्यज ॥ ३ ॥ होता यक्षद्बर्हिषीन्द्रं निषद्वरं वृषभं नर्यापसम् । वसु-
भीरुद्रैरादित्यैर्भिर्नियुद्भिर्बर्हिरासदद्वेत्वाज्यस्य होतर्यज ॥ ४ ॥ होता
यक्षदोजोवीर्यꣳ सहो द्वार इन्द्रमवर्धयन् ॥ सुप्रायणा विश्रयन्तामृता-
वृधो द्वार इन्द्राय मीढुषे वियन्त्वाज्यस्य होतर्यज ॥ ५ ॥ होता यक्ष-
दुषे इन्द्रस्य धेनू सुदुघे मातरौ मही । सवातरौ न तेजसा वत्समिन्द्र-
मवर्धतां वीतामाज्यस्य होतर्यज ॥ ६ ॥ होता यक्षद्दैव्याहोतारा भि-
षजा सखाया हविषेन्द्रं भिषज्यतः । कवी देवौ प्रचेतसाविन्द्राय धत्त
इन्द्रियं वीतामाज्यस्य होतर्यज ॥ ७ ॥ होता यक्षत्तिस्रो देवीस्त्रय-
स्त्रिधातवोपसम् । इडा सरस्वती भारती महो इन्द्रपत्नीर्हविष्मतीर्वि-
यन्त्वाज्यस्य होतर्यज ॥ ८ ॥ होता यक्षत्त्वष्टारमिन्द्रं भिषजं सुयजं
घृतश्रियम् । पुरुरूपꣳ सुरेतसं मघोनिमिन्द्राय त्वष्टा दधदिन्द्रियाणि
वेत्वाज्यस्य होतर्यज ॥ ९ ॥ होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं
धियोजोष्टारमिन्द्रियम् । मध्वा समञ्जन्पथिभिः सुगेभिः स्वदाति
हव्यं मधुना घृतेन वेत्वाज्यस्य होतर्यज ॥ १० ॥ ततोऽग्निर्होता नो
अध्वर इत्यादि पर्यग्नये क्रियमाणान्वाह निरूढवत् । तदनन्तरं होता
यक्षदिन्द्रस्य स्वाहा ऽज्यस्य स्वाहा मेदसः स्वाहास्तोकानाꣳ स्वाहा
स्वाहा कृतीनाँ स्वाहा हव्यसूक्तीनाँ स्वाहा देवाँ आज्यपान् स्वा-
हेन्द्रँ होत्राज्जुषाणा इन्द्र आजस्य वियन्तु होतर्यज ॥ ११ ॥ एते
एकादश आपस्तम्बसूत्रपठिताः प्रैषाः पौत्रमणीप्रयाजप्रैषा इत्युच्यन्ते ॥

२१६ ततो निरूढवदाज्यभागप्रचारः । ततो वपायागे । आचर्ष-
णिप्रा वृषभो जनानाँ राजा कृष्टीनां पुरुहूत इन्द्रः । स्तुतः श्रवस्य-
न्नवसो पमद्रियुक्ता हरी वृषणायाह्यर्वाङ्म् । इत्यनुवाक्यामध्वर्युप्रे-
षितो मैत्रावरुणः पठति । होता यक्षदिन्द्रं छागस्य वपाया मेदसो
जुषतां हविर्होतर्यज । अध्वर्युप्रेषितो मैत्रावरुणो ऽनेन प्रैषेण होतारं
प्रेष्यति । ये३ य०सुर्वाविन्नपयज्ञाधिषणा जज्ञानस्तवै पुरायायादिन्द्र-
मह्नः । अꣳहसो यत्र पीपरद्यथा नो नावेवयान्तमुभये हवन्ता३द्वौ३ ।
० । वा३व० ॥ इत्यनया याज्यया होता यजति । होतृमैत्रावरुणयोर्नि-

रूढवच्चात्वाले वपामार्जनं भवति । पुरोडाशयागे । तँ सध्रीचीरूत यो वृष्णीयानि पौँस्यानि नियुतः सश्चुरिन्द्रम् । समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसङ्गिर आविशन्तो३म् । इत्यनुवाक्या मैत्रावरुणस्य । होता यक्षदिन्द्रं पुरोडाशस्य जुषतां हविर्होतर्यज । इत्यनेन प्रैषेण होतारं प्रेष्यति । ये३ यजामहे भूर्भुवः सुवः सत्यमित्तत्त्वावाँ अन्यो अस्तीन्द्रदेवो न मर्त्यो ज्यायान् । अहन्नहि परिशयानमर्णो वासृजो अपो अच्छा समुद्रं इवौ३० । वा३वष० । होता ऽनया याज्यया यजति । अथ स्विष्टकृतः त्वामीडते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः । यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्तो३म् । इत्यनुवाक्या । होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज । अनेन प्रैषेण होतारं प्रेष्यति । ये३ य० सुवरग्निं तुवीतिं सुवृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः । त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभावौ३० । वा३वष० । अङ्गयागे । मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्यध्वर्युप्रेषितो मैत्रावरुणो ऽभिहिङ्कृत्य त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह । ततः प्रससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु इन्द्राभरदक्षिणेनावसूनि पतिः सिन्धूनामसि रेवतीनो३म् । इति पुरोनुवाक्यां मैत्रावरुणो वदति । होता यक्षदिन्द्रं छागस्य हविष आदद्य० एभः । घस्तान्नून० कारदेवन्देवो जुषतां हविर्होतर्यज । इत्यनेन होतारं प्रेष्यति । ये३ य० सुवः सशेवृधमधिधाद्युम्नमस्मै महिक्षत्रं जनाषाडिन्द्रतव्यम् । रक्षा च नो मघोनः पाहि सूरीन्राये च नः स्वपत्या इषे धा३ वौ३० । वा३वष० । होता ऽनया याज्यया यजति । ततो देवेभ्यो वनस्पते हवींषीत्यादिवनस्पतियागो निरूढवत् । देवं बर्हिरिन्द्रँ सुदेवं देवैर्वीरवत्स्तीर्णं बर्हिर्वेद्यामवर्धयद्वस्तोर्वृतं प्राक्तोर्भृतं रायाबर्हिष्मतोत्यगाद्वसुवने वसुधेयस्य वेतु यज ॥ १ ॥ देवीर्द्वार इन्द्रं संघाते वीड्वीर्यामन्नवर्धयन्नावत्सेन तरुणेन कुमारेण च मीवितारेवार्वाणँ रेणुककाटं नुदन्तां वसुवने वसुवने वसुधेयस्य वियन्तु यज ॥ २ ॥ देवी उषासा नक्तेन्द्रं यज्ञे प्रयत्यह्वेतान्दैवीर्विशः प्रायासिष्टाँ सुप्रीते सुधीते अभूतां वसुवने वसुधेयस्य वीतां यज ॥ ३ ॥ देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धय

तीमयाव्यन्वाघादुदेवी स्याम्यावामीद्वसुवार्योणि यजमानाय शि-
क्षिते वसुवने वसुधेयस्य वीतां यज ॥ ४ ॥ देवी ऊर्जाहुती
दुघे सुदुघे पयसेन्द्रमवर्द्धतामिषमूर्जमन्याबाक्षत्सग्धिᳬ सपीतिमन्यानवेन
पूर्वं दयमाने पुराणेन नवमधातामूर्जमूर्जाहुतीवसु वार्याणि यजमानाय
शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ ५ ॥ देवा दैव्या होतारा
देवमिन्द्रमवर्धताᳬ हताघशᳬसावाभार्ष्टां वसुवार्याणि यजमानाय
शिक्षितौ वसु० यस्य वीतां यज ॥ ६ ॥ देवी स्तिस्रिस्तिस्रो देवीः
पतिमिन्द्रमवर्धयवस्पृतद्भारती दिवᳬरुद्रैर्यज्ञᳬसरस्वतीडावसुमति गृहा-
न्वसुवने वसुधेयस्य वियन्तु यज ॥ ७ ॥ देव इन्द्रो नराशᳬसस्त्रिवरूथ-
स्त्रिबन्धुरो देवमिन्द्रमवर्धयच्छतेन शितिपृष्ठानामाहितः सहस्रेण प्रव-
र्तते मित्रावरुणे दस्युहोत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने
वसुधेयस्य वीतां यज ॥ ८ ॥ देवइन्द्रो वनस्पतिर्हिरण्यपर्णो मधुशाखः
सुपिप्पलो देवमिन्द्रमवर्धयद्दिवमग्रेणाप्रादान्तरिक्षं पृथिवीमदृᳬहीद्वसु-
वसुधेयस्य वेतु यज ॥ ९ ॥ देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत्स्वा-
सस्थमिन्द्रेणासन्नमन्याबर्हीᳬष्यभ्यभूद्वसुवने वसुधेयस्य वेतु यज ॥ १० ॥
देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत्स्विष्टं कुर्वन्स्विष्टकृत्स्विष्टमद्य
करोतु नो वसुवने वसुधेयस्य वेतु यज ॥ ११ ॥ इति एकादशानुयाज-
प्रैषाः । एषामेकैकेन मैत्रावरुणो होतारं प्रेष्यति । होता एतैरेव प्रैषैर्य-
जेत्यस्य स्थाने वषट्कारं कृत्वा यजति । एवं सति प्रैषाएव याज्या
अग्निमद्येत्यादिप्रैषे यथादैवतमूहो भवति । अन्यत्सर्वं निरूढवत् ।
एतावत्कर्म सौत्रामणीपूर्वाङ्गैन्द्रपशुरित्युच्यते ॥

२१७ अथादित्येष्टिः । तत्रादितिर्देवता । चरुर्द्रव्यम् । सामिधे-
निप्रभृति सर्वं प्रकृतिवत् । अदितिर्न उरुष्यत्विति प्रधानस्यानुवाक्या ।
महीमूषु मातरं सुव्रतानामिति याज्या । इति विशेषः । इतीयं सौत्रा-
मणीपूर्वाङ्गादित्येष्टिरिति गीयते ॥

२१८ अथ त्रिपशोः । पश्विष्ट्यग्निप्रणयनमन्थनानि पूर्ववत् ।
आवाहनकाले । आज्यभागावाहनानन्तरम् । अश्विनावा३वह । सर-
स्वतीमा३वह । इन्द्रमा३वह । वनस्पतिमा३वहेत्यादि पूर्ववत् एतत्सौ-
त्रामणीदेवतावाहनमित्युच्यते ॥

२१९ यजशब्दान्तैः प्रैषैर्मैत्रावरुणो होतारं प्रेष्यति । वषट्कारान्ताभिर्याज्याभिर्होता यजति होता यक्षत्समिधाग्निमिडस्पदेऽश्विनेन्द्रं सरस्वतीमजो धूम्रो नगो धूमैः कुलैर्भेषजं मधु शष्पैर्न तेजइन्द्रियं पयः सोमः परिस्रुता घृतं मधु वियन्त्वाज्यस्य होतर्यज ॥ १ ॥ ये३य० सुवः समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः । दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रिया३वौ३० ॥ १ ॥ वाग्वष० । होता यक्षत्तनूनपात्सरस्वत्यविर्मेषो न भेषजं पन्था मधुमता भरन्नश्विनेन्द्राय वीर्यम् । बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता०वियन्त्वाज्यस्य होतर्यज ॥ २ ॥ ये०स्वयस्तनूनपाता भिषजा सुतेश्विनोभा सरस्वती मध्वारजाꣳसीन्द्रियमिन्द्राय पथिभिर्वहा३न्वौ३० ॥ २ ॥ एते प्रैषायाज्ये वसिष्ठादिभिन्नानाम् । होता यक्षन्नराशꣳसं नग्नहुं पतिं सुरायै भेषजं मेषः सरस्वतीभिषग्रथोन चन्द्रमश्विनोर्वपा इन्द्रस्य वीर्यम् । बदरैरुप०वियन्त्वाज्यस्य होतर्यज ॥ २ ॥ ये० सुवरिन्द्रायेन्दुꣳसरस्वती नराशꣳसेन नग्नहुः । अधातामश्विनामधु भेषजं भिषजासुता ३वौ३० ॥ २ ॥ वाग्वष० । एते प्रैषयाज्ये वसिष्ठादीनाम् । होता यक्षदिडेडित आजुह्वाना सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्राय वीर्यम् । यवैः कर्कन्धुभिर्मधुलाजैर्नमासरं पयः सोमः:० वियन्त्वाज्यस्य होतर्यज ॥ ३ ॥ ये०तुवराजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् । इडाभिरश्विना विषꣳ समूर्जꣳ सꣳ रयिं दधू३वौ३० । वाग्वष० । होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा भिषङ्नासत्या भिषजाश्विनाश्वा शिशुमती भिषग्धेनुः सरस्वती भिषक् । दुहइन्द्राय भेषजं पयसोमः:० वेत्वाज्यस्य होतर्यज ॥ ४ ॥ ये० सुवरश्विना नमुचेः सुतꣳ सोमꣳ शुक्रं परिस्रुता । सरस्वती तमाभरद्बर्हिषेन्द्राय पातवा३वौ३० ॥ वाग्वष० ॥ ४ ॥ होतायक्षद्दुरो दिशः कवष्यो नव्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे कामान्सरस्वत्यश्विनेन्द्राय भेषजम् । शुक्रं न ज्योतिरिन्द्रियं पयः सोमः:० वियन्त्वाज्यस्य होतर्यज ॥ ५ ॥ ये० सुवः कवष्यो नव्यचस्वतीरश्विभ्यां न दुरो दिशः । इन्द्रो न रोदसी दुघे दुहे कामान्सरस्वती३वौ३० ॥ ५ ॥ वाग्वष० । होता यक्षत्सुपेशसोषे नक्तं दिवाश्विना सञ्जाते समञ्जाते सरस्वत्या त्विषिमिन्द्रे न भेषजम् ।

श्येनो न रजसा हृदा पयः सोमः०वीतामा०र्यज ॥ ६ ॥ ये०सुवरुणासा-नक्तमश्विना दिवेन्द्र९सायमिन्द्रियैः । सञ्जानाने सुपेशसा समञ्जाते सरस्वत्या३वी३० ॥ ६ ॥ वा०वष० ॥ होता यक्षद्दैव्या होतारा भिष-जाश्विनेन्द्रं न जागृवी दिवानक्तं न भेषजैः । शूष९सरस्वती भिषक् सीसेन दुह इन्द्रियं पयः सोमः०वीतामा०र्यज ॥ ७ ॥ ये०सुवः पातं नो अश्विना दिवा पाहि नक्तं सरस्वति । दैव्या होतारा भिषजा पात-मिन्द्र९सचासुता३वी३० ॥ ७ ॥ वा०वष० । होता यक्षत्तिस्रो देवीर्नभेषजं त्रयस्त्रिधातवोपसो रूपमिन्द्रे हिरण्ययमश्विनेडा न भारती वाचा सर-स्वती महइन्द्रायदधुरिन्द्रियं पयः सोमः० वियन्त्वा०र्यज ॥ ८ ॥ ये०सुवस्तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा । तीव्रं परिस्रुता सोम-मिन्द्राय सुषवुर्मदा३ वी३० ॥ ८ ॥ होता यक्षत्त्वष्टारमिन्द्रमश्विना भिषजं न सरस्वत्योजो न जूतिरिन्द्रियं वृको न रभसो भिषक् । यशः सुरया भेषज९श्रियानमासरं पयः सोम० वेत्वाज्य० यज ॥ ९ ॥ सुवर-श्विना भेषजं मधु भेषजं नः सरस्वती । इन्द्रे त्वष्टा यशः श्रिय९रूप९रूप-मधुस्सुताद३ वी३० ॥ ९ ॥ वा०वष० । होता यक्षद्वनस्पति९ शमितार९ शतक्रतुं भीमं न मन्यु९ राजानं व्याघ्रं नमसाश्विनाभामम् । सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोम० वेत्वाज्य० यज ॥ १० ॥ ये० सुवर्क्रतुर्येन्द्रो वनस्पतिः शशमानः परिस्रुता कीलालमश्विभ्यां मधुदुहे धेनुः सरस्वती ३वी३० ॥ १० ॥ वा०वष० । एते त्रिपशोरनुयाजानां प्रैषा याज्यासहिता उक्ताः एते मन्त्रा वक्ष्यमाणावेकादशौ याज्यास्त्वि प्रयाजयाज्याप्रैषौ च प्रैषाइत्युच्यन्ते ।

२२० ततो मैत्रावरुणो ऽग्निर्होता नो अध्वर इत्यादिपर्यग्नये क्रियमाणायान्वाह । ततो होता दैव्याः शमितार उत मनुष्या इत्यादि वाक्यरूपमध्रिगुसंज्ञकं यथार्थमाश्वलायनसूत्रोक्तप्रकारेणोहेन पठति । होता अध्रिगुं पठित्वा अध्रिगुश्चापापश्चोभौ देवानां९ शमितारौ ताविमं पशु९ श्रपयतां प्रविद्वा९सौ यथायथास्य श्रपणं तथा तथा । इति त्रिर्जपति । ये० सुवर्णोभिर्नसोममश्विना मामरेण परिष्कृता । समधाता९ सरस्वत्या स्वाहेन्द्रे सुतं मधू३ वी३० ॥ ११ ॥ वा०वष० । होता वक्ष्यमाणप्रैषेण प्रेषितो ऽनया याज्यया यजति । स प्रैषो यथा ।

होता यक्षदग्निᳪ स्वाहा ऽऽज्यस्य स्तोकानाᳪ स्वाहा मेदसां पृथक् स्वाहा छागमश्विभ्याᳪ स्वाहा मेषᳪ सरस्वत्यै स्वाहर्षभमिन्द्राय सिᳪहाय सहसेन्द्रियᳪ स्वाहा ऽग्निं न भेषजᳪस्वाहा सोममिन्द्रं स्वाहेन्द्रᳪ सुत्रामाणᳪ सवितारं वरुणं भिषजां पतिं प्रियम्पाथो न भेषजम् । स्वाहा देवाᳪ आज्यपान् स्वाहा ग्निᳪ होत्राज्जुषाणो अग्निर्भेषजं पयः सोमः०वियन्त्वाज्यस्य होतर्यज ॥ ११ ॥ आज्यभागानन्तरं वपायागो भवति । अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती । आशुक्रमासुराद्वसुमघमिन्द्राय जभ्रिरे३म् । इति सौत्रामण्याश्विनानुवाक्येति गीयते ।

२२१ होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषतां हविर्होतर्यजेति प्रैषेण होतारं मैत्रावरुणः प्रेष्यति येᳪसुत्रर्यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । स बिभेद बलं मघं नमुचा वासुरे सचा३ वौ३० ॥ वा॒व॰ । अयं पुरोनुवाक्याप्रभृतिः सौत्रामण्याश्विनयाग इत्युच्यते ।

२२२ यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । स बिभेद बलं मघं नमुचा वासुरेसचों३ इति पुरोनुवाक्या । होता यक्षत्सरस्वतीं मेषस्य वपाया मेदसो जुषताᳪ हविर्होतर्यज । इति प्रैषः । ये०सुत्रर्यमश्विना० यन् । स बिभेद बलं मघम्०सचा३ वौ३० । वा॒व॰ । अयं सौत्रामणीसारस्वतयाग इति गीयते ।

२२३ तमिन्द्रं पशवः सचाश्विनोभा सरस्वती । दधाना अभ्यनूषत हविषा यज्ञमिन्द्रियोम्३ । इत्यनुवाक्या । होता यक्षदिन्द्रं वृष्णोर्मेषस्य वपाया मेदसो जुषताᳪहविर्होतर्यज । इति प्रैषः ये०सुत्रर्श्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती । आशुक्रमासुराद्वसुमघमिन्द्राय जभ्रिरा३ इवौ३० । वा॒व॰ । इति याज्या । अयं सौत्रामणीप्रधानैन्द्रवपायाग इत्युच्यते ।

वपायागानन्तरं चात्वाले मार्जयित्वा ग्रहैः प्रचरन्ति । युवᳪ सुराममश्विना नमुचा वासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम्३ । इयमृक् आश्विनग्रहानुवाक्येति गीयते ।

२२४ होता यक्षदश्विना सरस्वतीमिन्द्रᳪ सुत्रामाणमिमे सोमाः

सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदामासरेण परिष्कृताः । शुक्राः पयस्वन्तोमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु पिबन्तु मदन्तु वियन्तु सोमꣳ होतर्यज । अयमाश्विनग्रहप्रैष इत्युच्यते ।

२२६ ये० पुत्रः पुत्रमिव पितरावश्विनोभेन्द्रावतं कर्मणादꣳसनाभिः । यत्सुरामं व्यपिबच्छचीभिः सरस्वती त्वामघवन्नभीष्णा३द्वौ३० । वा३वसुरासुतस्याय वीही३ वौ३० । इत्यनुवषट्कारः । एतद्याज्यान्तं कर्म आश्विनसौत्रामणीयग्रहप्रचार इत्युच्यते ।

२२७ होता अग्निष्वात्ताः पितर एह गच्छतेति तिसृभिर्ऋग्भिः प्रत्यङ्मुखः स्रवन्तीं स्थालीमुपतिष्ठते । एतत् स्थाल्युपस्थानमित्युच्यते ।

२२८ अथाङ्गयागः । तत्र त्वं ह्यग्ने प्रथमो मनोतेति सूक्तं सामिधेनीवन्मैत्रावरुणोन्वाह । अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती यजमानमवर्धयोम्३ । इत्यनुवाक्या । होता यक्षदश्विनौ छागस्य हविष आत्ताम०ऋभः । घस्तानून० करत एवाश्विनौ जुषेताꣳ हविर्होतर्यज । इति प्रैषः । ये० सुवस्त्रा नासत्या सुपेशसा हिरण्यवर्तनी नरा । मध्य वसाहोमार्थमवसायोत्तरार्धं पठति । सरस्वती हविष्मतीन्द्रकर्मसुनोवता३ वौ३० । वा३वष० । अयमाश्विनहविःप्रचार इत्युच्यते ।

२२९ ता भिषजासुकर्मणा सा सुदुघा सरस्वती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियोम्३ । इत्यनुवाक्या । होता यक्षन्मेषस्य हविष आद०ऋभः । घस्तानूनम० करदेवेन्द्रःसरस्वती सरस्वती जुषतां हविर्होतर्यज । इति प्रैषः । ये०सुवस्त्राभिषजा सुकर्मणासा सुदुघा सरस्वती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियां ३ वौ३० । वा३वष । अयं सारस्वतहविःप्रचार इत्युच्यते ॥

२३० ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । सवृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियोम्३ । होता यक्षदिन्द्रं वृष्णोर्मेषस्य हविष आद०ऋभः । घस्तानून०करदेवेन्द्रो जुषताꣳ हविर्होतर्यज इति प्रैषः । ये३० सुवरश्विना गोभिरिन्द्रियमश्वेभिर्वी३र्यं बलम् । हविषेन्द्रꣳ सर-

स्वती यजमानमवर्धयात्३ न्वौ३०। वा३व०। इति याज्या। अयमैन्द्र-हविःप्रचार इत्युच्यते ॥

२३१ वनस्पतियागे स्विष्टकृत्कारे देवतानिगमे यथार्थमूहः। पुरोडाशानां प्रैषाभावात् अप्रेषित एव होता यजति। य इन्द्र इन्द्रियं दधुः सविता वरुणो भगः। स सुत्रामा हविष्पतिर्यजमानाय सश्चता-म्३। होतैवेमामनुवाक्यां पठति। ये०सुवर्विरिन्द्रं सविता वरुणो दध-द्यजमानाय दाशुषे। आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियां३ वौ३०। वा३व०। इति याज्या। अयं सौत्रामण्यङ्गैन्द्रपुरोडाशयाग उच्यते ॥

२३२ सविता वरुणो दधत्सुत्रामा बलमिन्द्रियाम्३। इत्यनु-वाक्या। ये०सुवः सवितारं वरुणः क्षत्रमिन्द्रियं दधुः स० यद्दधाना यज्ञमाशतात्३ वौ ३०। वा३व०। इति याज्या। अयं सौत्रामण्यङ्ग-सावित्रपुरोडाशयाग उच्यते ॥

२३३ वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम्। सुत्रामा यशसा बलं दधाना यज्ञमाशताम्३। इत्यनुवाक्या ये०सुवर्वरुणो य इन्द्र इन्द्रियं दधु० र्यजमानायसश्चतात्३ वौ ३० वा३व०। इति याज्या। अयं सौत्रामण्यङ्गवारुणपुरोडाशयाग उच्यते ॥

२३४ पशुभिः प्रचर्य पुरोडाशेन प्रचरन्तीति वचनाद्धविः प्रचारा-नन्तरं पुरोडाशप्रचारः। अथानुयाजाः। देवं बर्हिः सरस्वती सुदे-वमिन्द्रे अश्विना तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रियं वसुवने वसुधे-यस्य वियन्तु यज ॥ १ ॥ देवीर्द्वारो अश्विना भिषजेन्द्रे सरस्वती प्राणं न वीर्यं न सिद्वारो दधुरिन्द्रियं वसु०वियन्तु यज ॥ २ ॥ देवी उषासा-वश्विना भिषजेन्द्रे सरस्वती बलं न वाचमास्य उषाभ्यां दधुरिन्द्रियं वसु०वियन्तु यज ॥ ३ ॥ देवी जोष्ट्री अश्विना सुत्रामेन्द्रे सरस्वती श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रियं वसुव०वियन्तु यज ॥ ४ ॥ देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रं सरस्वत्यश्विना भिषजा शतशुक्रं न ज्योतिः स्तनयोराहुती धत्त इन्द्रियं वसु०वीतां यज ॥ ५ ॥ देवा देवानां भिषजा होताराविन्द्रमश्विना वषट्कारैः सरस्वतीत्विषिं न हृदये मतिं होतृभ्यां दधुरिन्द्रियं वसु०वीतां यज ॥ ६ ॥ देवीस्ति-स्रस्तिस्रो देवीः सरस्वत्यश्विना भारतीडा शूषं न मध्ये नाभ्यामिन्द्रा-

वदधुरिन्द्रियं वसुवने०वियन्तु यज ॥ ७ ॥ देव इन्द्रो नराशꣳसस्त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथो रेतो न रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि वसु०वियन्तु यज ॥ ८ ॥ देव इन्द्रो वनस्पतिर्हिरण्यपर्णो अश्विभ्याꣳ सरस्वत्याः सुपिप्पल इन्द्राय पच्यते मध्वोजो न जूतिमृषभो न भामं वनस्पतिर्नो दधदिन्द्रियाणि वसु०वियन्तु यज ॥ ९ ॥ देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सरस्वत्या स्योनमिन्द्र ते सदईशायै मन्युꣳराजानं बर्हिषा दधुरिन्द्रियं वसु०वियन्तु यज ॥ १० ॥ देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथा यथꣳ होताराविन्द्रमश्विना वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत्स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा आज्यपा इष्टो अग्निरग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचितिꣳ स्वधां वसु०वियन्तु यज ॥ ११ ॥ एते एकादश त्रिपश्वनुयाजप्रैषा उच्यन्ते ॥

२३५ एतेषामेकैकेन क्रमेण मैत्रावरुणो होतारम्प्रेष्यति । होता तु एतैरेव यजेत्यस्य स्थाने वषट्कारं कृत्वा क्रमेण यजति । अग्निमद्य होतारमवृणीतायꣳ सुता सुतो यजमानः पचन्पक्तीः पचन्पुरोडाशान् गृह्णन् ग्रहान् गृह्णन्नयआज्यं गृह्णन्सोमायाज्यं बध्नन्नश्विभ्यां छागꣳसरस्त्याइन्द्राय बध्नन्त्सरस्वत्यै मेषमिन्द्रायाश्विभ्याꣳ बध्नन्निन्द्रायर्षभमश्विभ्याꣳ सरस्वत्यै सूपस्था अद्य देवो वनस्पतिरभवदानय आज्येन सोमाआज्येनाश्विभ्यां छागेन सरस्वत्यादिन्द्राय सरस्वत्यै मेषेणेन्द्रायाश्विभ्यामिन्द्रायर्षभमश्विभ्याꣳ सरस्वत्या अवꣳस्तामेदस्तः प्रतिपचताग्रभीषुरवीवृधन्त ग्रहैरपातामश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा सोमान्सुराम्ण उपोक्ष्यामदाश्रौद्गीमदा अदनवीवृधन्ताङ्गूषैस्त्वामद्य ऋषभार्षेयर्षीणां नपादवृणीतायꣳ सुतासुतो यजमानो बहुभ्य आसङ्गेभ्यः । एषमेदे०सूक्ताऽ३ ब्रूऽ३हि । अनेन मैत्रावरुणो होतारं प्रेष्यति अयं सौत्रामणीसूक्तवाकप्रैष उच्यते ॥

२३६ अनेन प्रैषेण प्रेषितो होता सूक्तवाकं पठति । तत्र विशेषः । आज्यभागदेवतावाहनानन्तरम् । अश्विनाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । सरस्वतीदं हविरजुषतावीवृधतमहो ज्यायोऽकृत ।

इन्द्र इदं हविरजुषताऽक्रत । वनस्पतिरिदमित्यादि निरूढवत् । अथ सौत्रामण्यङ्गपितृयज्ञः । तत्प्रकारः सर्व आश्वलायनोक्तः लुप्तजपेत्याश्वलायनवचनान्मयि गृह्णामीत्यादिजपानां लोपः नेह प्रादेश इत्यादिना प्रादेशकरणादिनिषेधश्च । दक्षिणामुखस्तिष्ठन् अभिहिङ्कृत्यकशन्तस्त्वानिधीमहीत्यृचं त्रिरनवानमन्वाहता: सामिधेन्योभवन्ति । तृतीयप्रणवेन सह आ३वह देवान्पितॄन्यजमानायेत्यस्यानुषङ्गः । आज्यभागदेवतावाहनानन्तरं सोमं पितृमन्तमा३वह । पितॄन्बर्हिषदआ३वह । पितॄनग्निष्वात्तानाऽ३वह । देवाँ आज्यपाँ आ३वह । अग्निं कव्यवाहनमा३वह । इत्यावाहने विशेषः । सीदहोतरित्यध्वर्युणोक्ते तूष्णीं निरसनोपवेशने करोति । स्रुगादापने विशेषः । ईळामहे देवान्पितॄनीळेन्यानित्यादि । बर्हिर्वर्जं चत्वारः प्रयाजा भवन्ति । उत्तमप्रयाजे विशेषः । ये०स्रुवः स्वाहाऽग्निं स्वाहा सोमं स्वाहा सोमं पितृमन्तं स्वाहा पितॄन्बर्हिषदः स्वाहा पितॄनग्निष्वात्तान् स्वाहाग्निं कव्यवाहनं स्वाहा देवान् पितॄनाज्यपानित्यादि । आनो अग्ने सुकेतुनेत्याग्नेयाज्यभागस्यानुवाक्या । त्वं सोममहेभगमिति सौम्यस्यानुवाक्या । जुषाण इत्यादिरुभयोः पूर्ववद्याज्ये । अनयोरनुवाक्ययोर्जीवपदसत्त्वात् इमावाज्यभागौ जीववन्तावित्युच्यते ।

२३७ त्वं सोम प्रचिकितो मनीषेति त्वया हि नः पितरः सोमपूर्व इति च द्वे ऋचौ एकानुवाक्या भवति अध्यर्धामनवानम् । ये० स्रुवः सोमं पितृमन्तं त्वं सोमपितृभिः संविदानो० रयीणां स्वधानमः । इति सोमस्य पितृमतो याज्यानुवाक्ये । बर्हिषदः पितर ऊत्यर्वागिति आहं पितॄन्त्सुविदत्राँ अवित्सीति च पूर्ववदनुवाक्या । उपहूताः पितरः सोम्यास इति याज्या । इति पितॄणां बर्हिषदाम् । अग्निष्वात्ताः पितर एह गच्छतेति ये अग्निष्वात्ता येऽनग्निष्वात्ता इति च मिलित्वा ऽनुवाक्या । वन्यायै दुग्ध इत्यादिर्याज्या । इति पितॄणामग्निष्वात्तानाम् । याज्याया आदौ ये स्वधामह इति ये यजामह इत्यस्य स्थाने प्रयुज्यते । अवघ्राणभक्षणम् । सुसन्दृशं त्वा वयमित्यादिनोपस्थानादि सर्वं चातुर्मास्यान्तर्गतपितृमेधवद्भवति । इन्द्राय वयोधसे पशुपुरोडाशादि सर्वं निरूढवत् । आज्यभागावाहनानन्तरं इन्द्रं

वयोधसमा३वह । वनस्पतिमित्यादि निरूढवत् । प्रयाजेषु विशेषः । होतायक्षदिडस्पदे समिधानं महद्यशः सुषमिद्धं वरेण्यमग्निमिन्द्रं वयोधसम् । गायत्रीं छन्द इन्द्रियं त्र्यविं गां वयोदधद्वेत्वाज्यस्य होतर्यज ॥ १ ॥ ये० सुवः समिद्धो अग्निः समिधा सुषमिद्धो वरेण्यः । गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयोदधू३वौ३० । वा०व० होतायक्षत्शुचिव्रतं तनूनपातमुद्भिदं यं गर्भमदितिर्दधे शुचिमिन्द्रं वयोधसम् । उष्णिहं छन्द इन्द्रियं दित्यवाहं गां वयोदधद्वे०र्यज ॥ २ ॥ ये०सुवस्तनूनपाच्छुचिव्रतस्तनूनपाच्च सरस्वती । उष्णिहं छन्द इन्द्रियं दित्यवाड्गौर्वयोदधू३वौ३ । वा०व० । द्वितीयप्रयाजप्रैषयाज्ययोर्वसिष्ठादिषु तदितरेषु च प्रवृत्तिः । अन्यस्यानुक्तत्वात् । होतायक्षदीडेऽन्यमीडितं वृत्रहन्तममिडाभिरीड्य१ सहः सोममिन्द्रं वयोधसम् । अनुष्टुभं छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधद्वे०र्यज ॥ ३ ॥ ये०सुवरिडाभिरग्निरीड्यः सोमो देवो अमर्त्यः । अनुष्टुप्छन्द इन्द्रियं त्रिवत्सो गौर्वयोदधू३वौ३० । वा०व० ॥ ३ ॥ होतायक्षत्सुबर्हिषदं पूषण्वन्तममर्त्य१ सीदन्तं बर्हिषि प्रियेऽमृतेन्द्रं वयोधसम् । बृहतीछन्द इन्द्रियं पञ्चाविं गां वयोदधद्वे० यज ॥ ४ ॥ ये० सुवः सुबर्हिरग्निः पूषण्वा१ स्तीर्णं बर्हिरमर्त्यः । बृहतीछन्द इन्द्रियं पञ्चाविर्गौर्वयोदधू३वौ३० । वा०व० ॥ ४ ॥ होतायक्षद्व्यचस्वतीः सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माण इन्द्रं वयोधसम् । पंक्तिश्छन्द इहेन्द्रियं तुर्यवाहं गां वयोदधद्वे०यज ॥ ५ ॥ ये०सुवर्द्वुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः । पंक्तिश्छन्द इहेन्द्रियं तुर्यवाड्गौर्वयोदधू३वौ३० । वा०व० ॥ ५ ॥ वायक्षत्० वाहं गां वदध०र्यज ॥ ६ ॥ ये०सुवरूषेयह्वा सुपेशसा विश्वे देवा अमर्त्याः । त्रिष्टुप् छन्द इन्द्रियं पष्ठवाड्गौर्वयोदधू३वौ३० । वा०व० ॥ ६ ॥ होतायक्षत्प्रचेतसा देवानामुत्तमं यशो होतारा दैव्या कवी सयुजेन्द्रं वयोधसम् । विराजं छन्द इहेन्द्रियमनड्वाहं गां वयोदधद्वे०र्यज ॥ ७ ॥ ये० दैव्या होतारा भिषजेन्द्रेण सयुजायुजा । जगतीछन्द इहेन्द्रियमनड्वान् गौर्वयोदधू३वौ३० ॥ ७ ॥ वा०व० ॥ होतायक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः पतिमिन्द्रं वयोधसम् । विराजं छन्द इन्द्रियं धेनुं गां वयो दधद्वेत्वाज्यस्यहोतर्यज ॥ ८ ॥ ये३०सुवस्तिस्र इडा सर-

स्वती भारती मरुतो विशः । विराट् छन्द इहेन्द्रियं धेनुर्गौ र्वयोदधू-
र्वो३० ॥ ८ ॥ वा०व०होतायत्तत्सुरेतसं त्वष्टारं पुष्टिवर्धनं रूपाणि
बिभ्रतं पृथक् पुष्टिमिन्द्रं वयोधसम् । द्विपदं छन्द इन्द्रियमुक्षाणं गां
वयो दधद्वे० ॥ ९ ॥ ये३०सुवस्त्वष्टा तुरीयो अद्भुत इन्द्राग्नी पुष्टिव-
र्धना । द्विपाच्छन्द इहेन्द्रियमुक्षा गौ र्न वयोदधू३र्वैा३० ॥ ९ ॥ वा०व-
ष० ॥ होतायक्षत्क्रतुं९ हिरण्यपर्णमुक्थिनं९ रशनां बिभ्रतं वशिं
भगमिन्द्रं वयोधसम् । ककुभं छन्द इहेन्द्रियं वशां वेहतं गां न वयो-
दधद्वे० ॥ १० ॥ ये०सुवः शमिता नो वनस्पतिः सविता प्रसुवन् भगम् ।
ककुप्छन्द इहेन्द्रियमुक्षागौर्नवयोदधू३र्वैा३० ॥ १० ॥ वा०वष ॥ ततो
मैत्रावरुणस्याग्निर्होता नो अध्वर इत्यादि पर्यग्निकरणानुवचनं निरू-
ढवत् । होतुर्दैव्याः शमितार आरभध्वमित्यादि ऐन्द्रपशुवत् । ततो
मैत्रावरुण एकादश प्रयाजप्रैषं पठति । स यथा । होतायक्षत्स्वाहा-
कृतीरग्निं गृहपतिं पृथग्वरुणं भेषजं कविं क्षत्रमिन्द्रं वयोधसम् ।
अतिच्छन्दसं छन्द इहेन्द्रियं बृहदृषभं गां वयो दधद्वे० ॥ ११ ॥
ये३य०सुवः स्वाहा यज्ञं वरुणः सुक्षत्रो भेषजं करत् । अतिच्छन्दा-
श्छन्द इन्द्रियं बृहदृषभो गौ र्वयोदधू३र्वैा३० ॥ ११ ॥ वा०वष० ॥
आज्यभागप्रचारो निरूढवत् । अथ वपायागः । वसन्तेनर्तुना देवा
वसवस्त्रिवृतास्तुतम् । रथन्तरेण तेजसा हविरिन्द्रे वयोदधोम्३ ।
इयमनुवाक्या । होतायक्षदिन्द्रं वयोधसं छागस्य वपाया मेदसो
जुषतां९ हविर्होतर्यज ॥ अयं प्रैषः । ये३य०सुवर्ग्रीष्मेण देवा ऋतुना
रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बलं९ हविरिन्द्रे वयोदधू३-
र्वैा३० ॥ वा०वष० ॥ इयं याज्या । वपामार्जनं पूर्ववत् । अथ पुरोडा-
शयागः । वर्षाभिर्ऋतुनादित्यास्तोमे सप्तदशे स्तुतम् । वैरूपेण विशौ-
जसा हविरिन्द्रे वयोदधोम्३ । इयमनुवाक्या । होतायक्षदिन्द्रं वयो-
धसं पुरोडाशस्य जुषतां९ हविर्होत र्यज ॥ अयं प्रैषः । शारदेनर्तुना
देवा एकवि९ शऋभवस्तुतम् । वैराजेन श्रियाश्रियं९ हविरिन्द्रे वयो-
दधू३र्वैा३० । ये३ सुक्षरिनं९ सुदीतिं९ सुदृशं गृणन्तो नमस्यामस्त्वेड्यं
जातवेदः । त्वां दूतमरतिं९ हव्यवाहं देवा अकृण्वन्नमृतस्य नाभी३
र्वैा३ । इयं पुरोडाशस्विष्टकृतो याज्या । वा०वष० ॥ अथाङ्गयागः ।

हेमन्तेनर्तुनादेवा मरुतस्त्रिणवेस्तुतम् । बलेन शक्वरीः सहो हविरिन्द्रे वयोदधोम्३ । इयमनुवाक्या । होतायक्षदिन्द्रं वयोधसं छागस्य हविष आददद्यमध्यतो मेदउद्भृतम्० घस्ताम्० करदेवेन्द्रो वयोधा जुषतां यज । अयं प्रैषः । ये३० सुवःशैशिरेणर्तुनादेवास्त्रयस्त्रिंशमृतवस्तुतम् । अर्धर्चे वसाहोमार्थमारभेत् रैवतेन त्रिया त्रियं हविरिन्द्रे वयोदधू३ वौ३० ॥ याज्य० । वनस्पतियागादि पूर्ववत् । अथानुयाजाः । देवं बर्हिरिन्द्रं वयोधसं देवमिन्द्रमवर्धयद्गायत्रिया छन्दसेन्द्रियं तेज इन्द्रे वयोदधद्व० वेतु० ॥ १ ॥ देवीर्द्वारो देवमिन्द्रं वयोधसं देवीर्देवमवर्धयन्नुष्णिहा छन्दसेन्द्रियं प्राणमिन्द्रे वयोदधद्व०व्यन्तु० ॥२॥ देवीदेवं वयोधसमुषे इन्द्रमवर्धतामनुष्टुभा छन्दसेन्द्रियं वाचमिन्द्रे वयोदधद्व० वीताम्० ॥ ३ ॥ देवी जोष्ट्री देवमिन्द्रं वयोधसं देवी देवमवर्धतां बृहत्याछन्दसेन्द्रियं श्रोत्रमिन्द्रे वयोदधद्व० वीताम्० ॥ ४ ॥ देवी ऊर्जाहुतीदेवमिन्द्रं वयोधसं देवी देवमवर्धतां पङ्क्त्या छन्दसेन्द्रियं शुक्रमिन्द्रे वयोदधद्व० वीताम्० ॥ ५ ॥ देवा दैव्या होतारा देवमिन्द्रं वयोधसमवर्धतां त्रिष्टुभा छन्दसेन्द्रियं बलमिन्द्रे वयोदधद्व० वीताम्० ॥ ६ ॥ देवीस्तिस्रस्तिस्रो देवीर्देववयोधसंपतिमिन्द्रमवर्धयन् जगत्या छन्दसेन्द्रियं बलमिन्द्रे वयोदधद्व०व्यन्तु० ॥ ७ ॥ देवो नराशंसो देवमिन्द्रं वयोधसन्देवो देवमवर्धयद्विराजा छन्दसेन्द्रियं रेत इन्द्रेवयोदधद्व० वेतु० ॥ ८ ॥ देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धद्विराजा छन्दसेन्द्रियं भगमिन्द्रेवयो दधद्व० वेतु० ॥ ९ ॥ देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवं देवमवर्धत्ककुभा छन्दसेन्द्रियं यश इन्द्रे वयोदधद्व० वेतु० ॥ १० ॥ देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसं देवोदेवमवर्धयदतिच्छन्दसा छन्दसेन्द्रियं क्षत्रमिन्द्रे वयोदधव्द्व०वेतु० ॥ ११ ॥ एते एकादशानुयाजप्रैषाः' एषामेकैकेन मैत्रावरुणो होतारं प्रेष्यति । होता च एतैः प्रैषै र्यजशब्दस्थाने वषट्कारयुतैर्याज्याभूतैः क्रमेण यजति । सूक्तवाके आज्यभागानन्तरं इन्द्रो वयोधा इदं हविरजुषतावीवृधतमहो ज्यायोऽक्रत । इति विशेषः । अन्यत्सर्वं निरूढवत् । अथादित्येष्टिः । तत्रादितिर्देवता । चरुर्द्रव्यम् । अदितिर्न उरुष्यतीत्यनुवाक्या । महीमूषुमातरं सुव्रतानामिति याज्या ।

उपदेशादितराणीति वचनात्सर्वं याजुषवत् । शेषं प्रकृतिवत् ॥ इदं कोकिलसौत्रामणीहोतृमैत्रावरुणकर्मेत्युच्यते ॥

॥ शुभं भूयात् ॥

---

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## अथाग्निष्टोमसम्बन्धिपदार्थनामान्युच्यन्ते ।

---

१ तस्य वसन्ततौ दैवनक्षत्रेषु पौर्णमास्याममावास्यायां तयोः प्रतिपदि वा यथा सुत्या दीक्षा वा भवेत्तथारम्भः क्रियते ॥ इत्ययमग्निष्टोमारम्भकाल इत्युच्यते ॥

२ एका तिस्रो वा दीक्षा । अमावास्यायां सुत्यायां तत्प्रतिपदस्मिन् द्वादश । बहुदीक्षासु त्वन्तिमदिने प्रवर्ग्यसम्भरणम् । एकादीक्षायां तद्दिने वरणात्पुरो वा । अयमग्निष्टोमीयदीक्षानिर्णय इत्युच्यते ॥

३ यस्य पित्रादिभिः सोमयागो न कृतस्तस्य प्रायश्चित्तत्वेन ऐन्द्राग्नः पशुः श्रुतिचोदितः । तस्य पूर्वं पृथगनुष्ठानम् । अथवाऽग्निष्टोमाङ्गाग्नीषोमीयपशुना समानतन्त्रता । एवं यस्य त्रिपुरुषपर्यन्तं वेदाध्ययनं न जातं, मग्न्याधानं च न जातं स दुर्ब्राह्मण इत्युच्यते । तस्य प्रायश्चित्तत्वेनाश्विनः पशुर्विहितः तस्यानुष्ठानमपि पूर्वपशुवद्विकल्पेन बोध्यम् ॥

४ अग्निष्टोमारम्भस्य पूर्वदिने नान्दीश्राद्धं भवति । रात्रावुदकशान्तिः प्रतिसरबन्धश्च । आरम्भदिने प्रातः स्नानादिपञ्चकं यजमानपत्न्योः षोडशर्त्विजाञ्च । पुण्याहवाचने इन्द्रादयः प्रीयन्तामिति विशेषः । यजमानो गार्हपत्यस्य पश्चादुपविश्य पत्न्या सह प्राणानायम्य पुरुष एवेदमित्यृचा विष्णुं स्मृत्वा याः पुरस्तादित्यादि हृदये निविष्टमित्यन्तं जपति । ततो देशकालौ सङ्कीर्त्य विच्छिन्नसोमपीथसन्धानार्थमैन्द्राग्नेन पशुना दौर्ब्राह्मण्यपरिहारार्थमाश्विनेन पशुना च

आग्नीषोमीयेण पशुना समानतन्त्रं यक्ष्यमाणो द्वादशस्तोत्रेण द्वादशशस्त्रेण रथन्तरसाम्ना सप्तदशेन शतगवदक्षिणेन ज्योतिष्टोमेनाग्निष्टोमसंस्थेन चतुष्टोमेन सोमेन स्वर्गकामो यक्ष्ये । एवं त्रिरुपांशु त्रिरुच्चैः सङ्कल्पयति । अयमग्निष्टोमसङ्कल्प इत्युच्यते ।

५ सङ्कल्पानन्तरं तन्म इत्यादि ओं तथेत्यन्तं प्रकृतिवत् । सोमादि वृत्वं इन्द्रादयो देवताः अस्मिन् ज्योतिष्टोमेऽग्निष्टोमे सोमे सोमप्रवाकं त्वामहं वृणे । इति सोमप्रवाकं वृणीते । स भविष्यामीति वदति इदं सोमप्रवाकवरणमुच्यते ॥

६ सोमाख्ये यज्ञे यो यजमानेन वृतः सन् ब्रह्मादीनामाह्वानं करोति स सोमप्रवाक इत्युच्यते ॥

७ ततो यजमानः सोमप्रवाक सोमं मे प्रब्रूह्यृत्विग्भ्यः । इति सोमप्रवाकं प्रत्याह । ततः स केभ्य इति पृच्छति । ततो यजमानः देवदत्तादिभ्य इति ब्रह्मादीनां नामान्याह । ततः सोमप्रवाको ब्रह्मादीनां गृहेषु क्रमेण गत्वा तानाह्वयति । तद्यथा । यज्ञदत्तशर्मणः सोमो भविष्यति तत्र भवता ब्रह्मत्वं कर्तव्यम् । ततो ब्रह्मा को यज्ञः कऋत्विजः का दक्षिणेति सोमप्रवाकं पृच्छति । ततः स ज्योतिष्टोमोऽग्निष्टोमः सोमो यज्ञः । रङ्गनाथशर्मादय ऋत्विजः । शतं गावो दक्षिणेति प्रत्याह । एवं सर्वेषामृत्विजां सोमप्रवाकेन साकं प्रश्नोत्तराणि भवन्ति । तत्र ब्रह्मत्वमित्यस्य स्थाने हौत्रं आध्वर्यवं औद्गात्रं प्रशास्त्रं ब्राह्मणाच्छंसित्वं प्रतिप्रस्थातृत्वं प्रस्तोतृत्वं अच्छावाकीयं नेष्टृत्वं प्रतिहर्तृत्वं आग्नीध्रं उन्नेतृत्वं सुब्रह्मण्यत्वं पोतृत्वं ग्रावस्तुत्वं एते शब्दा बोध्याः । इदमृत्विगाह्वानमित्युच्यते ॥

८ यजमानः सोमप्रवाकेनाहूतान् यज्ञशालायां प्राप्तानृत्विजः क्रमेणाधानवद्वृत्वार्हयति द्वितीयिनस्तृतीयिनः पादिनश्च । होता ब्रह्माऽध्वर्युरुद्गाता च प्रथमा इत्युच्यन्ते ॥

९ मैत्रावरुणो ब्राह्मणाच्छंसी प्रतिप्रस्थाता प्रस्तोता च द्वितीयिन इत्युच्यन्ते ॥

१० अच्छावाक आग्नीध्रो नेष्टा प्रतिहर्ता च तृतीयिन इत्युच्यन्ते ॥

११ यावत्सुत्योनोचता सुब्रह्मण्यश्च पाद्विन इत्युच्यन्ते ॥

१२ ततो वृत्वा चमसाध्वर्यून् परिकर्मिणश्च सोमप्रवाकद्वाराह्वयति । इदं सोमिकर्त्विग्वरणमित्युच्यते ॥

१३ अध्वर्युस्तीर्थेन प्रविश्येडादिशान्तिं जपित्वा पशुबन्धवद्यजमानेन सहायन्तेयोनिर्ऋत्विय इत्यृचाऽग्निं समारोपयति । यजमान उदकुम्भं पुरस्कृत्य पत्न्यन्वारब्धः सोमारणीसहितः सर्वैः सम्भारैश्च सहितः सर्त्विक् आनोभद्रा इत्यादिशान्तिसूक्तानि पठन् यज्ञशालायास्य दक्षिणतः पश्चाद्वाचेदुत्तरेण शालां परीत्य पूर्वाह्णे पूर्वद्वारेण प्रविशति । सा च भृत्यैः कुशलैः पूर्वमेव कारिता भवति । प्राचीनवंशा चतुर्दिक्ष्ववकाशा दक्षिणतो वर्षीयसी चतुर्दिक्ष्वरत्निमात्रमध्यद्वारवती षोडशप्रक्रममध्या सा द्वादशप्रक्रमविस्तीर्णा दीर्घचतुरस्रा । तस्याः शालायाः दक्षिणतो व्रत श्रपणागारं भवति । पश्चात्पत्नीशाला । इदं कर्म शालाप्रवेश इत्युच्यते ॥

१४ इयं शाला प्राग्वंश इत्युच्यते ॥

१५ प्राग्वंशस्य पश्चिमाच्छङ्कोरनुस्यन्त्यां सार्धपदत्रयं सार्धतिलद्वयाधिकाङ्गुलद्वयं च मुक्त्वा शङ्कुं निहन्ति । स च गार्हपत्यमध्यशङ्कुः । सार्धतिलद्वयाधिकसप्तदशाङ्गुलया रज्ज्वा शङ्कौ पाशं प्रतिमुच्य मण्डलं परिलिखति । तद्गार्हपत्यस्यायतनं भवति । एवं सति पश्चाद्गार्हपत्यस्य सार्धपदद्वयमवशिष्टं भवति । पञ्चतिलाधिकचतुस्त्रिंशदङ्गुलं च गार्हपत्यस्यायतनं सम्पद्यते । प्राग्वंशपूर्वशङ्कोः प्रत्यञ्चमनुस्यन्त्यां सार्धपदत्रये शङ्कुं निहन्ति । स आहवनीयमध्यः । द्विपदमाहवनीयायतनं सम्पद्यते । आहवनीयस्याग्रे सार्धपदमवशिष्टं भवति । गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वेत्यादिप्रकारेण दक्षिणाग्निमध्यदेशं कल्पयित्वा शङ्कुं निहत्य पादोनतिलाधिकचतुर्विंशत्यङ्गुलया रज्ज्वा मण्डलं परिलिख्य मध्यशङ्कोरञ्जसा उदगर्धतिलद्वयाधिकद्वादशाङ्गुले षडङ्गुले वा शङ्कुं निहत्य तत्र पाशं प्रतिमुच्य तयैव रज्ज्वा मण्डलं परिलिख्य तयोः संसर्गौ नियम्योत्तरं धनुरुत्सृजेत्, दक्षिणं दक्षिणाग्नेरायतनं भवति । आहवनीयस्य पश्चात्प्राकृतवेदिः ।

तत्पश्चादवशिष्टो विशयः । इत्यन्तादन्तपक्षेण द्वादशिको विहारः । शेषं प्रकृतिवत् । अयं द्वादशिको विहार इत्युच्यते ॥

१६ ऋत्विजस्तीर्थेन प्रविश्येडादिशान्तिं जपन्ति अध्वर्युः पशुबन्धवत्प्रणीताऽऽयतनान्युद्धृत्यावोक्ष्याग्नीन् विहृत्य परिस्तीर्य परिषिच्य गार्हपत्ये स्मार्त्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा मनस्वत्याऽऽहवनीये जुहोति । पुनर्विहृत्याध्वर्युब्रह्माग्नीध्रयजमाना यथायतनं पूर्वां शान्तिं पठन्ति । नमो वाचे नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रपतयः पराकुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन् पराददां वैश्वदेवीं वाचमुद्यासं शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवीशर्म विश्वमिदं जगत् ॥ शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती ॥ भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ओं शान्तिः शान्तिः शान्तिः ॥ नमो वाचे इत्यत आरभ्यैतावान्मन्त्रः पूर्वशान्तिरित्युच्यते ॥

१७ अथाध्वर्युः प्राग्वंशशालाया अग्रभागे धनुर्माने गर्ते खात्वा शोधितया मृदाऽभिपूर्य तदुपरितस्तृणेषूदकसंस्थं वराहविहतं वल्मीकवपां शुष्कां दूर्वां कंसे कागापय इत्यासाद्य तेषामुत्तरतः प्रागग्रेषु दर्भेषु प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य उत्तरस्य शालाखण्डस्याग्रे स्फ्येनोद्धृत्यावोक्ष्य सैकतं परिमण्डलं खरं कृत्वा तं कुशैर्दूर्वाभिः प्रच्छाद्य परिश्रित्योत्तरतो द्वारं कृत्वा खरसमीपे घर्मकपालपिष्टानि शर्करापिष्टानि अजकृष्णाजिनलोमानि फलकं वेणुशलाकां च सादयति । कुशलं कर्तारं सन्निधाप्य गार्हपत्ये प्रवर्ग्यमृत्तीरधिश्रित्य वेद्यामुभयतस्त्वष्टामरत्निमात्रीं वैणवीमधिं प्राचीं निधाय द्वाराणि परिश्रित्य पत्नीशालायां पत्नीमुपवेश्याग्नीन्परिस्तीर्य दक्षिणेनाहवनीयं ब्रह्मयजमानावुपवेश्य यजमानेऽन्वारब्धे युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो

विपश्चितः । विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परि-ष्टुतिः स्वाहा । इति मन्त्रेणाहवनीये जुहोति । यजमानः देवाय सवित्र इदं न ममेति त्यागं पठति । दीक्षिते तु यजमाने स्वाहाकार-रहितं पूर्वोक्तं मन्त्रं जपत्यध्वर्युः । वाराहेणोत्खाता मृत्तिका वराहवि-हतमुच्यते ॥

१८ वल्मीकमृत्तिका वल्मीकवपेत्युच्यते ॥

१९ ततोऽध्वर्युः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति पूर्वं वेद्यां स्थापितां वैणवीमभ्रिमादत्ते । अभ्रि-रसि नारिरस्यध्वरकृद्देवेभ्यः । इति अभ्रिं सव्येन धृत्वा दक्षिणहस्तेना-भिमन्त्रयते । उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानव इन्द्रप्राशूर्भवासचा । इत्युत्तिष्ठते । प्रैतु ब्रह्मणस्पतिः प्रदेव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः । इति तीर्थेन निष्क्रामति । तूष्णीं दक्षिणतो ब्रह्मयजमानावुपवेशयति । देवी द्यावापृथिवी अनु मे मꣳसाथाम् । इति मृदमुपतिष्ठते । ऋध्यासमद्य मखस्य शिरः । इति मृदमभ्र्या प्रहरति । अप उपस्पृश्य मखाय त्वा । इति मृदं हरति । मखस्य त्वा शीर्ष्णे । मृदमुत्तरतः कृष्णाजिने निवपति । एव-मभ्रिप्रहरणादि निवपनान्तं समन्त्रकं त्रिः कृत्वा तूष्णीं चतुर्थं करोति । स्वल्पां मृदं परिशेषयति । ततः इयत्यग्र आसीः । वराहविहतमुपति-ष्ठते । अभ्रिप्रहरणादि समन्त्रकं त्रिः कृत्वा चतुर्थं तूष्णीं कृत्वा वराह-विहतमपि परिशेषयति । देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः । इति वल्मीकवपामुपतिष्ठते । अभ्रिप्रहरणादि वराहविहतवत् । इन्द्र-स्यौजोसि । इतिदूर्वामुपतिष्ठते । अभ्रिप्रहरणादि पूर्ववत् । अग्निजा असि प्रजापतेरेतः । इति छागपय उपतिष्ठते । अभ्रिप्रहरणादि पूर्ववत् छागपयो न परिशेषयति । मृद्वर्जं शेषानत्रैव कृष्णाजिने प्रकिरति । अध्वर्युब्रह्मयजमाना अन्यतोमुखा अनभिनिष्क्रामन्तः प्रैतु ब्रह्मणस्पतिः प्र-देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञमानयन्तु नः । इति तत्कृष्णाजिनमानयन्ति । आयुर्धेहि प्राणं धेह्यपानं धेहि व्यानं धेहि चक्षुर्धेहि श्रोत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां

धेहि मां धेहि मयि धेहि । इति तत्कृष्णाजिनं खरे सादयन्ति । अध्वर्युः अमेकपालशर्करापिष्टैरजकृष्णाजिनलोमभिश्च कृष्णाजिनस्थां मृदं संसृज्य । मधु त्वा मधुना करोतु । इति मदन्तीभिरद्भिः सम्मिश्रयति मखस्य शिरोसि । इति मृदः पिण्डं करोति । स्वल्पां मृदं परिशेषयति । यज्ञस्य पदेस्थः इति अङ्गुष्ठाभ्यां पिण्डं त्रेधा विभज्य त्रीन् पिण्डान् कृत्वैकैकस्य त्रींस्त्रीन् पिण्डान् करोति । गायत्रोसि । इति तेषां एकं पिण्डं कर्त्रे प्रयच्छति । कर्ता गायत्रेण त्वा छन्दसा करोमि । इति तेन पिण्डेन महावीरस्य मूलं करोति । अध्वर्युः । त्रैष्टुभेसि । इति द्वितीयं पिण्डं प्रयच्छति । कर्ता । त्रैष्टुभेन त्वा छन्दसा करोमि । इति तेन मध्यं करोति । अध्वर्युः जागतोसि । इति तृतीयं प्रयच्छति कर्ता जागतेन त्वा छन्दसा करोमि । इति तेन बिलं करोति । प्रादेशोच्छ्रायं पृथुबुध्नं पृथुग्रीवं मध्ये सन्नतं महावीरं कृत्वा वेणुशलाकयोदरं कृत्वा बिलस्याधस्त्र्यङ्गुले रास्नां परिमण्डलं पर्यस्यति मखस्य रास्नासीति मन्त्रेण । अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसा । इति बिलं प्रकाशयति । सूर्यस्य हरसाश्राय । इति महावीरमादित्येनाभितपति । तूष्णीं खरे निदधाति । अध्वर्युर्निहितमनुमन्त्रयते मखोसीति मन्त्रेण । एवमेकस्य प्रथमस्य पिण्डस्य त्रिभिः पिण्डैः कृतो मन्त्रविशेषो महावीर इत्युते ॥

२० एवं पिण्डद्वयस्य त्रींस्त्रीन्पिण्डान् कृत्वा तैर्महावीरद्वयं समन्त्रकं करोति । अतिशिष्टया मृदा सशेषया तूष्णीं पिन्वने रौहिणकपाले आज्यस्थालीं च करोति अवशेषितया मृदापि सशेषया प्रवाते प्रतिक्षिप्योपवातयति । रौहिणपुरोडाशभर्जनार्थे कपाले रौहिणकपाले इत्युच्येते ॥

२१ महावीरादिषूपवातेषु शुष्केषु सत्सु अध्वर्युर्गार्हपत्यादग्निमाहृत्य पुंसोऽश्वस्यैकविंशतिशकृत्पिण्डान् आदीपयति वृष्णो अश्वस्य निष्पदसि वरुणस्त्वा धृतव्रत आधूपयतु मित्रावरुणयोर्ध्रुवेण धर्मणेति मन्त्रेण । अस्य मन्त्रस्यावृत्त्या त्रीनपि महावीरान् क्रमेणान्तर्बहिश्च धूपयति । तूष्णीं पिन्वनादीनि धूपयति शालाया उत्तरतो गर्तं खात्वा खननेनावस्तीर्णोदग्बिलान्महावीरानायातयति । तेषां पुरस्तात् पिन्वने

पश्चाद्रौहिणकपाले आज्यस्थालीं च । इन्धनेनोपरिष्टात् प्रच्छाद्य मृदाऽवलिम्पति । अर्चिषे त्वा । इति पुरस्तादग्निनोपोषति । शोचिषे त्वा । इति दक्षिणतः । ज्योतिषे त्वा । इति पश्चात् । तपसे त्वा । इत्युत्तरतः । महावीरादिषु पक्वेषु गोपयश्छागापयो धृष्टिमश्मपन्दावं सतं सन्दंशौ खार्यौ शिक्यं कृष्णाजिनं चादाय । अभीमं महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम् । इत्याभ्यामृग्भ्यामपाक्रामति । सिद्ध्यै त्वा । इति धृष्टिमादत्ते । देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या । इति तया धृष्ट्या प्रथमान्महावीरादङ्गारानुद्वपति । उत्तिष्ठ बृहन् भवोर्ध्वस्तिष्ठ ध्रुवस्त्वम् । इति सन्दंशेन महावीरमुच्छ्रयति । अपद्यमाना पृथिव्यामाशा दिश आपृण । इति स्वस्थाने सादयति । सूर्यस्त्वा चक्षुषान्वीक्ष ऋजवे त्वा सुक्षित्यै त्वा भूत्यै त्वा । इति महावीरमीक्षते । इदमहममुमामुष्यायणं ब्रह्मवर्चसेन पर्यूहामि । इति यजमानस्य नामगोत्रे उच्चार्य प्रदक्षिणं पुरीषेण पर्यूहति । सन्दंशेन महावीरं सते निधाय । गायत्रेण त्वा छन्दसा कृणद्मि त्रैष्टुभेन त्वा छन्दसा कृणद्मि जागतेन त्वा छन्दसा कृणद्मि कृणत्तु त्वा वाक् कृणत्तु त्वोर्क् कृणत्तु त्वा हविश्छृन्धि वाचं छृन्ध्यूर्जं छृन्धि हविर्देवपुरश्चरसध्यासं त्वा । इति महावीरमन्तर्बहिश्छागापयसा कृणत्ति । गोपयसा तूष्णीमभिषिञ्चति । एवं द्वितीयतृतीययोर्महावीरयोः समन्त्रकमङ्गारोद्वपनादि भवति । तूष्णीं पिन्वनादीनां सर्वं खार्यां निधाय कृष्णाजिनेन प्रच्छाद्योत्तरे शालाखण्डे शिक्ये स्थापयति । यथा पत्नीदर्शनविषयो न भवेत्तथा । पूर्ववदुत्तरां शान्तिं जपन्ति । शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः । अहानि शं भवन्तु नः शं रात्रिः प्रतिधीयताम् । शमुषा नो व्युच्छतु शमादित्य उदेतु नः । शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम सन्दृशि । इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्मह्यवास्तुः स भूयाद्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठः स भूयाद्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । आवात वाहि भेषजं विवात वाहि यद्रपः ।

त्वꣳ हि विश्वभेषजो देवानां दूत ईयसे । द्वाविमौ वातौ वात आसिन्धोरापरावतः । दक्षं मे अन्य आवातु परान्यो वातु यद्रपः । यददो वात ते गृहे ऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आवह वात आवातु भेषजꣳ शंभूर्मयोभूर्नो हृदे । प्रण आयूꣳषि तारिषत् । इन्द्रस्य गृहोऽसि तन्त्वा प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन । भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्ये नार्तां देवतां प्रपद्ये श्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्म कोशं ब्रह्म प्रपद्य ओं प्रपद्ये । अन्तरिक्षं मउर्वन्तरं बृहदग्नयः पर्वताश्च यथोवातः स्वस्त्या स्वस्तिमान् तया स्वस्त्या स्वस्तिमानसानि । प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः । कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता । कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढाचिदारुजे वसु । अभीषुणः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः । वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् । शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् । सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु । अन्तरिक्षꣳ शान्तं तद्वायुना शान्तं तन्मे शान्तꣳ शुचꣳ शमयतु । द्यौः शान्ता सादित्येन शान्ता सा मे शान्ता शुचꣳ शमयतु । पृथिवी शान्तिरन्तरिक्षꣳ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशः शान्तिरग्निः शान्तिरन्तरिक्षꣳ शान्तिरादित्यः

शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्ति-र्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्ति-र्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः । तयाहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः । एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः । उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणो-दस्थाममृताꣳ अनु । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे । य उदगान्म-हतोर्णवाद्विभ्राजमानः । सरिरस्य मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु । ब्रह्मणश्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं वेद तदहं धारयाणि मामद्वेदोऽधिविस्रसत् । मेधामनीषे मा विशताꣳ समीची भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि । आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अधते स्याम । ब्रह्म प्रावादिष्म तन्नो माहासीत् । ओं शान्तिः शान्तिः शान्तिः । शन्नो वात इत्यादय एतावन्तो मन्त्राः उत्तरशान्तिरित्युच्यते ॥

२२ इदं महावीरादिसम्पादनं प्रवर्ग्यसम्भरणमित्युच्यते ॥

२३ यजमानो गार्हपत्यस्य पश्चादुपविश्य आज्यं पशवः पुरो-डाशीया एते मे यज्ञार्थाः यावद्यज्ञे उपयोक्ष्यन्ते तावन्मे यज्ञार्थं शेषाद् ब्राह्मणा भुञ्जीरन् इह यक्ष्ये इति सङ्कल्प्य एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे। यदजुषन्त पूर्व ऋक्सामाभ्यां यजुषा सन्तरन्तो रायस्पोषेण समिषा मदेम इति मन्त्रेण । इतः पश्चादित उत्तरत इतः पुरस्तात् । इतो

दक्षिणतः इति देवयजनमध्ये स्थित्वा प्रागादिदेवयजनभूमिं निश्चिनोति । अयं यज्ञभूमिनिश्चयो देवयजनाध्यवसाय उच्यते ॥

२४ अध्वर्युः वेद्युत्करयोर्मध्येन राजानं प्रपाद्य मध्यमे वंशे राजानं बध्वा पुनरग्नीन् विहृत्य परिस्तीर्य दक्षिणतो ब्रह्मयजमानावुपवेश्य स्रुचि चतुर्गृहीतं गृहीत्वा मनसा हुत्वा । महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता । वाचस्पते हृद्विधेनामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोममपात् । मादैव्यस्तंतुश्छेदिमामनुष्यः । नमो दिवे । नमः पृथिव्यै स्वाहा । इति मन्त्रेण यजमाने ऽन्वारब्धे सत्याहवनीये जुहोति । यजमानो वाचस्पतये ब्रह्मण इदं न मम इति त्यागं पठति । पुनर्विहृत्य कूष्माण्डैर्हुत्वोपस्थानं वरदानं च कृत्वा पुनर्विहृत्य चतुर्गृहीतं गृहीत्वापशुबन्धवद्यूपाहुतिं जुहोति । अपरं चतुर्गृहीतं गृहीत्वाज्यस्थालीं सस्रुवां बर्हिर्हिरण्यमुदपात्रमादायेत्यादिप्रकारेण समन्त्रकेण पशुबन्धवदवतक्षणनिधानान्तं यूपाहरणं करोति । ततः पत्नीयजमानौ व्रतश्रपणागारे पर्युषितत्वादिदोषरहितं सर्पिर्मिश्रं पयोमिश्रं वा भक्षयतः । इदं भक्षणीयद्रव्यं व्रतमित्युच्यते ॥

२५ अध्वर्युः वाससी क्षुरं द्वाविंशतिदर्भपिञ्जूलानि नवनीतमञ्जनद्रव्यं सतूलां शरेषीकाश्चादाय एहि यजमानेति यजमानमाह्वयति । तीर्थदेशं गच्छति । एवं प्रतिप्रस्थाता ऽपरिमितानि दर्भपिञ्जूलान्यादाय पत्न्या सह तीर्थं गच्छति । अध्वर्युः आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । इति प्राङ्मुखस्यासीनस्य यजमानस्य दक्षिणं गोदानमद्भिः क्लेदयति । ओषधे त्रायस्वैनम् । इति एकदर्भपिञ्जूलस्यैकं भागं दक्षिणगोदाने ऊर्ध्वाग्रमनूक्षयति । स्वधिते मैनꣳ हिꣳसीः । इति पिञ्जूलस्योपरि तिर्यञ्चꣳ स्वधितिं निदधाति । देवश्रूरेतानि प्रवपे । इति दर्भपिञ्जूलं मध्ये वपति । यजमानः स्वस्त्युत्तराण्यशीय । इति उत्पान्तं प्रत्यभिमृशति । एवं वामगोदाने दर्भपिञ्जूलस्याधस्य वपनं कृत्वा । अध्वर्युर्नापिताय क्षुरं प्रयच्छन् नापितं प्रेष्यति । नापितोप्तकेशश्मश्रु मे निकृन्तनखं प्रब्रूतात् । अयं नापितप्रेष इत्युच्यते ॥

२६ प्रतिप्रस्थाता पत्न्या दक्षिणसव्योपपक्षयोरपरिमितदर्भपिञ्जूलवपनं करोति । ततो नापितोऽप्तोपपक्षां मे निकृत्तनखां प्रब्रूतात् । अनेन प्रैषेण नापिताय क्षुरं प्रयच्छन् प्रेष्यति । अयं प्रतिप्रस्थातृनापितप्रैष इत्युच्यते ॥

२७ ततो नापितो यजमानस्य केशश्मश्रुवपनं नखनिकृन्तनं च कृत्वा पत्न्या उपपक्षवपनं नखनिकृन्तनं च करोति । दक्षिणगोदानच्छेदनादि एतदन्तं कर्म दीक्षाङ्गवपनमित्युच्यते ॥

२८ अध्वर्युः आपो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतप्वः पुनन्तु । इति यजमानं स्नपयति । विश्वमस्मत्प्रवहन्तु रिप्रम् । इति अङ्गधूलिं सम्यक् प्रधाव्य प्रप्लावयति । यजमानः उदाभ्यः शुचिरापूत एमि । इति तीरं प्रत्येति । वस्त्रस्य प्रान्तभागेन आत्मानं प्रतिच्छाद्य तिरः पवित्रं पयस्वत्या पय आचामति ऐष्टिकवत् । सोमस्य तनूरसि तनुवं मे पाहि । इति प्रदक्षिणमहतं वासः परिधत्ते । प्रतिप्रस्थाता तूष्णीं पत्नीं स्नपयित्वा अहतं वासः परिधापयति । इमे दीक्षाङ्गस्नानपरिधाने उच्येते ॥

२९ यजमानः पाणिभ्यां नवनीतं सम्प्लाव्य । महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहि । इति तेन मुखमभ्यङ्क्ते । तूष्णीमनुलोममङ्गानि । पृष्ठं यजमानस्याध्वर्युरभ्यङ्क्ते । पत्नी तूष्णीं स्वयमेवाभ्यङ्क्ते । इदं दीक्षाङ्गाभ्यञ्जनमुच्यते ॥

३० अध्वर्युः प्रत्यङ्मुख उपविश्य । वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि । इति सव्येन पाणिना शरेषीकया यजमानस्य दक्षिणमक्ष्यनक्ति । द्विस्तूष्णीम् । एवं सव्यमक्ष्यनक्ति । पत्नी स्वयमेव तूष्णीमक्षिणी उक्तक्रमेणाङ्क्ते । इदं दीक्षाङ्गाञ्जनमुच्यते ॥

३१ चित्पतिस्त्वा पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । इति सप्तभिर्दर्भपिञ्जूलैर्यजमानस्य मुखं पावयति । वाक्पतिस्त्वा पुनात्वᳲश्मिभिः । इति सप्तभिः पिञ्जूलैर्नाभिम् । देव स्त्वा सविता पुनात्वᳲश्मिभिः इति सप्तभिर्गुल्फौ । पिञ्जूलानि प्राच्योदग्विदिशि निरस्यति । तस्य ते पवित्रपते पवित्रेण यस्मै कम्पुनेतच्छकेयम् । इति

मन्त्रं यजमानं वाचयति । एवं प्रतिप्रस्थाता पत्नीं तूष्णीमप्स्विमितैर्दर्भपिञ्जूलैः पावयति । इदं दीक्षाङ्गपवनमुच्यते ॥

३२ अथाऽध्वर्युर्यजमानेनात्मनः सव्यं पाणिं ग्राहयित्वा । यद्वो देवा स आगुरे यज्ञियासो हवामहे । इति शालामानयति । इन्द्राग्नी द्यावापृथिवी आप ओषधीः । इति पूर्वया द्वारा शालां प्रवेशयति । तीर्थेन प्रवेश्याग्रेणाहवनीयं नीत्वा यस्य दक्षिणतः कुशेषु कृतनिरसनमुदङ्मुखमुपवेशयति । अयं दीक्षाङ्गशालाप्रवेश उच्यते ॥

३३ त्वं दीक्षाणामधिपतिरसि । इत्याहवनीयमीक्षयति । अध्वर्युयजमानौ इमं मन्त्रं पठतः । इह मा सन्तं पाहि । इत्युभौ स्वात्मानमीक्षेते । प्रतिप्रस्थाता पत्नीमपरया द्वारा प्रवेशयति । प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इह । गार्हपत्यस्योत्तरमार्गेण प्राचीमुदानयन्निमं मन्त्रं वाचयति । सा तीर्थेन प्रविश्यासने निरसनं कृत्वा । सुप्रजसस्त्वा वयꣳसुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । इत्युपविशति । अयं पत्नीशालाप्रवेश उच्यते ॥

३४ अथ यजमानो गार्हपत्यस्य पश्चादुपविश्य दीक्षणीयेष्ट्या यक्ष्ये इति सङ्कल्पयति । दीक्षणीयेष्टिसम्बन्धि हविः । व्रीहिमयः । पुरोडाशो द्रव्यम् । पञ्च प्रयाजाः । अग्नीषोमावाज्यभागौ अग्नाविष्णू देवता । देवा आज्यपा इत्यादि प्रकृतिवत् । अध्वर्युरिडाशान्तिं देवा गातुविद इत्यृचं च गार्हपत्यस्योत्तरत उपविश्य जपति । ततोऽग्नीन् विहृत्यान्वाधानं कृत्वा आज्येडान्तां दीक्षणीयामिष्टिं सूर्यास्तात्प्रागेव समापयति दीक्षणीयेष्टिप्रभृतिष्विष्टिषु व्रतग्रहणं ब्रह्मवरणं पत्नीसन्नहनाद्यूनेतिरिक्तं धीपाते इत्यस्य वाचनान्तं ब्रह्मयजमानभागौ चतुर्धाकरणं अन्वाहार्यं फलीकरणं समिष्टयजुः प्रणीतास्थापनं विष्णुक्रमश्च न भवन्ति । ततस्त्वां त्रयोविꣳशतिधेति इध्मसम्भरणमन्त्रे ऊहः । प्राकृतदेवतास्थाने अग्नाविष्णुभ्यामित्यादूहो यथास्थानं कर्तव्यः । प्रधानयागानुमन्त्रणमग्नाविष्णवोरहन्देवयज्यया वृत्रहा भूयासमिति । यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणी-

यायां मन्द्रतरमातिथ्यायामुपांशूपसत्सु इति बौधायनसूत्रात् यथेच्छस्वरो दीक्षणीयायां भवति । आज्येडान्ते उलूखले मुसले इत्यृचा दक्षिणाग्नौ प्रायश्चित्तहोमं कृत्वा प्राडित्याध्वर्युरेव ध्रुवामाप्याययति । एतावत्कर्म दीक्षणीयेष्टिरित्युच्यते ॥

३५ ततोऽध्वर्युर्ध्रौवाज्यमाज्यस्थाल्यां प्रत्यवनीय तेनाज्येन स्रुवेण अन्वारब्धे यजमाने चतस्र आहुतीर्जुहोति । आकूत्यै प्रयुजेऽग्नये स्वाहा । मेधायै मनसेऽग्नये स्वाहा । दीक्षायै तपसेऽग्नये स्वाहा । सरस्वत्यै पूष्णेऽग्नये स्वाहा । एता आहुतयो दीक्षाहुतय इत्युच्यन्ते ॥

३६ स्वाहेत्यस्य स्थाने इदं न ममेति पाठेन यजमानस्य सर्वत्र त्यागः । ततः आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवीउर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा । इति चतुर्गृहीतेन स्रुचा जुहोति । अद्भ्यो द्यावापृथिवीभ्यामन्तरिक्षाय बृहस्पतयइदं० मेति यजमानस्य त्यागः । पुनश्चतुर्गृहीतेन स्रुचं पूरयित्वा । विश्वेदेवस्य नेतुर्मर्तो वृणीत सख्यम् । विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा । इति जुहोति । यजमानः सवित्रइदं० । ततस्तूष्णीमन्तर्वेदि प्रणीतां निनयति । ततः साङ्गं कृष्णाजिनं कृष्णविषाणां वासो मेखलामौदुम्बरदण्डमुष्णीषं च अग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति । प्रतिप्रस्थाता तथैव कुम्बंकुरीरं वासो योक्त्रं च पत्न्यै प्रयच्छति । तद्यथा । अध्वर्युर्यजमानायतने साङ्गं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । यजमानः । ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मापातमस्य यज्ञस्योदृचः । इति आस्तीर्णस्य कृष्णाजिनस्य पश्चात्प्राङ्मुख उपविश्य कृष्णाजिनस्य श्वेतभागे दक्षिणाङ्गुष्ठो भवेत् कृष्णभागे तस्यैवाङ्गुलयो भवेयुस्तथा सम्मृशति । इमां धियꣳ शिक्षमाणस्य देवक्रतुं दक्षं वरुण सꣳशिशाधि । ययातिविश्वा दुरिता तरेम सुतर्माणमधिनावꣳ रुहेम । इति कृष्णाजिनस्योपरि दक्षिणं जान्वाच्याभिसर्पति । उपस्थं कृत्वोपविशति । इदं दीक्षोपवेशनमुच्यते ॥

३७ ऊर्गस्याङ्गिरस्यूर्जम्रदा ऊर्जं मे यच्छ । इति कटिप्रदेशे मौञ्जीमेखलां प्रदक्षिणं पर्यस्यति । इति दीक्षाङ्गमेखलाबन्धनमुच्यते ॥

३८ पाहि मा मा मा हिंसीः । इति निष्टक्यं ग्रन्थिं करोति । प्रतिप्रस्थाता । आशासाना सौमनसमित्यृचा सन्नह्यामि पयसा घृतेन सन्त्वानह्याम्यप ओषधीभिः । सन्त्वा नह्यामि प्रजयाहमद्य सा दीक्षिता सनवो वाजमस्मे इत्यृचा च पत्नीं योक्त्रेण सन्नह्यति । इदं दीक्षाङ्गपत्नीसन्नहनमुच्यते ॥

३९ अध्वर्युः । विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छ । इति यजमानं वाससाप्रोर्णोति । नक्षत्राणामतीकाशात्पाहि । इति वसनस्यातीकाशेषु वाचयति । वस्त्रस्यान्तान् शिरस्येव सङ्क्षिपति । श्रिया ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसाय । इति प्रदक्षिणमुष्णीषेण यजमानस्य शिरो वेष्टयति । इदमुष्णीषवेष्टनमित्युच्यते ॥

४० प्रतिप्रस्थाता तूष्णीं पत्नीशिरसि कुम्बकुरीरमध्यूहति । इदं कुम्बकुरीराध्यूहनमुच्यते ।

४१ अध्वर्युः । इन्द्रस्य योनिरसि । इति यजमानाय त्रिवलिं पञ्चावलिं वा कृष्णविषाणां शाण्या रज्ज्वा बद्ध्वा प्रयच्छति । यजमानः । मा मा हिंसीः । इति प्रतिगृह्य वसनप्रान्ते बद्ध्वा । कृष्यै त्वा सुसस्यायै । इति तयान्तर्वेदि विद्यमानं लोष्टमुद्धन्ति । कृष्णमृगशृङ्गं कृष्णविषाणेत्युच्यते ।

४२ सुपिप्पलाभ्यस्त्वौषधीभ्यः । इति तया दक्षिणं गोदानं कण्डूयते । प्रतिप्रस्थाता पत्न्या वसनस्यान्ते शङ्कुं बद्ध्वा । एतेन कण्डूयस्वेति वदति । सूपस्था देवो वनस्पतिः । इति यजमानपरिमितं ऊर्ध्वाग्रं दण्डं यजमानाय ददाति । यजमानः । ऊर्ध्वो मा पाह्योर्हचः । इति दण्डं प्रतिगृह्णाति । इदं दीक्षाङ्गदण्डग्रहणमुच्यते ॥

४३ अध्वर्युः । स्वाहा यज्ञं मनसा द्यावापृथिवीभ्यां स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभे । इति मन्त्रं यजमानं वाचयति । यजमानो मुष्टिं कृत्वा वाचं नियमयति नक्षत्रोदयपर्यन्तम् । अध्वर्युः आहवनीयसमीपे तिष्ठन् त्रिरुपांशु ब्रवीति अदीक्षिष्टायं ब्राह्मणो नीलकण्ठशर्मा पाराशरगोत्रो ऽनन्तशर्मणः पुत्रो रामशर्मणः पौत्रो नृसिंहशर्मणो नप्ता तमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो

देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यश्च ब्रूमः । इति । ततः शालाया बहिर्निष्क्रम्य त्रिरुच्चैरेवमेव ब्रवीति । इदं दीक्षितत्वज्ञापनमुच्यते ॥

४४ दीक्षितोसि दीक्षितवादं वद सत्यमेव वद मा ऽनृतं मा स्मयिष्ठा मा काङ्क्षया मा ऽपावृथा यदि स्मयासै अपि हस्तस्मयासै यदि कण्डूयासै कृष्णविषाणया कण्डूयासै यदि वाचं विसृजेर्वैष्णवीमृचमनुद्रवतान्म। त्वान्यत्र दीक्षितविमितात्सूर्योऽभ्युदियान्माभिनिर्मुक्ताद्यानि देवतानामानि यथाख्यातं तान्याचक्षाथ यान्यदेवतानामानि यथाख्यातं तान्यावचाय उपरिष्टाद्विचक्षणं धेहि चनसितवतीं विचक्षणवतीं वाचं वद कृष्णाजिनान्मा व्यच्छेत्स्या दण्डाच्च । इति यजमानं संशास्ति। इदं यजमानशासनमुच्यते ।

४५ यजमानः सर्वं तथा करोति । विश्वे देवा अभिमामावृत्रन्पूषा सन्यासोमो राधसा देवः सविता वसोर्वसुदावा । इत्यप्रत्याख्यायिनं दातारं प्रतिसनीहारान् प्रहिणोति । सोनरत्वध्येषणायाचनाभिषस्तियाचनार्थेनेति कोशाद्याचनीयं द्रव्यं सनिरित्युच्यते ।

४६ रास्वेयत्सोमाभूयोभरमापृणन् पूर्त्या विराधिमाहमायुषा । इति धनमाहरन्तं सनीहारं दृष्ट्वा जपति । चन्द्रमसि मम भोगाय भव । इति आनीतं हिरण्यं रजतं वा प्रतिगृह्णाति । वस्त्रमसि मम भोगाय भव । इति वस्त्रम् । उस्रासिम०व । इति गां हयोसि मम० । इत्यश्वम् । छागोसि मम०छागम् । मेषो ऽसि मम० । इति मेषम् । प्राजापत्यमसि मम भोगाय भव । इत्यनादिष्टं सर्वमन्यत् । एतत्कर्म सनियाचनमुच्यते ।

४७ अध्वर्युः आहवनीयस्योत्तरतस्तिष्ठन् । अग्नीन् ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति प्रेष्यति । ततः पूर्वद्वारेण निष्क्रम्य गोश्चतुर्भ्यः स्तनेभ्यः पयो दोहयित्वा गार्हपत्यस्य पश्चादुपविश्य उदीचोऽङ्गारान्निरुह्य तेषु तत्पयोधिश्रित्य दर्भोल्मुकेनाभिद्योत्य तस्मिन् पयसि स्रुवेणापः प्रत्यानीय पुनरभिद्योत्य त्रिः पर्यग्निकृत्वा मेक्षणेनालोड्य अपयित्वोदगुद्वास्याङ्गारान्प्रत्यूह्य उत्तरे शालाखण्डे शिक्ये स्थापयति । प्रतिप्रस्थाता दक्षिणद्वारेण निष्क्रम्य पत्न्यै व्रतं

दीक्षयित्वाऽध्वर्युर्वद्दक्षिणाग्नौ प्रतप्यित्वा दक्षिणे शालाखण्डे शिक्ये निदधाति । एतत्पत्नीयजमानव्रतपयः साधनमुच्यते ॥

४८ यजमानः नक्षत्रोदये जाते सति दण्डकृष्णाजिने समादाय पूर्वद्वारेण बहिर्निष्क्रम्य शालाया अग्रतस्तिष्ठन् भूर्भुवः सुवरिति सकृदुपांशूक्त्वा व्रतं कृणुतेति त्रिरुच्चैर्वदति । अध्वर्युणा वाचं यच्छेति प्रोक्तस्य वाङ्नियमस्य इदानीमेव विसर्गः अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षेमा मा हासीः । अमेध्यदर्शने सत्युक्तमन्त्रेण यजमानः सूर्यमुपतिष्ठते । रात्रौ तु आहवनीयम् । उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट । इमं मन्त्रं पर्जन्येनाभिवृष्टोऽभिवृष्यमाणो वा जपति । अनृतभाषणे कृते सति इमं मे वरुण तत्त्वायामि त्वं नो अग्ने सत्वं नो अग्नइति चतस्रो वारुणीर्ऋचो जपति । देवाञ्जनमगन्यज्ञस्ततो मास्य यज्ञस्याशीरनुवर्धताम् । भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमꣳहसः । दण्डस्य कृष्णाजिनस्य वा विच्छेदे सति इमं मन्त्रं जपति । असंस्कृतपयः पाने यथाविहितस्नानातिक्रमे च जलेनाचमनं कृत्वा । शिवाः पीता भवथ यूयमापोऽस्माकं योना वुदरे सुशिवाः । इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे । इति जपति । वमनेष्ठीवने वा जाते । यद्वचापि रसस्य मे निरष्टविषमसृतः । अग्निष्टत्सोमः पृथिवी पुनरात्मन् दधातु मे । इति जपति । रेतः स्कन्दने सति । यन्मेरेतः परितोषात्तदपिब । अग्निहोत्रमिव सोमेन तदहं पुनराददे । इति तद्रेतोऽनुमन्त्र्य । इमं मेवरुणतत्त्वायामीति द्वे स्रुवाहुती जुहोति । मूत्रं करिष्यन् पुरीषं वा पृथिव्याः सकाशात् लोष्ठमादत्ते । इयं ते यज्ञियातनूः । इति । ततोमूत्रं पुरीषं वा तस्मिन् स्थले करोति । अपो मुञ्चामि न प्रजामꣳहोमुचः स्वाहा कृताः पृथिवीमाविशतेति मन्त्रान्ते । तत आचम्य । पृथिव्या सम्भव । इति लोष्ठं पूर्वगृहीतं यथास्थानं निदधाति । कफेनिर्गते सति । कफस्यानामापः स्थ स्वाहाकृताः पृथिवीमाविशत । इति जपति । अश्रुपाते जाते । बीभत्सानामापः स्थ स्वाहा० । इति जपति । स्वेदेनिर्गते सति । तपस्यानामापः स्थ स्वाहा० इति जपति । दुःस्वप्नदर्शने सत्युत्थायाहवनीयसमीपमेत्य । दुःस्वप्नपापस्वप्नोपभुक्तेत्र्येवाहमन्तरं करो

नहि स्वप्नमुपययत । इति जपति । स्वप्नेऽन्नभोजने दृष्टे । यदन्नमद्यते नक्तं न तत्प्रातः क्षुधोऽवति । सर्वं तदस्मान्माहिंसीर्नहि तद्दृदृशेदिवा । इति जपति । स्वदेहे रुधिरमुत्पतितं दृष्ट्वा कण्डूयित्वा वा । नमो रुद्रियाभ्योऽद्भ्यः स्वाहा । इति जपति । पर्जन्ये वर्षति सति यदि धावेत्तदा । नमो रुद्राय वास्तोष्पतय आयने विद्रवण उद्याने यत्परायणे । आवर्तने विवर्तने यो गोपायति तꣳहुवे । इति जपति । अन्येन दीक्षितेन सह समागमे । कया नश्चित्र आभुवदित्यृचं जपति । देवयजनादन्यत्र स्थाने सूर्योदयास्तमयौ यदि स्यातां तदा । सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानो ऽग्निर्मा पातु चक्षुषः । सक्षूष सवितर्विश्वचर्षण एतेभिः सोमनामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते । इति जपति एतानि दीक्षाव्रतभङ्गप्रायश्चित्तानीत्युच्यन्ते ॥

४९ शयनकाले स्वायतने प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य । अग्ने त्वꣳसुजागृहि वयꣳ सुमन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः । अनेन मन्त्रेणाग्न्यभिमुखः शेते । अयं दीक्षितस्य यजमानस्य शयनमन्त्र इत्युच्यते ॥

५० पत्नी गार्हपत्यस्य पश्चात्तूष्णीं शेते । अध्वर्युः मध्यरात्रे यजमानं प्रबोध्य । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । इति यजमानः पयो व्रतयिष्यन्नप आचामति । दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे । इति ततो ऽध्वर्युणादत्तं व्रतं पयः स्वायतने उपविश्य कंसेन परिश्रित्य व्रतयति । ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्तेनःपान्तु ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा । इति प्राश्याचम्य । शिवाः पीता भवथ यूयमापोस्माकं योनावुदरे सुशेवाः । इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे । इति जपति । प्रतिप्रस्थातृदत्तं व्रतं पयः परिश्रित्य पत्नी तूष्णीं व्रतयति । उभावपि स्वं स्वं पात्रं निर्णिज्य प्रयच्छतः । इदं व्रतसंज्ञकपयोभक्षणमुच्यते ।

५१ अध्वर्युः अपररात्रे प्रेष्यति । त्रिस्तनव्रतं दोहयताग्नीन्ज्योतिष्मतः कुरुत व्रत्य वाचं यच्छ पत्नि वाचं यच्छ । इति अध्वर्युप्रतिप्रस्थातारौ पूर्ववद्दोहयित्वा श्रपयित्वा पूर्ववत्संस्कृत्य शिक्ये स्थाप-

यन्तः । ईक्षमेव चतुस्तनं व्रतं पथ्या भवति । यजमानः सूर्योदयानन्तरं अग्रेण शालां तिष्ठन् । भूर्भुवः सुवरिति जपित्वा व्रतं कृणुतेति त्रिरुच्चै र्वदति । अध्वर्युः एहि यजमान इत्याहूय शालां प्रपादयति । यजमानो गार्हपत्यस्य पश्चादुपविश्य प्रायणीयेष्ट्या यक्ष्ये इति प्रकृतिवत्सङ्कल्पयति । प्रायणीयेष्टिसम्बन्धि हविः । व्रीहिमयश्चरुः । आज्यञ्च । पञ्च प्रयाजाः अग्नीषोमावाज्यभागौ । पथ्या स्वस्तिः । अग्निः । सोमः । सविता । अदितिश्च प्रधानदेवताः । देवा आज्यपा इत्यादि प्रकृतिवत् । अस्यामिष्टौ अन्वाधानं नास्ति । अध्वर्युः असिदादानादि कर्म प्रकृतिवत्करोति । चरोः पयसि जले वा श्रपणम् । पयसि श्रपणपक्षे तु ब्रह्मन्नपः पयश्च प्रणेष्यामीति विशेषः । यज्ञयोगमन्त्रजपान्ते गार्हपत्ये स्मार्तवदाज्यं संस्कृत्याहवनीये स्रुवेण जुहोति । कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठे अधिरोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् स्वाहा । इति । कवयेऽग्नय इदम्० । इति यजमानस्त्यजति । अयमुपहोमः सोमशोधनादि प्रैषाङ्गहोम इत्युच्यते ॥

५२ अध्वर्युः उपनिष्क्रम्य प्रैष्यति । सोमविक्रयिन् सोमꣳशोधयोपरवाणां कान्ते रोहेति चर्मण्यपामन्ते ब्राह्मणो दक्षिणत आस्तां ता गावो दूरं मा गुर्यासु सोमक्रयणी च सोमवाहनावनड्वाहौ सोमवाहनमनः प्रक्षालयतोद्धृतफलकम् । इत्यनेन प्रैषेण प्रेषितः सोमविक्रयी सोमशोधनादि यथोक्तं करोति । ततोऽध्वर्युः प्रकृतिवत् धृष्ट्यादानादि कृत्वा चातुर्मास्यवत् चरुं श्रपयित्वा । सूर्यन्ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः । इति चक्षुरितिनामकेन वाक्यसमूहेनान्तर्वेदि चरुमासादयति । प्रकृतौ तु समस्तव्याहृतिभिर्हविरासादनम् । प्रयाजशेषेणाभिघारणे विशेषः । प्रथमं ध्रुवां पञ्चकृत्वोऽभिघार्य ततश्चरुमभिघार्य उपभृतमभिघारयति । अस्यामिष्टौ आज्यभागप्रचारो वैकल्पिकः । पृथक् पृथक् चतुर्गृहीतेन ध्रौवाज्येन प्राच्यां दक्षिणस्यां प्रतीच्यां उदीच्यां च क्रमेण पथ्यां स्वस्तिं अग्निं सोमं सवितारं चोपांशु यजति । सर्वत्र दब्धिरसीत्यनुमन्त्रणम् यजमानस्य । अदितिम् चरुणा मध्ये यजति । अवाद इत्यनुमन्त्रणम् । अदितियागानन्तरं

अध्वर्युः । मरुतो यद्‌ वो दिवः सुम्नायन्तो हवामहे । आ तू न उपगन्तन । इति मारुतीमृचमनुपठति । स्विष्टकृद्यागे विशेषः । जुह्वामुपस्तीर्य ध्रुवाज्याच्चतुरवदाय सकृच्चरोरुत्तरार्धादवदाय द्विरभिघार्य चरुसम्बन्धिमेक्षणं जुहूपभृतोरधोभागेन नीत्वा आग्नीध्राय प्रयच्छन्नाह । अतिवालयतादेव मा नुप्राहार्षीः । इति । ततोऽत्याक्रम्य स्विष्टकृता प्रचरति । आग्नीध्रो मेक्षणमग्नेरुपरि प्राङ्नीत्वाऽभ्युत्योत्तरतः सादयति । ततोऽध्वर्युर्जुहूपक्षालनादि करोति । इडावदाने विशेषः । इडामुपस्तीर्य ध्रुवाज्यादष्टकृत्वोऽवदाय द्विश्चरोरवदायाभिघारयति । हविरुच्छिष्टोद्वासनानन्तरं परिकर्मिणः सम्प्रेष्यति । अनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राश्नीताथैतां चरुस्थालीं सत्तामकाषामेतन्मेक्षणमेतं वेदमेतद्बर्हिश्चतुष्टयमुदयनीयामुपनिधत्तात् । परिकर्मिणो यथाप्रैषं कुर्वन्ति । स्रुग्विमोकानन्तरं तूष्णीमन्तर्वेदि प्रणीता निनीय तूष्णीं ध्रुवामाप्याय्य स्रुवि चतुर्गृहीतं गृहीत्वा स्रुगग्रे सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा दर्भमूले प्रग्रथ्य जुह्वां लम्बमानमवदधाति । इयं ते शुक्र तनूरिदं वर्चस्तया सम्भव भ्राजं गच्छेति मन्त्रेण । जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा । इत्यन्वारब्धे यजमाने जुहोति । वाचे सोमक्रयण्या इदं० मेति यजमानोऽनुमन्त्रयते । इयं सोमक्रयाहुतिरित्युच्यते ॥

५३ पुनश्चतुर्गृहीतं गृहीत्वा स्फ्यमुदपात्रं बर्हिर्हिरण्यं चादाय एहि यजमानेति तमामन्त्र्य उद्धरणीहस्तया पत्न्याऽनुगतेन यजमानेन सह पूर्वद्वारेण शालाया बहिर्निष्क्रम्य शालाया अग्रे तिष्ठन् चतुर्गृहीतं स्रुक्स्थमाज्यं यजमानमवेक्षयति । शुक्रमस्यमृतमसि वैश्वदेवꣳ हविः । इति यजुर्मन्त्रेण । हिरण्यमन्तर्धायादित्यमुदीक्षयति । सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता । इति मन्त्रेण । सोमक्रयणीं गां शालाया अग्र पृष्ठ्या सूत्रस्थाने उदङ्मुखीं स्थितामनुमन्त्रयते । चिदसि मनासि धीरसि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतः शीर्ष्णी सा नः सुप्राची सुप्रतीची सम्भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाऽध्यक्षायानु त्वा माता मन्यतामनु पिता नु भ्राता सगर्भ्यो नु सखा सयूथ्यः सा देवि देवम-

ऽवेहीन्द्राय सोमᳪ रुद्रस्त्वा वर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या । इदं सोमक्रयण्यनुमन्त्रणं उच्यते ।

५४ दक्षिणस्येमस्य सप्तमं पदं जोषयध्वम् । इति प्रेष्यति । उदग्दिशं प्रतिनीयमानायाः सोमक्रयण्या दक्षिणस्य पादस्य षट् पदान्यनुक्रामति । तत्रैकैकपदा नु क्रमणे षण्णां मन्त्राणां मध्ये एकैको मन्त्रः पठनीयः । वस्व्यसि । रुद्राऽसि । अदितिरसि । आदित्याऽसि । शुक्राऽसि । चन्द्राऽसि । एतैः षड्भिर्मन्त्रैः अध्वर्युः गोर्दृष्णाः प्रक्षेपस्थाने स्वदक्षिणं पादं प्रक्षिप्य क्रमेण गच्छति । इदं सोमक्रयण्यनुगमनमुच्यते ॥

५५ बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेतु । इत्यनेन मन्त्रेण सप्तमस्य पादस्य प्रक्षेपस्य स्थानं दक्षिणहस्तेन गृह्णाति स्पृशतीति यावत् । तस्मिन् स्थाने हिरण्यं निधाय परिस्तीर्य परिषिच्य पूर्वाहृतेन चतुर्गृहीतेन । पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहा । इति मन्त्रेण । सोमक्रयण्या इदमिति याजमानम् । हिरण्यमपनीय । परिलिखितᳪ रक्षः परिलिखिता अरातय इदमहᳪ रक्षसो ग्रीवा अपि कृन्तामि योस्मान् द्वेष्टि यञ्च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामि । स्फ्येन पदं परिलिखिता सकृन्मन्त्रेण द्विस्तूष्णीम् । अप उपस्पृश्य । स्फ्येनोपसङ्गृह्य पदुरण्यां संवपति । अस्मे रायः इति मन्त्रेण । मन्त्रकर्मणोऽस्त्रिराऽवृत्तिः । त्वे रायः । इति पदुरणीं यजमानाय प्रयच्छति । यजमानः । तोते रायः इति मन्त्रेण पत्न्यै प्रयच्छति । सन्देवि देव्योर्वश्या पश्यस्व । इति पत्नीं सोमक्रयण्या समीक्षयति । पत्नी । त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव सन्दृशि । इति यजमानं समीक्षते । यजमानः । माहᳪरायस्पोषेण वियोषम् । इति सोमक्रयणीं समीक्षते अध्वर्युः हिरण्य प्रक्षाल्य मध्यमायामङ्गुलौ बध्वा पददेशे उदकमपनिनीय पत्नीं गमयति । एतावत्कर्म पदुरणीग्रहणमुच्यते ॥

५६ ततोऽध्वर्युस्तत्रैव चन्द्रं छागं कृष्णशुक्ले ऊर्णास्तुके उष्णीषं वाससी कृष्णाजिने सोमक्रयणीं चादायोपरवदेशं गत्वा पृच्छति । सोमविक्रयिन् शुद्धस्ते सोमाः ३ । इति सोमविक्रयी शुद्ध इति ब्रवीति । यजमानः । एष ते गायत्रो भाग इति मे सोमाय ब्रूतात् । एष ते

त्रैष्टुभो भाग इति मे सोमाय ब्रूतात् । एष ते जागतो भाग इति मे सोमाय ब्रूतात् । छन्दोमानाᳬ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् । इति मन्त्रैः सुविचित राजानमुपतिष्ठते । इदं क्रयणाङ्गसोमोपस्थानमित्युच्यते ॥

५७ अध्वर्युं वस्त्रं द्विगुणं कृत्वा चर्मण उत्तरार्धे प्राग्दशमास्तृणाति । अᳬशुना ते अᳬशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतो ऽमात्योसि शुक्रस्ते ग्रहः । इति सहिरण्येन पाणिना राजानमभिमृशति । इदं क्रयणाभिमर्शनमित्युच्यते ॥

५८ अभित्यंदेवᳬ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसᳬ रत्नधामभिप्रियं मतिमूर्ध्वा यस्याऽमतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः इत्यस्य मन्त्रस्य पञ्चकृत्व आवृत्या सोमस्य पञ्चमुष्टीर्विमाति । तत्र प्रथमविमानं अङ्गुष्ठसहितया प्रदेशिन्या । द्वितीयं साङ्गुष्ठयोपकनिष्ठिकया । तृतीयं तथैव प्रदेशिन्या । चतुर्थं तथैव कनिष्ठिकया पञ्चमं तथैव मध्यमया । इति समन्त्रकविमानम् । ततस्तूष्णीं पञ्चकृत्वो विमाति । तच्च कनिष्ठिकया मध्यमया कनिष्ठिकया प्रदेशिन्या महानाम्न्येति क्रमेण । एवं दशकृत्वो मिमानः सन् क्रीयमाणस्य सोमस्यार्धं मुष्टिदशकरूपं द्विगुणिते वस्त्रे गृहीत्वा प्रजाभ्यस्त्वा इति मन्त्रेणाविशिष्टमर्धं गृह्णाति तच्च त्रिमिते सोमे प्रक्षिपति । एतत्सोमविमानमित्युच्यते ॥

५९ ततो वस्त्रस्य प्रान्तानेकत्र करोति । प्राणाय त्वा । इति प्रदक्षिणमुष्णीषेण वेष्टयति । व्यानाय त्वा । इति प्रान्तभागानुपगूहति । अङ्गुल्या मध्ये वायुसञ्चारार्थमवकाशं करोति । एतत्सोमवेष्टनमित्युच्यते ॥

६० प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनुप्राणन्तु । इति यजमानं सोममवेक्षयति । ततस्तत्सोमग्रन्थुस्तं चर्मणि निदधाति । एतत्सोमावेक्षणमित्युच्यते ॥

६१ सोमविक्रयिणा तस्मिन् गृहीते सति अध्वर्युर्जलेन सदस्युक्षति । वर्मं दूरे प्रक्षिप्योत्थाय पृच्छति । सोमविक्रयिन् क्रय्यस्ते सोमाः ३ । सोमविक्रयी क्रय्य इति प्रत्याह । अध्वर्युराह । मूजवतः ३ ।

इति सोमक्रयण्या सोमं पणते । ततः क्रीतः सोमः वयांसि व्याचक्ष्व इति सोमविक्रयी प्रत्याह । अध्वर्युः एषा ते सोमक्रयणी चन्द्रं ते छाग ते वस्त्रं ते । ततो हिरण्येन पणते । सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यक्ते गोः । इति कौत्साय हिरण्यं दर्शयति । अस्मे चन्द्राणि । इति यजमानाय प्रददाति । तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामि । इति प्रतीची नयीवयाऽजया सोमं राजानं पणते । अस्मे ते बन्धुः । इति यजमानं समीक्षते । तदनन्तरम् मयि ते रायः श्रयन्ताम् । इति आत्मानं समीक्षते । तदनन्तरमजां प्रदक्षिणमावर्त्य अभ्युत्थोदङ्मुखीं तां कौत्साय ददाति । ब्रह्मा । मित्रो न एहि सुमित्रधाः । इति सोमं राजानमादत्ते । इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳस्योनः स्योनम् । इति यजमानस्य दक्षिणे ऊरौ सादयति । अध्वर्युः वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेऽवबद्धान् । इति कृष्णविषाणयायजमानस्योष्णीषमपनयति । यजमानः । उष्णीषं जलेनाभ्युक्ष्य कौत्साय परिकर्मिणे वा ददाति । दण्डं मैत्रावरुणाय प्रयच्छति । तदानीमध्वर्युर्यजमानं वाचयति । त्वां गावो वृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः । वर्ष्मन् क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनि । मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषाप्रयच्छामि । इति । अध्वर्युः । अस्मे ज्योतिः । इति शुक्लोर्णास्तुकयजमाने प्रक्षिपति । कृष्णोर्णास्तुकान्तु । इदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामि इत्युपग्रथ्य । सोमविक्रयिणि तमः । इति तया सोमविक्रयिणं भ्रुवोर्विध्यति । सोमक्रयहेतुन् पदार्थाननुदिशति । स्वानभ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् । इति मन्त्रेण । ततो तस्मिन्नेव स्थाने उदकुम्भस्यजलं सर्वं प्रक्षिपति । सोमविक्रयिन् क्रय्यस्ते सोमा इत्यारभ्यतदन्तं कर्म सोमक्रयणमित्युच्यते ॥



६२ यजमानः । उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताꣳ अनु । इत्यनेन मन्त्रेण राजानमादायोपोत्तिष्ठति । ततो राजानं स्वशिरसि निधाय । उर्वन्तरिक्षमन्विहि । इति प्राङ्मुखस्य शकटस्य दक्षिणतोऽभ्येति । ततोऽध्वर्युः । अदित्याः सदोऽसि । इति शकटस्य नीडे कृष्णाजिनमास्तृणाति । यजमानः अदित्याः सद आसीद इति कृष्णाजिने सोमं राजानं स्थापयति । अध्वर्युयजमानौ । अस्तभ्नाद्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः । आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि । इत्यनेन राजानमुपतिष्ठेते । अध्वर्युः । वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु । हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ । राजानं प्राग्दिशं वर्जयित्वा सर्वासु दिक्षु उक्तमन्त्रेण वाससा वेष्टयति । उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । इति पूर्वदिशि ऊर्ध्वग्रीवमन्तर्लोम कृष्णाजिनं बध्नाति । सोमग्रहणपूर्वकोत्थानमारभ्यैतदन्तं कर्म शकटे सोमस्थापनमित्युच्यते ॥

६३ उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ । इति मन्त्रेणानीयमानौ सोमवाहनावनड्वाहौ प्रतिमन्त्रयते । वरुणस्कम्भनमसि । इति । दक्षिणमनड्वाहं योजयति । वरुणस्य स्कम्भसर्जनमसि । इति । शम्यामवगूहति । प्रत्यस्तो वरुणस्य पाशः । इति योक्त्रमवगूहति । एवमेवोत्तरस्यां धुरि उत्तरमनड्वाहं योजयति । ततो दक्षिणामीषामन्वारभ्य होत्रे प्रेष्यति । सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वय मा तु त्वमाह्वायँजमान आह्वास्यति । यजमानः ईषयोर्मध्ये तिष्ठन् पलाशशाखां धारयन् । सुब्रह्मण्योम् इति त्रिरुपांशु सुब्रह्मण्या माह्वयति । ततः सुब्रह्मण्येन सुब्रह्मण्यायामाहूतायां होत्रा च अनुवचनस्य प्रथमायामृचि विरुक्तायां सत्यां शकटं प्रच्याव्य दक्षिणामुखं परिवर्त्य वहन्ति । प्रच्यवस्व भुवस्पते विश्वान्यभिधामानि मा त्वा परिपरीविदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरादघच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः संस्कृतम् । इत्यनेन मन्त्रेण । अध्वर्युरेवेमं मन्त्रं पठति । ततोऽध्वर्युयजमानौ । यजमानस्यस्वस्त्ययन्यस्यपि पन्था-

नगरस्माह स्वस्ति गामनेहस येन विश्वाः परिद्विषो वृणक्ति विन्दते वसु। इमं मन्त्रं पठन्तौ अञ्जसा प्रतीचीं दिशं प्रति शकटं नयतः। एतत्कर्म शकटपरिवहनमित्युच्यते ॥

६४ ततोऽध्वर्युर्व्रीहीनरणीं राजासन्दीं च गृहीत्वा शालाया अग्रभागे तिष्ठन् ओह्यमानं राजानं प्रति मन्त्रयति। नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत। इत्यनेन मन्त्रेण। शकटवोढारः शालाया अग्रभागे उदग्रीषं शकटमुपस्थापयन्ति। ततोऽध्वर्युः वरुणस्य स्कम्भनमसि। इति उपस्तम्भने स्थापयति। शकटादेर्यथास्थितस्थित्यर्थं यदूर्ध्वं काष्ठद्वयं रज्ज्वादिना परस्परबद्धं भवति तदुपस्तम्भनमित्युच्यते ॥

६५ वरुणस्य स्कम्भसर्जनमसि। इति दक्षिणस्यानडुहः शम्यामुत्कर्षति। उन्मुक्तो वरुणस्य पाशः इति योक्त्रं मुञ्चति तत एहि यजमानेति यजमानमाहूय पूर्वया द्वारा शालां प्रवेशयति। यजमानः स्वस्थाने उपविश्य आतिथ्येष्ट्या यक्ष्ये इत्यातिथ्येष्टिं सङ्कल्पयति। अस्यामिष्टौ वैष्णवो नवकपालः पुरोडाशः। अनुयाजानामभावः। प्रधानमुपांशु। आश्ववालः प्रस्तरः। ऐक्षवी विधृती। पञ्चविधं बर्हिः। कार्ष्मर्यमयाः परिधयः। सप्तदश सामिधेन्यः। योक्त्रेध्मप्रवृश्चनान्वाहार्यस्थालीवर्जं प्रकृतिवत्पात्राण्यासादयति। पूर्वं यान् व्रीहीन् गृहीत्वा शालाद्वारे प्राप्तस्य सोमस्य राज्ञ उपस्थानं कृतं तानेव व्रीहीन्निर्वपति। एते च व्रीहय उपस्थानव्रीहिपदवाच्याः ॥

६६ अत्र निर्वापमन्त्रे विशेषः। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि। देवस्य त्वा सवितुः प्र०भ्यांꣳसोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि। देव०भ्यामतिथेरातिथ्य-

मसि विष्णवे त्वा० नि । देवभ्यामग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा० नि । देवभ्यां ऽ श्येनाय त्वा सोमभृते विष्णवे त्वा० नि ॥ एतैः पञ्चभिर्यजुर्मन्त्रैः पञ्च मुष्टीर्निर्वपति । तन्दुलप्रक्षालनजिनयनानन्तरं दक्षिणवदुत्तरमनड्वाहं विमुञ्चति । चत्वारो ब्राह्मणा राजासन्दीं धृत्वा शालां प्रवेशयन्ति । याते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । इत्यनेन मन्त्रेण यजमानः सोममादत्ते । गयस्फानः प्रतरणः सुवीरो वीरहा प्रचरा सोमदुर्यान् । इति तं शालां प्रवेशयति ॥ आसन्दीधरा ब्राह्मणा राजासन्दीं वेद्युत्करयोर्मध्येन नीत्वा ऽग्रेणाहवनीयं पर्यानीयाहवनीयस्य दक्षिणतः सादयन्ति । तत्रैव यजमानः सोमं नीत्वा आसन्दीसमीपे तिष्ठति । अध्वर्युः अदित्याः सदो ऽसि । इति आसन्द्यां कृष्णाजिनमास्तृणाति । यजमानः अदित्याः सद आसीद । इति कृष्णाजिने राजानं स्थापयति । वरुणो ऽसि धृतव्रतो वारुणमसि । इति राजानमुपतिष्ठते । अध्वर्युः । शयोर्देवानाꣳ सख्यात् । कृष्णाजिनान्तानेकीकृत्य रज्ज्वा बद्ध्वा मध्यमे वंशे प्रग्रथ्नाति । मा देवानामयसश्छिस्महि । इति आसन्द्याः पश्चिमपादयोर्मध्ये राजपादौ प्रक्षालयामीति भावयन्नञ्जलिना जलं सिञ्चति । ततः कश्चित् शूद्रस्तूष्णीं प्रक्षालयति । तन्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः । इति यजमानः पुनरुपतिष्ठते । एतावत्कर्म सोमासन्दीप्रतिष्ठापनमित्युच्यते ॥

६० ततो ऽध्वर्युः । मा राजानं चाहवनीयं चान्तरेण कश्चन सञ्चारीन्मैनꣳ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा साधस्याद्यो ऽनुप्रपादीत् । अयमन्तरागमननिषेधप्रैष इत्युच्यते ॥

६८ यजमानो राजानं सोमं मधुपर्केण पूजयति । तत्र निवेदितां गामध्वर्युरुत्सृजतेति वदति । अयं सोममधुपर्क उच्यते ॥

६९ अध्वर्युः । कृष्णाजिनावहननादि प्रकृतिवत्करोति । उत्तरेषु अधिवपनादिषु विष्णुमेव निगमयति । पुरोडाशमधिश्रित्य गार्हपत्ये मदन्तीरधिश्रित्याज्यनिर्वापादि प्रकृतिवत् । सर्वाण्याज्यानि चतुर्गृहीतानि भवन्ति । पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता । इति चतुर्होत्रातिथ्यमासादयति । आसन्नाभिमन्त्रणानन्तरं सम्भारान् व्याचष्टे । अग्निर्यजुर्भिः । सविता स्तोमैः । इन्द्र उक्थामदैः । मित्रावरुणावाशिषा । अङ्गिरसो धिष्णियैरग्निभिः । मरुतः सदोहविर्धानाभ्याम् । आपः प्रोक्षणीभिः । ओषधयो बर्हिषा । अदितिर्वेद्या । सोमो दीक्षाया । त्वष्टेध्मेन । विष्णुर्यज्ञेन । वसव आज्येन । आदित्या दक्षिणाभिः । विश्वेदेवा ऊर्जा । पूषा स्वगाकारेण । बृहस्पतिः पुरोधया । प्रजापतिरुद्गीथेन । अन्तरिक्षं पवित्रेण । वायुः पात्रैः । अहꣳ श्रद्धया । एते मन्त्राः सम्भारपदवाच्याः ॥

७० तत उत्करे कृष्णाजिनमास्तीर्य अग्नेर्जनित्रमसीत्यादिमन्त्रैः पशुवन्मन्थनं कृत्वा निर्मन्थ्येन प्रचर्याभिहुत्य अग्नये समिध्यमानायानुब्रूहीत्यादि प्रकृतिवत् करोति । न समिधं परिशिनष्टि । अनुयाजाभावात् । चतुर्थे प्रयाजे सर्वमौपभृतमाज्यं जुह्वामानीय प्रयाजशेषेण ध्रुवामभिघारयति । उपभृतं नाभिघारयति । आज्यभागानन्तरमुपांशु प्रधानेन प्रचरति । विष्णोरहं देवयज्ययान्नादो भूयासम् । अन्नाद इत्यस्य स्थाने शिपिविष्टपदं वा । इति यजमानस्य प्रधानयागानुमन्त्रणम् । ततः स्विष्टकृदिडे प्रचर्य प्राशित्रं परिहृत्य प्रणीता निनीय तूष्णीं ध्रुवामाप्याययति । सन्तिष्ठते आतिथ्येष्टिः । आतिथ्येष्टिसङ्कल्पप्रभृत्येतावदन्तं कर्म्म आतिथ्येष्टिरिति गीयते ॥

७१ ततो वेद्यां कंसं चमसं वा निधाय ध्रुवाज्यात्पञ्चकृत्वो वक्ष्यमाणमन्त्रैर्गृह्णाति । ते च मन्त्राः । आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि । तनूनप्त्रे त्वा गृह्णामि । शाक्वराय त्वा गृह्णामि । शक्मन्नोजिष्ठाय त्वा गृह्णामि । इति । इदं तानूनप्त्राज्यग्रहणमित्युच्यते ॥

७२ मुख्यक्रमेण यजमानान्ता ऋत्विजस्तमवमृशन्ति । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम् । इति मन्त्रेण । इदं तानूनप्त्रावमर्शनमित्युच्यते ॥

७३ अध्वर्युर्यजमानं वाचयति । अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धाः । यजमानः अध्वर्य्वादीन् सर्वानृत्विजः क्रमेणोपहूय तानूनप्त्रमवजिघ्रति । प्रजापतौ त्वा मनसि जुहोमि । इति मन्त्रेण सकृत् द्विस्तूष्णीम् । एतत्तानूनप्त्रावघ्राणमित्युच्यते ॥

७४ अथैनत्पात्रमद्भिः संस्पृश्य शालाया उत्तरभागे निनयति । अत्र कंसे गृहीतमाज्यं तानूनप्त्रमित्युच्यते ॥

७५ ततोऽध्वर्युराग्नीध्रं पृच्छति । अग्नीन्मदन्त्यापा३ः । इति । आग्नीध्रस्तमाह । मदन्तिदेवीरमृता ऋतावृधः । इति । ततोऽध्वर्युः । ताभिराद्रव । इत्याह । इदं मदन्तीपाचनमित्युच्यते ॥

७६ ततो यजमानान्ताः सर्वे मुख्यादिक्रमेण मदन्तीरुपस्पृश्योपोत्थाय सोमसमीपं गत्वा तं विस्रस्य हिरण्यमवधाय सोमं राजानं मदन्तीजलेनाप्यायन्ति । अꣳशुरꣳशुस्ते देवसोमाप्यायतामिन्द्रायैकधनविद आतुभ्यमिन्द्रः प्यायतामात्वमिन्द्राय प्यायस्व । इति मन्त्रेण । अध्वर्युर्यजमानं वाचयति । आप्यायय सखीन् त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय । इति । इदं सोमाप्यायनमित्युच्यते ॥

७७ ततो मदन्तीजलं स्पृष्ट्वा यथास्थानमुपविशन्ति । अध्वर्युः वाजवतीभ्यां स्रुचौ व्यूह्य परिधीन् समज्य यथायतनꣳ स्रुचौ सादयित्वा विधृतीभ्यां सह प्रस्तरं गृहीत्वाऽप्रतिशृणंस्त्रेधाऽनक्ति । अक्तꣳ रिहाणा इत्यादिमन्त्रैः । अत्र प्रस्तरानुप्रहरणं नास्ति । अतस्तदर्थमाश्रावणमपि न । न बर्हिरनुप्रहरति प्रस्तरं वेद्या दक्षिणार्धे निधाय तस्मिन् यजमानान्ताः सर्वे मुख्यादिक्रमेण निह्नुवन्ते । एष्टा रायः । प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै । इति सव्यं पाणिं प्रस्तरस्योपरि उत्तानं निधाय तदुपरि दक्षिणं पाणिं न्यञ्चं निधाय द्यावापृथिव्योर्नमस्काररूपो निह्नव उच्यते ॥

७८ आतिथ्याबर्हिष एकदेशन विधृतिभ्यां च सह तमेव प्रस्तरं बध्वा तेष्वेव परिधिषु एकादश समिच्छकलानुपसमृह्य तदुभयमाहवनीयेऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयित्वा यजमानमाह । अवान्तरदीक्षां गृहाण इति । अयमवान्तरदीक्षाप्रैष इत्युच्यते ॥

७९ ततो यजमान आहवनीयमुपतिष्ठते । अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि । इति । अध्वर्युः यजमानं संशास्ति । सन्तरां मेखलां समायच्छस्व सन्तरां मुष्टीकुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पुर्वन्व्रतनꣳ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातो धिव्रतय । इति यजमानो यथाप्रैषं करोति । इदं यजमानशासनमित्युच्यते ॥

८० ततोऽध्वर्युब्रह्मप्रतिप्रस्थात्राग्नीत्प्रस्तोतृहोतृयजमाना मदन्तीजलं स्पृष्ट्वा नमो वाच इत्यादि पूर्वोक्तां शान्तिं जपन्ति ।

अध्वर्यु र्गार्हपत्यस्य पुरस्तादास्तीर्णेषु दर्भेषु सम्राडासन्दीं स्थूणां गोदोहनीं छागायै शङ्कुं शफोपयमनं स्त्रुवं रौहिणहवन्यौ द्वे धृष्टी त्रीणि पवित्राणि षट् शकलान्येतान्यौदुम्बराणि वैकङ्कतीं समिधं त्रयोदश वैकङ्कतान् परिधीन् वैकङ्कतीं प्रचरणीं काष्मर्यमयान्परिधीन् सौवर्णराजतौ रुक्मौ द्वे घर्मदुघे धेनुं च छागां च बहिः स्थापयित्वा द्वौ कुशमयौ वेदौ एकं मौञ्जमपरिवासितं मौञ्जरज्जुदाम मुञ्जप्रलवान् रौहिणपिष्टानि सिकताश्चासाद्य गार्हपत्याहवनीययोरुत्तरतः स्फ्येनोद्धृत्यावोक्ष्य सिकताभिः प्रादेशपरिमितौ परिमण्डलौ खरौ कृत्वा शालाया उत्तरे खण्डे तथैव चतुरस्रमुदङ्निष्यन्दनवन्तमुच्छिष्टखरं कृत्वा प्रचरणीयं महावीरं शफाभ्यां परिगृह्य प्रवृञ्जनीये खरे सादयित्वा मौञ्जेन वेदेनापिधाय आहवनीयस्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राग्बिलौ उपशयौ महावीरौ वेदाभ्यां परिगृह्यासाद्य अतिशिष्टां मृदं चासाद्य स्थूणां शङ्कुं चादाय जघनेन गार्हपत्यं परीत्य दक्षिणया द्वारोपनिष्क्रम्य होतृद्वारप्रदेशे गोवत्सबन्धनार्थं स्थूणां निहत्य मौञ्जेन दाम्ना घर्मदुघाया गोर्वत्सं तत्र बद्ध्वा तदुत्तरतः शङ्कुं निहत्य तत्र छागां बद्ध्वा छागायाः शिशुं कटादिनाऽऽच्छाद्य प्रवर्ग्यकर्तॄन् सम्बुद्ध्यन्तेन एहि पदोत्तरेण यज्ञियेन नाम्नाऽऽहूय शालायाश्चतस्रार्यपि द्वाराणि वस्त्रादिना परिश्रित्य पत्नीशाले पत्नीमुपवेश्य तस्यापि द्वारं परिश्रित्याग्नीन् दर्भैः परिस्तीर्य गार्हपत्यस्य दक्षिणतो ब्रह्मयजमानावुपवेश्य सपवित्रायां प्रचरण्यां मदन्तीरप आनीयोत्पूयादद्रान आह । सम्राडासन्द्याद्यासादनप्रभृति प्रचरणीग्रहणान्तं कर्म प्रवर्ग्यसामग्रीसम्पादनमित्युच्यते ॥

८१ ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्याग्नीद्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातः प्रवर्ग्यं विहर प्रस्तोतः सामानि गाय । अयं प्रवर्ग्यारम्भप्रैष इत्युच्यते ॥

८२ ब्रह्मणा भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वा ॐ प्रचरतेत्याज्ञप्तो ऽध्वर्युः प्रचरणीयं महावीरं वेदमपास्य प्रोक्षति । यमाय त्वा सूर्यस्य हरसे । इति । अभिप्राप्नुवन् परान् सम्भारान् प्रोक्षति । अध्वर्युः प्रोक्षितपात्रं स्थानान्तरे सादयति । इदं प्रवर्ग्यपात्रसम्भारप्रोक्षणमुच्यते ॥

८३ अध्वर्युराहवनीये कार्ष्मर्यमयान् परिधीन् परिधाय तस्य समीपे औदुम्बरान् शकलान् वैकङ्कतीं समिधं च सादयित्वा गार्हपत्यसमीपे त्रयोदश वैकङ्कतान् परिधीन् सौवर्णराजतौ रुक्मौ मुञ्जप्रलवान् रौहिणपिष्टानि सादयति । आग्नीध्रः गार्हपत्यस्य पश्चाद्भागे धृष्टिभ्यां प्रतीचोऽङ्गारान्निरूह्य रौहिणकपाले उदकसंस्थे तदुपर्युपधाय मदन्तीभिः रौहिणपिष्टानि संयत्य पिण्डौ कृत्वा कपालयोरधिश्रित्य स्थाल्यां तिरःपवित्रमाज्यमनीयाधिश्रित्योभयं पर्यग्निकृत्वा रौहिणौ पुरोडाशौ श्रपयति । इदं रौहिणपुरोडाशश्रपणमित्युच्यते ।

८४ प्रतिप्रस्थाता मौञ्जवेदाग्रेण महावीरं स्रुवं पिन्वने रौहिणहवन्यौ उपयमनं च सम्मृज्याज्यमुत्पूय रौहिणहवन्योरुपस्तीर्य रौहिणपुरोडाशावभिघार्योद्वास्य रौहिणहवनीभ्यां परिगृह्य वेद्यां दक्षिणं पुरोडाशं दक्षिणपरिधिसन्धिसमीपे पूर्वाह्णिके प्रवर्ग्ये प्राञ्चौ आपराह्णिके तु प्रत्यङ्मुखौ यथाभवतस्तथा सादयति । इदं रौहिणपुरोडाशासादनमित्युच्यते ।

८५ अध्वर्युः प्रचरणीयं महावीरं शफाभ्यां सव्यहस्ते गृहीत्वा आज्यस्थाल्याः सकाशात्सकृदाज्यं स्रुवेण गृहीत्वा ऽनवानं सन्तताः सप्ताहुतीर्गार्हपत्ये जुहोति । प्राणाय स्वाहा व्यानाय स्वाहा । ऽपानाय स्वाहा चक्षुषे स्वाहा । श्रोत्राय स्वाहा । मनसे स्वाहा । वाचे सरस्वत्यै स्वाहा । इति मन्त्रैः ततश्चतस्र आहुतीः पुनः पुनराज्यमादाय जुहोति । दक्षाय स्वाहा । क्रतवे स्वाहा । ओजसे स्वाहा । बलाय स्वाहा । इति मन्त्रैः । सर्वत्र यथालिङ्गं प्राणायेदं न ममेत्यादिरूपो यजमानस्य त्यागः । अयं प्रवर्ग्यारम्भहोम इत्युच्यते ।

८६ महावीरमाज्येनानक्ति । देवस्त्वासविता मध्वानक्तु इति मन्त्रेण । इदं महावीराञ्जनमुच्यते ॥

८७ प्रतिप्रस्थाता राजतं रुक्मं प्रवृञ्जनीये खरे उपगूहति । पृथवीं तपसस्त्रायस्व । इति । इदं रुक्मोपगूहनमुच्यते ॥

८८ अध्वर्युः व्यतिषक्तान् प्रागुदगग्रान् कृत्वा रुक्मोपरि-मञ्जुप्रलवान् कृत्वा प्रदक्षिणमादीपयति । तद्यथा । अर्चिरसि इति पुरतः । शोचिरसि । इति दक्षिणतः । ज्योतिरसि । इति पश्चिमतः । तपोऽसि । इत्युत्तरतः । तान् प्रवृञ्जनीये खरे सम्प्रकीर्य सꣳसीदस्व महाँ असि शोचस्व देववीतमः । विधूममग्ने अरुषं मियेध्यसृज प्रशस्तदर्शतम् । इति तेषु महावीरं साद-यति । इदं खरे महावीरसादनमुच्यते ॥

८९ अञ्जन्तियं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः । पितुर्न पुत्र उपसिप्रेष्ठ आ घर्मो अग्निमृतयन्न सादीत् । इति महावीरमाज्येन पूरयति । इदं महावीराज्यपूरणमुच्यते ॥

९० अनाधृष्या पुरस्तादग्नेराधिपत्य आयुर्मेदाः । पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मेदाः । सुषदा पश्चाद्देवस्य सवितुराश्रोत्रं मेदाः । विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्ये ब्रह्म

...मदः। द्यौ मदो स्तजा मघा... मघा मघोऽस्तपो मघा मना मघाः।
एतैः पञ्चभिर्मन्त्रैः क्रमेण यजमानो महावीरस्य प्राग्दक्षिणतः पश्चिमत उत्तरत उपरि च प्रादेशान् करोति। मन्त्रानध्वर्युरपि पठति। इदं महावीरप्रादेशकरणमुच्यते॥

९१ यजमानो भूमिमभिमृशति। मनोरश्वा असि भूरिपुत्रा विश्वाभ्यो मानाष्ट्राभ्यः पाहि सूपसदा मे भूया मा मा हिंसीः। इति। अध्वर्युः। तपोष्वग्ने अन्तराँ अमित्रान्तपा शंसमररुषः परस्य। तपा वसो चिकितानो अचित्तान्वितेतिष्ठन्तामजरा अयासः। इति गार्हपत्यात् धृष्टिभ्यामुदीचोऽङ्गारान्निरूहति। तैरेनं महावीरं प्रदक्षिणं परिचिनोति। चितः स्थ परिचितः स्वाहा मरुद्भिः परिश्रयस्व। इदं महावीराङ्गारपरिश्रयणमुच्यते॥

९२ महावीरस्य दक्षिणतः प्रागग्रमेकं वैकङ्कतं परिधिं परिदधाति। मा असि। इति मन्त्रेण। तथैव मन्त्रेणोत्तरतो द्वितीयम्। प्रतिप्रस्थाता पश्चादुदगग्रं तृतीयम्। प्रमा असि। इति मन्त्रेण। अनेनैव मन्त्रेण पुरस्ताच्चतुर्थम्। प्रतिमा असि। एतस्य मन्त्रस्यावृत्तया अध्वर्युर्द्वौ परिधी प्रथमद्वितीयवत् क्रमेण परिदधाति। संमा असि। एतन्मन्त्रावृत्त्या प्रतिप्रस्थाता तृतीयचतुर्थवत्परिदधाति। विमा असि। इत्यस्यावृत्त्या द्वौ पूर्ववदध्वर्युः। उन्मा असि। एतदावृत्त्या द्वौ पूर्ववत्प्रतिप्रस्थाता। अध्वर्युस्त्रयोदशं परिधिं महावीरस्य दक्षिणत ऊर्ध्वाग्रमुच्छ्रयति। अन्तरिक्षस्यान्तर्धिरसि। इति। वैकङ्कतपरिधानमिदमुच्यते॥

९३ ततः दिवं तपसस्त्रायस्व। इति सौवर्णरुक्मेणापिदधाति। ततः आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रारुजासि भूयिष्ठभाजो अध ते स्याम। शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौ-





रिवा ऽसि। विश्वा हि माया अवसि स्वधा वो भद्रा ते पूषन्नि-हरातिरस्तु । अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र-त्वदस्ति। एताभिस्तिसृभिर्ऋग्भिर्घर्ममुपतिष्ठते। इदं घर्मोपस्था-नमित्युच्यते ॥

९४ प्रज्वलिते ऽग्नौ सौवर्णरुक्ममपकृष्य धवित्राण्यादत्ते-गायत्रमसि । इत्येकम् । त्रैष्टुभमसि । इति द्वितीयम् । जागत मसि । इति तृतीयम् । गृहीतैर्धवित्रैर्महावीरस्य पश्चात् प्राङ्-मुखो जान्वाच्य युगपत्त्रिरूर्ध्वं धुनोति । मधु मधु मधु । इति मन्त्रेण । स्वोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति । तयोरेकमग्नीधे प्रतिप्रस्थाता प्रयच्छति । होतुरभिष्टवनस्य प्रणवे प्रणवे महावीरस्योपरि धून्वन्तो ऽध्वर्युप्रतिप्रस्थात्राग्नीध्रा महा-वीरं त्रिः प्रदक्षिणीकृत्योत्तरतस्तिष्ठन्ति । इदं महावीरप्रदक्षिण-गमनमुक्तं ॥

९५ ततो ऽध्वर्युः सर्वाणि धवित्राण्यादायात्मनः पश्चि-ममार्गेण परिक्रान्त्वायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे प्रयच्छति । तयोरेकं प्रतिप्रस्थाताऽग्नीधे प्रयच्छति। महावीरस्य पश्चात्प्रा-ङ्मुखो ऽध्वर्युरुपविशति। पुरस्तात्प्रतिप्रस्थाता। उत्तरत आ-ग्नीध्रः । एवमुपविश्य प्रणवे प्रणवे धून्वन्तः स्रुवेण महावीरमा-प्याययन्ति । इदं महावीराप्यायनमुच्यते ॥

९६ होतुः सकाशाद्याभिर्वर्तिकामित्युपश्रुत्याध्वर्युयज-मानौ महावीरमुपोत्थाय प्रेक्षतः । दश प्राचीर्दश भासि दक्षि-णा दश प्रतीचीर्दश भास्युदीचीः । दशोर्ध्वाभासि सुमनस्य मानः । स नो रुचंधेह्यनृणीयमाणः । अग्निष्ट्वा वसुभिः पुर स्ताद्रोचयतु गायत्रेण छन्दसा समारुचितो रोचय । इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतुत्रैष्टुभेन छन्दसा। समारुचितो रोचय।

वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । समा०य । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसा । समा०य । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा समा०य । रोचितस्त्वं देव घर्म देवेष्वसि रोचिषीयाहं मनुष्येषु । सम्राड् घर्म रुचितस्त्वन्देवेष्वायुष्माँ२ऽस्तेजस्वी ब्रह्मवर्चस्यसि । रुचितोऽहं मनुष्येष्वायुष्माँ२ऽस्तेजस्वी ब्रह्मवर्चसी भूयासम् । रुगसि । रुचं मयि धेहि । मयि रुक् । दश पुरस्ताद्रोचसे । दश दक्षिणा । दश प्रत्यङ् । दशोदङ् । दशोर्ध्वो भासि सुमनस्यमानः । सनः सम्राडिषमूर्जन्धेहि । वाजीवाजिने पवस्व । रुचितो घर्मो रुचीय । अयं मन्त्रसमूहो महावीरप्रेक्षणमन्त्र इत्युच्यते ॥

९७ होत्रा अप्नस्वतीमश्विनेत्यृच्युक्तायां सर्वे धवित्राण्यूर्द्ध्वं धारयन्ति । होत्रा ऽरूरुदुषसः पृश्निरग्रिय इत्यृच्युक्तायां रुचितो घर्म इत्युक्त्वा यथेतन्त्रिरपसव्यं परीत्य धवित्राणि निधाय सर्वे घर्ममुपतिष्ठन्ते । अपश्यं गोपामनिपद्यमानम् । आ च परा च पथिभिश्चरन्तम् । ससध्रीचीः सविषूचीर्वसानः । आवरीवर्ति भुवनेष्वन्तः । अत्र प्रावीः । मधुमाध्वीभ्यां मधुमाधूचीभ्याम् । अनु वां देववीतये । समग्निनाऽगत । सन्देवेन सवित्रा । सँ सूर्येण रोचते । स्वाहा समग्निस्तपसाऽगत । सन्देवेन सवित्रा सँ सूर्येणारोचिष्ट । धर्ता दिवो विभासि रजसः । पृथिव्या धर्ता । अन्तरिक्षस्य धर्ता । धर्ता देवो देवानाम् । अमर्त्यस्तपोजाः । हृदे त्वा मनसे त्वा सूर्याय त्वा । ऊर्द्ध्वमिममध्वरं कृधि । दिवि देवेषु होत्रा यच्छ । विश्वासां भुवां पते । विश्वस्य भुवस्पते । विश्वस्य मनसस्पते । विश्वस्य वचसस्पते । विश्वस्य तपसस्पते । विश्वस्य ब्रह्मणस्पते । देवश्रूस्त्वं देवघर्म देवान् पाहि । तपोजां वाचमस्मे नियच्छ

देवा युवम् । गर्भो देवानाम् । पिता मतीनाम् । पतिः प्रजाः नाम् मतिः कविनाम् । सन्देवो देवेन सवित्रा यतिष्ट । स-सूर्येणा ऽरुक्त । आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि । पितानो-ऽसि पिता नो बोध । आयुर्धास्तनूधाः पयोधाः । वर्चोदा वरिवोदा द्रविणोदाः । अन्तरिक्षप्र उरोर्वरीयान् । अशीमाह त्वा मा मा हिꣳसीः । एतत्सर्वकर्तृककर्मोपस्थानमुच्यते ॥

९८ यजमानो गार्हपत्यमुपतिष्ठते । त्वमग्ने गृहपतिर्विशामसि । विश्वासां मानुषाणाम् । शतं पूर्भिर्यविष्ठपाह्यꣳहसः समेद्धारꣳ शतꣳहिमाः । तं द्राविणꣳ हार्दिवानम् । इहैव रातयः सन्तु । इति वदं प्रवर्ग्याङ्गगार्हपत्योपस्थानमुच्यते ॥

९९ प्रतिप्रस्थाता पत्न्यै वेदं प्रदर्श्य । त्वष्टीमतीते सपेय । सुरेता रेतो दधाना वीरं विदेय तव सन्दृशि । मा ऽहꣳ राय-स्पोषेण वियोषम् । इतीमं मन्त्रं वाचयति । अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा । इत्याहवनीये दक्षिणं रौहिणपुरोडाशं जुहोति । ज्योतिष इदं०म । इति त्यागो यज-मानस्य । अयं दक्षिणरौहिणहोम इत्युच्यते ॥

१०० आपराह्णिके प्रवर्ग्ये तु होममन्त्रे अहःपदस्थाने रात्रि-पदं बोध्यम् । ततो ऽध्वर्युः देवस्य त्वा स० माददे । इति म-न्त्रेण रशनामादत्ते । अदित्यै रास्नाऽसि । इति तामभिमन्त्र-यते । प्रतिप्रस्थाता कंसं पिन्वने चाऽऽदाय होतुः पश्चिममा-र्गेण गच्छति । अध्वर्युः शालाया अन्तस्तिष्ठन् घर्मदुघां गामु-पांशु त्रिराह्वयति । इड एहि । अदित एहि । सरस्वत्येहि । इति त्रिभिर्मन्त्रैः । दक्षिणद्वारेण शालातो बहिर्निष्क्रम्य । गङ्ग एहि । इति चिरुच्चैराह्वयति । तां गां तया रशनया बध्नाति । अदि-त्या उष्णीषमसि । इति । वायुरस्यैडः । इति वत्समभिमृशति । पूषा त्वोपावसृजत्वश्विभ्यां प्रदापय । इति पूर्वं स्थूणायां बद्ध-

वत्सं मुञ्चति । यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः । इति गोस्तनमभिमन्त्रयते । प्रस्नुतायां गवि उस्रघर्मं शिंषोस्नघर्मं पाहि घर्माय शिंष्व । इति वत्समपनयति । बृहस्पतिस्त्वोपसीदतु । इति गां नियुज्य तत्समीपे दोहनार्थमुपविशति । दानवः स्थ पेरवो विष्वग्वृतो लोहितेन । इति गोस्तनान् स्वकरेण सम्मृशति । होत्रा आदशभिर्विवस्वत इत्यृच्युक्तायाम् । अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय पिन्वस्व पिन्वने गां दोहयते । अतिशिष्टं कंसे । प्रतिप्रस्थाता तूष्णीं स्वपिन्वने छागां दोहयते । रशनादानप्रभृतिरेतदन्तो विधिर्घर्मदुघादोहनप्रकार उच्यते ॥

१०१ होत्रा उत्तिष्ठ ब्रह्मणस्पतइत्युक्ते ऽध्वर्युः प्रतिप्रस्थात्रे गोपयः प्रदाय यथागततमागत्य शफोपयमनान्यादत्ते । तद्यथा । गायत्रो ऽसि । इति प्रथमं शफम् । त्रैष्टुभो ऽसि । इति द्वितीयम् । जागतमसि । इत्युपयमनम् । होत्रा उपद्रव पयसेत्युक्ते प्रतिप्रस्थात्रा आह्रियमाणे पयसी अभिमन्त्रयते । सहोर्जो भागेनोपमेहीन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजतावट् । इतिमन्त्रेण । महावीरस्य पुरस्तात्प्रत्यङ्मुख उपविश्य । स्वाहा । इति स्वपिन्वनेन गोपयो महावीरे गोपयः- प्रक्षेप उच्यते ॥

१०२ मधु हविरसि सूर्यस्य तपस्तप । इति पयः प्रक्षेपान्निर्गतमूष्माणमन्वीक्षते । इदं घर्मोष्मान्वीक्षणमुच्यते ॥

१०३ प्रतिप्रस्थाता स्वपिन्वनस्थं छागापयस्तूष्णीं महावीरे ऽवनयति । उभयोः पयसोः शेषमेकीकृत्याध्वर्युस्तृतीयमवनयति । कंसस्थं गोपय उपयमने प्रत्यवनीयाङ्गारान्

प्रत्यूह्य द्यावापृथिवीभ्यां त्वा परिगृह्णामि । इति महावीरं शफाभ्यां परिगृह्णाति । इदं सिद्धघर्मम हावीरग्रहणमुच्यते ॥

१०४ सव्ये हस्ते शफाभ्यां महावीरं धृत्वा मौञ्जेन वेदेन दक्षिणहस्तेनाधस्तान्मार्जयित्वा। अन्तरिक्षेणात वोपयच्छामि। इति उपयमनेनोपयच्छति । देवानां पितॄणामनुमतो भर्तुं शकेयम् । इत्यनेन महावीरमादायोत्तिष्ठति । इदं महावीरो-त्थापनमुच्यते ॥

१०५ तेजोऽसि तेजोऽनुप्रेह्यग्निर्मा पृथिव्याः पातु वायुर-न्तरिक्षात्सूर्यो दिवो दिविस्पृङ् मा मा हिंसीरन्तरिक्षस्पृङ् मा मा हिंसीः पृथिविस्पृङ् मा मा हिंसीः सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि । इत्यनेन मन्त्रेण महावीरं प्राङ्हरति । समुद्राय त्वा वाताय स्वाहा सलिलाय त्वा वा-ताय स्वाहाऽनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा वसवे त्वा वाताय स्वाहा । यथोपपादं षट् मन्त्रानाह । अग्नये त्वा वसुमते स्वाहा । सोमाय त्वा रुद्रवते स्वाहा । वरुणाय त्वा ऽदित्यवते स्वाहा । बृहस्पत-ये त्वा विश्वदेव्यावते स्वाहा । सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा । यमाय त्वा ऽङ्गिरस्वते पितृमते स्वाहा । प्रतिमन्त्रमवमानं यथोपपादमित्युच्यते ॥

१०६ एते षट् पूर्वोक्ताश्च सप्त मन्त्रा महावीरप्राङ्नयन-मन्त्रा उच्यन्ते ॥

१०७ विश्वा आशा दक्षिणसत् । इति दक्षिणत आसीनं ब्रह्माणमीक्षते । विश्वान् देवानयाडिह । इति पश्चादासीनं होतारम् । स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना स्वाहा ऽग्नये यज्ञियाय शंयजुर्भिः । इति सव्येन पदा वेद्या दक्षिणतो ऽत्याक्रामति । इदं घर्महोमार्थदक्षिणात्याक्रमणमित्युच्यते ॥

रनुवां द्यावापृथिवीमꣳसाताम् । इति यजमानं वाचयति । उच्चैराश्राव्य आग्नीध्रेण प्रत्याश्राविते । घर्मस्य यज । इति होतारं प्रेष्यति । होत्रा वषट्कृते स्वाहेन्द्रावट् । इति पुनर्जुहोति । इन्द्रायेदं० मेति त्यागो यजमानस्य । घर्ममपातमश्विना हार्दिवानमहर्दिवाभिरूतिभिरनुवां द्यावापृथिवी अमꣳसातां तं प्राठ्यं यथावणान्नमो दिवे नमः पृथिव्यै दिविधा इमं यज्ञं यज्ञमिमं दिविधा दिवं गच्छाऽन्तरिक्षं गच्छ पृथिवीं गच्छ पञ्च प्रदिशो गच्छ देवान् घर्मपान् गच्छ पितॄन् घर्मपान् गच्छ । इत्यध्वर्युर्यजमानं वाचयति । अयं घर्मयाग उच्यते ॥

१०९ प्रतिप्रस्थाता पिन्वनेनोपयमनादुपहृत्य महावीरं पूरयित्वा शफाभ्यां परिगृह्याध्वर्युप्रतिप्रस्थातारौ सहाहवनीये प्रतिमन्त्रं स्रावयतः । इषे पीपिहि । ब्रह्मणे पीपिहि । क्षत्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः पीपिहि । वनस्पतिभ्यः पीपिहि । द्यावापृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि । यजमानाय पीपिहि । उपांशु मह्यं उच्चैः । ज्यैष्ठ्याय पिपीहि । इदं उभयकर्तृकघर्मस्रावणमुच्यते ॥

११० अध्वर्युरेवाभिमुखं प्रदक्षिणं प्रागादिषु स्रावयति । त्विष्यै त्वा । द्युम्नाय त्वा । इन्द्रियाय त्वा । भूत्यै त्वा । इति क्रमेण चतुर्भिर्मन्त्रैः । इदमध्वर्युकर्तृकघर्मस्रावणमुच्यते ॥

१११ उपयमने महावीरस्थं पयो ऽवनीयोदङ्ङत्याक्रम्यान्तर्वेदि प्राग्बिलं महावीरं सादयति । प्रतिप्रस्थाता राजतं रुक्ममुद्वासनीये खरे उपगूहति । अध्वर्युस्तस्मिन्महावीरं सादयति । धर्मासि सुधर्मा मे ऽन्यस्मे ब्रह्माणि धारय नेत्वा-



वातः स्कन्दयात् । इति मन्त्रेण । इदमुद्वासनीये महावीरसादनमुच्यते ॥

११२ ततः औदुम्बरशकलेनोपयमनादुपहत्याऽऽहवनीयस्य पूर्वार्धे क्षारयति । पूष्णे शरसे स्वाहा । पूष्णेशरस इ०मेति यजमानः । तच्छकलं घर्मसिक्तभागो यथान्तः स्यात्तथा मध्यमे परिधौ सादयित्वा द्वितीयेन शकलेनोपयमनादुपहत्य पूर्वार्धे क्षारयति । ग्रावभ्यः स्वाहा । ग्रावभ्य इदं० मेति यजमानः । अध्वर्युर्द्वितीयमपि शकलं प्रथमवत्सादयित्वा तृतीयेनोपहत्य मध्ये प्रश्च्योतयति । प्रतिरेभ्य इदं०मेति याजमानम् । तथैव सादयित्वा चतुर्थेनोपहत्याऽपरार्धे द्यावापृथिथिवीभ्याᳪं स्वाहा । द्यावापृथिवीभ्यामिदं०ममेति यजमानः । तच्चतुर्थं शकलं उपरि सिक्तदेशं भस्मान्ते उपगूह्य पञ्चमेनोपहत्य प्राचीनावीती भूत्वा आहवनीयस्य दक्षिणार्धे क्षारयति । पितृभ्यो घर्मपेभ्य इदमु० मेति याजमानम् । अध्वर्युर्यजमानावप उपस्पृशतः । इदं पञ्चमं शकलं बहिः सिक्तदेशं दक्षिणपरिधौ सादयित्वा षष्ठेन शकलेन महावीरपिन्वनकं शेषपयमनलेपेषु सम्मृज्योत्तरार्धे क्षारयति । रुद्राय रुद्रहोत्रे स्वाहा । रुद्राय रुद्रहोत्रइदमु० मेति याजमानम् । इदं शकलक्षारणमुच्यते ॥

११३ अध्वर्युर्यजमानावप उपस्पृशतः । तत्षष्ठं शकलमुत्तरेणातीकाशान् अनन्वीक्षमाणो निरस्यति । पाप्मना सह निरयं गच्छ योस्मान् द्वेष्टि यं च वयं द्विष्मः । इति मन्त्रेण । अप उपस्पृश्य । ततः पञ्चशकलान् सिक्तदेशान् अद्भिः संस्पृश्याहवनीये ऽनुप्रहरति । इदं शकलानुप्रहरणमुच्यते ॥

११४ प्रतिप्रस्थातोत्तररौहिणं जुहोति । अहर्ज्योतिः केतुना जुषताᳪं सुज्योतिर्ज्योतिषाᳪं स्वाहा । इति मन्त्रेण ।

पूर्ववद्याजमानम् । आपराह्णिके तु प्रवर्ग्ये रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा । इति विशेषः अयमुत्तररौहिणहोम उच्यते ॥

११५ अध्वर्युः उत्पत्तिक्रमेणाग्नीन् परिषिञ्चति । सत्यन्त्वर्तेन परिषिञ्चामि । आपराह्णिके तु ऋतन्त्वा सत्येन परिषिञ्चामि । इति मन्त्रे विशेषः इदं गार्हपत्यादि परिषेचनमुच्यते ॥

११६ उपयमनं गार्हपत्ये नीत्वा ऽन्तरितमिति प्राकृतेन मन्त्रेण पर्यग्निं करोति । इदमुपयमनपर्यग्निकरणमुच्यते ॥

११७ सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो मा देवाः स्वस्ति सम्पारयन्तु पशुभिः । इत्युपयमनं सम्मृशति । आपराह्णिके तु अस्मिन्मन्त्रे प्रातर्यावपदस्थाने सायंयावपदस्योहः । नम ईशानाय प्रजाः पशवो मे वर्धन्तामहं यजमानो मारिषम् । गार्हपत्यस्य पश्चादुपसादनीयकूर्चे उक्तमन्त्रेण सादयति । दशहोतारं व्याचष्टे । भूर्भुवः सुवरुर्वन्तरिक्षमन्विह्ययं पन्था विततो देवयानो येनायन्नृषयः स्वर्गकामास्तेन गच्छामि परमे व्योमन् यथा न हीयेयꣳ सुकृताꣳ सकाशात् । अयमुपसादनाङ्गजप उच्यते ॥

११८ पुनः प्राङादुत्य नम ईशानायेत्यादिमन्त्रेणाहवनीयस्य पश्चादुपसादनीयकूर्चे सादयति । वैकङ्कतीं समिधं तूष्णीमाहवनीये आदधाति । तया देवतयाङ्गिरस्वद् ध्रुवासीद । इत्येतेनयजुषा ताअस्य सूददोहस इत्यृचा च तां समिधमभिमृशति । इदं प्रवर्ग्योत्तरसमिदाधानमुच्यते ॥

११९ विद्युदसि विद्य मे पाप्मानम् । इत्यप उपस्पृशति । ततः प्रथमामाहुतिं जुहोति । भूः स्वाहा । इति । अग्नयद्द-दं० मेति याजमानम् । आपराह्णिके तु प्रवर्ग्ये । अपोपरो-





माहोरात्रियै मापाह्यैषा ते अग्ने समित्तया समिध्यस्वायुर्मेऽदा वर्चसा माऽऽह्नीः । इतिमन्त्रेण समिदाधानम् । समिदभिमर्शनं पूर्ववत् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । इति प्रथमाहुतिः । त्यागः पूर्ववदिति विशेषः । द्वितीयादिदिनेषु पैतृवाह्णिके प्रवर्ग्ये तु । अपीपरो मारात्रिया अह्नो मा०माऽऽह्नीः । इति समिदाधानम् । अभिमर्शनमन्त्रौ पूर्वोक्तौ । सूर्यो ज्योतिर्ज्योतिः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । इति होममन्त्रः । सूर्यायेदं०मेति याजमानम् । इति विशेषः अयं प्रवर्ग्योत्तरप्रथमाहुतिहोम उच्यते ॥

१२० उपयमनं सकृदतिबाल्यकूर्चं निधाय दक्षिणावृदावर्त्य । उपप्रेत सकृच्छ्वभ्रं मा भागिनां भागधेयं प्रमायि । समर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धत्त । इति गार्हपत्यमीक्षते । इदं पूर्वाहुत्यङ्गगार्हपत्यावेक्षणमुच्यते ॥

१२१ एवं समिधि पूर्वाहुतिं हुत्वा तस्या आहुतेः पूर्वस्यां समिध्येव पूर्वाहुत्यपेक्षया ऽधिकद्रव्यां प्रत्यग्विलया स्रुचा द्वितीयां जुहोति । प्रजापतये स्वाहा । इति । प्रजापतय इदं०मेति यजमानः । अयं द्वितीयाहुतिहोम उच्यते ॥

१२२ अध्वर्युः उपयमनं त्रिरतिबाल्यकूर्चं निधाय । दृष्टिरसि वृश्च मे पाप्मानम् । इत्यपःस्पृशति । ओषधीभ्यस्त्वौषधीर्जिन्व । इत्युपयमनलेपं कूर्चे उत्तरतो निमार्ष्टि । ओषधीभ्य इदमिति याजमानम् । प्राचीनावीती स्रुचो दक्षिणतः कूर्चे लेपमवमार्ष्टि । पितृभ्यस्त्वा पितॄन् जिन्व । इति । यजमानः प्राचीनावीती पितृभ्य इदं० मेत्याह । यज्ञोपवीत्यप उपस्पृशति । इदं कूर्चे लेपमार्जनमुच्यते ॥

१२३ उपयमनं होत्रे प्रदाय होत्रध्वर्युब्रह्मप्रतिप्रस्थातृप्रस्तोत्राग्नीध्रयजमानाः क्रमेण परस्परमुपहूयाऽऽग्नेग भवपन्ति ।

यजमानो होत्रादीननुपहूय प्रत्यक्ष भक्षयति । हूतꣳ हविर्मधु-
हविरिन्द्रतमे ऽग्नौ पिता नो ऽसि मा मा हिꣳसीरश्याम ते
देवघर्म मधुमतो वाजवतः पितुमतोऽङ्गिरस्वतः स्वधाविनोऽशी-
महि त्वा मा मा हिꣳसीः । इति । इदं घर्मभक्षणमुच्यते ॥

१२४ तत उच्छिष्टखरे आचामति । आग्नीध्र उच्छिष्टखरे
उपयमनं प्रक्षाल्याऽऽहरति । अध्वर्युस्तदादाया ऽऽहवनीये
निष्टप्याऽद्भिः पूरयित्वोदग्दिशि किञ्चिज्जलं प्रक्षिपति । सप्त-
र्षीन् प्रीणीहि सप्तर्षीन् जिन्व सप्तर्षिभ्यः स्वाहा । इति ।
सप्तर्षिभ्य इदं० मेति याजमानम् । जघनेन गार्हपत्यं प्रक्षिप-
ति । इदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहा । इति ।
अग्नये वैश्वानरायेदं० मेति याजमानम् । अन्तर्वेदि प्रक्षिप-
ति । अक्षित्यामक्षिताहुतिं जुहोमि स्वाहा । इति । अक्षि-
त्या इदं० मेति यजमानः । पूर्ववदग्नीन् परिषिञ्चति । वेदि-
मध्ये प्राग्बिलमुपयमनं निधाय तस्मिन्सौवर्णराजतौ रुक्मौ
सदत्तीश्चानीय हिरण्यवर्णाः शुचयः पावका इति चतसृभि-
र्ऋग्भिरन्ते मार्जयित्वा ऽपस्तत्रैव निनीया ऽऽज्यस्थाल्याः स्रुवे-
णोपहत्य प्रतिमन्त्रं प्रायश्चित्ताहुतीर्जुहोति । प्राणाय स्वा-
हा । व्यानाय स्वाहा । अपानाय स्वाहा । चक्षुषे स्वाहा ।
श्रोत्राय स्वाहा । मनसे स्वाहा । वाचे सरस्वत्यै स्वाहा ।
पूष्णे स्वाहा । पूष्णे शरसे स्वाहा । पूष्णे प्रपथ्याय स्वाहा
पूष्णे नरन्धिषाय स्वाहा । पूष्णे घृणये स्वाहा । पूष्णे नरु-
णाय स्वाहा । पूष्णे साकेताय स्वाहा । नमस्ते घर्मभूपतये
स्वाहा । नमस्ते घर्मभुवनपतये स्वाहा । नमस्ते घर्मभूतानां
पतये स्वाहा । घर्माय स्वाहा । अश्विभ्याꣳ स्वाहा । इन्द्रा-
य स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे
स्वाहा । यथालिङ्गत्यागो यजमानस्य । इति एते प्रवर्ग्यप्रा-



यश्चित्ताहुतिमन्त्रा उच्यन्ते ॥

१२५ ऋक्तो यजुष्टश्च श्रेषप्रायश्चित्तद्वयं दर्शपौर्णमासवद्धुत्वा सामतो यज्ञश्रेषप्रायश्चित्तं करिष्ये । इति यजमानेन सङ्कल्पे कृते ब्रह्मणा स्वः स्वाहेत्याहवनीये होमे कृते उपयमनमन्तर्वेदि प्राग्बिलं सादयित्वा परिघर्म्यमासन्द्यां निदधदाह । घर्मायोत्साद्यमानायानुब्रू३हि । अयं घर्मोत्सादनप्रैष उच्यते ॥

१२६ तत उपयमनं सम्राडासन्द्यां प्राग्बिलं सादयति । स्वाहा त्वा सूर्यस्य रश्मिभ्यः । इति । आपराह्णिके तु प्रत्यग्बिलं सादयति । स्वाहा त्वा नक्षत्रेभ्यः । इति । सर्वाणि घर्मपात्राणि संसाद्य । शन्नो वात इति शान्तिं जपन्ति । उपमनादीनि घर्मपात्राणि परिघर्म्यपदवाच्यानि ॥

१२७ महापुष्करं जुहूसदृशं महादण्डं पात्रमुपयमनमित्युच्यते ॥

१२८ यज्ञियकाष्ठनिर्मिते महावीरधारणार्थं मध्यभागे वर्तुले द्वे शफपदवाच्ये ॥

१२९ विकङ्कतकाष्ठनिर्मितं जुहूसदृशं पात्रं प्रचरणीपदेनोच्यते ॥

१३० गार्हपत्यस्योत्तरतः प्रादेशपरिमाणं सिकतानिर्मितं मण्डलं प्रवृञ्जनीयखर इत्युच्यते ॥

१३१ तथैवाहवनीयस्योत्तरतः कृतं मण्डलमुद्वासनीयखर इत्युच्यते ॥

१३२ यस्मिन्महावीरे घर्मः पच्यते स प्रचरणीयमहावीरपदवाच्यः ॥

१३३ उप समीपे शयाते इति व्युत्पत्त्या द्वौ महावीरावुपशयपदार्थौ ॥

१३४ तत उपसदिष्टिः। उपसदिष्ट्या यक्ष्ये। इति सङ्कल्पयति। अयमुपसदिष्टिसङ्कल्प उच्यते॥

१३५ अग्निः सोमो विष्णुरिति प्रधानदेवताः। आज्यं द्रव्यम्। अध्वर्युः स्फ्यमाददान आह। अग्नीन्मदन्तीरधिश्रय हविरधिश्रयैह्युपसीद। अयं हविरधिश्रयणप्रैष उच्यते॥

१३६ अत्रेध्माबर्हिषोराहरणं नास्ति। शुल्बप्रभृति कर्म समन्त्रकं प्रकृतिवत्करोति। इध्मसम्भरणमन्त्रे ततस्त्वां चतुर्दशधेत्यूहः। वेदं परिभोजनीयांश्च कृत्वा कर्मणे वामित्यादि करोति। आतिथ्येष्ट्यन्त एव प्रस्तरे बर्हिः परिधिषु शकलानीत्यादिमन्त्रवत्कृतं चेत्तदेदानीं पूर्वोक्तप्रैषमुक्त्वा कर्मणे वामित्यादि करोति। अग्निपरिस्तरणानन्तरं स्फ्यमग्निहोत्रहवणीं जुहूमुपभृतं स्रुवमाज्यस्थालीं स्रुवसंसादनार्थं पात्रान्तरं वेदं वेदाग्राणीति पात्राण्यासादयति। ब्रह्मोपवेशनम्। पृषट्यास्तरणम्। पवित्रकरणम्। यजमान वाचं यच्छेति प्रैषः। वेषाय त्वेत्यग्निहोत्रहवणीमादाय। प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इति प्रतितपति। अग्निहोत्रहवण्यां मदन्तीरानीय प्रोक्षणीवत्संस्कृत्य शुन्धध्वमित्यादिप्राकृतमन्त्रेणोत्तानानि पात्राणि प्रोक्ष्य आज्यस्थाल्यां प्राकृतमन्त्रेणाज्यमानीय तथैव पर्यग्नि कृत्वा अयं वेद इत्यादिना मन्त्रेण वेदमादाय प्रकृतिवद्वेदिं सम्मार्ष्टि। देवस्य त्वेत्यादिना स्फ्यमादाय इन्द्रस्य बाहुरसीत्यादिना सम्मृश्य पृथिव्यै वर्मासीत्यादिनाऽस्तीर्णबर्हिष उपरि दर्भं निधाय स्तम्बयजुर्हरति। नात्रमन्त्रेण वेदिखननम्। अतएव तन्मन्त्रोपि न। स्फ्यं प्रकृतिवत् स्तब्ध्वा। मदन्तीरासादयेध्माबर्हिरुपसादय स्रुवं च सम्मृड्ढि हविषो देहि। इतिसम्प्रेष्यति। आग्नीध्रः स्रुवं स्रुवमन्त्रेण सम्मृज्य स्रुचौ ध्रौवमन्त्रेण सम्मार्ष्टि। अध्वर्युः ध्रौवमन्त्र-

णाष्टकृत्वो जुह्वां गृह्णाति। उपभृति चतुर्वारम्। आज्यस्थाल्याज्यं पात्रान्तरेऽवनीय तस्यामाज्यस्थाल्यां सकृत् ध्रौवमन्त्रेण गृहीत्वा पात्रान्तरं स्रुवं च वेद्याः पश्चान्निदधाति। ततो वेद्यां स्रुचौ स्वन्वमन्त्रेणासाद्य ध्रौवमन्त्रेण तूष्णीं वा ऽऽज्यस्थालीं सादयति। एता असदन्निति मन्त्रे एते असदतमिति ता विष्णो इत्यत्र ते विष्णो इति चोहः। पात्रान्तरस्याज्येन स्रुवमभिपूर्य स्योनो मे सीदेत्यादिना स्रुवां दक्षिणतः स्थापनादि करोति। ऋषभो ऽसीत्यादिना आज्यस्थाल्यामाज्यमवनयति। यजमानो यन्मे अग्न इत्यादिमन्त्रं जपति। अध्वर्युः प्रदक्षिणमावृत्य जघनेन गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टे। सेनेन्द्रस्य। धेना बृहस्पतेः। पथ्या पूष्णः। वाग्वायोः। दीक्षा सोमस्य। पृथिव्यग्नेः। वसूनां गायत्री। रुद्राणां त्रिष्टुप्। आदित्यानां जगती। विष्णोरनुष्टुप्। वरुणस्य विराट्। यज्ञस्य पङ्क्तिः। प्रजापतेरनुमतिः। मित्रस्य श्रद्धा। सवितुः प्रसूतिः। सूर्यस्य मरीचिः। चन्द्रमसो रोहिणी। ऋषीणामरुन्धती। पर्जन्यस्य विद्युत्। चतस्रो दिशः। चतस्रो ऽवान्तरदिशाः। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्विषिश्चापचितिश्च। आपश्चौषधयश्च। ऊर्क् च सूनृता च देवानां पत्नयः। एते मन्त्रा देवपत्नीसंज्ञकाः॥

१३१ ततः अग्नये समिध्यमानायानुब्रू३हि। इत्यादि। इध्मं सकृद्वा त्रिर्वा ऽभ्यादधाति॥ सामिध न परिशिनष्टि। अनुयाजानामभावात्। वेदेनोपवाजयति। आज्यस्थाल्याः स्रुवेणाज्यमादाय स्रौवाघारेण प्रचर्य आग्नीध्रं प्रेष्यति। अग्नीदग्नीन् त्रिस्त्रिः सम्मृड्ढि। इति। नाऽत्र जौहव आघारो होता देवान्यमत्सीद होतः। इत्ययमत्र

अग्नये इत्युपांशु । अनुब्रूहि इत्युच्चैः । अत्याक्रम्याऽऽश्राव्य प्रत्याश्राविते अग्निं इत्युपांशु यज इत्युच्चैराह । होतुर्वषट्कारे आहवनीयस्य पूर्वार्धेऽर्धमाज्यं जुहोति । तत्रैव स्थितः सन्नर्धेनाज्येन मध्ये सोमं यजति । उपभृत्स्थमाज्यं जुह्वां समावपमान आह । विष्णवे ऽनुब्रूहि । इति वषट्कृते पश्चात्सर्वं जुहोति । सर्वत्र दक्षिणरसीत्यादिना यजमानोऽनुमन्त्रयते । यथालिङ्गं त्यागं च पठति । उदङ्ङत्याक्रम्य यथाऽयतनं स्रुचौ सादयति । इयमुपसदिष्टिरिति गीयते ॥

१३८ ततोऽग्नीन्मदन्त्यापाः३ः इत्यादि निह्नवान्तं पूर्ववत् । ततः सव्यहस्ते प्रस्तरं धृत्वा आज्यस्थाल्याज्येन पूर्णं स्रुवं प्रस्तरोपर्यग्रभागे इषुवत् धृत्वा प्रथमामुपसद जुहोति । या ते अग्ने याशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा । इति । अग्नय इदं० मेति यजमानः । परिधिषु शकलानुपसङ्गृह्णाति । प्रस्तरे बर्हिर्यावन्मात्रं सङ्गृह्णाति । तदुभयं स्वन्द्यया ऽविग्रथ्या ऽऽहवनीये ऽतिवाल्याद्भिरभ्युत्क्ष्योत्तरतः सादयति । अयमुपसद्धोम उच्यते ॥

१३९ प्रथमायामुपसदि यत्र स्रुचः सादितास्ततः प्राक् द्वितीयायामुपसदि सादनीयाः । ततोऽपि प्राक् तृतीयायां त्वरमाणा इव ऋत्विज उपसद्भिः प्रचरेयुः । न कृताकृतमाद्रियेरन् । अग्रेण शालां तिष्ठन् सम्प्रेष्यति । सुब्रह्मण्य सुब्रह्मण्यामाहूय त्रिस्तनव्रतं प्रयच्छत । इति । अयं त्रिस्तनव्रतप्रैषः उच्यते ॥

१४० प्रतिप्रस्थाता ऽध्वर्युरन्यो वा कश्चिद्यजमानाय व्रतं प्रयच्छति । यजमानो मध्यन्दिने परिश्रित्य व्रतयति ।



या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा इति । समानमन्यत् । स्थूणाशङ्कुनिखननमृदासन्द्यभिरक्करणानि वर्जयित्वा । एवमापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्योपनिष्क्रम्य सम्प्रेष्यति सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिस्तनव्रतं दोहयत । इति अयं त्रिस्तनव्रतदोहनप्रैष उच्यते ॥

१४१ उपसमिन्धनवेलायामग्नीन् ज्योतिष्मत इत्यादि करोति । त्रिस्तनव्रतमर्धरात्रे प्रयच्छति । अपररात्रे सम्प्रेष्यति । द्विस्तनव्रतमर्धरात्रे प्रयच्छति । अपररात्रे सम्प्रेष्यति । द्विस्तनव्रतं दोहयत । इति । अयं द्विस्तनव्रतदोहनप्रैष उच्यते ॥

१४२ पुनरग्नीन् ज्योतिष्मतइत्यादि । उदितआदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । या ते अग्ने रजाशया तनू०वर्धी० स्वाहा । इति मध्यमामुपसदं जुहोति । अयं मध्यमोपसद्धोम उच्यते ॥

१४३ उपनिष्क्रम्य सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं प्रयच्छत । इति । कश्चिद्व्रतं प्रददाति । अथ महावेदिप्रकारः । आहवनीयपूर्वशङ्कोः सकाशात् षट् प्राञ्चि पदानि प्रक्रम्य शालामुखीयशङ्कुं निहन्ति । तस्माच्छङ्कोः सकाशात् षट्त्रिंशत्पदेषु यूपावटीयं शङ्कुं निहन्ति । शालामुखीयाद्दक्षिणोत्तरयोः पञ्चदशपदे क्रमेण शङ्कुं निहन्ति । तौ महावेद्याः श्रोणिस्थानम् । यूपावटीयात् द्वादशपदे दक्षिणोत्तरयोः क्रमेण द्वौ शङ्कू निहन्ति । तौ महावेद्या अंसस्थानम् । अनयाशानेन प्रमाय समन्तं स्पन्द्यायारज्ज्वा महावेदिं परिस्तनोति । प्राकृतवेदिवन्मध्यसूत्रं पृष्ठ्यासंज्ञकम् । इयं महावेदिरित्युच्यते ॥

१४४ यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि सुद-

पदानि प्रक्रम्य मध्यम औत्तरवेदिकः शङ्कुः । तस्मात्पञ्च दक्षिणा पञ्चोदञ्चि क्षुद्रपदानि प्रक्रम्य शङ्कू निहन्ति । तौ उत्तरवेद्याः श्रोणिस्थानम् । यूपावटीयात्प्रत्यगर्धं प्रक्रम्य चत्वार्युदञ्चि प्रक्रम्य तावंसौ । अक्ष्णया प्रमायस्पन्द्यया परितनोति । इयं सौमिक्युत्तरवेदिरुच्यते ॥

१४५ मध्यमादौत्तरवेदिकात् षट् प्रत्यञ्चि पदानि प्रक्रम्य दक्षिणासप्रमं प्रक्रम्य तत्र स्फ्यं निदधाति । स देश उपरवाणां काल उच्यते ॥

१४६ महावेद्या उत्तरांसीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि पदानि प्रक्रम्य उदक् त्रयोदशं प्रक्रामति । स सौमिक उत्कर उच्यते ॥

१४७ एवं मीत्वा वेदादानवेदिसम्मार्जने केचिदिच्छन्ति । महावेदिं परिस्तीर्य उपरवाणां काले स्तम्बयजुर्हरति । पाणी संमृश्य स्फ्यादानादि पशुबन्धवत्करोति । महावेद्याः पूर्वं परिग्राहं परिगृह्णाति । इमां नराः कृणुत० मादित्यवतीं विश्वदेव्यावतीं ब्रह्मन्नुच्येत् । महावेद्याः सकाशात् आग्नीध्रस्त्रिर्मृदं हरति । अथाग्रेण शालां तिष्ठन् सम्प्रैषमाह । वेदिकारा वेदिं कल्पयत प्रस्थलोनि भिन्दत प्रतिनिम्नान् पूरयत किंशारूणि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठत । इत्ययं वेदिकारप्रैष उच्यते ॥

१४८ अध्वर्युपुरुषाः स्फ्यपरश्वस्त्र्यादिभिस्तथा कुर्वन्ति । अध्वर्युर्महावेद्या उत्तरांसीयाच्छङ्कोः-सकाशाद्वेद्यन्तेन त्रीणि प्रत्यञ्चि पदानि प्रक्रम्योदगर्द्धे पदे प्रक्रामति । स देशश्चात्वालमध्य उच्यते ॥

उदगेकमेव चात्वालदक्षिणान्तो वा भवति । तच्चात्वालं परिलिखति । पशुवदुत्तरनाभिप्रच्छादनान्तं करोति ।

आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य उपनिष्क्रम्य सम्प्रेष्यति । सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयत । इति । तदर्धरात्रे प्रयच्छति । समानमन्यत् । अग्नीन् ज्योतिष्मत इत्यादि । अपररात्रे संशास्ति । एकस्तनव्रतं दोहयताग्नीन् ज्योतिष्मत इत्यादि । उदितआदित्ये उक्तप्रकारेण वाग्विसर्गानन्तरं उत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । या ते अग्ने हराशय तनूर्वर्षिष्ठा० स्वाहा । इत्युपसद्धोममन्त्रे विशेषः । शालाया अग्रे तिष्ठन् सुब्रह्मण्यामाह्वयाऽर्धस्तनव्रतं प्रयच्छत इत्याह । कश्चिद्यजमानाय व्रतं प्रयच्छति । तदानीमेवापराह्णिके प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य । सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्यावृताप्रवर्ग्यं सꣳसादयोद्वासनाय । इति । अयं प्रवर्ग्योद्वासनमेव उच्यते ॥

१५० यदं त्रेधा विभज्य नमो वाचइति शान्तिं पठन्ति । अयं प्रवर्ग्योत्तरशान्तिपाठ उच्यते ॥

१५१ ततः प्रतिप्रस्थाता अग्रेणाहवनीयं तृणानि संस्तीर्य तदुपरि परिघर्म्यं सादयति । तथाहि । प्रवृञ्जनीयोद्वासनीयौ खरौ पृथक् सतयोः स्थापनीयौ । आग्नीध्र स्तत्रैवोच्छिष्टखरं सतेस्थापयति । दक्षिणद्वारेण शालाया बहिर्गत्वा तं खरं मार्जालीयदेशे न्युप्य यथागतमेति । अध्वर्युः शालाया द्वाराणि परिश्रित्य प्राग्वंशएव पत्नीमुदग्दशेन वस्त्रेणाच्छाद्य अग्नीन् परिस्तीर्य दक्षिणतो ब्रह्मयजमानावुपवेश्य गार्हपत्ये आज्यं संस्करोति । प्रतिप्रस्थाता आहवनीये शलाकमिध्ममादीप्य मुखदघ्ने धारयन् पुरस्तात्प्रत्यङ्मुखस्तिष्ठति । अध्वर्युः पश्चात् प्राङ्मुखस्तिष्ठन् स्रुवाहुत्या अभिजुहोति । घर्म या ते दिवि शुग्या गायत्रे छन्दसि या ब्रा-

क्षणे या हविर्धाने तां तएतेनावयजे स्वाहा । इति । घर्मा-येदम्० मेति यजमानः । प्रतिप्रस्थाता तमिध्ममग्नौ प्रक्षिप्या-न्यमिध्ममादीप्य नाभिदघ्ने धारयति । अध्वर्युः द्वितीया-माहुतिं जुहोति । घर्म या ते ऽन्तरिक्षे शुग्या त्रैष्टुभे छन्दसि या राजन्येया ऽग्नीध्रे तां तएतेनावयजे स्वाहा । इति । प्र-तिप्रस्थाता तमिध्मं प्रक्षिप्याऽपरमादीप्य जानुदघ्ने धार-यति । अध्वर्युः तृतीयामाहुतिं जुहोति । घर्म या ते पृथि-व्याꣳ शुग्या जागते छन्दसि या वैश्ये या सदसि तां तएते-नावयजे स्वाहा । इति । उभयत्र त्यागः प्रथमवत् । प्रति-प्रस्थाता तमग्नौ प्रास्यति । अयं इध्मप्रदीपनहोम उच्यते ॥

१५२ ततो ऽध्वर्युर्द्वाराणि विवृत्य प्रावर्गिकं सर्वं सम्भा-रमादाय सर्वैः सह पूर्वया द्वारोपनिष्क्रामति । अनु नो ऽद्या-नुमतिर्य०दा शुषे मयः । अन्विदनुमते त्वं०तारिषः । इति मन्त्रद्वयमध्वर्युरेव पठति । अध्वर्युः महावेदिं पद्भ्यामवक्र-म्य । प्रस्तोतः साम गाय । इति प्रेष्यति । प्रस्तोता साम गायति । निधनं सर्वे पठन्ति । दिवस्त्वा परस्पाया अन्त-रिक्षस्य तनुवः पाहि पृथिव्यास्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे । इति महावेदिमभिक्रम्य मध्यभागे द्विती-यं निधनं पठन्ति । ब्रह्मणस्त्वा परस्पायाः क्षत्रस्य तनुवः पाहि विशस्त्वाधर्म्मणा वयमनुक्रामामसुविताय नव्यसे इ-त्युपरवदेशं गत्वा तत्र तृतीयं निधनं पठन्ति । प्राणस्य त्वा परस्पायै चक्षुषस्तनुवः पाहि श्रोत्रस्य त्वा धर्मणा वयमनु-क्रमाम सुविताय नव्यसे । इत्यभिक्रम्योत्तरवेदिसमीपे तिष्ठ-न्ति । इदं महावेदिगमनमुच्यते ॥

१५३ ततः प्रेष्यत्याग्नीध्रम् । अनेनोदकुम्भेन सन्ततया धारया त्रिःप्रदक्षिणं परिषिञ्चन् परीहि । इति । आग्नीध्रः



सुप्रचरणीमुत्तरवेदिं परिषिञ्चंस्त्रिः प्रदक्षिणं पर्यैति । अध्वर्युः परिषेककाले यजमानं वाचयति । वल्गुरसि शंयुधाया शिशुर्जनधायाः शञ्च वक्षि परि च वक्षि । इति । आग्नीध्रः । कुम्भं निधाय यथेतन्त्रिः पर्यैति । अध्वर्युः । चतुस्रक्तिर्नाभिर्ऋतस्य सदो विश्वायुः शर्मसप्रथाः । अपद्वेषो अपह्वरोऽन्यद्व्रतस्य सश्चिम । इत्युत्तरनाभिमभिमृशति । प्रवृञ्जनीयौद्वासनीयौ खरावुत्तरनाभेरुत्तरतोऽवकीर्य धृष्टिभ्यां प्रागायतं तयोः खरं कृत्वा तत्र सुवर्णशकलं निधाय प्राग्ग्रीवमुत्तरलोम कृष्णाजिनं समास्तीर्य रौहिणपिष्टैर्मुञ्जप्रलवैः सिकताभिश्चानुप्रकीर्य प्रचरणीयं महावीरं शफाभ्यां परिगृह्य । घर्मैतत्ते ऽन्नमेतत्पुरीषं तेन वर्धस्व चाचचाप्यायस्व । वर्धिषीमहि त्वा वयमाचप्यासिषीमहि । इति मन्त्रेण मधुमिश्रेण दध्ना पूरयति । महीनां पयोऽसि विहितं देवत्राज्योतिर्मा असि वनस्पतीनामोषधीनाᳬं रसो वाजिनं त्वा वाजिनोवनयामः । इति पुनस्तेनैवाऽभिपूरयति । इदं प्रचरणीयमहावीरपरिपूरणमुच्यते ।

१५४ ततः ऊर्ध्वं मनः सुवर्गम् । इति प्रचरणीयं महावीरं खरस्य पूर्वार्धे सादयति । तं परितो घर्मपात्रैः परिचिनोति । तद्यथा । छिद्रवन्ति पात्राणि मधुमिश्रेण दध्ना पूरयित्वा । छिद्ररहितानि तु तेन द्रव्येण सम्मृज्य । वेदरज्जुदामासन्दीपवित्रादीनि विस्रस्य । आज्यस्थाल्या उपरि धवित्रम् । समिधो दश दश द्विवारं उपशयो महावीरौ शफाभ्यां परिगृह्य सादयति एतत् घर्मपात्रोत्सादनार्थसादनमुच्यते ।

१५५ उपप्रचरणीं रुक्मौ पिन्वने मौञ्जमेव च । शफौ रौहिण हवनी समिधः कुशवेदकम् । स्थूणोपयमरज्जू च

परिश्रयश्री च धृष्टिके । पवित्रं समिधः स्थालीं धवित्रं च कपालके । स्रुवं कुशमयं वेदमासन्दीं मृदमेव च । इदं सार्धकारिकाद्वयं उत्सादनार्थं घर्मपात्राणामासादने क्रमप्रतिपादकम् । घर्मैतत्ते ऽन्नमेतत्पुरीषं तेन वर्धस्व चाचप्यायासिषीमहि । इति मन्त्रेण मृदं सिकतामुञ्जरौहिणैरनुप्रकिरति । ततः सर्वाणि घर्मोपकरणानि प्राचीनग्रीवेणोत्तरलोम्ना कृष्णाजिनेनाऽऽच्छादयति इदं घर्मपात्राच्छादनमुच्यते ।

१५६ तदनन्तरम् । अयं यः पुरुषरूपो ऽसि स न आस्येन तिष्ठसि नोर्ध्वो न तिर्यग्विधां ते ऽनुविहितोस्मि विधां मे ऽनुविहितो ऽसि स त्वं नाकमारोह सह यजमानेन साकम् । इत्यनेन मन्त्रेण आसादितघर्मोपकरणान्युपतिष्ठते । एतदासादितघर्मोपकरणोपस्थानमित्युच्यते ।

१५७ आस्कान्द्यौः पृथिवीमस्कान्दृषभो युवागाः । स्कन्नेमाविश्वा भुवनास्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजन्यास्कन्नाज्जायते वृषास्कन्नात्प्रजनिषीमहि । दध्ना मधुमिश्रेण मुष्टिना ऽवोदय । प्रस्तोतर्वार्षाहरं साम गायेष्टाहोत्रीयञ्च । इति प्रस्तोतारं प्रेष्यति । अयं घर्मोद्वासनसामप्रैष इत्युच्यते ।

१५८ अनेनोदकुम्भेनसन्ततया धारया त्रिःप्रदक्षिणं परिषिञ्चन् परीहि इत्याग्नीध्रं प्रेष्यति । आग्नीध्रः पूर्ववत्प्रदक्षिणं परिषिच्य कुम्भं निधाय त्रिरपसलैः पर्येति । तदानीमध्वर्युर्यजमानं वाचयति । रन्तिर्नामासि दिव्यो गन्धर्वः । तस्य ते पद्वद्धविर्धानम् । अग्निरध्यक्षाः । रुद्रो ऽधिपतिः । समहमायुषा । सं प्राणेन । सं वर्चसा । सं पयसा । सं गौपत्येन । सꣳ रायस्पोषेण । व्यसौ । यो स्मान्द्वेष्टि । अचिक्रदद्वृषा हरिः । महान्मित्रो न दर्शतः । सꣳ सूर्येण रोचते ।



चिदसि समुद्रयोनिः । इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव आनिषत्तः । नमस्ते अस्तु मा मा हिंसीः । विश्वावसुं सोमगन्धर्वम् । आपो ददृशुषीः । तदृतेनाव्यायन् । तदन्ववैत । इन्द्रो रारहाण आसाम् । परिसूर्यस्य परिधीं रपश्यत । विश्वावसुरभितन्नो गृणातु । दिव्यो गन्धर्वो रजसो विमानः । यद्वा घा सत्यमुत यन्न विद्म । धियो हिन्वानो धिय इन्नो अव्यात् । सस्निमविन्दच्चरणे नदीनाम् । अपावृणोद्दुरो अश्मव्रजानाम् । प्रासां गन्धर्वो अमृतानि वोचत् । इन्द्रो दक्षं परिजानादहीनाम् । यजमानो गार्हपत्यमुपतिष्ठते । एतत्त्वं देव घर्म देवो देवानुपागाः । इदमहं मनुष्यो मनुष्यान् । सोमपीथानुमेहि । सह प्रजया सह रायस्पोषेण । इति यजमानघर्मोपस्थानमित्युच्यते ।

१५९ ततो ऽञ्जलिना ऽपो गृह्णाति । सुमित्रा न आप ओषधयः सन्तु । इति । दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । इति ता अपो नैर्ऋत्यां दिशि प्रक्षिपति । अप उपस्पृश्यादित्यमुपतिष्ठते । उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवन्देवत्रा सूर्यमगन्मज्योतिरुत्तमम् । इति । अध्वर्युः प्रवर्ग्यमवकाभारेण प्रच्छाद्य गोमारमादिशति । वयोभ्यो महावीरं गोपाय प्रस्तोतः श्यैतेनोन्वेहि । अयं प्रैषो गोमादेश इत्युच्यते ।

१६० ततो यथेतमेत्य गार्हपत्ये उदुत्यमिति चित्रमिति च द्वाभ्यामृग्भ्यां स्रुवाहुती हुत्वा । सर्वे शालामुखीयमुपतिष्ठन्ते । इम मूत्यमहमाध्यंसम् । अग्ने देवेषु प्रवोचः । इति आग्नीध्रीयदेशे उत्तरां शान्तिं पठति । इदमन्तिमप्रवर्ग्यसम्बन्धि शालामुखीयोपस्थानमुच्यते ।

१६१ इदं प्रवर्ग्यमित्युच्यते ।

१६२ अथाग्नीषोमीयः पशुः । तस्य निरूढपशुवद्देवतासङ्कल्पः । आतिथ्याबर्हिरेव पञ्चविधम् । तेनैव प्रस्तरेण सङ्शुल्वादि सम्भरति । ते एव विधृती प्रज्ञाते निधाय तैरेव परिधिभिरिध्मं सम्भरति । ततस्त्वां त्रयोविंशतिधेत्यूहः परिभोजनीयान् वेदं च कृत्वा महाबर्हिः सम्भृत्य अन्यानपि तत्तदर्थमुष्टीन् सम्भृत्य । निरूढपशुवदग्नीषोमीयस्य पशोः शाखां समन्त्रां तूष्णीं प्लक्षशाखाम् । एवं सवनीयस्य द्वे शाखे । दधिग्रहाय तूष्णीमेकां शाखां मैत्रावरुणयर्थं समन्त्रामेकां शाखाम् । सवनीयाऽऽमिक्षार्थं समन्त्रां दधिघर्मार्थं शतातङ्क्यार्थमाशिरार्थं च तूष्णीम् । इत्यष्टौ शाखाः क्रमेण युगपद्वाऽऽहृत्य इषे त्वेत्यादि यजमानस्य पशून्पाहि इत्यन्तम् । ततः अभ्यादधाताध्र्वमित्यादि अग्निप्रणयनम् । पदतृतीयं शालामुखीयनिकटे तृतीयमुपयमनीषु । तृतीयमञ्जनार्थं निदधाति । अग्निप्रणयनकाले कश्चिद्राजानमादायोत्तरतस्तिष्ठति । अग्नौ प्रणीते सति तेनैवागत्यासन्द्यां स्थापयति । ततः स्वयं होमान्तं करोति । ततो ब्रह्माणं दक्षिणत उत्तरवेदेर्मन्त्रेणोपवेश्य । अध्वर्युः पाणी सम्मृश्य उत्तरपरिग्रहादि करोति । उपरवदेशे स्फ्यं स्तब्ध्वा सम्प्रैषमाह । प्रोक्षणीरासादयेध्माबर्हिरुपसादय । इति । तत उपरवदेशे प्राकृतमन्त्रेण स्फ्यमुद्दसति । इदं महावेदिकरण मित्युच्यते ॥

१६३ आग्नीध्रः प्रोक्षणीरासाद्य महाबर्हिरुत्तरवेदिसमिन्धनार्थं लौकिकमिध्ममासादयति । अध्वर्युः आहृताभिः प्रोक्षणीभिर्महावेदिं बर्हिरिध्मञ्च तूष्णीं प्रोक्षति । अपूर्वबर्हिर्मुष्टिं प्रोक्ष्य तेन पृष्ठ्यां प्रच्छाद्य अनसी प्रक्षाल्य अन्तरे ॥

धात्वालोत्करौ प्रपाद्य महावेद्यां पृष्ठ्याया दक्षिणत उत्तरत-श्च अरत्निमात्रं विहाय प्राचीस्थापयित्वा । उद्धृतफलकं द-क्षिणम् । अनुद्वृतफलकं उत्तरं च शकटं प्रोक्षति । वैष्णवी-विष्णवे शुन्धेथाम् । इति । एहि यजमान इति यजमानमा-मन्त्र्य पूर्वया द्वारा शालां प्रपाद्य शालामुखीयआज्यं विला-प्य उत्पूय युञ्जते मन इत्यृचा अन्वारब्धे यजमाने चतुर्गृ-हीतेनाहवनीये जुहोति । सवित्र इदं० अपरं चतुर्गृहीतं गृ-हीत्वा सस्रुवामाज्यस्थालीं स्फ्यमुदपात्रं बर्हिर्हिरण्यमादाय । एहि यजमानेति यजमानमामन्त्र्य अध्वर्य्युयजमानौ ऽनूची पत्नी पदतृतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हवि-र्धानस्य दक्षिणस्यां वर्तन्यां स्फ्येनोद्धत्यावोक्ष्य हिरण्यन्तत्र निधाय परिस्तीर्य परिषिच्य चतुर्गृहीतमाज्यं इदं विष्णुरि-त्यृचा जुहोति । अयं होमो दक्षिणहविर्धानवर्तनीहोम इत्यु-च्यते ॥

१६४ पदपांसूनामधोन् पत्न्यञ्जलावोप्य संस्रावेणाभिघा-रयति । पत्नी प्राचोत्तानेन पाणिना दक्षिणमक्षधुरमनक्ति । आनो वीरो जायतां कर्मण्यो यꣳ सर्वे ऽनुजीवाम यो बहूना-मसद्वशी । इदं दक्षिणधूरञ्जनमित्युच्यते ॥

१६५ अध्वर्युः अपरं चतुर्गृहीतं गृहीत्वा उत्तरस्य हवि-र्धानस्योत्तरस्यां वर्तन्यां स्फ्येनोद्धत्याऽवोक्ष्य हिरण्यंनिधाय परिस्तीर्य परिषिच्याऽभिजुहोति । इरावती धेनुमती हि भू-तꣳ सूयवसिनीमनवे यशस्ये । व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहा । इति विष्णवइद-मिति यजमानस्य त्यागः । अयमुत्तरहविर्धानोत्तरवर्तनीहोम इत्युच्यते ॥

१६६ ततः सर्वान् पदपांसूनध्वर्युः पत्न्यञ्जलावोप्याभिघारयति । पत्नी पूर्ववद्दक्षिणमनधुरमनक्ति । आनो वीरो जायतां कर्मण्यो यं सर्वे अनुजीवाम यो बहूनामसद्वशी । इति । इदमुत्तराक्षधूरञ्जनमित्युच्यते ॥

१६७ ततोऽध्वर्युराज्यस्थाल्यादीनि प्रतिप्रस्थात्रे प्रदाय पत्नीं नयति । होतारं ह्वयन्ति । अथ हविर्धाने हस्ताभ्यां परिगृह्य सम्प्रैषमाह । हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि । इति । अयं हविर्धानप्रवर्तनप्रैष इत्युच्यते ।

१६८ होता प्रेषितः सन्ननुवचनं पठति । तस्य प्रथमायामृचि त्रिरुक्तायां प्रवर्तयति । प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् । इति मन्त्रेण । हविर्धानयोः प्रवर्तनकाले अक्षशब्दे जाते सति जपति । सुवाग्देवदुर्याँ आवद देवश्रुतौ देवेष्वाघोषेथाम् । इति । अध्वर्युः प्रतिप्रस्थाता चोत्तरेण हविर्धाने परीत्य मध्यमादौत्तरवेदिकाच्छङ्कोस्त्रीन् प्रतीचः प्रक्रमान् प्रक्रम्योपस्तम्भनयोरुपरि अनसोरग्रे स्थापयतः । तत्र दक्षिणस्य हविर्धानस्याध्वर्युरुत्तरस्य प्रतिप्रस्थाता । अत्र रमेथां वर्ष्मन् पृथिव्याः । इति मन्त्रेण । इदमनसोरुपस्तम्भने स्थापनमुच्यते ।

१६९ अध्वर्युः । दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात । इति दक्षिणतो मेथीं निहन्ति । विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसि । यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः । इतिमेथीमनसा सह बध्नाति । एवमेव प्रतिस्थातोत्तरहविर्धानस्योत्तरतो मेथीं निहत्य एव मेव बध्नाति । इदं मेथ्यां हविर्धानबन्धनमित्युच्यते ॥

१७० अध्वर्युः दक्षिणहविर्धानस्याग्रभागादरत्निमात्रे गर्त्तं खात्वा तस्य दक्षिणोत्तरयोर्युगान्तार्जवेन गर्त्तद्वयं खनति। एवं प्रतिप्रस्थाता उत्तरहविर्धानस्योत्तरतो गर्तत्रयं खनति। एवं सति षट् गर्ताः सम्पद्यन्ते। एवमेव षट् पश्चात् हविर्धानयोः ततो द्वादशगर्ता भवन्ति। तेषु गर्तेषु प्राचीनकर्णाः स्थूणा उच्छ्रित्य तासु उदञ्चौ वंशौ प्रोह्य। विष्णो रराटमसि। इति पुरस्ताद्रराटीं बध्नाति। रज्जुविशेषो रराटीत्युच्यते।

१७१ विष्णोः पृष्ठमसि। इति मध्यमं छदिरधिनिदधाति। विष्णो श्न्यप्त्रे स्थः। इति दक्षिणोत्तरयोर्द्वे छदिषी युगपन्निदधाति। ततश्चतुर्दिक्षु परिश्रित्य प्राचीं प्रतीचीं च द्वारौ कृत्वा दक्षिणे द्वारबाहौ कुशमुष्टिमुपनिगृह्य। विष्णोः स्यूरसि। इति दर्भेण स्पन्द्यां निक्षिपति। विष्णोर्ध्रुवमसि। इति ग्रन्थिं करोति। तं विस्रस्य सम्प्रेष्यति। अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत। इति। प्रतिप्रस्थाता एवमुत्तरे द्वारबाहौ करोति एवमपरद्वारबाह्वोः अध्वर्युप्रतिप्रस्थातारौ कुरुतः। अयं हविर्धानगृहनिर्मितिप्रकार उच्यते।

१७२ अध्वर्युः। वैष्णवे स्था। इति हविर्धानमभिमृशति।। इदं निर्मितं हविर्धानयोः स्थापनार्थगृहं प्राक् प्रत्यग्द्वारं यत्तदपि हविर्धानमित्युच्यते।

१७३ ततः शालामुखीयाच्छङ्कोरनुस्पन्द्यं षट् प्राचः प्रक्रम्य दक्षिणतः सप्तमं प्रक्रमं प्रक्रम्य अभ्रिमादत्ते देवस्य त्वेत्यादिमन्त्रेण अभ्रिरसि नारिरसीति मन्त्रेण तामभिमन्त्रयते। परिलिखितमित्यादिमन्त्रेण तया ऽभ्र्या औदुम्बर्यवटं त्रिःपरिलिखति। अप उपस्पृश्य सम्प्रेष्यति। उद्गातरेहीममौदुम्बर्यवटं खन प्राक् पुरीषमुद्वपतात्। इति अवमौदुम्बर्यवटखननप्रैष उच्यते।

१७४ उद्गाता तथा करोति । शालामुखीयाच्छङ्कोरेकं प्रक्रमं त्यक्त्वा तत आरभ्य दशपदं पूर्वापरं अष्टादशारत्निदक्षिणोत्तरं दीर्घचतुरस्रं सदो विमाय त्रिश्रेणिगतान् खात्वा दक्षिणस्य हविर्धानस्य पुरोऽवस्थानुपरवान् विमाय सम्प्रेष्यति । उन्नेतरेहीमानुपरवान् खनप्रादेशान्तरान्पादान् बाहुमात्रान्तालो ऽसंभिन्दन्नुपरिष्टादधस्तात्संतृणान् । इत्ययमुपरवखननप्रैष उच्यते ।

१७५ उन्नेता यथोक्तं करोति । उपरवपुरीषं दक्षिणस्य हविर्धानस्य पुरस्तान्न्युप्य चतुरस्रं खरं सिकताभिराश्रितं कृत्वा देवस्य त्वेत्यभ्रिमादाय अभ्रिरसीत्यादिना यूपावटं परिलिखितमित्यादिना परिलिख्य सम्प्रेष्यति । आग्नीद्रेहीमं यूपावटं खनोपरवसम्मितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमति खनतात् । इति । ततः प्रतिप्रस्थाता औदुम्बरीं स्थूणां निखातादूर्ध्वं यजमानेन समं विमायाधस्तात्परिवासयति । अच्छिन्नो रायः सुवीरः । इति । तां प्रक्षाल्य चात्वालोत्करयोर्मध्यमार्गेण प्रपाद्यावटात्पुरतः प्रागग्रां स्थापयति । अध्वर्युः । एहि यजमानेति यजमानमामन्त्र्य यवमतीः प्रोक्षणीर्बर्हिर्मुष्टिमाज्यस्थालीं स्रुवं मैत्रावरुणदण्डमुदपात्रं चादाय औदुम्बरीं स्थूणां पुरस्तादर्वाचीं प्रोक्षति । दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा । इति । शुन्धतां लोकः पितृषदनः । इत्यवटेऽपोऽवनयति । यवोऽसि यवयास्मद्द्वेषो यवयारातीः । प्राचीनावीती बर्हिर्हस्तं व्यतिषज्यावस्तृणाति । पितृणां सदनमसि । हिरण्यमन्तर्धाय स्रुवाहुत्याऽभिजुहोति । पितृभ्यः स्वाहा । इति । पितृभ्य इदमिति यजमानस्य । अध्वर्युः उद्गात्रा औदुम्बरीमुच्छ्रयति । उद्दिवं स्तभानान्तरिक्षं पृण पृथिवीं दृंह । इति ॥

प्राचीनकर्णां मिनोति । द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा । इति । प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं पर्यूहामि । इति । मैत्रावरुणदण्डेन संहन्ति । ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह । इति । अन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीय विशाखे हिरण्यं निधाय स्रुवाहुत्याऽभिजुहोति । घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहा । इति । द्यावापृथिवीभ्यामिति यजमानस्य त्यागः । आन्तमन्ववस्रावयति । भूमिगते स्वाहाकारः । प्राचीनकर्णाः स्थूणा उच्छ्रित्य तासूदञ्चौ वंशौ प्रोक्ष्य इन्द्रस्य सदोऽसि । मध्यमं छदिरधिनिधाय अभितो द्वे द्वे निदधाति । विश्वजनस्य छाया । द्विर्मन्त्रः । दक्षिणोत्तरान् नवसन्धिषु तृणावर्तान् करोति । परित्वा गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः । परिश्रित्य प्राचीं प्रतीचीं च द्वारं कृत्वा दक्षिणे द्वारबाहौ कुशमुपनिगृह्य दर्भेण स्यन्द्यामवनयति । इन्द्रस्य स्यूरसि इति । इन्द्रस्य ध्रुवमसि । इति ग्रन्थिं करोति । विस्रस्य अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत । इति । एवमुत्तरे प्रतिप्रस्थाता । एवमपरद्वारबाह्वोः । इदं निर्मितं गृहं सदःपदवाच्यम् ।

१७६ अध्वर्युः ऐन्द्रमसीन्द्राय त्वा । इति मन्त्रेण सिद्धं सदोऽभिमृशति । इदं सदोऽभिमर्शनमित्युच्यते ।

१७७ महावेद्या उत्तरांसीयाच्छङ्कोर्वेद्यन्तेन दश प्रतीचः प्रक्रमान् प्रक्रम्य पञ्चारत्नि अन्तर्वेद्यर्धमर्धं बहिर्वेदि आग्नीध्रागारं कृत्वा परिश्रित्य दक्षिणतो द्वारं करोति । एतेन दक्षिणो मार्जालीयो व्याख्यातः तस्योदीचीं द्वारं कुर्वन्तीति विशेषः । इदं गृहं महावेद्या दक्षिणतो निर्मितं मार्जालीयपदेनोच्यते ॥

१७८ ततः अभ्रिं यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीं स्रुवं चर्मफलके षट् शङ्कून् ग्रावाणं हिरण्यमुदपात्रमादाय एहि यजमानेति यजमानमामन्त्र्य पूर्वया द्वारा हविर्धानं प्रवेश्य दक्षिणस्य हविर्धानस्य नीडे चर्म इतराणि अक्षात्पुरतः सादयित्वा । देवस्य त्वेत्यभ्रिमादाय अभ्रिरसीत्यादिना ऽभिमन्त्र्य दक्षिणपूर्वादीनुपरवान् परिलिखितमित्यादिना त्रिः परिलिख्य क्रमेण खनति । रक्षोहणो वलगहनो वैष्णवान् खनामि । दक्षिणपूर्वस्मात्पांसूनादत्ते । इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो यो ऽसमानो ऽरातीयति गायत्रेण छन्दसा । यजमानस्याधस्पादं पात्रान्तरे पांसूनुद्वपति । अवबाढो वलगः । इति । पुनस्तथैव पांसूनादत्ते । तन्मन्त्रे गायत्रेणेत्यस्य स्थाने त्रैष्टुभेनेति विशेषः । ततस्तृतीयादादत्ते । तन्मन्त्रे तत्स्थाने जागतेनेत्यस्योहः । ततश्चतुर्थादादत्ते । तन्मन्त्रे आनुष्टुभेनेत्यूहः । पांसूनसञ्चरे परावपति । इदानीमत्र यजमानः पाप्मानं ध्यायति । उभावप उपस्पृशतः । अध्वर्युः पूर्वयोर्दक्षिणमभिमृशति । यजमान उत्तरमभिमृश्य पृच्छति । अध्वर्यो किमत्र । इति । अध्वर्युः भद्रमित्याह । यजमानः । तन्नौ सह । इत्याह । ततो ऽध्वर्युः यजमान किमत्र । इत्याह । यजमानः । भद्रम् । इत्याह । अध्वर्युः । तन्नौ सह इत्याह । ततो ऽध्वर्युर्दक्षिणयोरपरमभिमृशति । अत्राध्वर्युः प्रथमं पृच्छति । ततो यजमानः । ततोऽध्वर्युरपरयोरुत्तरमभिमृशति । दक्षिणं यजमानः । यजमानः प्रथमं पृच्छति ततो ऽध्वर्युः । तत उत्तरयोः पूर्वमध्वर्युरभिमृशति । अपरं यजमानः । अध्वर्युः प्रथमं पृच्छत्यथ यजमानः । यजमानः प्रथमो यजमान उत्तमः । ततो ऽध्वर्युः क्रमेणोपरवानभिमृ-

शति। विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासान्नाष्ट्राणां हन्ता। इति। सर्वत्र मन्त्रावृत्तिः। क्रमेणोपरवान् प्रोक्षति। रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्। इति। मन्त्रावृत्त्या सर्वान् प्रोक्षति। रक्षोहणो वलगहनोऽवनयामि वैष्णवान्। इति। तथैव सर्वेष्वपोऽवनिनयति यवोऽसि यवयास्मद्द्वेषो यवयारातीः। इति क्रमेण सर्वेषु यवान् प्रस्कन्दयति। रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवान्। इति सर्वेषुपरवेषु बर्हिषाऽवस्तृणाति। रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवान् स्वाहा। इति सर्वेषूपरवेषु हिरण्यं निधाय तदुपरि क्रमेण स्रुवाहुत्याऽभिजुहोति। वैष्णवेभ्य उपरवेभ्य इदमिति यजमानः। अयमुपरवसंस्कार इत्युच्यते॥

१७९ प्रत्येकं सार्धप्रादेशविस्तारे प्रादेशत्रयदीर्घे मिलिते समचतुरस्रे अधिषवणफलके आदाय। रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति संसृष्टे फलके तेषामुपरवाणामुपरि दधाति। तयोरनवसर्पणाय द्वाभ्यां शङ्कुभ्यां पुरस्तात्परिणिहन्ति। द्वाभ्यां पश्चात्। द्वाभ्यामभितः। एवं षड्भिः शङ्कुभिः परिणिहत्य। रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी। प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी। इति तयोरुपरि बर्हिषाऽवस्तृणाति। रक्षोहणौ वलगहनौ वैष्णवी। इत्यभिमृशति। एतावत्कर्म उपरवेषु फलकप्रतिष्ठापनमुच्यते॥

१८० ततो यज्ञप्रतिष्ठेति मन्त्रेण तूष्णीं वा फलकयोरानडुहं चर्मास्तीर्य तिरश्चर्मन् फलके ग्राव्णोऽऽसादयति। बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद। इति। नीडे चर्मोत्सादयति। ग्रावग्रावाणम्। दक्षिणस्य हविर्धानस्याग्रे

स्तोत्रोपाकरणाय बर्हिर्मुष्टीन् बध्नाति । ततः एहि यजमानेति यजमानमामन्त्र्य आग्नीध्रीयमध्ये स्फ्येनोद्धत्यावोक्ष्य तत्र चात्वालपुरीषसिकता न्युप्य अरत्निमात्रं परिमण्डलं खरं करोति । विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मामाहिंसीः । एतन्मन्त्रपाठस्तूभयोरध्वर्युयजमानयोः । एतदाग्नीध्रीयखरकरणमुच्यते ॥

१८१ अन्तः सदसं प्राक् पदद्वयमवशेष्य पृष्ठ्यायामेव होतुः खरं करोति । वह्निरसि हव्यवाहनो रौद्रेणा०हिंसीः इति । अयं होतृखरो होतृधिष्ण्यमित्युच्यते ॥

१८२ अपरेणाहवनीयं पर्याहृत्य होतृधिष्ण्याद्दक्षिणतोऽरत्निमात्रे मैत्रावरुणस्य खरं करोति । श्वात्रोऽसि प्रचेता रौद्रेणा०सीः । इति अयं खरो मैत्रावरुणधिष्ण्यमित्युच्यते ॥

१८३ तस्य धिष्ण्यस्योत्तरतोऽरत्निमात्रे ब्राह्मणाच्छंसिनः । तुथोऽसि विश्ववेदा रौद्रेणा०सीः । अयं खरो ब्राह्मणाच्छंसिधिष्ण्यमित्युच्यते ॥

१८४ तस्योत्तरतोऽरत्निमात्रे पोतुः खरं करोति । उशिगसि कवीरौद्रेणा०सीः । इति । अयं खरः पोतृखर इत्युच्यते ॥

१८५ तदुत्तरतोऽरत्निमात्रे नेष्टुः खरं करोति । अङ्घारिरसि बम्भारी रौद्रेणा०सीः । इति । अयं खरो नेष्टृधिष्ण्यमित्युच्यते ॥

१८६ तदुत्तरतोऽरत्निमात्रे अच्छावाकस्य । अवस्यूरसि दुवस्वान् रौद्रेणा०सीः । इति अयं खरोऽच्छावाकधिष्ण्यमित्युच्यते ॥

१८७ आग्नीध्रीयवन्मार्जालीये खरं करोति । शुन्ध्यूरसि

मार्जालीयो रौद्रेणाऽनीः । इति अयं खरो मार्जालीयधिष्ण्यमित्युच्यते ॥

१८८ अवशिष्टचात्वालपुरीषसिकता आग्नीध्रीये तूष्णीं निवपति । ततो ऽध्वर्युरौत्तरवेदिकमग्निमुपतिष्ठते । सम्राडसि कृशानू रौद्रेणाऽनीः । इति । तत आस्तावमुपतिष्ठते । परिषद्यो ऽसि पवमानो रौद्रेणाऽनीः । इति । ततश्चात्वालम् । प्रतक्वा ऽसि नभस्वान् रौद्रेणाऽनीः । इति । पशुश्रपणमग्निं तत उपतिष्ठते । असम्मृष्टो ऽसि हव्यसूदो रौद्रेणानीः । इति । सदसः पश्चिमद्वारे तिष्ठन् औदुम्बरीमुपतिष्ठते । ऋतधामा ऽसि सुवर्ज्योती रौद्रेणाऽनीः । इति । ततो ब्रह्मसदनमुपतिष्ठते । ब्रह्मज्योतिरसि सुवर्धामा रौद्रेणाऽनीः । इति । तत्रस्थ एव शालामुखीयम् । अजोऽस्येकपाद्रौद्रेणाऽनीः । इति । ततो गार्हपत्यम् । अहिरसि बुध्नियो रौद्रेणाऽनीः । इति । इदं औत्तरवेदिकाद्युपस्थानमित्युच्यते ॥

१८९ इतः प्रभृत्यध्वर्युः प्रत्यक् सदो नातीयात् । तत्रस्थ एव सम्प्रेष्यति । स्तृणत बर्हिः प्रभ्रतं यच्छत समिधस्ताहुयच्छमास्तावं बहुलं स्तृणीतोल्मेतर्ग्रीष्मो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय पत्नीशाले पत्नीः सम्पादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः सम्मृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याऽऽहर । इति । अयं प्रैषो महावेद्यां बर्हिरासादनादिप्रैष इत्युच्यते ॥

१९० दक्षिणे वेद्यन्ते महाबर्हिषो मुष्टिं स्तृणाति देवबर्हिरूर्णम्रदसन्त्वेति प्राकृतमन्त्रेण । महावेदिं बहुलां पुरस्तात्प्रतीचीं स्तृणाति । तूष्णीमर्धस्तनप्रतं प्रददाति । उन्नेता पञ्च ग्राव्णः सप्तदश वायव्यानि प्रादेशमात्राणि उलूखलाकाराणि एकतोमुखानि दश चमसान् परिप्लुपात्रं अद-

यष्टं स्नुगाकारं द्रोणकलशं दशापवित्रं चतस्रः स्थालीः उपग्रहादि यदन्यदुपयुक्तं तत्सर्वं प्रक्षाल्य द्रोणकलशे दशापवित्रे विन्यस्य एतत्सर्वं प्राग्वंशे सादयति। वायव्यानां मध्ये औदुम्बरं चतुःस्रक्ति यत्तद्दधिग्रहपात्रमुच्यते ।

१९१ रास्नाचिह्नितं पात्रमैन्द्रवायवमित्युच्यते ।

१९२ पिलकाचिह्नितं मैत्रावरुणमित्युच्यते ।

१९३ द्विकोणं पात्रमाश्विनमित्युच्यते ।

१९४ बैल्वं पात्रं शुक्रपात्रमित्युच्यते ।

१९५ वैकङ्कतं श्लक्ष्णं मन्थिपात्रमित्युच्यते ।

१९६ औदुम्बरं श्लक्ष्णं अदाभ्यसंज्ञकम् ।

१९८ न्यग्रोधकाष्ठनिर्मितानि अतिग्राह्याणीत्युच्यन्ते ।

१९९ उभयतोमुखे द्वे पात्रे ऋतुपात्रसञ्ज्ञके ।

२०० इतराणि पात्राणि नैयग्रधान्यौदुम्बराणि वा भवन्ति। चमसा नैयग्रोधाः। चतुरस्रो ऽल्पदण्डो ब्रह्मचमस-इत्युच्यते ।

२०१ मण्डलाकारः स दण्डो होतृचमस उच्यते ।

२०२ विस्तीर्णाग्रः स दण्डो यजमानचमसो भवति ।

२०३ त्रिकोणः स दण्ड उद्गातृचमसपदवाच्यः ।

२०४ अधोभागे वक्रः स दण्डः प्रशास्तृचमस उच्यते ।

२०५ उपरि वक्रः स दण्डो ब्राह्मणाच्छंसिचमसो भवति।

२०६ तथैव रास्नायुक्तः स दण्डो ऽच्छावाकचमसो भवति ।

२०७ तीक्ष्णाग्रः स दण्ड आग्नीध्रचमसो भवति ।

२०८ अध्वर्युः अग्नीषोमीयपशुशाखायाः पशुवत्पवित्रं करोति। ततः पशुकुम्भी शाखापवित्रं वपाश्रपण्यौ रशने शूलं मैत्रावरुणदण्डं शालामुखीयस्योत्तरतो दर्भेषु सादयति ।

शुन्धध्वमिति प्राकृतमन्त्रेण प्रोक्षति । आग्नीध्रः पाणी सम्मृश्याग्नीन् प्रज्वाल्य परिस्तीर्य शालामुखीयस्याग्रे दर्भान् संस्तीर्य तेषु स्फ्यमग्निहोत्रहवणीं जुहूमित्यादि पशुवत्पात्राण्यासाद्य गार्हपत्यआज्यं विलापयति प्रतिप्रस्थाता पाणिसम्मर्शनं कृत्वा ब्रह्माणं दक्षिणत उपवेश्य शालामुखीयादारभ्योत्तरवेदिपर्यन्तं पृष्ठ्यां स्तीर्त्वा पवित्रे कृत्वा यजमान वाचं यच्छेति यजमानं सम्प्रेष्याग्निहोत्रहवणीं प्राकृतमन्त्रेणादाय तथैव प्रतितप्य प्रोक्षणीसंस्कारं कृत्वा पात्राणि प्राकृतमन्त्रेण प्रोक्ष्य आज्यं दधि च तथैव निरुप्य अधिश्रित्योभयं पर्यग्नि करोति । ततोऽध्वर्युः पाणी सम्मृश्य मन्त्रेण प्राकृतेन स्फ्यादानादि कृत्वा खरदेशे स्फ्यं स्तब्ध्वा सम्प्रैषमाह । प्रोक्षणीरासादयेत्यादि पशुवत् । आग्नीध्रः प्रोक्षणीः सादयति । अध्वर्युः स्फ्यं प्रकृतिवद्ददाति । प्रतिप्रस्थातोत्तरवेदिसमीपे इध्माबर्हिषी उपसादयति । आग्नीध्रः दक्षिणेन स्रुवं स्वधितिं सव्येन हस्तेन वेदाग्राण्यादाय शालामुखीये अग्नेर्वामिति मन्त्रेण प्रतितप्य स्रुवमन्त्रेणैवोभयं सम्मृज्य प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता जुह्वादीन् पशुवत्प्रतितप्य सम्मृज्य वेदाग्राणि शालामुखीये प्रक्षिप्य पात्राणि अग्रेणोत्करं तृणेषु सादयित्वा पुनरादाय शालामुखीयसकाशे निदधाति । पत्नीं शालामुखीयमाज्यं चावेक्षयित्वा यजमानमाज्यमवेक्षयति । अध्वर्युः प्रोक्षणीनामुत्तरत आनीयाज्यं स्वयमवेक्ष्योत्पूय प्रोक्षणीश्चोत्पूयाज्यं दधि चादाय ब्रह्मयजमानाभ्यां सह प्राग्वंशं गत्वा वेद्यां स्रुक्षु पशुवदाज्यानि गृहीत्वा परिकर्मिभ्यः प्रदायाऽप उपस्पृश्य ब्रह्मणे सोमं राजानं ददाति । ब्रह्मा राजानमादाय शालामुखीयस्याग्रेण परिश्रित्योत्तरतो वस्त्रायामन्वगग्निं नयति ।

अध्वर्युः शालामुखीये प्रणयनीयमिध्ममाधाय चात्वाला-दुपयमनीः कल्पयित्वा पुराणगार्हपत्यआज्यं विलाप्योत्पूय अध्वर्युं यजमानस्तं पत्नी तां पुत्राः तान् पौत्रास्तान् ज्ञातयश्चेति ज्येष्ठानुक्रमेण समन्वारब्धेषु सत्सु प्रचरण्यां चतुर्गृहीतं गृहीत्वा शालामुखीये जुहोति। त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरुयन्तासि वरूथꣳ स्वाहा इति। सोमायेदमिति यजमानः। ततः स्रुवेण जुहोति। जुषाणो अप्तुराज्यस्य वेतु स्वाहा। इति। अग्नय इदमिति यजमानः। पुनश्चतुर्गृहीतं गृहीत्वा सम्प्रैषमाह। अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रू३हि। इति। अयमग्नीषोमप्रणयनप्रैष उच्यते॥

२०९ होत्रा प्रथमायामृचि त्रिरुक्तायामिध्मं शालामुखीयादुद्यम्य पूर्वया द्वारोपनिष्क्रामन्ति। अन्वग्रावा चाज्यैश्चान्वक् ग्राव्णो वायव्यानि। अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रून् जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ। इतिमन्त्रेण। ततः उत्तरेण सदः परीत्याग्नीध्रागारेऽग्निं निधाय परिस्तीर्य परिषिच्य चतुर्गृहीतेनाभिजुहोति। अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम स्वाहा। इति। अग्नय इदमिति यजमानः। अत्रैवैतत् ग्राव्णो वायव्यानि सादयित्वा उत्तरेणाग्नीध्रीयं धिष्ण्यं राज्ञा चान्यैश्च गत्वा। आहवनीये स्रुवाहुतिं जुहोति। उरुविष्णो विक्रमस्व स्वाहा। इति विष्णव इदमिति यजमानः। ब्रह्मा राजानमन्यस्मै प्रदाय मन्त्रेणोपविशति। यजमानश्च स्वायतने। अध्वर्युः प्रोक्षणीकन्महयन्नित्यादि यन्मे अग्न इत्यन्तं पशुवत्करोति। खरे प्रोक्षणादीनि करोति।

महावेदिश्रोण्यां प्रोक्षणीर्निनयति । ब्रह्मायथागतमागत्य राजानमुपादत्ते । यजमानः अप उपस्पृश्य यथेतमेत्य ब्रह्मणः सकाशाद्राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति । सोमो जिगातु गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदम् । इति । अध्वर्युः अप उपस्पृश्य दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति । अदित्याः सदो ऽसि । इति । यजमानस्तस्मिन् कृष्णाजिने राजानं सादयति । अदित्याः सद आसीद । इति । एष वो देव सवितः सोमस्तꣳरक्षध्वं मा वो ऽदभत् । इति राजानं देवताभ्यः प्रयच्छति । एतत्त्वं देव सोम देवो देवा नुपागा इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण । इति तं सोममुपतिष्ठते । नमो देवेभ्यः इति सोमस्योपरि प्राञ्चमञ्जलिं करोति । स्वधा पितृभ्यः इति तस्य दक्षिणतो न्यञ्चमञ्जलिम् । अप उपस्पृश्य । इदमहं निर्वरुणस्य पाशात् । इति ततो निष्क्रम्य । सुवरभिविख्येषं वैश्वानरं ज्योतिः । इत्याहवनीयमुपतिष्ठते । अध्वर्युः । अवान्तरदीक्षां विसृज । इति प्रेष्यति । ततो यजमानः । अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳसा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि । इत्याहवनीयमुपतिष्ठते । अध्वर्युः । स्त्रीष्वमेखलां प्रमुञ्चन् सारय यजमान इति त्वाचक्षतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु । इति सम्प्रेष्यति । वपायागान्ते सुब्रह्मण्यः पिता पुत्रोवाह्वानं करोति । यूपावटान्तमिदानीमेव वा करोति । ततो याचतियवमतीरित्यादि यूपप्रक्षालनादि वपामार्जनान्तं पशुवत् । प्रकृतौ निरूढपशौ यत्रेन्द्राग्निपदं

तत्राग्निषोमपदस्योहः कार्य इति विशेषः । आहूनायां पितापुत्रीयायां दृढं कुम्भमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य स्रोतोऽभिमुखं स्थित्वा छायातपयोः सन्धौ वसतीवरीसञ्ज्ञा अपो गृह्णाति । हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्माꣳ आविवासति हविष्माꣳ अस्तु सूर्यः । इति । सूर्ये त्वस्तङ्गते हिरण्यमन्तर्धाय गृह्णाति । आतपच्छायायां स्वदेहच्छायायां वृक्षच्छायायां वा गृह्णाति । इदं वसतीवरीग्रहणमित्युच्यते ॥

२१० ततः प्रदक्षिणमावृत्य वसतीवरीकुम्भं सव्ये निधायान्तरेण चात्वालोत्करावुत्तरेणाग्नीध्रीयं सदश्च गत्वा पूर्वयाद्वारा शालां प्रपाद्य शालामुखीयस्य पश्चात्संमृष्टाः सादयति । अग्नेर्वो ऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत । इति एतद्वसतीवरीसादनमुच्यते ।

२११ ततो ऽग्नीन्पुरोडाशमित्यादि स्वरुहोमवर्जमाज्येडान्तं पशुवत् । औपयाजाऽङ्गारहरणमाग्नीध्रीयादिति विशेषः । वृत्रहाभूयासमिति पुरोडाशयागे यजमानस्यानुमन्त्रणम् । इन्द्रियावी भूयासमित्यङ्गयागे । आज्येडामार्जनान्ते उलूखले मुसलइत्येव हुत्वा ध्रुवामाप्याय्य प्रायश्चित्तानि जुहोति न वा । अथाग्नीषोमीय इत्यत आरभ्य एतदन्तं कर्म अग्नीषोमीयपशुरिति गीयते ।

२१२ हृदयशूलं प्रक्षाल्य स्थापयित्वा सम्प्रेष्यति । व्यपक्रामत मा वोऽभिपरिषम् । इति । अयं बहिर्वेदिभवनप्रैष उच्यते ।

२१३ ततः सर्वे बहिर्वेदि भवन्ति । वसतीवरीरादाय गार्हपत्यस्य पश्चान्मार्गेण नीत्वा दक्षिणया द्वारोपनिष्क्र-

स्य सव्यंसे निधाय दक्षिणेन मार्जालीयं सदश्च पर्याहृत्यो-
दङ्मुखो दक्षिणतो यूपेन संसृष्टाः सादयति इन्द्राग्निर्योर्भाग-
धेयी स्थ । इति पुनरादायोदङ्ङावृत्य दक्षिणांसे निधाय यथेत-
मेत्य शालामुखीयस्य पश्चात्संसृष्टाः सादयति मित्रावरुणयो-
र्भागधेयी स्थ । इति । पुनरादाय दक्षिणेंसे निधाय पूर्वया द्वा-
रोपनिष्क्रम्य उत्तरेण सद आग्नीध्रं च परीत्योत्तरतो यूपेन
संसृष्टाः सादयति । विश्वेषां देवानां भागधेयी स्थ । इति
पुनरादाय प्रदक्षिणमावृत्य सव्यंसे निधाय पुनस्तेनैव मार्गे-
णागत्याग्नीध्रीयस्य निष्ण्यस्य पश्चात्संसृष्टाः सादयति ।
यज्ञे जागृत । इति । इदं वसतीवरीस्थापनमुच्यते ।

२१४ अथ सम्प्रेष्यति । या सम्राड् धुक् तस्यै दधि घर्माय
दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या
आशिरे पयश्च सक्तूंश्च कुरुत शृतातङ्क्यमादित्यग्रहाय दधि
कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः
कुरुत चतुरोऽश्मनः स्त्रीनुदश्मनानयुज एकधनांस्त्र्यवमानेका-
दश परमान् द्वे रशने द्वे वपाश्रपण्यौ एकतयमिध्माबर्हिरौ
दुम्बरान्महापरिधीन् कुरुत सुब्रह्मण्यामाह्वयत । इति । अयं
सुत्यासामग्रीसम्पादनप्रैष उच्यते ।

२१५ अध्वर्युपुरुषेष्वन्यतमः सवनीयातिरिक्तानां शाखा-
नां क्रमेण पर्णानि छित्वा अग्रेण शालामुखीयं निधाय मूलतः
परिवासोपवेषान् कृत्वा शालामुखीयस्य पश्चात् प्रज्ञाता-
न्निधाय द्वितीयमन्त्यं च शाखापवित्रं मन्त्रेण प्राकृतेन कृत्वा-
न्यानि षट् शाखापवित्राणि तूष्णीं कृत्वा गार्हपत्यादुत्तरतः
षट् दोहनानि षट् शाखापवित्राण्यष्टौ स्थालीश्च सादयित्वा
प्राकृतमन्त्रेण प्रोक्ष्य तत्तदुपवेषेणाङ्गारान्निरूह्य तत्तत्पवित्रं
निधाय तेन तेन दोहनेन दोहयित्वा तप्त्वा सदगुद्वास्यात-

नक्ति । नाभ्यातनक्ति । अत्र द्वितीयोदोह ऐन्द्रः । षष्ठो दोहो मैत्रावरुणः अतस्तत्र विशेषो मन्त्रेषु भवति । स यथा । मित्रावरुणौ रमयतां गावः । मित्रावरुणाभ्याᳪं हविरिन्द्रियं इति । बहुदुग्धमित्रावरुणाभ्यां देवेभ्यो हविरिन्द्रियम् । इति । दोहानन्तरं तत्तदुपवेषान् शाखापवित्राणि मेक्षणानि दोहाश्च प्रक्षाताल्लिधाय प्रातर्दोहस्याल्यौ चान्यत्र स्थापयित्वा दर्भैः प्रातर्दोहाय वत्सानपाकरोति । एतत्सौत्यसायन्दोहकरणमित्युच्यते ।

२१६ एतदनन्तरं वा सवनीयपशुशाखाद्वयमाहरति । ततः प्रकृतिवदसिदादानादि कृत्वा एकविधं बर्हिराश्ववालं प्रस्तरं ऐक्षवीविधृती च सम्भृत्य औदुम्बरैर्मेक्षापरिधिभिः सह विंशतिसमिधः ततस्त्वा त्रयोविंशतिधेत्यूहितमन्त्रेण सम्भरति । परिभोजनीयान्वेदं च करोति । इदं सौत्येध्माबर्हिः सम्भरणमित्युच्यते ॥

२१७ सुब्रह्मण्यायामाहूतायां यजमानः पशुदेवतामग्निं वनस्पत्यादि च सङ्कल्पयति । तद्यथा यः पुरस्तादिज्यं प्रकृतिवत्कृत्वा सवनीयेन पशुना यक्ष्ये । पाशुकᳪं हविः । अग्निः प्रधानदेवता । वनस्पतिः पृषदाज्यस्येत्याद्युक्त्वा । इन्द्रो वसुमान् प्रातः सवनस्य देवता । इन्द्रो रुद्रवान्माध्यन्दिनस्य सवनस्य देवता । इन्द्र आदित्यवानृभुमान्वाजवान् बृहस्पतिवान्विश्वदेव्यावांस्तृतीयसवनस्य देवता । इत्यादि । अयं सुत्यासङ्कल्प इत्युच्यते ॥

२१८ अध्वर्युः उत्तरस्य हविर्धानस्य नीडे एकमम्भृणं स्थापयति । स आधवनीय इत्युच्यते ॥

२१९ तस्यैव प्रउगे द्वितीयमम्भृणं स्थापयति । स पूतभृत्पदवाच्यः ॥

२२० अनयोराधवनीयपूतभृतोरेकएवोदञ्चनो भवति । शकटे यदुपवेशनस्थानं तन्नीडपदवाच्यम् ॥

२२१ नीडस्य बहिर्भागः प्रउगपदवाच्यः ॥

२२२ बृहन्मुखा मार्तिकघटा अम्भृणपदवाच्याः ॥

२२३ अम्भृणेभ्यो जलोद्धरणार्थं यल्लघु मार्तिकपात्रं तदुदञ्चनपदवाच्यम् ॥

२२४ तृतीयमम्भृणमाग्नीध्रीये सोदञ्चनं स्थापयति । मार्जालीये सोदञ्चनं चतुर्थम् । एतदम्भृणसादनमुच्यते ॥

२२५ यजमान एतां रात्रिमाग्नीध्रीये संविशति । रक्षिणो हविर्धाने राजानं गोपायन्ति ॥

२२६ ततस्तस्या रात्र्यास्तृतीयभागेऽवशिष्टे सति यजमानस्तत्पुरुषाश्च प्रबुध्याध्वर्य्वादीन् सर्वान् ऋत्विजश्चमसाध्वर्यून् पत्नीं परिकर्मिणोपि बोधयन्ति । न महारात्रे स्नान्ति । एतत्सुत्यार्थप्रबोधनमुच्यते ॥

२२७ यजमानो हस्तपादं प्रक्षाल्यान्तरेण चात्वालोत्करौ प्रविश्याग्नीध्रीये उपविशति । ऋत्विजोपि हस्तपादप्रक्षालनाचमनं कृत्वा यजमानसमीपे गच्छन्ति । अध्वर्युः अग्नीषोमीयपशुश्चरणीयपशुशाखायाः पवित्रादिकुम्भ्यादि प्रोक्षणान्तं कृत्वा आग्नीध्रीयधिष्ण्ययोरन्तरतस्तिष्ठन् पाणिसम्मर्शनं कृत्वा तत्रैव तिष्ठन् सम्प्रैषमाह । उन्नेतर्ग्राव्णो वायव्यानि कलशौ दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोक्षं सादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः सम्मृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहर । इति । अयं सुत्यासम्प्रैष उच्यते ॥

२२८ उन्नेता ग्राव्णो वायव्यानि चमसान् परिप्लुपात्रं प्रक्षालितोपरिस्थदशापवित्रं द्रोणकलशं च दक्षिणस्य हवि-

धानस्य पुरोक्षं सह संसादयति । एतद्धविर्धाने वायव्यादिसादनमुच्यते ॥

२२९ आग्नीध्रः पूर्वया द्वारा शालां प्रविश्य पाणी सम्मृश्य चतुरोऽग्नीन् प्रज्वाल्य परिस्तीर्य अग्नीषोमीयवदग्रेणा शालामुखीयं पाशुकपात्राण्यासाद्य शालामुखीयआज्यमधिश्रयति । प्रतिप्रस्थाता तथैव प्रविश्य पाणी सम्मृश्य ब्रह्माणमुत्तरवेदेर्दक्षिणतो मन्त्रेणोपवेश्य शालामुखीयादुत्तरवेदिपर्यन्तं पृष्ठ्याँ स्तीर्त्वा पवित्रे कृत्वा यजमान वाचं यच्छेत्युक्त्वा प्राकृतमन्त्रेण अग्निहोत्रहवणीमादाय निरुप्य प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्याज्यं दधि च निरुप्याज्यमधिश्रित्योभयं पर्यग्नि करोति । अध्वर्युः मन्त्रेण प्रकृतिवत् स्फ्यादानादि कृत्वोपरवदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा ऽग्नीषोमीयवत् प्रोक्षणीरासादयेत्यादिना सम्प्रेष्यति । तत आग्नीध्रेणाहृतासु प्रोक्षणीषु स्फ्यमुदस्य प्रकृतिवत्प्रक्षालयति । आग्नीध्र उत्तरवेदिसमीपे इध्माबर्हिरासाद्य पशुवत्स्रुवस्वधितिसम्मार्जनं प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता पशुवत् जुह्वादि सम्मृज्य उत्करस्याग्रे सर्वाणि संसाद्य पत्नीं गार्हपत्यमाज्यञ्चावेक्षयित्वा समिधमुपहृत्य दध्ना सहाज्यमाहृत्याहवनीये शालामुखीये वा ऽधिश्रित्य समिधमाधाय यजमानमवेक्षयित्वा ऽध्वर्यवे प्रयच्छति । अध्वर्युः उत्तरेण प्रोक्षणीरासाद्य स्वयमवेक्ष्योत्पूय प्रोक्षणीश्चोत्पूयाज्यग्रहणात्प्राक् पशुं सम्मृशति । अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेताँसि जिन्वति । इत्याग्नीध्रीयम् । विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्रते धारा मधुश्चुत उत्सं दुह्रते अक्षितम् । इति हविर्धानम् । अयमग्निः सहस्रिण इत्युक्त्वा सर्वाः स्रुचः सम्मृशति । वायो शतं हरीणां युवस्व पोष्या-

णाम् । उत वा ते सहस्त्रिणो रथेन पृथुपाजसा । इति वायव्यानि चमसांश्च सम्मृशति। इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः । रथीतमँ रथीनां वाजनां सत्पतिं पतिम् । इति सदोभिमृशति । इदमाग्नीध्रीयादिपञ्चकसम्मर्शनमुच्यते ।

२३० ततो ब्रह्मयजमानाभ्यामाज्यदधिभ्यां च सहाग्नीध्रीयदेशं गत्वाऽग्नीषोमीयवत्पृषदाज्यसहितान्याज्यानि गृहीत्वा परिकर्मिभ्यः प्रदाय प्रोक्षण्युन्महनादि कृत्वा वेदिप्रोक्षणस्थाने खरस्योत्तरार्धे प्रोक्ष्य तत्रैवैकविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्महापरिधीन् परिधाय एता असदन्नित्यादिमन्त्रेण स्रुगभिमर्शनान्तं कृत्वा परिधीन् योगेन युनक्ति । युनज्मि ते पृथिवीं ज्योतिषा सह । इति मध्यमं परिधिम् । युनज्मि वाचँ सह सूर्येण ते । इत्युत्तरम् । सत्राः स्रुचोऽभिमृशति । युनज्मि तिस्रो विपृचः सूर्यते इति । इदं सौमिकपरिधिस्रुगभिमर्शनमित्युच्यते ॥

२३१ विष्णूनिस्थेत्यादिप्राकृतमन्त्रेण सर्वाण्याज्यान्यभिमन्त्र्य अग्नीषोमीयवत् स्रुवं ध्रुवायामवदधाति । यजमानः यन्मे अग्न इत्यादि पठति । अध्वर्युः अप उपस्पृश्य एहि यजमानेति यजमानमामन्त्र्य पूर्वया द्वारा हविर्धानं प्रपाद्य नीडे निहितं यच्चर्म तत्फलकयोः प्राचीनग्रीवमुत्तरलोम यद्य प्रतिलिखेति मन्त्रेण तूष्णीं वोपस्तृणाति । तस्मिन्नुपांशु सवनातिरिक्तांश्चतुरो ग्राव्णश्चतुर्दिक्षु परस्पराभिमुखाभिषवप्रदेशान् स्थापयित्वा ईषयोर्मध्यमार्गेण राजानमुपावहरन्ति । हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ । इति । सोमराजन्विश्वास्त्वं प्रजा उपावरोह मा भेर्मा संविक्था मा त्वा हिँसिष प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु । इति इदं सो-

मराजोपावरोहणमुच्यते ॥

२३२ राजानं ग्रावणामुपरि निधाय उद्गातृभ्यः प्राह । उपावहृतः सोमः । इति । इदमुद्गातृनिवेदनमुच्यते ॥

२३३ ततो प उपस्पृश्य एहि यजमानेति यजमानमामन्त्र्य आग्नीध्रीयं गत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसा द्रुत्य यजमानेऽन्वारब्धे जुहोति वाचस्पतये ब्रह्मण इदमिति यजमानः । अयं सवनीयपञ्चहोतृहोम उच्यते ॥

२३४ ततोऽन्येन चतुर्गृहीतेन जुहोति । आसन्यान्मामन्त्रात्पाहि कस्याश्चिदभिशस्त्याः स्वाहा । इत्ययमासन्यहोम उच्यते ॥

२३५ अग्नय इदमिति यजमानः । तूष्णीं घृतानुषिक्तं शकलमाहवनीयेऽभ्याधाय तत्रैव तिष्ठन् सम्प्रेष्यति । प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीत्सवनीयान्निर्वप प्रतिप्रस्थातः खरे पात्राणि युङ्धि । इति । अयं प्रातरनुवाकादिप्रैष उच्यते ॥

२३६ प्रेषिता ऋत्विजो यथासम्प्रैषं कुर्वन्ति । पितापुत्रीयायां सुब्रह्मण्यायामाहूतायां आग्नीध्रः ऐन्द्रान् पुरोडाशान् शालामुखीये निर्वपति । तद्यथा । पाणी सम्मृश्याग्रेण शालामुखीयं तृणानि संस्तीर्य तेष्वेकादश पुरोडाशकपालानि द्वे भर्जनकपाले त्रीणि पात्राणि आमिक्षाकुम्भं द्वे मेक्षणे आमिक्षामेक्षणं मन्थनशलाकां शूर्पं कृष्णाजिनं शम्यामुलूखलं मुसलं दृषदमुपलां पिष्टोद्वपनीं मेक्षणं प्रणीताप्रणयनं पञ्चायतनां दारुपात्रीं प्राकृतया दारुपात्र्या सहान्यानि चत्वारि पात्राणि वा ऽजिनपात्रमुपवेषं मदन्तीं यानिचान्या-

न्युपधकानि तानि सर्वाणि द्वन्द्वं सादयति । इदं सौत्यपुरोडाशीयपात्रासादनमुच्यते ॥

२३७ ततः पवित्रकरणादि । उत्तरवेदिसमीपे प्रणीतासादनम् । ततोऽग्निहोत्रहवण्यादानादि । निर्वापे विशेष उच्यते । पात्र्यां व्रीहीन् यवांश्च भेदेन प्रक्षिप्य पूर्वार्धमभिमृशति । द्वयोर्द्रव्ययोर्वीजे तृणकिंशारुनिरसनयोरावृत्तिः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्राय जुष्टं निर्वपामि । इति मन्त्रे विशेषः । पुरोडाशार्थं चतुरो व्रीहिमुष्टीन्निरूप्य धानार्थं करम्भार्थं च यवमुष्टीन् परिवापार्थं व्रीहिमुष्टीन्निर्वपति । ऐन्द्राण्येव सर्वाणि द्रव्याणि । निरुप्ताभिमर्शनातिशिष्टाभिमर्शनैकीकरणानामावृत्तिः । धान्यद्वित्वात् उर्वन्तरिक्षमन्वितम् । अदित्या वा मुपस्थे सादयामि । इत्यूहः । अयं सवनीयपुरोडाशनिर्वाप उच्यते ॥

२३८ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्राय वो जुष्टं प्रोक्षामि । इति भेदेनोभयोर्द्रव्ययोःप्रोक्षणम् । ततः कृष्णाजिनादानादि व्रीहीन् द्वेधा कृत्वैकं भागमवहन्ति । इदानीमेव हविष्कृदाह्वानम् । व्रीह्यवघातकाले पृथक् कृतान् व्रीहीन् यवांश्चोपोद्यच्छन्ते । तन्दुलप्रक्षालननिनयनान्ते पुनरग्नेस्तनूरसीत्यादिना यवानाम् । नात्र हविष्कृतमाह्वयति । परिवापव्रीहीनुपोद्यच्छन्ते । प्रक्षालननिनयनान्ते सायन्दोहवत्प्रातर्दोहः । उदगग्रेण शाखापवित्रेण । मात्रातञ्चनादि । अयं सवनीयप्रातर्दोह उच्यते ।

२३९ पुरोडाशीयाधिवपने इन्द्राय जुष्टमधिवपामीति विशेषः । पुरोडाशार्थमेकादशकपालान्युपधाय तदुत्तरत आदेवयजं वहेत्यङ्गारमानीय तदुपरि ध्रुवमसीत्यादिमन्त्रेण भर्जनकपालमुपदधाति । निर्दग्धमित्यादिमन्त्रेण प्रदक्षिणमङ्गारैः परिचिनोति । कपालस्यैकत्वाद्धृतधर्म इत्यादि मन्त्रे

एकवचनान्तत्वम्। इदं धानाकपालोपधानमुच्यते।

२४० तदुत्तरतस्तथैव द्वितीयं भर्जनकपालमुपदधाति। इदं परिवापकपालोपधानमुच्यते।

२४१ तदुत्तरतस्तूष्णीमङ्गारमावर्त्य तिरः पवित्रं प्रातर्दोहमामिक्षाकुम्भ्यामानीय तां तूष्णीं तस्मिन्नङ्गारे अधिश्रित्य प्रातर्दोहं मेक्षणेनालोड्य श्रपयति। इदमामिक्षाकुम्भ्युपधानमुच्यते।

२४२ ततः संवपनादि। इन्द्राय जुष्टꣳ संवपामीति ऊहः। पिण्डाभिमर्शने मन्त्रः इन्द्राय त्वेति। पुरोडाशं प्रथयित्वा यवान् परिक्षुद्य भर्जनकपाले निवपति। घर्माः स्थ विश्वायुषः इति मन्त्रेण। एवमेव परिवापव्रीहीन् द्वितीये निवपति। अयं सौत्यपुरोडाशीयसंवाप उच्यते।

२४३ तप्ते प्रातर्दोहे सायंदोहं दध्यानीयामिक्षावाजिने शीतले कृत्वा निदधाति। इदं सवनीयामिक्षावाजिनकरणमुच्यते।

२४४ ततस्त्वचं गृह्णीष्वेत्यादि। शाखामुखीयस्य पश्चात्पुरोवान्येभ्योनिनयति ततो भ्रष्टान्यवानवतार्य द्विधा कृत्वा एकं भागमिन्द्राय व इति मन्त्रेणाभिमृश्य नवे पात्रे तिरः पवित्रं लौकिकमाज्यमानीय तस्मिन् तं भागमोप्य पुरोडाशादुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। इदं सवनीयधानाश्रपणमुच्यते।

२४५ ततः कृष्णाजिनावधूननादि कृत्वा द्वितीयं भागं पेषयित्वा नवे पात्रे तथैवाज्यमानीय जातान् सक्तूनोप्य मन्थनशलाकया रज्ज्वादिना मथित्वा स्थाल्योष्ठलग्ना विप्रुषोन्तः क्षिप्त्वा इन्द्राय त्वेति मन्त्रेणाभिमृश्य धानानामु-

त्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति । अयं पदार्थः करम्भ इत्युच्यते ।

१४६ भृष्टान् व्रीहीनवतार्य वितुषीकृत्य नवे पात्रे पूर्ववदाज्यमानीयोप्य इन्द्राय त्वेति मन्त्रेणाभिमृश्य करम्भादुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। इदं परिवापश्रयणमुच्यते।

२४७ तदुत्तरतो भस्ममिश्रेष्वङ्गारेषु मिद्याववाजिने अधिश्रयति । ततः पवित्रे प्रस्तरे विसृज्य शाखापवित्रं प्रस्तरे प्रज्ञातं निधाय उपवेषं चान्यत्र निदधाति । प्रतिप्रस्थाता स्रुचा दक्षिणतः पूर्वार्धे खरस्य मध्ये दक्षिणाशिरसमुपांशु सवनं ग्रावाणं निदधाति । तस्य दक्षिणतः संलग्नमुपांशु पात्रम् । तस्य उत्तरतोन्तर्यामपात्रम् । तस्य पश्चा दाश्विनपात्रम् । तस्य पश्चात्प्रबाहुक्दक्षिणं शुक्रपात्रम् । उत्तरं मन्थिपात्रम् । मन्थिपात्रस्याग्रे दक्षिणोत्तरे ऋतुपात्रे खरस्य पश्चार्धे मध्ये आग्रयणस्थालीम् । तदुपशयपात्रं च उत्तरस्या खरश्रोण्यां उक्थ्यस्थालीं तदुपशयपात्रं च । उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनं भूम्या ध्रुवस्थालीम् । पूतभृदाधवनीययोर्मध्ये चमसान् परिप्लुपात्रं च दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशम् । तस्मिन् दशापवित्रे । ऐन्द्रवायवस्य दक्षिणत आग्नेयम् । तस्य पश्चादैन्द्रम् । तस्य पश्चात सौर्यम् । एतानि त्रीणि पात्राण्यातिग्राह्याणीत्युच्यन्ते ।

२४८ ऐन्द्रवायवस्योत्तरतो ऽदाभ्यपात्रम् । तस्य पश्चादंशुपात्रम् । अधस्तादुपरिष्टाद्रजतसुवर्णरुक्मवेष्टितं क्वचिद्दधिग्रहपात्रम् । एवं पात्राणिसादयति । एतत् खरे ग्रहादिसादनमुच्यते ।

२४९ अध्वर्युः । अग्निर्देव तागायत्री छन्द उपांशोः पात्रमसि । इत्युपांशु पात्रमभिमृशति । सोमो देवता त्रिष्टुप्

छन्दोन्तर्यामस्य पात्रमसि। इत्यन्तर्यामम्। इन्द्रो देवता। जगती छन्द इन्द्रवायुवोः पात्रमसि। इत्यैन्द्रवायवपात्रम्। बृहस्पतिर्देवता ऽनुष्टुप् छन्दो मित्रावरुणयोः पात्रमसि।

२४९। इति मैत्रावरुणम्। अश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि। इत्याश्विनम्। सूर्यो बृहती छन्दः शुक्रस्य पात्रमसि। इति शुक्रम्। चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि। इति मन्थिनम्। विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसि इत्याग्रयणम्। इन्द्रो देवता ककुत छन्द उक्थानां पात्रमसि। इत्युक्थ्यम्। पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि। इति ध्रुवस्थालीम्। एतद्ग्रहाभिमर्शनमित्युच्यते।

२५० ततो यत्कर्तव्यं तच्चिन्तयन्नास्ते। होतुः सकाशाद्भूदुषेति श्रुत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा आहवनीये जुहोत्यन्वारब्धे यजमाने। शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः। शृणोत ग्रावाणो विदुषो नु यज्ञꣳ शृणोतु देवः सविता हवं मे स्वाहा। इति। अयमपोनप्त्रीयारम्भकहोम उच्यते।

२५१ अग्न्यब्ग्रावदेवसवितृभ्य इदमिति यजमानः। अपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय सम्प्रैषमाह। अपइष्यहोतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन एतनेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन च वावसतीवरीभिश्चचात्वाले प्रत्युपलम्बस्व। इति। अयमपोनप्त्रीयानुवचनप्रैष इत्युच्यते।

२५२ यथासम्प्रैषं ते कुर्वन्ति। नेष्टा पत्नेजनीकलशहस्तां पत्नीमानयति। प्रेह्युदेह्यृतस्य वामीरन्वग्निः स्तेग्रं नयत्वदितिर्मध्यं ददतां रुद्रावसृष्टासि युवानाममामाहिꣳसीः।

इति । इदं पन्नेजनीग्रहणार्थपत्न्यानयनमित्युच्यते ।

२५३ प्राग्वंशस्य पूर्वया द्वारोपनिष्क्रम्योत्तरेण सद आग्नीध्रीयं धिष्ण्यं अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तत्र गच्छन्ति । अध्वर्युः । अप्सु बर्हिष एकदेशं प्रास्य तस्योपरि सशेषं जुहोति । देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मादिन्तमस्तं देवेभ्यो देवत्रा धत्तशुक्रँशुक्रपेभ्यो येषां भागस्थ स्वाहा । इति । अद्भ्य इदमिति यजमानः । अयं एकधनाग्रहणार्थहोम उच्यते ।

२५४ अध्वर्युः अप्सु हुतमाज्यं मैत्रावरुणचमसेनोपप्लावयति । कार्षिरस्यपापां मृध्रम् । इति । बर्हिषीअन्तर्धाय मैत्रावरुणचमसं पूरयति । समुद्रस्य वोक्षित्या उन्नये । इति । इदं मैत्रावरुणचमसपूरणमुच्यते ॥

२५५ त्रिषु कलशेषु बर्हिषी अन्तर्धाय एकधनान् गृह्णाति । इन्द्राय वो जुष्टान् गृह्णामि । इति । इदमेकधनग्रहणमुच्यते ॥

२५६ इमा गृहीता आप एकधनपदवाच्याः ॥

२५७ प्रतिकलशं ग्रहणमन्त्रस्यावृत्तिः । एकधनान् परिकर्मिभ्य एकधनिभ्यो दत्वा पत्नी कलशं गृहीत्वा बर्हिषी अन्तर्धाय पन्नेजनीर्गृह्णाति । वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पन्नेजनीर्गृह्णामि । इति । इदं पन्नेजनीग्रहणमुच्यते ॥

२५८ अत्र गृहीता आपः पादप्रक्षालनार्थत्वात्पादयोर्नेजन्य इति समासे पन्नेजनीपदवाच्याः ॥

२५९ ततः पन्नेजनीकलशं पत्न्यै प्रदाय यथेतं मङ्गलवाद्यघोषयुक्ताश्चात्वालदेशं प्रतियन्ति । आग्नीध्रः चात्वालदेशे होतृचमसं वसतीवरीश्च सादयति । अध्वर्युः होतृचमसं

वसतीवरीभिः सम्मृश्य पूरयति अन्वारब्धे यजमाने । होतृचमसात्तथैव मैत्रावरुणचमसे बिन्दुं प्रस्कन्दयति । होतृचमसं वसतीवरीमैत्रावरुणचमसमिति त्रयं संसृष्टं निधाय सकृद्वा प्रत्येकं मन्त्रं वक्ष्यमाणमुक्त्वा क्रमेण होतृचमसादिषु सशेषं प्रचरणीशेषमाज्यमानयति । सं ज्योतिषा ज्योतिरंकाम् सम् शुक्राः शुक्रेण सम् हविषा हविः सं यज्ञपतिराशिषा । इति । इदं होतृचमसादिषु प्रचरणीशेषानयनमुच्यते ॥

२६० पत्नी यथेतमेत्य वेद्यां शालामुखीयस्य पश्चात्तेन संसृष्टाः पन्नेजनीः सादयति । एतद्वेद्यां पन्नेजनीसादनमुच्यते ॥

२६१ अध्वर्युः होतृचमसं वसतीवरीमैत्रावरुणचमसं एकधनांश्चादाय होतुः सकाशमेति । अवेरपोऽध्वर्या३उ इति होत्रा पृष्टः सन् प्रत्याह । उतेमन्नमुरुतेमाः पश्य । इति । इदमबानयननिवेदनमुच्यते ॥

२६२ यमग्ने पृत्सु मर्त्यमावो वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः स्वाहा । इति प्रचरणीशेषेणाज्येनाहवनीये जुहोति । अयं क्रतुकरणहोम उच्यते ॥

२६३ अग्नयइदमिति यजमानः । होतृचमसं वसतीवरीमैत्रावरुणचमसं च दक्षिणेन होतारं पर्याहृत्य पूर्वया द्वारा हविर्धानं प्रपादयति । तथैव दक्षिणेन होतारं पर्याहृत्याऽपरया द्वारैकधानान् हविर्धानं प्रपादयति । इदं वसतीवर्यादिहविर्धानप्रवेशनमुच्यते ॥

२६४ होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणैवे नीत्वा नीडे सादयति । तत्रत्यमाधवनीयमुत्तानं कृत्वा मैत्रावरुणचमसीया अपः पर्यस्यति । वसतीवरीणां तृतीयं भाग-

ानयति । तथा तृतीयं भागमानयति । तथा तृतीयमेकधनानाम् । अवशिष्टा वसतीवरीरुत्तरस्य हविर्धानस्य पुरोक्षं सादयति । शिष्टानेकधनान् पश्चादक्षं सादयति । इदं हविर्धाने वसतीवर्यादिसादनमुच्यते ॥

२६५ ततो हविर्धानयोर्मध्ये उपविश्य दधिग्रहपात्रमादाय तस्मिन् बर्हिषी अन्तर्धाय तदीयं दधि गृह्णाति । उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः । अपोधृत्य बर्हिषी ग्रहमादायोत्तिष्ठति । दिवे त्वाऽन्तरिक्षायत्वा पृथिव्यै त्वा इति । अपेन्द्र द्विषतो मनोऽपजिज्यासतो जह्यप यो नोऽरातीयति तं जहि । इति पूर्वया द्वारोपनिष्क्रामति । पृष्ठ्यायां दक्षिणतः प्राङ्मुख उपविश्याहवनीये जुहोत्यन्वारब्धे यजमाने । प्राणाय त्वा ऽपानायत्वा व्यानायत्वा सते त्वा ऽसते त्वा ऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्छिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहा । इति । प्रजापतय इदमिति यजमानः । अध्वर्युः दधिग्रहपात्रसंक्षालनं जलमन्तः परिधि निनीयपात्रमग्नावनु प्रहरति अयं दधिग्रहप्रचार इत्युच्यते ॥

२६६ ततो यजमानः । अध्वर्यो धेनुं ते ददामि । अध्वर्युर्धेनुं प्रतिगृह्य दधिग्रहशाखां मेक्षणं च तूष्णीमनुप्रहरति । यजमानः प्रकृतिवदुपवेषमुद्वासयति । अध्वर्युः होतृचमसीया दक्षिणस्य हविर्धानस्येषयोर्मध्ये नावतार्य चर्माणि निधाय ताः प्रेक्षमाणं यजमानं वाचयति । निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयताऽपानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं

मे तर्पयताऽऽत्मानं मे तर्पयताऽङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गृहान्मे तर्पयत गणान्मे तर्पयत सर्वगणं मा तर्पयत तर्पयत मा गणा मे मा वितीतृषन् । इति । इदं होतृचमसीयाप्रेक्षणवाचनमुच्यते ॥

२६७ वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसाऽग्नेः प्रियं पाथ उपेहि । इत्युपनद्धस्य राजस्त्रीनंशूनाकृष्य गृह्णाति । तत्रोक्तमन्त्रेण प्रथमम् । रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रिय० पेहि । इति द्वितीयमंशुम् । आदित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि । इति तृतीयम् । अंशूनद्भुत्यवकाशे कृत्वा होतृचमसीयाः पात्रान्तरे निधाय होतृचमसे आधवनीयादपो गृह्णाति । ता अपस्तैरंशुभिर्द्वादशभिर्मन्त्रैराधूनोमि । मान्दासु ते शुक्रशुक्रमाधूनोमि भन्दनासु ते शुक्र०मि । कोतनासु ते० । नूतनासु ते० । रेशीषु ते० । मेषीषु ते० । वाशीषु ते० । विश्वभृत्सु ते० । माध्वीषु ते० । ककुहासु ते० । शक्वरीषु ते० । शुक्रासु ते शुक्रशुक्रमाधूनोमि । एते मन्त्रा द्वादश आधावसंज्ञकाः ॥

२६८ ततः अदाभ्यपात्रमधस्तादुपरिष्टाद्रजतसुवर्णरुक्माभ्यां क्रमेणावेष्ट्य तस्मिन्नंशून्निधाय होतृचमसीया अपो गृह्णाति । शुक्र ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत । इति । एतददाभ्यग्रहणमुच्यते ॥

२६९ ककुहꣳ रूपं वृषभस्य रोचते वृहत् । इति ग्रहमादायोपोत्तिष्ठति । सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः । इत्याहवनीयसकाशमेति । वषट्कारपथस्य दक्षिणतः प्राङ्मुखस्तिष्ठन् अन्वारब्धे यजमाने सर्वं जुहोति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ।

इति । सोमायेदमिति यजमानः । अध्वर्युः प्रदक्षिणमावृत्य राजन्यंशून् प्रक्षिपति । उशिक् त्वं देव सोम गायत्रेण छन्दसा अग्नेः प्रियं पाथो अपीहि । इति प्रथममंशुं प्रक्षिपति । वशी त्वं देवसोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीहि । इति द्वितीयम् । अस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहि । इति तृतीयम् । अयमदाभ्यग्रहहोमउच्यते ॥

२७० ततः पात्रान्तरे ऽवनीता होतृचमसीया होतृचमसे आनीय यजमानाय दत्त्वोपांशुसवनं ग्रावाणं देवस्य त्वेत्यादिमन्त्रेणाऽऽदत्ते । ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिम् । इत्यभिमन्त्रयते । उपांशुसवनं चर्मणः पूर्वार्धे प्रागायतं निधाय राजानं विस्रस्य उपांशु सवनस्योपरि मिमीते । इन्द्राय त्वा वृत्रघ्ने । इन्द्राय त्वा वृत्रतुरे । इन्द्राय त्वा ऽभिमातिघ्ने । इन्द्राय त्वादित्यवते । इन्द्राय त्वा विश्वदेव्यावते । इत्येकैकेन मन्त्रेण क्रमेण । तत्र प्रथममङ्गुष्ठयुक्तया प्रदेशिन्या । द्वितीयमंगुष्ठयुक्तयोपकनिष्ठिकया । तृतीयं तथैव प्रदेशिन्या । चतुर्थं तथै॰ कनिष्ठिकया । पञ्चमं तथैव मध्यमया । एवं विमाय पञ्चकृत्वस्तूष्णीं मिमीते । अंगुष्ठयुक्तया कनिष्ठिकया प्रथमम् । तथैव कनिष्ठिकया तृतीयम् । तथैव प्रदेशिन्या चतुर्थम् । महानाम्न्या तथैव पञ्चमम् । एवं दशकृत्वो मिमानो ऽर्धं राजानं मिमीते । इदं प्रातःसवनार्थसोममानकरणमुच्यते ॥

२७१ अवशिष्टं राजानमुष्णीषेण विग्रथ्य द्वयोर्मध्येन नीत्वानीडे सादयति । मितं राजानं होतृचमसीयाभिः सिञ्चति । श्वात्राः स्थ वृत्रतुरो राधो गूर्ता अमृतस्य पत्नी-

स्तादेवीर्देवत्रेमं यज्ञं यत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳसोमः पिबतु । इति । इदमभिषवार्थसेचनमुच्यते ।

२७२ तत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरुरायाकृध्यधिदात्रेऽवोचः । इति राजानमुदकेन मिश्रयति । इदं होतृचमसीयामिश्रणमुच्यते ।

२७३ धिषणे वीडूसतीवीडयेथामूर्जं दधाथामूर्जं मे धत्तं माꣳहिꣳसिष्ट मा मा हिꣳसिष्टम् । इतिचर्मान्तर्हिते फलके अभिमृशति । इदमभिषवार्थफलकाभिमर्शनमुच्यते ।

२७४ ततो यजमानं वाचयति । अवावृधं वो मनसा सुजाता ऋतप्रजा ता भगइद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनुमन्यन्ताꣳसवनाय सोमम् । इति । इदं वृद्धिवाचनमित्युच्यते ।

२७५ प्रतिप्रस्थाता राज्ञः षडंशूनादाय सव्यपाण्यन्तरालेषु द्वौ द्वौ कृत्वा सव्येनैव पाणिनोपांशु पात्रमादत्ते । अध्वर्युः प्रेष्यति । प्रतिप्रस्थातरुदकꣳसेनवोदचमसेन वा जघनेनाहवनीयं प्रत्युपलम्बस्व । स तथा करोति । अध्वर्युः हिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ कृत्वा राजानं विस्रस्योपांशुमवनेन सकृत्प्रहृत्य अंशुपात्रमादाय कया न इति वामदेव्यं साम अनवानं गायन्यानिं वा पठन्नंशुमात्रेण रसं गृह्णाति । उपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामि तिष्ठन्नाहवनीये जुहोति । प्रजापतये स्वाहा । इति । यथालिङ्गं त्यागो यजमानस्य । हिरण्ये प्राणयत्यानिति । प्राणः प्राण एतु परावत आन्तरिक्षाद्दि- वस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणायत्वा । इति । इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना । दधन्वे वा यदीमनुवो चद्-

ह्लाणि वेहतत् । परिविश्वानि काव्या नेमिश्चक्रमिवा-भवत् । इति द्वाभ्यां यजमानः पूर्वाह्नाभिराङ्गमोजयते । तच्छतमानं हिरण्य मध्वर्यवे ददाति । शतमानं रजतं ब्रह्मणे । अथमंशुपात्रहोम उच्यते ।

२७६ अध्वर्युरुपांशुसवनेनाभिषुणोति । एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त अष्टौ इत्यष्टकृत्वः सङ्ख्याय अभिषुणोति। सोमवल्ल्याः जलेन कुट्टनं अभिषवणमुच्यते ।

२७७ अंशौ स्कन्ने सति यजमानं वाचयति । आमास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः । अभिषुतं सोममञ्जलिनैकीकृत्य गृह्णाति । प्रतिप्रस्थाताऽङ्गुल्यन्तरालधृताभ्यां प्रथमाभ्यामंशुभ्यामुपांशुपात्रमन्तर्दधाति अध्वर्युः वाचस्पतये पवस्व वाजिन् । इति पात्रे रसमानयति । प्रतिप्रस्थाता अंशू यथास्थानं स्थापयति । इदमुपांशुपात्रे प्रथमरसग्रहणमुच्यते ।

२७८ अध्वर्युः पुनर्होतृचमसीयाऽऽनिग्रमादि कृत्विवाचनान्तं कृत्वोपांशुसवनेन एकमित्यादि एकादशेत्यन्तं सङ्ख्यायाभिषुणोति । नात्रांशौ स्कन्ने वाचनम् । पूर्ववदङ्गुलिभिर्गृह्णाति । प्रतिप्रस्थाता मध्यमाभ्यामंशुभ्यां पात्रमन्तर्दधाति । अध्वर्युः । पात्रे आनयति । वृषा वृष्णो अंशुभ्यां गभस्तिपूतः । इति प्रतिप्रस्था अंशू यथास्थानं स्थापयति । इदं द्वितीयरसग्रहणमुच्यते ॥

२७९ द्वितीयवत्तृतीयं द्वादशकृत्वः संख्ययाऽभिषुणोति । नात्रांशौ स्कन्ने वाचनम् । उत्तमाभ्यामंशुभ्यामन्तर्धानम् । देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा । इति पात्रे रसानयनम् । इदं तृतीयरसग्रहणमुच्यते ।

२८० अध्वर्युः उपांशुसवनं दशापवित्रे च परिमृज्य यथास्थानं

निदधाति । उपांशुप्रभृतीनां सर्वेषां ग्रहाणां ग्रहणं पुरस्तादुपरिष्टाच्चोद्बुध्नता आबिलात् । ग्रहाणामुपयामेत्येतद्घटितेन मन्त्रेण ग्रहणम् । अनादिष्टश्रपणानां हिरण्येन श्रपणम् । दधिग्रहभिन्नानां तिष्ठद्धोमः । अध्वर्युः स्वांकृतोसि इति । मन्त्रेण प्रतिप्रस्थातुः सकाशात् उपांशु पात्रमादत्ते । मधुमतीर्न इषस्कृधि । इत्यवेक्षते पात्रम् । इदं ग्रहावेक्षणमुच्यते ।

२८१ सव्येन धृत्वा दक्षिणेनोर्ध्वमुन्मार्ष्टि । विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः । इति । इदं ग्रहोन्मार्जनमुच्यते ।

२८२ मनस्त्वाष्टु । इत्युत्तिष्ठति उर्वन्तरिक्षमन्विहि । इत्याहवनीयसमीपं गच्छति । स्वाहा त्वा सुभवः सूर्याय स्वाहा इत्यन्वारब्धे यजमाने आहवनीये जुहोति । सूर्यायेदमिति यजमानः । अयमुपांशुपात्रहोम उच्यते ।

२८३ अनुपाश्य यजमानं वाचयति । भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि । इति । बिलादारभ्याधः प्रदेशादर्वाचीनं ग्रहस्य बहिष्ठ रसमवमृज्य प्रत्यगग्रेणाधोमुखेन पाणिना मध्यमे परिधौ निमार्ष्टि । देवेभ्यस्त्वा मरीचिपेभ्यः । इति देवेभ्यो मरीचिपेभ्य इदमिति यजमानः । इदं ग्रहरसावमार्जनमुच्यते ।

२८४ अध्वर्युः प्रदक्षिणमावृत्याऽऽग्रयणस्थाल्यां ग्रहस्य संस्रावमवनयति । एष ते योनिः । इति । उपांशुपात्रे राज्ञोंऽशुं प्रात्ययथास्थाने निदधाति । प्राणाय त्वा । इति । इदमुपांशुसवनप्रत्यभिमर्शनमुच्यते ।

२८५ प्रतिप्रस्थाता ग्रहणक्रमेणाभिषुते राज्ञि द्वौ द्वावंशू प्रक्षिपति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम

सोमाय । इतिमन्त्रस्य त्रिरावृत्तिः । अध्वर्युः राज्ञः पश्चात्प्राङ्मुख उपविशति । तस्य दक्षिणत उदङ्मुखो यजमानः । प्रतिप्रस्थाता च उत्तरतो दक्षिणामुखः । आग्नीध्रः पुरस्तात्प्रत्यङ्मुखः । नेष्टा दक्षिणत उदङ्मुखः । ब्रह्मा ऽभिषोतॄन् परीत्य दक्षिणत उदङ्मुख आस्ते । इदमभिषवार्थोपवेशनमुच्यते ।

२८६ ततो ऽध्वर्युरुन्नेतारमाह । आहरोपसृज । इति । उन्नेता आधवनीयादुन्नयनेन होतृचमसमुपर्यर्धं करोति । अध्वर्युप्रतिप्रस्थात्राग्नीन्नेष्टारो होतृचमसे राज्ञोंऽशून् परिप्लावयन्ति । प्रागपागुदगधराक्सर्वतस्त्वादिश आधावन्त्वम्ब निष्वर । इति । इदमंशुपरिप्लावनमुच्यते ।

२८७ होतृचमसादंशूनादाय चर्मणि निधाय राजानं होतृचमसोदकेनोपसिच्य प्रत्यात्मानं सर्वे विभज्य अंशूनाकृष्य यावद्रसनिस्रावमभिषुण्वन्ति । आहरोपसृजेत्याद्यं तदन्तं त्रिवारं समन्त्रकं कृत्वा चतुर्थं आहरोपसृजेति प्रैषमात्रं अन्यत्तूष्णीम् । ततो राजानं हस्तेन निष्पीड्य सम्भरणीकलशे रसं गृहीत्वा अध्वर्युरन्तरेणोषे उन्नेत्रे प्रयच्छति । उन्नेता आधवनीयस्था अपो ऽन्यस्मिन्नम्भणे ऽवनीयाधवनीये पवित्रं वितत्य सम्भरणीमवनयति । एष एकः पर्यायः । अयं सोमाभिषवप्रथमपर्याय उच्यते ॥

२८८ तत आहरोपसृजेत्यादि त्रिवारं समन्त्रकं सकृत्तूष्णीं च कृत्वा अम्भणान्तरस्था आधवनीया अप उपसृजति सम्भरणीमवनयतीत्यन्तं करोति । एष सोमाभिषवद्वितीयपर्याय उच्यते ॥

२८९ एवमेव तृतीयः पर्यायः । तृतीये अम्भणे आधव-

नीयापोवनयतीति विशेषः। एष सोमाभिषवतृतीयपर्याय उच्यते ॥

२९० ततः ऋजीषं दशापवित्रेण परिवेष्ट्य अन्तरेणेषे उन्नेत्रे प्रयच्छति। उन्नेता मर्दयित्वा आधवनीये निष्पीड्य तेनैव मार्गेणाध्वर्युः ऋजीषं चर्मणि निधाय पूर्ववत्सम्मुखान् ग्राव्णः कृत्वा ग्रावमुखेषु ऋजीषं चतुर्धा कृत्वा व्यपोहति। उद्गातृभ्यः प्राह। सोमो ऽभिषुतः। इति। इदमभिषुतसोमनिवेदनमुच्यते ॥

२९१ उद्गातृभिर्द्रोणकलशे ऋजीषस्योपरि निहिते दशापवित्रे वितते उदिते आदित्ये ऽनुदिते वा उन्नेत्रा आधवनीयादुदञ्चनेन दशापवित्रे ऽवनीयमानं सोममन्तर्यामपात्रेणाधोधारायां गृह्णाति। उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व। इति। इदमन्तर्यामरसग्रहण मुच्यते।

२९२ स्वां कृतोसि। इति धारातो ग्रहमपकर्षति। मधुमतीरित्यादिमन्त्रेणेक्षते। उपांशु पात्रवन्मन्त्रेणोन्मार्ष्टि। तथैवादायोपोत्थाया ऽऽहवनीयसमीपमेत्योपांशुपात्रहोममन्त्रेण जुहोति। अपान्य यजमानं वाचयति। धुरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि। इति। अयमन्तर्यामपात्रहोम उच्यते।

२९३ ग्रहस्य बहिष्ठं रवं मूलादारभ्य बिलपर्यन्तं दक्षिणेन पाणिनोर्ध्वमुन्मृज्य प्राचोत्तानेन पाणिना मध्यमे परिधौ उक्तमन्त्रेणोन्मार्ष्टि। ग्रहस्य यथास्थानसादनान्तं प्रत्यभिमर्शनान्तं च समन्त्रकमुपांशुपात्रवत्। तत उन्नेतारमाह।

अप्रमत्तः सन्ततमानयोपांशुग्रहान् ग्रहीष्यामि । इति अयं ग्रहेषु रसानयनप्रैष उच्यते ।

२९४ उन्नेता पूर्ववदाधवनीयादुदञ्चनेन सन्ततां सोमधारांदशापवित्रे ऽवनयति । ध्रुवस्थाल्यां ग्रहणपर्यन्तं अध्वर्युः ऐन्द्रवायवपात्रेण धारायां गृह्णाति । एतदादीनाग्रयणान्तान् मन्द्रापेक्षया नीच स्वरेण गृह्णाति । आवायोभूषशुचिपाउपनः सहस्रं ते नियुतो विश्ववार । उपोतेअन्धोऽपेयम् । उपयामगृहीतो ऽसिवायवे त्वा जुष्टं गृह्णामि । इति किञ्चित् गृहीत्वा धारातो ग्रहमपनीय पुनर्गृह्णाति । इन्द्रवायू इमे सुताउपप्रयोभिरागतमिन्दवो वामुशन्तिहि । उपयामगृहीतो ऽसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामि । दशापवित्रेण परिमृज्य मन्त्रेण यथा स्थानं निदधाति । एष ते योनिः सजोषाभ्यां त्वा । इत्यैन्द्रवायवपात्रे रसग्रहणमुच्यते ।

२९५ मैत्रावरुणपात्रे गृह्णाति । अयं वां मित्रावरुणाऽसुतꣳ हवम् । उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि । इति । बर्हिषी अन्तर्धाय पयसा श्रीत्वा अपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य यथास्थानं सादयति । एष ते योनिर्ऋतायुभ्यां त्वा । इति । इदं मैत्रावरुणपात्रे रसग्रहणमुच्यते ॥

२९६ शुक्रपात्रेण गृह्णाति । अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायूरजसो विमाने । इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोसि शण्डाय त्वा जुष्टं गृह्णामि । परिमृज्य सादयति । एष ते योनिर्वीर तां पाहि । इति । इदं शुक्रपात्रे रसग्रहणमुच्यते ।

२९७ मन्थिपात्रे गृह्णाति । तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदम् । ०रोचनम् । उपयाम-

गृहीतोऽसि मर्काय त्वा जुष्टं गृह्णामि । इति । बर्हिषी अन्तर्धाय सक्तुभिः श्रीत्वाऽपोद्धृत्य बर्हिषी परिमृज्य सादयति । इदं मन्थिपात्रे सोमग्रहणमुच्यते ।

२९८ आग्रयणस्थं सोमं पात्रान्तरेऽवनीय तेनोदञ्चनेन च द्वयोर्धारयोरधस्तादाग्रयणं गृह्णाति । ये देवा सो०मञ्जुषध्वम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि । इति । ततो मन्द्रेण हिं हिं हिं सोमः पवते सोमः पवते स्मे ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्यै विशे पवतइषे पवतऊर्जे पवतेऽद्भ्यः पवतओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवतेऽस्मै सुन्वते यजमानाय पवते ज्यैष्ठ्याय पवते । अविच्छिद्योपरिमन्त्रं वदति । आग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवनापाहि विष्णुस्त्वां पातु विश्वं त्वं पाहीन्द्रियेण । परिमृज्य सादयति । एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति । इदमाग्रयणस्थाल्यां सोमग्रहणमुच्यते ।

२९९ एतदन्तान् उपांशु गृहीत्वाऽत ऊर्ध्वं सवनस्वरेण गृह्णाति । आग्नेयपात्रेण गृह्णाति । अग्नआयूंषि० दुच्छुनाम् । उपयामगृहीतोस्यग्नये त्वा ज्योतिष्मते । जुष्टं गृह्णामि । परि०यति एष ते योनिरग्नये त्वा तेजस्वते । इति । इदमाग्नेयपात्रे सोमग्रहणमुच्यते ।

३०० ऐन्द्रपात्रेण गृह्णाति । उत्तिष्ठन्नोजसचमूतम् । उपयामगृहीतोसीन्द्राय त्वौजस्वते जुष्टं गृह्णामि । इति । इदमैन्द्रपात्रे सोमग्रहणमुच्यते ।

३०१ सौर्यपात्रेण गृह्णाति । तरणिर्वि०रोचनम् । उपयामगृहीतोसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामि । परि०-

यति । एष ते योनिः सूर्याय त्वा भ्राजस्वते । इति । इदं परियति । एषते योनिरिन्द्राग्निभ्यां त्वौजस्वते इति । इदमैन्द्र-पात्रे सोमग्रहणमुच्यते ।

३०२ तत उक्थ्यस्थाल्याम् । उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवेयत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्ण-वे त्वा जुष्टं गृह्णामि । इति । परि०मति । एष ते योनिरि-न्द्राय त्वोक्थायुवे । इति । इदमुक्थ्यस्थाल्यां सोम-ग्रहणमुच्यते ।

३०३ ततो ध्रुवस्थालीं गृहीत्वा ऽऽह । ये पूर्वया द्वारा प्रापत्स्यन्तः प्राञ्चस्ते निष्क्रामन्तु ये परया प्रत्यञ्चस्ते मा वो ऽभिपरिहारिषम् । ध्रुवस्थालीं सोन्नेतृकानभिषोतृंश्च जघनेनाभिपरिहृत्योत्तरतो धारायां गृह्णाति । मूर्धानं दिवो०यन्त देवाः । उपयामगृहीतोस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामि । इति उपर्यविच्छिद्य मन्त्रं वदति । ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोच्युतानामच्युतक्षित्तमः । इति । ततः परिमृज्य यथाहृतं परिहृत्य यथास्थानं साद-यति । एष ते योनिरग्नये त्वा वैश्वनराय । इति । इदं ध्रुवस्थालीसोमग्रहणमुच्यते ।

३०४ ततउन्नेता आधवनीयादुदञ्चनेनोपर्यर्धं द्रोणकलशं पूरयति अध्वर्युस्तस्मिन् पयः सक्तून् हिरण्यं च प्रक्षिप्य मिश्रीकृत्य परिप्लुपात्रं च प्रास्य द्रप्सानुमन्त्रयते । द्रप्सश्चस्कन्द० सप्तहोत्राः । यस्ते द्रप्सः स्कन्दति०तं जुहो-मि । यो द्रप्सो अंशुः ०तं जुहोमि । यस्ते द्रप्सो म० तं जुहोमि । इति चतसृभिः । इदं सोमद्रप्सस्कन्दनानुमन्त्र-णमुच्यते ।

३०५ उन्नेतारमाह । अरिक्तं पूतभृतं कुरु पवमानस्य

ग्रहान् ग्रहीष्यामि । अयं पूतभृत्पूरणप्रैष उच्यते ।

३०६ उन्नेता पूतभृतो बिले दशापवित्रं वितत्याधवनीयात् द्वौ त्रीन्वो दशनानयति । अध्वर्युः द्रोणकलशमभिमृशति । उपयामगृहीतोऽसि प्रजापतये त्वा । तत आधवनीयम् । उप०सीन्द्राय त्वा । पूतभृतं उप०सि विश्वेभ्यस्त्वा देवेभ्यः । उन्नेतार माह । उन्नेतः प्रांचं राजानं पूतभृतमभिसंपवयताद्दशाभिराधवनीयं मृष्ट्वा न्युब्जतात् । अयमाधवनीयन्युब्जकरणप्रैष उच्यते ॥

३०७ उन्नेता अवकाशचरणानन्तरं तथा करोति । अध्वर्युः अप उपस्पृश्योपस्तंभनबर्हिर्मुष्टेर्बर्हिर्द्वयमादायोपनिःसर्पति । तं निःसर्पन्तमन्वारभतउद्गाता । उद्गातारं प्रस्तोता । तं प्रतिहर्ता । तं यजमानः । तं ब्रह्मा । तं प्रतिप्रस्थाता मैत्रावरुणो वा । एवमन्वारब्धेषु अध्वर्युराहवनीये स्रुवाहुतिं जुहोति । अग्निः प्रातः सवने० मधाः स्याम स्वाहा । इति । एतयैवर्चा प्रतिप्रस्थाता । यथावेदमितरे । आश्वलायनयजमानस्य द्रप्सश्च स्कन्दयस्ते द्रप्स इति द्वाभ्यां होमः । सचान्वारम्भक्रमेण । अयं बहिष्पवमानारम्भकहोम उच्यते ॥

३०८ अध्वर्युर्बर्हिषी धून्वानो बहिष्पवमानायोद्गातावं प्रतिसर्पति । वागग्रेगा०यजमाने च । इति । आस्तावे यथाऽऽयतनमुपविश्य प्रस्तोत्रे बर्हिषी प्रयच्छति । ऋकसाम०प्रजात्यै । इति । जपति । वायुर्हिंकर्ता० बृहस्पतिःपत्नीं स्तुध्वम् । इति । इदं बहिष्पवमानस्तोत्रोपाकरणमुच्यते ॥

३०९ बहिष्पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति श्येनोऽसि०संपारय । इति । इदं बहिष्पवमानारम्भकवाचनम् ॥

३१० दशहोतारं व्याख्याय समाप्ते साम्नि यजमानं वाचयति । स्तुतस्य०रथीणाम् । इति । एवं सर्वस्तोत्रेषु । इदं स्तोत्रानन्तरवाचनम् ।

३११ अग्नीदग्नीन् विहर बर्हिः स्तृणाहि पुरोडाशाँ अलङ्कुरु प्रतिप्रस्थातः पशुरन्तिकेऽस्तु । इति । अयमग्निविहरणादिप्रैषः ॥

३१२ अप उपस्पृश्य । एहि यजमानेत्यामन्त्र्य । यजमानेन सह पूर्वया द्वारा हविर्धानं प्रविश्य । विष्णो त्वं नो०अन्ति । इतीदं सर्वपात्रस्थसोमोपस्थानम् ॥

३१३ आश्विनपात्रमादाय द्रोणकलशात्परिप्लुपात्रेण गृह्णाति । यावांकशा०नृतम् । उप०हयश्विभ्यां त्वा०मि । परिमृशति । एष ते योनिर्माध्वीभ्यां त्वा । इदमाश्विनपात्रे सोमग्रहणम् ॥

३१४ अप०स्पृश्य । एहि त०न्त्र्य । आहवनीयसमीपं गत्वा प्रचरण्यां स्रुचि चतुर्गृहीतं गृहीत्वा यजमानेऽन्वारब्धे सप्तहोतारं मनसाद्रुत्याहवनीये जुहोति । यजमानो ऽध्वर्युश्च सर्वपात्रस्थं सोममुपतिष्ठते । परिभूरग्निं० मुन्मृजे । उपांशुपात्रम् । प्राणाय मे०पवस्व । उपांशुसवनं । व्याना०वस्व । ऐन्द्रवायवम् । वाचे मे०स्व । मैत्रावरुणं । दक्षक्रतुभ्यां मे०स्व । आश्विनम् । श्रोत्राय मे०स्व । युगपच्छुक्रामन्थिनौ । चक्षुर्भ्यां मे०स्व । आग्रयणम् । आत्मने मे०स्व । अतिग्राह्यान् क्रमेण । वीर्यायमेस्व । मन्त्रावृत्तिः । उक्थ्यम् । अङ्गेभ्यो मे०स्व । ध्रुवम् । आयुषे मे०स्व । द्रोणकलशम् । विष्णोर्जठरमसि वर्चो०स्व । आधवनीयम् । इन्द्रस्य जठरमसि वर्चो० स्व । पूतभृतम् । विश्वेषां देवानां जठर०स्व । सर्वपात्रस्थ-

म् । को ऽसि को नाम०मुन्मृजे । इदं सर्वपात्रस्थसोमानां प्रत्येकमुपस्थानम् ॥

३१५ उन्नेता पूतभृति दशापवित्रं वितत्याधवनीयस्थं सोमं तस्मिन्नवनीय दशापवित्रेणाधवनीयं मृष्ट्वोत्तरस्य हविर्धानस्य नीडे ऽधोऽक्षिलं सादयति । इदमाधवनीयस्य हविर्धाननीडे सादनम् ॥

३१६ अध्वर्युः प्रचरण्यां नवकृत्व आज्यं गृह्णाति । आग्नीध्रः आग्नीध्रीयादङ्गारानादायाग्नीध्रीये होत्रीये चैकं विहृत्य । स्वयं बहिर्गच्छन् यूपाहवनीययोर्मध्येन नीत्वा प्रशास्त्रीये विहृत्य यथेतमेत्य ब्राह्मणाच्छंसीये पोत्रीये नेष्ट्रीये ऽच्छावाकीये च विहृत्य पुनस्तथैव गत्वा मार्जालीये विहृत्य यथेतमेत्याग्नीध्रीये ऽतिशिष्टान् विहरति । इदं धिष्ण्येष्वङ्गारविहरणम् ॥

३१७ अध्वर्युः पुरस्तात्प्रत्यङ्मुख उपविश्य विहृतान् धिष्ण्यान् न्युप्तमिवाऽऽघारयति । विभूरसि०सोः स्वाहा । इत्याग्नीध्रीये । वह्निरसि०हा । प्रशास्त्रीयम् । तुथो०हा । इति ब्राह्मणाच्छंसीयम् । उशिः० स्वाहा । पोत्रीयम् । अङ्घारिनेष्ट्रीयम् अवस्यु०हा । अच्छावाकीयम् शुन्ध्यू०हा । मार्जालीयम् । समृत इत्यृचा पुनराग्नीध्रीये जुहोति । उत्तरस्य हविर्धानस्य चुबुके प्रचरणीं सादयति । इदं धिष्ण्याघारणम् ॥

३१८ आग्नीध्रः शालमुखीयादाहवनीयपर्यन्तं प्राकृतमन्त्रेण पृष्ठ्याँस्तृणाति । इदं सवनीयपृष्ठ्यास्तरणम् ॥

३१९ अध्वर्युः यूपरशनामादाय यूपसमीपमागत्य स्वरुं गृहीत्वा पूर्वां रशनामुद्गृह्य परिव्ययणादि प्रचरान्तमग्नीषोमीयवत्करोति । तत्र विशेषः मन्त्रेषु देवतास्थाने अग्निष-

ठद् ऊह्यः । होतृप्रवरान्तरम् । अश्विनाऽध्वर्यू आध्वर्यवात् । अहं चामुकशर्मा मानुषौ इति प्रतिप्रस्थातुर्नाम गृह्णाति । होत्रा हुते सकृद्गृहीतेन प्रवृताहुतीर्जुहोति । जुष्टो वाचे०त्यै स्वाहा । ऋचास्तो० नि स्वाहा । मूर्धा मा०ते स्वाहा । एवं प्रतिप्रस्थाता । अध्वर्युः पुनरुत्करं गत्वा । मित्रावरुणौ प्रशास्तारौ प्रशास्तात् । अमुकशर्मा मानुष इति मैत्रावरुणस्य नाम०ति । इन्द्रो ब्रह्मा ब्राह्मणात् । पूर्ववद्ब्राह्मणाच्छंसिनो ना०ति । मरुतः पोत्रात् । इति पोतुः । ग्रावो नेष्टात् । नेष्टुः । अग्नीमाग्नीध्रात् । इत्यग्नीधः । सर्वप्रवरात्पूर्वमाश्रावणप्रत्याश्रावणे भवतः । तत आश्राव्य प्रत्याश्राविते । अग्निर्हि देवीनां विशां पुरएतायां सुम्वन्यजमानो मनुष्याणां तयोरस्थूरिगार्हपत्यं दीदयच्छतं हिमाद्वायराधाऽसीत्संपृञ्चानावपृञ्चानौ तन्वः इत्याह । इदं सवनीयाङ्गमैत्रावरुणादिप्रवरणम् ॥

३२० आश्वलायनो यजमानः स्रुवेण प्रवृताहुतीर्जुहोति । अग्नीषोमीयवत्सवनीयपशुवपाप्रचार ऊहेन । अयं सवनीयपशुवपाप्रचारः ॥

३२१ पशुपुरोडाशनिर्वापप्रैषानन्तरं आग्नीध्रो माध्यन्दिनीयैः सवनीयैः सह निर्वपति । अयं सवनीयैः सह पशुपुरोडाशनिर्वापः ॥

३२२ कुम्भ्यावदाननिक्षेपानन्तरं उत्करे स्फ्यादीन् विधानाभिधाय यजमानमुपस्थापयति । स्फ्यः स्वस्ति०ह्वयन्ताम् । इति यजमान आहवनीयमुपतिष्ठते । नमो ऽग्नये म०यांत् । नेनो रु०पाहि । इत्याग्नीध्रीयम् । सदसः पूर्वद्वारि प्रत्यङ्मुखस्तिष्ठन् होत्रीयम् । नम इन्द्रा०र्वधीः । इति सव्यमावृत्य प्राङ्मुखो जपति । दृढे स्थः शि०भ्येभ्यः । इति । प्रद-

क्षिणमावृत्य सदसः पूर्वौ द्वार्बाहू युगपदभिमृशति । देवी०मम् । इति । सदः प्रविशति । नमः सद० धि०यै । इति । मैत्रावरुणधिष्ण्यस्य दक्षिणतः स्वायतनाद्बहिः सदसस्तृणं नैर्ऋत्यांदिशि निरस्यति । अहे०तरः । इति अप०स्पृश्योदङ्मुख उपविशति । उन्नी०गेषम् । इति । पृथिवीं दृष्ट्वा द्यामीक्षते । पातं०हूः । इति । प्राचीनावीती दक्षिणार्धमीक्षते । आगं०यास्त । इति । अप उपस्पृश्य तूष्णीमुत्तरार्धं परीक्षते । इदं यजमानस्य सदस्युपवेशनम् ॥

३२३ अध्वर्युप्रतिप्रस्थातारौ आहवनीयोपस्थानाद्येवदन्तं कुरुतः । अध्वर्युर्दक्षिणद्वार्बाहुमूले प्रत्यङ्मुख उपविशति । उत्तरे प्रतिप्रस्थाता । इदं सदसि प्रसर्पणम् ॥

३२४ एवं सम्प्रसृप्तेषु आग्नीध्रः पञ्चायतनायां पात्र्यां मध्ये पुरोडाशं पूर्वस्यां धानादक्षिणतः करम्भं पश्चात्परिवापं उत्तरत आमिक्षा प्रकृतिवद्यथार्थोहसहितैर्मन्त्रैरुपस्तरणादि कृत्वोद्वास्य कपालोद्वासनान्तं कृत्वा हवींषि परिगृह्य पूर्वद्वारा निष्क्रम्योत्तरेण सद आग्नीध्रीयं धिष्ण्यं चाहृत्य पूर्वद्वारा हविर्धानं प्रपाद्य स्रुचां पश्चात् खरे सादयति । उत्करे विशये वा वाजिनम् । इदं खरे सवनीयासादनम् ॥

३२५ ऐष्टिकपाशुकानुष्ठानकाले ब्रह्मयजमानावाहवनीयस्य दक्षिणत उपविशतः तथा द्विदेवत्यप्रचारे । सौमिके तु सदसि पूर्वो यजमानोऽपरो ब्रह्मा । आग्नीध्र उत्करे । सौमिके त्वाग्नीध्रीये । अध्वर्युर्जुहूपभृतोरुपस्तृणान आह । प्रातः सावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रू३हि । इति । अवदानादिप्रत्यञ्जनान्तं कृत्वा जूहूपभृतावादाय

पृष्ठ्याया दक्षिणतः प्राङ्मुखस्तिष्ठन्नाह । प्रातःप्रातःसाव-स्येन्द्राय पुरोडाशानप्रस्थितान्प्रे३ष्य । इति । आमिक्षाया-स्तूष्णीमिडायामवदानम् । अयं प्रातःसवनीयप्रचारः ॥

३२६ होतृसकाशे इडां स्थापयित्वा प्राश्नायन्नाह । वायव इन्द्रवायुभ्यामनुब्रू३हि । इति प्रतिप्रस्थाता आदित्य-स्थाल्या औपशयं पात्रमादाय तस्मिन् द्रोणकलशात्परि-प्लुपात्रेण गृह्णाति । उप०भ्याभ्यां गृह्णामि । इत्यैन्द्रवा-यवे सोमग्रहम् ॥

३२७ सव्येन प्रतिनिर्ग्राह्यं दक्षिणेनैन्द्रवायवमादाय निष्क्रामति । अध्वर्युस्तथैव प्रतिप्रस्थातुर्ग्रहावादाया ऽप-रेण परिक्रम्य पृष्ठ्याया उत्तरतः प्राङ्मुखाय तिष्ठते प्रति-प्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छति । सव्येन ग्रहं धृत्वा दक्षि-णेनाज्यस्थाल्याः स्रुवेणोपहृत्य प्राञ्चं तिर्यञ्चं वा आघार-यति । अध्वरो यज्ञो०सोम स्वाहा । इति । अत्याक्रम्य । वायवइन्द्रवायुभ्यां प्रेष्य । वषट्कृते जुहोति । द्वितीयवषट्-कारे ऽध्वर्युप्रतिप्रस्थातारौ जुहुतः । अध्वर्युर्यजमानं वाच-यति । येन०श्चेतयानि । इति । प्रतिप्रस्थाता प्रतिनिर्ग्राह्य संस्रावमध्वर्युपात्रे ऽवनयति । अध्वर्युः उभयोरर्धं प्रति-प्रस्थातुः पात्रे । प्रतिप्रस्थाता प्रत्यगावृत्या ऽध्वर्योर्दक्षि-णेन पात्रमाहृत्य स्वयमुत्तरेण हविर्धानं प्रविश्य तदादित्य-स्थाल्यामवनयति । देवेभ्यस्त्वा । इति । अयमैन्द्रवायव-ग्रहप्रचारः ॥

३२८ आज्यपुरोडाशपश्वाऽऽमिक्षाचमसाहुतयो मध्ये । अभितो ग्रहाहुतयो धारया पात्रमुखेन सर्वत्र । अध्वर्युः प्रद-क्षिणमावृत्य हविर्धानं प्रविश्य प्रतिप्रस्थातुर्दक्षिणेन पात्रं

हुत्वा स्वयमुत्तरतो गत्वा होत्रे पात्रं प्रदाय प्राङाय्याह। मित्रा वरुणाभ्यामनुब्रू३हि। इति। प्रतिप्रस्थाता तथैव मैत्रावरुणस्य प्रतिनिग्रोह्यं गृह्णाति। उपयाम०स्पूत०मि। ऐन्द्रवायववत्तदादाय निष्क्रामति। पूर्ववत्प्रतिनिग्रोह्यं प्रदायाऽऽश्रा०याऽऽह। मित्रावरुणाभ्यां प्रेष्य। इति। वषट्कृते सहोभौ जुहुतः। यज०वाचयति नमो मित्रा०यानि इति। प्रतिप्रस्थाता संस्रावं पूर्ववदवनयति। अध्वर्युः उभयोरर्धं प्रतिप्रस्थातुः पात्रे। स तदादित्यस्थाल्यामवनयति। विश्वेदेवेभ्यस्त्वा इति अयं मैत्रावरुणप्रचारः॥

३२९ अध्वर्युः होत्रे पात्रं प्रदाय प्राङायन्नाह। अश्विभ्यामनुब्रू३हि। इति। उभौ सह जुहुतः। यज०यति० येनो श्विना०यानि। इति प्रतिप्रस्थाता पूर्ववत्संस्रावमवनयति तस्य पात्रे ऽध्वर्युस्तदर्धं पूर्ववत्। स तदादित्यस्थाल्याम्। विश्वेभ्यस्त्वादेवेभ्यः। इति अयमाश्विनप्रचारः॥

३३० द्रोणकलशादादित्यस्थालीमुपयर्धां कृत्वोपशयपात्रेणाऽपिदधाति। विष्णु०स्यत्। इति द्विदैवत्यप्रचारः॥

३३१ अध्वर्युः पूर्ववद्धोत्रे पात्रं प्रदाय प्राङायन्नाह। उन्नीयमानेभ्यो ऽनुब्रू३हि होतुश्चमसमनून्नयध्वमुभयतः शुक्रान् कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा तु त्वमुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताऽप्रोक्षितैः प्रत्युपलक्षस्व। इति। होतृब्रह्मयजमानोद्गातृहोत्रकचमसानच्छावाकचमसरहितान् स्रुचां पश्चात्सादयित्वा उन्नेत्रा द्रोणकलशात् पूतभृतो द्रोणकलशाच्च क्रमेणाहूतेन सोमेन क्रमेण स्वं स्वं चमसमुन्नीयोत्तरवेद्यां सादयन्ति। इदं चमसोन्नयनमुच्यते॥

३३२ प्रतिप्रस्थाता द्वौ प्रोक्षितौ द्वावप्रोक्षितौ समिच्छकलावादाय प्रोक्षिताऽप्रोक्षितौ द्वौ शकलावध्वर्यवे प्रयच्छति । अध्वर्युः शुक्रमादत्ते । प्रतिप्रस्थाता मन्थिनम् । दक्षिणेन प्रोक्षिताभ्यामपिधायाऽप्रोक्षिताभ्यामधस्तात्सव्येनोपयच्छतः । इदं शुक्रामन्थिग्रहणम् ॥

३३३ अध्वर्युः दक्षिणं द्वारबाहुं निश्रयमाणो निष्क्रामति । प्रतिप्रस्थातोत्तरम् । आयुःसं०तम् । प्राणꣳसं०तम् । अपानꣳसं०तम् । व्या०तम् । चक्षुः०तम् । श्रो०तम् । एतैः षड्भिर्मन्त्रैः प्रतिमन्त्रं वोत्तरवेद्याः पश्चाद्ग्रहौ सन्धत्तः । अध्वर्युः दक्षिणेनोत्तरवेदिं परिक्रामति । स्तुतो०चिषा । इति । उत्तरेण प्रतिप्रस्थाता । स्तुतो० चिषा । इति । उभौ पुरस्तात्प्रत्यङ्मुखौ उत्तरवेदिमारोहतः । इति इदमुत्तरवेद्यारोहणम् ॥

३३४ इन्द्रेण स०यासम् । इति आयुरस्य०धत्तम् । एतैः षड्भिर्मन्त्रैः यूपाहवनीययोर्मध्ये ग्रहौ सन्धत्तः । उत्तरवेद्या अवरोहतः । तौदे०ने च । इति इदमुत्तरवेद्यवरोहणम् ।

३३५ अध्वर्युर्यजमानस्य पाप्मानं मनसा ध्यायन् अप्रोक्षितं शकलं बहिर्वेदि निरस्यति । निर०ष्मना । इति । एवं प्रतिप्रस्थाता । नि०ना । इति अप्रोक्षितशकलनिरसनम् ।

३३६ अध्वर्युः अप उपस्पृश्य प्रोक्षितशकलमभ्यादधाति । शुक्रो०हा इति । एवं प्रतिप्रस्थाता । मन्थि०हा । इति । इदं प्रोक्षितशकलाऽभ्याधानम् ।

३३७ चमसाध्वर्यवश्चमसानुपोद्गच्छन्ते । अध्वर्युः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नाश्राव्याऽऽह । प्रातः प्रातः सावस्य

शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य। इति । अयं चमसानयनप्रैषः ।

३३८ उभौ वषट्कारे जुहुत० सप्र०जुहोमि स्वाहा । चमसाध्वर्यवश्चमसान् सकृज्जुह्वति । अनुवषट्कारे पुनरुभौ। चमसाध्वर्यवश्च । अध्वर्युराह । प्रैतु होतुश्चमसः प्रब्रह्मणः । प्रोद्गातुः प्रयजमानस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृद् द्रोणकलशादभ्युन्नीयोपावर्तध्वम् होतुश्चमसाध्वर्यवुपरमैहि प्रतिप्रस्थातरुत्तरार्धआहवनीयस्य मन्थिनः संस्रावंजुहुधि । इति । प्रदक्षिणमावृत्य होतुश्चमसे ग्रहस्य संस्रावमवनयति । हुतं०मनुष्येभ्यः । इति । प्रतिप्रस्थाता आहवनीयस्योत्तरार्धे उपविश्योत्तरार्धे मन्थिनः संस्रावं जुहोति । एष ते रु०हा । इति । यजमानप्रतिप्रस्थातारौ अप उपस्पृशतः । प्रतिप्रस्थाताऽध्वर्योः शुक्रपात्रमादाय स्वीयं मन्थिपात्रं च खरे सादयति । अयं शुक्रामन्थिप्रचारः ।

३३९ होतृब्रह्मोद्गातृयजमानानां चमसान् चमसाध्वर्यवः सदसिनयन्ति । प्रशास्त्रादीनां चमसाध्वर्यवः सशेषांश्चमसान् द्रोणकलशादभ्युन्नीयोपावर्तन्ते । इदं सदसि ब्रह्मादिचमसनयनम् ।

३४० अध्वर्युः मैत्रावरुणचमसमादायाऽऽश्राव्याऽऽह । प्रशास्तर्यज । इति । वषट्कारानुवषट्कारयोर्होमौ । ब्राह्मणाच्छंसीयच०ह । ब्रह्मन्यज । इति । पोतृच०ह । पोतर्यज । इति । नेष्टृच०ह । नेष्टर्यज । इति । आग्नीध्रच०ह । अग्नीद्यज । इति । अयं प्रस्थितयाज्याप्रचारः ।

३४१ । ततो होतुरग्रे उपविशति । प्रशास्त्रादीनां चम-

साध्वर्यवः सदसि चमसान्नयन्ति । इदं प्रशास्त्रादिचमसनयनम् ।

३४२ होत्रा अयाडग्नीदिति पृष्टे ऽध्वर्युरयाडग्नीदित्याह । होत्रा आत्तमैन्द्रवायवपात्रमध्वर्युप्रतिप्रस्थातारावन्वारभेते । होत्रा भक्षिते तस्मिन्नन्वारब्धे अध्वर्युः होतरुपह्वयस्व । प्रतिप्रस्थातरुपह्वयस्व । इति तावुपहूय नासिकयोरुपरि निग्राहं भक्षयति । मयि०पाहि । इति । प्रतिप्रस्थाता होतारमध्वर्युञ्चोपहूयोक्तमन्त्रेण भक्षयति । पुनर्होत्रा भक्षिते तथैवाध्वर्युः प्रतिप्रस्थाता च मन्त्रेण ऐन्द्रवायववन्मैत्रावरुणपात्रस्य भक्षः । चक्षुषोरुपरि निग्राहं भक्षणम् । मयि०पाहि । इति विशेषः । होत्राऽऽश्विनपात्रे भक्षिते ऽपि तथैव भक्षः श्रोत्रयोरुपनिग्राहं सर्वतः परिहारं भक्षणम । मयि०श्रोत्रं मे पाहि । इति । विशेषः । इदं द्विदेवत्यग्रहभक्षणम् ।

३४३ अध्वर्युरप उपस्पृश्य हौत्रङ्गुलिपर्वाञ्जनादि करोति । इडोपह्वानकाले चमसिनश्चमसानुपगृह्णन्ति । उपहूतायामिडायां पुरोडाशशकलमैन्द्रवायवपात्रे आमिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्रे प्रास्यैतानि गृहीत्वा पूर्वद्वारा निष्क्रम्याऽपरद्वाराद्धविर्धानं प्रपाद्य दक्षिणहविर्धानस्योत्तरचक्रमार्गे सादयत्यातृतीयसवनात् । यथेतमेत्याग्नीध्रे षडवत्तमादधाति । प्रशास्तृसहिताः षट् सशेषामिडां भक्षयित्वा मार्जयन्ते । इदं सवनीयेडाभक्षणम् ॥

३४४ प्राशित्रपरिहरणम् । शाखापवित्रप्रहरणम् । वाजिनप्रचारः । अयं सौमिकवाजिनप्रचारः ॥

३४५ तत्र सवनीयवद्वाजिनस्यासादनम् । सदसि इडोपहूतांश्चमसान् भक्षयन्ति । तद्यथा । होताऽध्वर्यु प्रतिप्रस्था-

तारं चोपहूय स्वचमसं भक्षयति । अध्वर्युस्तं प्रतिप्रस्थातारं चोपहूय भक्षयति । भक्षेहि मा० यामि । इति । एवं प्रतिप्रस्थाता तौ उपहूय । होता ब्रह्माणमुपहूय तच्चमसम् । तथैव यजमानचमसम् । प्रशास्त्रादिचमसांस्तु चमसिनमध्वर्युं प्रतिप्रस्थातारं चोपहूय क्रमेण । प्रशास्त्रा होत्रध्वर्युप्रतिप्रस्थातॄनुपहूय स्वचमसम् । अध्वर्युः प्रशास्तारं होतारं प्रतिप्रस्थातारं चोपहूय । प्रतिप्रस्थाता प्रशास्तृहोत्रध्वर्यूनुपहूय । एवमन्येषां होत्रकाणां चमसान् भक्षयित्वा होतृचमसं पूर्ववद्भक्षयन्ति । ब्रह्मा होतारमुपहूय स्वचमसम् । यजमानो भक्षेहि इत्यादिमन्त्रेण तथैव स्वचमसम् । पूर्ववत् त्रयो होत्रकचमसान् । इदं चमसभक्षणम् ॥

३४६ तत आत्मानमभिमृशन्ते । हिन्व० तिगाः । इति अपः स्पृष्ट्वा एकधनाभिः स्वस्वचमसानाप्याययन्ति । आप्या० गथे । इति । इदं चमसाप्यायनम् ॥

३४७ चमसाध्वर्यवो होतृचमसादीन् दक्षिणहविर्धानस्य पश्चादक्षस्याप्यधः सादयन्ति । इदं नाराशंससादनम् ॥

३४८ अध्वर्युः सदसः पुरस्तादासीनस्याऽच्छावाकस्य हस्ते सवनीयशेषान्महत्पुरोडाशशकलमादधदाह । अच्छावाक वदस्व यत्ते वाद्यम् । इति । अयमच्छावाकवादनप्रैषः ॥

३४९ ततो अस्मानित्यच्छावाकस्य श्रुत्वा होतारमाह । होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्व इति । प्राङायन्नाह । उन्नीयमानेभ्योऽनुब्रूह्यच्छावाकस्य चमसाध्वर्यवुन्नयस्वोभयतः शुक्रं कुरुष्व । इति अयमच्छावाकचमसोन्नयनप्रैषः ॥

३५० सस्तुचां पश्चाच्चमसं निधाय । द्रोणकलशात्पूतभृतो

द्रोणकलशादित्युन्नीयोत्तरवेद्यां सादयति । अध्वर्युः अच्छावाकचमसमादायाऽऽश्राव्याह । अच्छावाक यज । इति । वषट्कृतानुवषट्कृतयोर्हुत्वा चमसं हृत्वा भक्षणं न कुर्यात् । चमसमाप्याय्य पूर्ववत्सादयति । आह । अच्छावाकसीदनेष्टः पत्नीमुदानयाग्नीदच्छावाकं मे सन्नं प्रब्रूतात् इति । नेष्टा पत्नीजनीहस्तां पत्नीमानयति । प्रेच्छ०सी । इति पत्नीजनीसहितपत्न्यानयनम् ।

३५१ पूर्वद्वारा निष्क्रम्याऽपरया द्वारा सदः प्रपाद्य पत्नीजनीरादाय स्वस्य धिष्ण्यस्य पश्चादसङ्गरे उद्गातृदर्शनमार्गे सादयति । आग्नीध्रः । सन्नो ऽच्छावाको ऽच्छावाकँ सन्नमुपपत्नीजनीरसीषदन् । यजमानः आग्नीध्रे हविः शेषान् भक्षयति । पत्नी स्वशालायां हविष्यम् । इदं हविःशेषादिभोजनम् ।

३५२ अध्वर्युर्दक्षिणमृतुपात्रमादत्ते । प्रतिप्रस्थातोत्तरम् । अध्वर्युः परिप्लुपात्रेण द्रोणकलशात् गृह्णाति । उपसिमघ०मि इति प्रतिप्रस्थाता । उप०माघ०मि इति अध्वर्युःर्दक्षिणं द्वार्बाहुं संश्लिष्य निष्क्रामति । प्रतिप्रस्थातोत्तरं द्वार्बाहुं संश्लिष्य हविर्धाने तिष्ठति । होमार्थं गच्छन्तमागच्छन्तं चाध्वर्युं स्वपात्रेण परिगृह्णाति । अध्वर्युः प्रतिप्रस्थातारं ऋतुना प्रेष्य । वषट्कृते सशेषं जुहोति । होमाय निष्क्रामति प्रतिप्रस्थाता । प्रविशत्यध्वर्युः । स गृह्णाति । उप०शुक्रामि । प्रतिप्रस्थाता ऽध्वर्युर्यजति । निष्क्रामत्यध्वर्युः प्रविशति प्रतिप्रस्थाता स गृह्णाति । उप०शुचयेऽमि । अध्वर्युः पूर्ववद्यजति । निष्क्रा०स्थाता प्रवि०ध्वर्युः । स०ति । उप०नभा०मि प्रति०ज०ति निष्क्रा०ध्वर्यु । प्रवि०स्थाता स०ति उप०नभस्या०मि । अध्वर्युर्यजति । निष्क्रा०स्थाता ।

प्रवि०ध्वर्युः । स पात्रमुखं विपर्यस्य गृह्णाति । उप०श्रीषा- य०मि । प्रतिप्रस्थाता पूर्ववद्यजति । निष्क्रामत्यध्वर्युः । प्रवि०स्थाता । स विपर्यस्य गृह्णाति उप०स्यूर्जो०मि । इति । अध्वर्युः । ऋतुभिः प्रेष्येति यजति । निष्क्रामति०स्थाता । प्रवि०ध्वर्युः । स०ति उ०सहा०मि । इति । प्रति०ताध्व०व- द्यजति । नि०र्युः प्र०ता । स०ति उ०सहस्या०मि । इति । प्र० पूर्व०ति नि०ता प्र०र्युः । स विपर्यस्य०ति उ०तपा०य०मि । इति । प्रति०पू०ति । नि०त्यध्वर्युः । प्रवि०ता । अध्वर्यु- स्तमाह । प्रतिप्रस्थातरुपैतेन पात्रेण रम । इति । अयमृतु- याजविरामप्रैषः ।

३५३ ऋतुना प्रेष्येति यजति । प्रशास्त्रा ऽध्वर्यू यजत- मित्युक्ते आह । होतरेतद्यजेति । वषट्कारे जुहोति । हवि- र्धानं प्रविशति । प्र०ता विपर्यस्य०ति । उ०श्च सर्पो०मि । इति । ग्रहमादाय दक्षिणद्वार्बाहुं निश्रयमाणो निष्क्रामति । उत्तरं प्र०ता । ऋतुना प्रेष्य । गृहपते यजेति प्रशास्त्रोक्ते यजमानः होत्तरे०ज । इत्याह । सहोभौ जुहुतः । प्र०ताऽ- ध्वर्युपात्रे संस्रावमवनयति । अयमृतुयाजप्रचारः ।

३५४ अध्वर्युस्तमाह । प्र०तरे तेन पात्रेणैन्द्राग्नं ग्रहं गृहाण इति । प्र०ता द्रोणकलशात्परिप्लुपात्रेण०ति । इन्द्रा० षिता । उप०सीन्द्रा०मि । इति इद मैन्द्राग्नग्रहणम् ।

३५५ अध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुद्रुत्य होतृपोतृनेष्ट्रा- ग्नीध्रब्राह्मणाच्छंसिमैत्रावरुणैः सह स्वपात्रं प्रथममुखेन भक्ष- यति । वसु०मि । इति । तथा प्र०ता । त्रयाणां परस्पर- मुपहवः । विपर्यस्य पात्रं होत्रा पोत्रा नेष्ट्रा अच्छावाकेन सहोभौ ।ऋतुभिः पीतस्येति विपर्य्यस्य द्विर्होत्रौभौ । ऋतुना पीतस्येति । अथ वा होत्राध्वर्युः पोत्रा प्र०ता नेष्ट्रा ऽध्वर्युः ।

अग्नीधा प्र०ता ब्रा०सिना ऽध्वर्युः । मै०ता । विपर्यस्य ऋतुभिर्होत्रा ऽध्वर्युः । पोत्रा प्र०ता । नेष्ट्रा ऽध्वर्युः । अच्छावाकेन प्रति०ता । विपर्यस्य ऋतुना होत्रा ध्वर्युः । होत्रध्वर्युप्रतिप्रस्थातारः परस्परमुपहूय च इदमृतुपात्रभक्षणम् ।

३५६ अध्वर्युर्होतारं पृच्छति । प्रणवमुपा० शुश० स० श० सिष्यसी३विग्राहा३म् इति । अयं शंसनार्थाध्वर्युप्रश्नः ।

३५७ होता यथाशंसिष्यन् भवति तथा प्रत्याह । अध्वर्युः पात्रं नीचैरवष्टभ्य सव्यमावृत्य प्राङ्मुखउपविश्येडाजपं कृत्वा ऽपसव्यमावृत्य होतुरग्रे प्रत्यङ्मुखः प्रह्वस्तिष्ठन् प्रतिगृणाति । आहावेशों३सामो दैव । तूष्णीं शंसे प्रणवान्ते उपांशु ओथामो दैवों३ प्रणवे ओ३थामो दैव । अवसाने ओथामो दैव । शस्त्रमध्याहावे । ओं३ ओं३ सामो दैव । शस्त्रान्ते । ओं३ । इति प्रतिगीर्य । अयं प्रतिगर इत्युच्यते ।

३५८ प्रातः सवने शस्त्रान्ते । उक्थशाः इत्युक्ता यजमानं वाचयति । शस्त्रस्य०रयीणाम् इति । इदं शस्त्रान्तेवाचनम् ।

३५९ सदसि पात्रं निधाय प्राङेत्यापूर्वाज्यात्स्रुवेण प्रचरणया वा यन्मआत्मन इति द्वाभ्यां व्याहृतिभिश्च जुहोति । इदं शस्त्रप्रायश्चित्तम् ।

३६० ऐन्द्राग्नं ग्रहमुपोद्यच्छते । चमसाध्वर्यवो नाराशंसान् अध्वर्युर्होतारं प्रेष्यति । उक्थशा यज सोमस्य इति । वषट्कारानुवषट्कारयोर्जुहोति । चमसाध्वर्यवश्चमसान् द्विरनुप्रकम्पयन्ति न जुह्वति । ग्रहमादाया ऽध्वर्युः सद आगच्छति । चम० ध्वर्य०सान्० । होत्रा भक्षिते तमुप-

हूय भक्षयति । वसु० इन्द्राग्निभ्याम्०मि । इति । होत्रीभा-वुपहूय भक्षिते तं प्र०तारं चोपहू०ति । नरा०मि । इति प्र० ता तावुपहूय । ब्रह्मादयो होतारमुपहूय स्वस्वचमसान्नराशंसपीतेन । हिन्वमइत्यात्मानं प्रत्यभिमृश्याप्यायस्वेति चमसानाप्याय्य पूर्ववत्सादयन्ति अयमाज्यशस्त्रोत्तरभक्षः ।

३६१ तत्रैव पात्रं निधाय शुक्रपात्रमाददान आह । उन्नेतर्यदेमं वैश्वदेवं ग्रहं गृह्णाम्यथोदङ्ङ्राजानं पूतभृतमभिसम्पवयताद्दशाभिर्द्रोणकलशं सृष्ट्वा न्युब्जतात् इति । द्रोणकलशात्परिप्लुपात्रेण वैश्वदेवं गृह्णाति । उपयाम०मि इति परिमृज्य सादयति । ए०भ्यः । इति । इदं वैश्वदेवग्रहे सोमग्रहणम् ।

३६२ उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशस्थं सोममवनीय दशापवित्रेण द्रोणकलशं सृष्ट्वा ग्रावसु न्युब्जति । अध्वर्युपदुपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङाद्रुत्य स्तोत्रमुपाकरोति । ऋ०त्यै इति । इदं द्वितीयस्तोत्रोपाकरणम् ।

३६३ पूर्ववज्जपति । स्तोत्रे प्रक्रान्ते । अग्नीत्सवनीयान्निर्वप । इत्याह । आग्नीध्रः प्रथममाग्नेय मेकादशकपालं पुरोडाशं सवनीयांश्चामिक्षावर्जं तन्त्रेण निर्वपति । अयं माध्यन्दिनसवनीयनिर्वापः ।

३६४ प्रस्तोत्रा एषोत्तमेत्युक्ते ऽध्वर्युः प्राङ्मुख उपविश्येहाजपं कृत्वा शस्त्रं प्रतिगीर्य प्रायश्चित्तं हुत्वा वैश्वदेवमादायाऽऽह उक्थ०स्य । इति । पूर्ववज्जुहोति । चमसानुप्रकम्पयन्ति । अयं वैश्वदेवग्रहप्रचारः ।

३६५ होत्रा भक्षिते तमुपहूयाध्वर्युः । वसु०विश्वै०मि । इति । होतृचमसं होत्रध्वर्युप्रतिप्रस्थातारः पूर्ववत् । ब्रह्मा-

दयो होतारमुपहूय स्वस्व चमसान् । चम०र्यवश्चमसान्मार्जालीये प्रक्षाल्य मैत्रावरुणचमसादीन् उदीचः स्त्रुचो पश्चात्सादयन्ति । अध्वर्युराह । प्रतिप्रस्थातरिमे चर्तुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपि सृज । इति । अयमृतुपात्रादिप्रक्षालनप्रैषः ।

३६६ प्र०ता तथा करोति । अध्वर्युः प्राङायन्नाह । मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय । इति । चमर्यवः उन्नेत्रा हृतेन पूतभृत्सोमतृतीयेन क्रमेण चमसानुन्नीयोत्तरवेद्यां सादयन्ति । अध्वर्युरुक्थ्यस्थाल्या औपशये पात्रे उक्थ्यतृतीयं गृह्णाति । उप०देवेभ्य०मि । इति । स्थालीमभिमृशति । पु०मि । इति । प०ति । एप०त्वा । इति । इदमुक्थ्यप्रथमांशग्रहणम् ।

३६७ उपाकरणादिप्रायश्चित्तहोमान्तम् । आह । ७०सोमानाम् । इति । पूर्ववज्जुहोति । च०वश्चमसान् जुह्वति । पूर्ववन्मैत्रावरुणचमसे संस्रावमभ०ति । उत्तरखरश्रोण्यां पात्रं निधाय चमसं मैत्रावरुणाध्वर्युः प्र०तारोभ०ति । वसु०भिन्ना०मि । इति । मै०णो ब्रह्मादिचमसास्तं चमसिनमुपहूय । तच्चमसं त्रयः पुनः पूर्ववत् । ब्रह्मादयो मै०णमुपहूय । इदं मैत्रावरुणचमसादिभक्षणम् ॥

३६८ प्रत्यभिमृश्य नाप्याययन्ति प्रक्षाल्य ब्राह्मणाच्छंसिचमसादीन्त्सादयति । अध्वर्युः । प्रतिप्रस्थातर्ग्रहैः ते प्रचर । इति । अयं ग्रहप्रचारार्थप्रतिप्रस्थातृप्रैषः ॥

३६९ प्र०ता प्राङायन्नाह । ब्राह्मणाच्छंसिनश्चमस०य । इति । पूर्ववत्पूतभृतोऽर्धेन चमसानु०सा०ति । प्रति०त उक्थ्यस्थाल्यौपशयपात्रे उक्थ्यस्यार्धं गृह्णाति । उप०इन्द्रा०मि । इति । पूर्ववदभिमृश्य सादयति । इदं द्वितीयोक्थ्यग्रहणम् ॥

३७० स्तोत्रोपाकरणादि । ब्राह्मणाच्छंसिशस्त्रं प्रतिगीर्य ग्रहमादायाऽऽह । उक्थशा यज सोमानाम् । इति पूर्ववत् हुत्वा हुतेषु चमसेषु संस्रावमवनयति पूर्ववत् । पात्रं निधाय ब्राह्मणाच्छंसिचमसं पूर्ववत् त्रयो भक्षयन्ति । ब्राह्मणाच्छंसी ब्रह्मादीनुपहूय तच्चमसान् । पुनस्त्रयः पूर्ववत् । ब्रह्मादयस्तमुपहूय स्वस्वचमसान् । मन्त्रे इन्द्रेण पीतस्येति विशेषः । प्रत्यभिमर्शनम् । नाप्यायनम् । इदं ब्राह्मणाच्छंसिचमसप्रभृतिभक्षणम् ॥

३७१ पूर्ववत्प्रक्षाल्याच्छावाकचमसादीन् सादयन्ति । प्रतिप्र० प्राङ्०त्रु । अच्छावाकचमसमनूपध्वमुन्नेतः सर्वश एव सोमं राजानं प्रभावय मातिरीरिचः, इति । अध्वर्युः प्रतिप्रस्थातरुपेतेन पात्रेण रमैहि यजमान इति । यजमानेन सह हविर्धानं गत्वा द्रोणकलशं दक्षिणहविर्धानस्य पश्चादक्षं निधाय ग्रावणः पृथक् कृत्वा नीडे कृष्णाजिने अभीषमन्तरेणेषे निधाय । अधिषवचर्मफलकयोः प्राचीनग्रीवमुत्तरलोमः यज्ञ प्रतितिष्ठेति मन्त्रेणोपस्तृणाति । तस्मिन् पूर्ववत् ग्रावणः कृत्वा पूर्ववन्मन्त्रेण राजानमुपावहरन्ति । पूर्ववदुद्गातृन्प्रत्युक्त्वा आधवनीये वसतीवरीणामेकधनानां चार्धमानीय ता एकधना वसतीवरीश्च यथास्थानं सादयन्ति । चमसाध्वर्यव उन्नेत्रा ऽऽहूतेन सर्वशः पूतभृत्सोमेनाच्छावाकचमसमुखान् उन्नीय सादयन्ति । प्रति प्रस्थाता पूर्ववदौपशयपात्रे उक्थ्यस्थालीस्थं सर्वं राजानं गृह्णाति । उप०इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामि, इति । नोक्थ्यस्थालीमभिमृशति । मृष्ट्वा न्युब्जति । ग्रहं परिमृज्य सादयति । एष० ग्निभ्यां त्वा, इति । इदमुक्थ्यतृतीयग्रहणम् ।

३७२ दशापवित्रं द्रोणकलशे निधाय स्तोत्रोपाकर-

पादि । अच्छावाकशस्त्रं प्रतिगीर्य पूर्ववत् जुहोति । चमसां-श्च । ब्राह्मणाच्छंसिचमसवदच्छावाकचमसभक्षक्रमः । मन्त्रे इन्द्राग्निभ्यां पीतस्येति विशेषः । इदञ्च अच्छावाकचमस-प्रभृतिभक्षणम् ।

३७३ चमसप्रक्षालनानन्तरं तान् पूतभृदाधवनीययोर्मध्ये परिप्लुना सह निदधाति । इदं परिप्लुसहितचमसनिधानम् ।

३७४ अध्वर्युः प्राग्निर्मूर्द्धा दिव इत्येकामाहुतिं द्वे भिन्दाहुती व्याहृतीश्च हुत्वा ऽऽह । प्रशास्तः प्रसुहि । तेन सर्पतेत्युक्ते सर्वे यथाप्रस्तं निःसर्पन्ति । समाप्तमिदं प्रातःसवनम् । अथ प्रातः सवनमित्यारभ्यैतदन्तं कर्म प्रातः सवनमित्युच्यते ।

३७५ अथ माध्यन्दिनम् । उत्तरार्धे गणान्ते । अध्वर्युः प्राक्कायन्नाह । अभिषोतार एतदाहूयत ग्रावस्तुतमेहि यजमान । अयं ग्रावस्तुत्प्रैष उच्यते ॥

३७६ यजमानाभिषोतृभिश्च सह पूर्वया द्वारा हविर्धानं प्रविश्य होतृचमसे आधवनीयापोवनीय चर्मणि निधाय ताः प्रेक्षमाणं यजमानं वाचयति । निग्राभ्यास्थेत्यादि पूर्ववत् । ता यजमानाय प्रदाय चतुर्णामन्यतमं ग्रावाणमादत्ते । देवस्य त्वेत्यादिमन्त्रेण ग्रावासीत्यादिमन्त्रेणाभिमन्त्रयते । इदं माध्यन्दिनसवनीयप्रेक्षणवाचनादि ॥

३७७ ग्रावाणं चर्मणि प्राक्शिरसं निधाय ग्राव्ण उपरि राजानं विस्रस्य प्रातःसवनवन्मिमीते । इन्द्राय त्वेति पञ्चभिः पञ्चकृत्वस्तूष्णीम् । एकस्यैकयोत्सर्गं दशकृत्वो मिमानो राजानं सर्वं मिमीते । इदमवशिष्टसोमार्धमानम् ॥

३७८ अद्भिरभ्युत्य ग्रावस्तुते राज्ञ उष्णीषं ददाति । इदं ग्रावस्तुते उष्णीषदानम् ॥

३७९ यजमानः अद्भिरभ्युक्ष्य राजवासो ऽध्वर्यवे प्रयच्छति । अध्वर्युः पूर्ववदुपसृजति । सम्प्रयौति । तिरश्चर्मफलके अभिमृशति । यजमानं वृद्धीर्वाचयति । अभिषोतारः प्रातःसवनवत्पर्युपविशन्ति । अध्वर्युः आहरोपसृज, इत्याह । उपर्यर्धे होतृचमसेंऽशून् परिप्लावयन्ति । प्रागपागित्यादिमन्त्रेण । अंशूश्चर्मणि निधाय होतृचमसस्थाः अपो राज्ञि प्रक्षिप्य राजानं विभज्याकृष्य । इहा३ इहा३ इत्युक्त्वा यावद्रसनिस्त्रावमपरिमितमभिषुण्वन्ति । आहरोपसृजेत्यादि । उन्नेता आधवनीयादुदञ्चनेन सम्भरणीये उपसृजति । प्रागपागित्यादिसम्भरणीयेंऽशून् परिप्लावयन्ति । अंशून्निधाय सम्भरणीयजलेन राजानमुपसिच्य विभज्याऽऽकृष्याह । इहा३ इहा३ इहा३ इत्युक्त्वा ग्रावाणमूर्ध्वमुत्क्षिप्य नीचैः पातयन्तीत्यादिक्रीडारूपेणाभिषुण्वन्ति अपरिमितं यावद्रसनिस्त्रावम् । पुनराहरोपसृजेत्यादि होतृचमसे तूष्णीं अंशून् परिप्लावयन्ति । अभिषुत्य राजानं हस्तेन निष्पीड्य सम्भरणीये राजानं सम्भृत्यान्तरेणेषे उन्नेत्रे प्रयच्छति । उन्नेता आधवनीयापोम्ऽसणान्तरेऽवदीया ऽऽधवनीये पवित्र वितत्य सम्भरणीमवनयति । एष एकः पर्यायः । अम्भणान्तरस्था आधवनीयापो होतृचमसे ऽवनीय श्वात्रास्थेत्यादि । एवं द्वितीयमेवं तृतीयम् । तृतीयपर्यायस्य तृत ये ऽभिषवे इहा३ इत्यस्य स्थाने वृहत् वृहत् वृहत् ऋजीषं चर्मणि निधाय सम्मुखान् ग्राव्णः कृत्वा ग्रावमुखे ऋजीषं चतुर्धा कृत्वा व्यपोहति । उद्गातृभ्यः प्राह । सोमोभिषुतः इति । अयं माध्यन्दिनसवनीयाभिषवः ॥

३८० तैर्द्रोणकलशे निहिते दशापवित्रे वितते । उन्नेतार-

माह । अप्रमत्तः सन्ततमानयोपांशुग्रहान् ग्रहीष्यामि इति । उक्थ्यग्रहणपर्यन्तं स तथा करोति । अध्वर्युः शुक्रपात्रमादाय धारायां गृह्णाति । अयं वेन० रिहन्ति । उ०शंडा०मि । इति । परिमृज्य सादयति । एष ते योनिर्वीरतां पाहि । इति । तथा मन्थिपात्रे पूर्ववत् । बर्हिषी अन्तर्धाय सक्तुभिः श्रीत्वाऽपोद्धृत्य बर्हिषी परिमृज्य सादयति पूर्ववत् । दक्षिणतुपात्रे गृह्णाति । मरु० हुवेम । उप० मरुत्वते० मि, इति । सादयति । एष० निरिन्द्राय त्वा मरुत्वते । उत्तरंतु पात्रे० ति । इन्द्र म० सुयज्ञाः । उप० मि । इति । परि० यति । एष० त्वते । इति । आग्रयणस्थं सोमं पात्रान्तरेऽवनीय तेनोदञ्चनेन चोपरिष्टाद्दशापवित्रेऽवनीय तिसृणां धाराणामधस्तादाग्रयणं गृह्णाति । पूर्ववत् सादयति । इदं ग्रहेषु माध्यं०नीयसोमग्रहणम् ॥

३८१ द्रोणकलशमुपर्यद्धं कृत्वा पयसा हिरण्येन सक्तुभिः क्रमेण श्रीत्वा परिप्लुपात्रं प्रास्य द्रप्सानुमन्त्रणम् । उन्नेतारमाह । अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् गृहीष्यामि । इति । उन्नेता पूतभृति पवित्रं वितत्याऽधवनीयात् द्वौ वा त्रीन्वोदञ्चनानयति । अध्वर्युः । अरिक्तौ पूतभृदाधवनीयौ पयसा सक्तुभिर्घृतेन च श्रीत्वा द्रोणकलशमभिमृशति । उप० सीन्द्राय त्वा, इति । अनेनैव मन्त्रेणाधवनीयं पूतभृतं च । उन्नेतारमाह । उन्ने०न्युब्जनात् । इति । उन्नेताऽवकाशोपस्थानान्ते तथा करोति । अध्वर्युः अप उपस्पृश्य बर्हिषी आदाय निःसर्पति । उद्गात्रादिषु प्रातःसवनवत्समन्वारब्धेषु आहवनीये स्रुवाहुतिं जुहोति । विश्वे देवा मरुत०स्वाम स्वाहा । इति । यथावेदमितरे । द्रप्साहुती प्रातःसवनवद्यजमानः । एतयैव प्रतिप्रस्थाता । अध्वर्युः पूर्ववत्पवमानार्थं सदः सर्पति । इदं माध्यन्दिनपवमानार्थसदःप्रसर्पणम् ॥

३८२ पूर्ववत् बर्हिषी प्रयच्छति । पूर्ववदुपाकरणं जपति पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति । सुपर्णोऽसि०रय, इति । चतुर्होतारं व्याख्याय समाप्ते साम्नि सम्प्रैषमाह । अग्नीदग्नीन्विहर बर्हिस्तृणाहि पुरोडाशाँ अलङ्कुरु प्रति प्रस्थातर्दधिघर्माय दध्याहर । इति । अयं दधिघर्मार्थदध्याहरणप्रैषः ॥

३८३ अग्न उपस्पृश्य । एहि यजमान । तेन सह पूर्वया द्वारा हविर्धानं प्रविश्य समस्तं राजानं प्रातःसवनोक्तमन्त्रेणोपतिष्ठते । ततः प्रातःसवनवदुक्ताशैरुपतिष्ठेते अध्वर्युयजमानौ । उन्नेता प्रातःसवनवत्पूतभृति राजानमवनीयाधवनीयं न्युब्जति । प्रातःसवनवत् धिष्ण्यव्याघारणं पृष्ठ्यास्तरणं च । अध्वर्युः दधिघर्मस्यादौ घर्मोक्तां पूर्वां शान्तिं पठति । ततो हविर्धानयोर्मध्ये उपविश्य प्रतिप्रस्थात्रा दधिघर्मार्थमाहृतं दध्यवेक्षते । ज्योतिष्०गुग्धम् । इति इदमाहृतदध्यवेक्षणम् ॥

३८४ मनसे बर्हिषी अन्तर्धाय दधि गृह्णाति । यावतीऽ०पस्तृतम् । इति । अपोह्य त्य बर्हिषी दध्यवेक्ष्य मन्त्रं पठति । वाक् च त्वाऽ०मृतं कृणु । इति । होतारमाह । होतर्वदस्व यत्ते वाद्यम् । इति । अयं होतृवाद्यप्रैषः ॥

३८५ चमसमादाय उपोत्तिष्ठन्नाह । श्रातँ हविः । इति । अत्याक्रम्याश्राव्याह । दधि घर्मस्य यज । इति । वषट्कृते जुहोति । यमिन्द्रमा०तेभ्यः स्वाहा । इति । अयं दधिघर्मप्रचारः ॥

३८६ अनुवषट्कारे हुत्वा चमसं होत्रे हरति । होत्रध्वर्युप्रतिप्रस्थात्रग्नीत्प्रस्तोतृयजमानाः क्रमेण परस्परमुपहूय प्राणभक्षं भक्षयन्ति । मयित्य०यामि । इति । यजमानः प्रत्यक्षम् । अयं दधिघर्मभक्षः ॥

३८७ निर्णिज्य पात्रं प्रयच्छति । तूष्णीं शाखां मेक्षणं च प्रहृत्योपवेषं निरस्यति । आग्नीध्रः भिन्नपात्र्यां पुरोडाशं पूर्ववत्सवनीयांश्चोद्वास्य खरे सादयति । अध्वर्युः यजमानेन । आसन्नाभिमर्शने कृते आग्ने येन पशुपुरोडाशेन प्रचर्य जुहूपभृतोरुपस्तृणान आह । माध्यन्दिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि । इति सवनीयायां द्विर्द्विरवद्यति । अभिघारयति । प्रत्यनक्ति । उपभृति पुरोडाशस्यावदाय सवनीयानामवद्यति । द्विरभिघारयति । न प्रत्यनक्ति । प्रथमं जुहूपभृतोरुपस्तीर्य पुरोडाशस्योपभृत्याप्युपस्तीर्य नाभिघार्यैष्वा तस्योपरि सवनीयानामवदानं जुह्वामुपस्तरणं वा । माध्यं०डाशान्प्रस्थितान् प्रेष्य इति प्रेष्यति । ततः स्विष्टकृतं हुत्वा प्रातः सवनवद्धोतुरग्रे इडापात्रं निदधाति । अयं माध्यन्दिनसवनीयप्रचारः ।

३८८ सर्वेषां सवनीयानां प्रातःसवनएव निर्वापे पशुपुरोडाशेनप्राशित्राग्तेन प्रचर्य माध्यन्दिनीयैः प्रचर्य प्राह्णाय-त्याह । उन्नी० हि होतुश्चमसमनुन्नयच्चमुन्नयतः शुक्रान् कुरुच्चमच्छावाकस्य चमसाध्वर्योऽपि त्वं चमसमुन्नयस्व प्रति-प्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताऽप्रोक्षितैः प्रत्युपलम्भ-स्व । इति । अयं माध्यं० नीयचमसोन्नयनप्रैषः ।

३८९ पूर्ववच्छुक्रामन्थिप्रचारः । सर्वांश्चमसानुन्नयन्ति । आह । माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो०प्रेष्य । इति । अयं माध्यं०नीयशुक्रामन्थिप्रैषः ।

३९० नेष्टृचमसहोमानन्तरं अच्छावाकचमसहोमः । अयं माध्यं०नीयप्रस्थितयाज्याप्रचारः ।

३९१ षड्ढोत्राः संयाज्याग्रेण होतारमुपविश्याऽयाड्ग्नी दित्यादि । इडो पह्वानानन्तरं प्राशित्रहरणं तूष्णीमन्तर्वेदि

प्रणीतानिनयनम् । इडोपहूतांश्चमसान् भक्षयन्ति । नेष्ट्रनन्तरमच्छावाकः । प्रातः- सवनवत् । भक्षेहीति मन्त्रे रुद्रवद्गणस्येति माध्यन्दिनस्य सवनस्य त्रिष्टुप् छंदस इति यथास्थानमूहः । प्रातः सवनवन्नाराशंससादनं यजमानस्य हवि शेषप्राशनं पत्न्या हविस्यभोजनम् । अध्वर्युः सस्रुवामपूर्वाज्यस्थालीं स्रुचं वासस्तस्यान्तिमायां दशायां ग्रथितं हिरण्यशकलं चादाय यजमानमामन्त्र्य चात्वालोत्करयोर्मध्येन प्रविश्य यजमानेन सहोत्तरेणाग्नीध्रीयं सदश्च परीत्य पूर्वद्वारा शालां प्रविश्य शालामुखीयमाज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा ज्ञातिषु समन्वारब्धेषु वाससा सम्प्रच्छन्नेषु वैसर्जनवद्धवनस्यान्तं स्रुग्दण्डे उपसङ्गृह्य हिरण्यं स्रुग्बिले धारयन् शालामुखीये जुहोति । उदुत्यमित्यृचा । पुनर्गृहीत्वा चित्रमित्यृचा । पुनर्गृहीत्वा अग्ने नयेत्यृचा आग्नीध्रीये । स्रुग्बिलाद्धिरण्यमुद्गृह्णाति । दिवं गच्छ सुवःपत । इति । अयं दक्षिणारम्भकहोम उच्यते ।

३९२ पूर्वमेव चात्वालोत्करयोर्मध्येन प्रवेश्य सदो दक्षिणभागे दक्षिणास्थापिता भवन्ति । सदः शालामुखीययोः आग्नीध्रीययोश्चात्वालोत्करयोश्च मध्येनोदीचीं नीत्वा तत्रैकत्र स्थापयति । एतद्दक्षिणानयन मुच्यते ।

३९३ ततो यजमानस्ताः प्रदक्षिणं पर्येति । रूपणवो० वयः । इति । स्वीयकृष्णाजिनपुच्छेन दक्षिणाभूता गास्त्रासयित्वा विभजति तुथोवो० अधिनाके । इति । तत्र वर्गप्रथमानामृत्विजां द्वादश द्वादश । द्वितीयानां चतस्रश्चतस्रः । तुरीयाणाम् । तिस्रस्तिस्रः । निष्क्रयस्याप्येवमेव विभागः । इदं दक्षिणाविभजनम् ।

३९४ ततः सदसि गच्छति । एतत्ते अग्ने राध० नयन्तीः ।

इति । सदसः पुरस्तादासीनमात्रेयं ब्राह्मणं प्रत्येति । ब्राह्मण-मद्य० सुधातु दक्षिणम् । इति । किंस्वित् किंस्विद्गृहीत्वा तं पृच्छति त्रिः । क आत्रेय इति । सहिरण्यं अयनमिति वदति । तृतीये त्वद्दिनित्येव । यजमानस्तं समपूज्य हस्ते तस्मै हिरण्यं ददाति चन्द्रमणूह । इति यथासम्भवं वस्त्रादि च ददाति । आग्नीध्रीयं गत्वाऽग्नीधे हिरण्यं दक्षिणा-भागं ददाति । अग्नीदयमा भागं दक्षिणां ते ददामि इति । एवं सदसि गत्वा ब्रह्मणे होत्रे उद्गात्रे च । हविर्धाने गत्वाऽध्वर्यवे प्रतिप्रस्थात्रे च । चमसाध्वर्युभ्यस्तु क्रतु-दक्षिणाभिन्नां यथासम्भवं दक्षिणां ददाति । पुनः सदो गत्वा प्रस्तोत्रे मैत्रावरुणाय ब्राह्मणाच्छंसिने ऽच्छावाकाय नेष्ट्रे उन्नेत्रे सुब्रह्मण्याय च दत्वा प्रसर्पकेभ्यो विद्याविशेषा-नुरूपां क्रतुदक्षिणाभिन्नां दक्षिणांशं तदीयं ददाति । प्रकृ-तिवत्सर्वे प्रतिगृह्णन्ति प्रतिग्रहमन्त्रे रुद्राय गा इत्यूहो विशेषः । इदं सौमिकदक्षिणादानमित्युच्यते ।

३९५ अध्वर्युः यजमानमामन्त्र्य तेन सहाग्नीध्रीयं गत्वा चतुर्गृहीतेन स्रुचा आग्नीध्रीये जुहोति । यज्ञपतिमृषय० स्वनतु विश्वकर्मा स्वाहा । इति । पुनस्तथैव जुहोति । घोरा ऋषयो०पात्वस्मान् स्वाहा । इति । पुनर्जुहोति । अन्यान् तस्मा०स्वस्तये स्वाहा । इति । ये भक्षयन्तो०विश्व-कर्मा स्वाहा । इति । नमः पितृभ्यो०यिष्ट स्वाहा । इति अयं दक्षिणोत्तरवैश्वकर्मणहोम उच्यते ।

३९६ शालामुखीयं गत्वा यजमानेऽन्वारब्धे तथैव जुहोति । ये देवा यज्ञहनो०गच्छेम सुकृतो वयं स्वाहा । इति । ये देवा यज्ञमुषो०वयं स्वाहा । इति । तत आग्नी-ध्रीयं गच्छति । आयन्म मित्रावरुणा०रोचने दिवः । इति

तत्र ये देवा इत्यादि होमद्वयं तत्र पृथिव्यामित्यस्य स्थाने-ऽन्तरिक्षे इत्यूहः । तत आहवनीयसमीपं गच्छति । यास्ते राज्ञी:० स्तारजाऽस्मि इति तत्रापि ये देवा इति होमद्वयं करोति । मन्त्रे पृथिव्यामित्यस्य स्थाने दिवीत्यूहः । तत आहवनीयमुपतिष्ठते । येनेन्द्राय० ग्राभेणेनम् । इति । इदं दक्षिणोत्तराहुतिहोमोपस्थानमित्युच्यते ।

३९७ अध्वर्युर्यजमानं प्राङ्मोक्षयति । विष्णुः पथ उर्वन्तरिक्षम् इति सदस्सु प्रवेशयति । यतस्वदस्यैः । इति यजमानो दक्षिणाः समनुदिशति । अस्मद्राता देवत्रा० तदः संस्कृतम् । इति । अयं दक्षिणासमनुदेशः ।

३९८ अध्वर्युः प्राङ्गायन्नाह । इन्द्राय मरुत्वतेऽनुब्रूहि इति । प्रतिप्रस्थाता मरुत्वतीयौ ग्रहावादाय निष्क्रामति । अध्वर्युर्दक्षिणेन प्रथमं सव्येन द्वितीयं ग्रहमादायोत्तरतस्ति-ष्ठते प्रतिप्रस्थात्रे द्वितीयं प्रदायाऽऽश्राव्याऽऽह । इन्द्राय मरुत्वते प्रेष्य इति । वषट्कारेऽनुवषट्कारे चोभौ जुहुतः । प्रतिप्रस्थाताऽध्वर्युपात्रे ग्रहस्य संस्रावमवनयति । अयं मरुत्वतीयग्रहद्वयप्रचारः ।

३९९ अध्वर्युस्तमाह । प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाण इति । प्रतिप्रस्थाता तस्मिन् द्रोण-कलशात्परिप्लुपात्रेण गृह्णाति । मरुत्वाँ इन्द्र वृ० प्रदिवः सुतानाम् । उप० मरुत्वतेऽसि । इति पूर्ववत्सादयति । इदं तृतीयमरुत्वतीयपात्रे सोमग्रहणम् ।

४०० द्विदेवत्यवद्धोमगमने पात्रपरिहरणम् । अध्वर्युर्होत्रे पात्रं प्रदाय तेन भक्षिते तं प्रतिप्रस्थातारं चोपहूय भक्ष-यति । भक्षणमन्त्रे रुद्रवद्गणस्येति वसुमद्गणस्येत्यस्य स्थाने: एवं तावुपहूय प्रतिप्रस्थाता । अध्वर्युः पात्रं निगृह्याऽऽवृः

स्येडाजपं कृत्वा शस्त्रं प्रतिगीर्य शस्त्रसमाप्तौ माध्यन्दिन० सवने सर्वत्रोक्थं वाचीति वदति । तत्रैव पात्रं निधाय शस्त्रप्रायश्चित्तानि हुत्वा तृतीयं मरुत्वतीयमुपोद्यच्छते । चमसाध्वर्यवो नाराशंसान् । आश्राव्याह । उक्थशा यज सोमस्य । इति वषट्कारे ऽनुवषट्कारे च जुहोति । चमसाध्वर्यवश्चमसाननुप्रकम्पयन्ति । अयं मरुत्वतीयग्रहप्रचारः ॥

४०१ अध्वर्युः होत्रे पात्रं प्रदाय तेन भक्षिते उक्थमन्त्रेण भक्षयति । होतृचमसं होत्रध्वर्यु प्रतिप्रस्थातारो नराशंसपीतेन भक्षयन्ति । ब्रह्मादयो होतारमुपहूय नराशंसपीतेन स्वस्वचमसम् । आत्मानमभिमृश्याऽऽप्याय्य नाराशंसान् सादयन्ति । इदं माध्यन्दिनसवनीयनाराशंससादनम् ॥

४०२ अध्वर्युः तत्रैव पात्रं निधाय प्राङेत्य शुक्रपात्रमाददान आह । उन्नेतर्यदेमं माहेन्द्रं ग्रहं गृह्णाम्यथोदश्रुꣳ राजानं पूतभृतमभिसंपवयताद्दृशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतात् । इति । द्रोणकलशात्परिप्लुपात्रेण शुक्रपात्रे माहेन्द्रं गृह्णाति । महाꣳ इन्द्रो० वावृधे । उप० महेन्द्राय० मि । इति । परिमृज्य सादयति । एष ते योनिर्महेन्द्राय त्वा । इति । माहेन्द्रग्रहग्रहणम् ॥

४०३ उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशमवनीय मृष्ट्वा न्युब्जति । अध्वर्युः अप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङाद्रुत्य स्तोत्रमुपाकरोति । इदं माध्यन्दिनपवमानस्तोत्रोपाकरणम् ॥

४०४ समाप्ते साम्नि सम्प्रैषमाह । अभिषोतारो ऽभिषुणुताग्नीदाशिरं विनयोलूखलमुद्वास्य प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धि ॥ अयमभिषवप्रैष उच्यते ॥

४०५ प्रतिप्रस्थातृनेष्ट्रादयो ऽभिषोतारश्चमेखि ग्रावभिः शुष्काभिषवं कुर्वन्ति स्तोत्रसमाप्तिपर्यन्तम् । तथा आग्नीध्रो मुसलेनोलूखलमुच्चैर्वादयति । अध्वर्युः । अग्नीत्सवनीयान्निर्वप । इत्याह । स्तोत्रसमाप्त्यनन्तरं आग्नीध्रः प्रातःसवनवदामिक्षावर्जं सवनीयान्निर्वपति । अध्वर्युः इडाजपं कृत्वा शस्त्रं प्रतिगीर्य प्राङेत्य माहेन्द्रं ग्रहमुद्गच्छते । चमसाध्वर्यवो नाराशंसान् । पूर्ववदाश्रावणाद्यं वषट्कारहोमान्तम् । अयं माहेन्द्रग्रहप्रचारः ॥

४०६ प्रतिप्रस्थाता आग्नेयमतिग्राह्यं होष्यन्नवेक्षते । अग्ने तेजस्विन् तेजस्वी०मनुष्येषु कुरु । इति । जुहोति । दीक्षायै च त्वा० ॥ तेजसे जुहोमि स्वाहा । इति । यजमानं वाचयति । तेजोविदसि०तेजोहासीत् । इति । अयमाग्नेयातिग्राह्यग्रहप्रचारः ॥

४०७ नेष्टा ऐन्द्रमादायावेक्षते । इन्द्रौजस्वि०कुरु । इति । जुहोति ब्रह्मणश्च त्वा०स्वाहा । इति वाचयति । ओजो विद्०मोजो हासीत् । इति । अयमैन्द्रातिग्राह्यग्रहप्रचारः ॥

४०८ उन्नेता सौर्यमादायावेक्षते । सूर्यभ्राजस्वि०कुरु । इति । जुहोति । वायोश्च त्वा०स्वाहा । इति । वाचयति । सुवर्विदसि०- सुवर्हासीत् । इति । अयं सौर्यातिग्राह्यग्रहप्रचारः ॥

४०९ अध्वर्युः अनुवषट्कृते पुनर्माहेन्द्रं जुहोति । चमसाध्वर्यवश्चमसाननुप्रकम्पयन्ति । एतत्पात्रं नाराशंसा अतिग्राह्याश्चान्वायन्ति । अध्वर्युः होत्रे पात्रं प्रदाय तेन भक्षिते मन्त्रेणोक्तेन भक्षयति । होतृचमसं नराशंसपीतेन त्रयः । ब्रह्मादयो होतारमुपहूय नराशंसपीतेन स्वस्वचम-

सान् । यजमानोऽध्वर्युमुपहूय आग्नेयं भक्षयति । मयि मेधां मयि० स्तेजो दधातु । इति । तथैवैन्द्रम् । मयि० यीन्द्र इन्द्रियं०तु । इति । तथा सौर्यम् । मयि०सूर्यो भ्राजो०तु । इति । इदमतिग्राह्यभक्षणमुच्यते ॥

४१० आत्मानमभिमृशते । चमसाप्यायनं न भवति । तान् प्रक्षाल्य स्रुचां पश्चात् मैत्रावरुणचमसप्रमुखान् सादयन्ति । अध्वर्युः । प्रतिप्रस्थातरिमे चर्तु०पात्रेष्वपि सृज । इति वदति । प्रतिप्रस्थाता ऋतुपात्रे शुक्रपात्रमतिग्राह्यांश्च मार्जालीये प्रक्षाल्य स्वस्थाने सादयति । मैत्रावरुणचमसमित्यादिश्च उक्थ्यपर्यायाः प्रातः- सवनवत् । सर्वत्र ग्रहेषु शेषग्रहणे मन्त्रे इन्द्राय त्वा जुष्टं गृह्णामि । इति । सादनमन्त्रः एष ते योनिरिन्द्राय त्वा । इति । भक्षणमन्त्रे इन्द्रेण पीतस्येति । यजमानेन सह हविर्धानं गत्वा आधवनीयमुत्तानं कृत्वा तस्मिन् सर्वा वसतीवरीरेकधनाश्चाधवनीय सृष्ट्वा यथास्थानं न्युब्जति । सवनप्रायश्चित्ते अग्निर्मूर्धेत्यस्य स्थाने भुवो यज्ञस्य रजसश्च नेतेत्यृचा होमः । प्रशास्तःप्रसुहीत्युक्ते यदुक्तं तत् पूर्ववत् । अयं माध्यन्दिनं सवनमित्यारभ्य एतदन्तं कर्म माध्यन्दिनं सवनमित्युच्यते ॥

४११ अथ तृतीयसवनम् । देवीर्द्वारावित्याद्युत्तरार्चनान्तं पूर्ववत् । अध्वर्युः प्राकाशावाह । अग्नीत्परिस्रपणमाहर प्रतिप्रस्थातराशिरमानय श्मातङ्क्वादित्यग्रहाय दध्याहरेहि यजमान । इति । अयं तृतीयसवनारम्भकप्रैषः ॥

४१२ यथासम्प्रैष ते कुर्वन्ति । यजमानेन सह हविर्धानं प्रविश्योपांशुपात्रस्थमंशुं माध्यन्दिनीयऋजीषे प्रक्षिप्य होतृचमसे आधवनीयापोऽवनीय चर्मणि निधाय निग्राभ्यास्थेत्यादिमन्त्रेण यजमानाय दत्वा देवस्य त्वेत्यादिमन्त्रेण

कमपि ग्रावाणमादायाऽभिमन्त्र्य श्वात्रास्थेत्यादिमन्त्रेण आ-
जीषं होतृचमसीयाभिरुपसृज्य यत्ते सोमेत्यादिमन्त्रेण संप्र-
पुत्य, धिषणेवीडू इत्यादिमन्त्रेण चर्मान्तर्हिते फलके अभि-
मृश्य वृद्धोर्वाचयित्वा आहुरोपसृजेत्यादि। उपर्यर्धे होतृ-
चमसे आजीषं परिस्रावयति। प्रागपागित्यादिमन्त्रेण।
आजीषं चर्मणि निधायाध्वर्युरेव यावद्रसनिस्रावमभिषुणोति।
आहुरोपसृजेत्यादि। एवं द्वितीयमेव तृतीयम्। निग्राभवर्ज
चतुर्थम्। राजानं हस्तेन निष्पीड्य सम्भरणीये सम्भृत्य
पूर्ववदुन्नेत्रे प्रयच्छति। उन्नेता पूर्ववद्वनयति। एष एकः
पर्यायः। एवं द्वितीयमेवं तृतीयम्। पूर्ववद्धोतृचमसे ऽवनीय
श्वात्रा इत्यादि। आजीषं दशापवित्रेण परिवेष्ट्यान्तरेणेषे
उन्नेत्रे प्रयच्छति उन्नेता तदाधवनीये विक्षाल्य प्रपीड्यान्त-
रेणेषे उपरि नीत्वा प्रातःसवनीयआजीषे निक्षिपति। अयं
तृतीयसवनसम्बन्ध्यभिषवः॥

४१३ अध्वर्युः परिश्रयणीयवासोभ्यां हविर्धानद्वारौ परि-
श्रित्यादित्यस्थाल्या औपशयपात्रे तस्याः सकाशात्तृतीयांशं
गृह्णाति कदाचनस्त०पृच्यते। उप०स्यादित्येभ्य०मि। इति।
बर्हिषी अन्तर्धाय शृतातङ्क्यमानयति। कदाचन प्र०तं दिवि।
श्य०मि। इति। अपोद्धृत्य बर्हिषी आदित्यस्थाल्या अधं
गृह्णाति। यज्ञो देवानां०रासत। उप०मि। इति। इदमा-
दित्यग्रहे शृतातङ्क्यग्रहणम्॥

४१४ उपांशुसवनस्य स्थूलप्रदेशेन ग्रहमालोडयति। वि-
वस्वआदित्यै० श्रीणामि। इति। उपांशुसवनमुद्गृह्णाति।

तस्य यदि शीघ्रं सोमबिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरं तर्ह्यवर्षुकः । ग्रहमनासादयन् उपांशुसवनं दशापवित्रेण परिवेष्ट्य यथा सोमस्योर्मिर्भवति तथा पात्रस्याधस्तात् द्विश्चतुर्वा सोमं पातयन्नुद्दुन्ति । आसमुद्रादान्तरिक्षा०तिम् । इति । उपांशुसवनं दशापवित्रेण परिमृज्य प्रक्षिप्य द्वारौ विवृत्य बर्हिर्मुष्टिना ग्रहमपिधायोत्तिष्ठन्नाह । आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्योमहस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योनुब्रू३हि । इति । अयमादित्यग्रहप्रचारप्रैषः ॥

४१५ अत्याक्रम्याश्राव्याह । आदित्येभ्यः प्रेष्य । इति । वषट्कृते बर्हिर्मुष्टिमग्नौ प्रक्षिप्यादित्यं जुहोति । नान्वीक्षते । पर्यावृत्तस्य प्रतिप्रस्थाता पात्रमादत्ते । उपवेषनिरसनान्ते प्रतिहर्त्रा पूतभृति पवित्रे वितते उन्नेता आधवनीयात् द्वौ त्रीन्वोदञ्चनान् तस्मिन्नवनयति । अध्वर्युः आग्रयणस्थं सोमं पात्रान्तरे ऽवनीय तदादत्ते । प्रतिप्रस्थाता सोपशयामादित्यस्थालीम् । उन्नेत्रा उदञ्चनादिचतुष्टयमुपर्यवनीय चतसृणां धाराणामधस्तादाग्रयणं प्रातःसवनवद्गृहीत्वा ऽक्षिहिङ्कृत्याधिवदनं कृत्वा परिमृज्य सादयति । इदमाग्रयणे तृतीयसवनीयसोमग्रहणम् ॥

४१६ पूतभृतो बिलाद्दशापवित्रमपनीय बर्हिषो अन्तर्धायाग्नीध्रा विलोहितं सशेषमाशिरं पूतभृत्यवनयति । अन्वारब्धायां पत्न्यां प्रत्यृचं सर्वान्ते वा । ताश्चर्चः अस्मे देवासो वपुषे चिकित्सतेत्याद्यश्चतस्रः । ततो बर्हिषो अपो

हृत्य परिप्लुपात्रं पूतभृति प्रास्य पूर्ववत् द्रप्साननुमन्त्रयते । तत आधवनीयाभिमर्शनादि तन्नं तृप्रैषान्तम् । अध्वर्युर्बर्हिषी आदायोपनिःसृप्य प्रातः सवनवत्समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति । इदं तृतीयꣳसवनयन्तु स्वाहा । इति । अयं तृतीयसवनीयहोमः ॥

४१७ अध्वर्युर्माध्यन्दिनसवनवत् स्तोत्रमुपाकृत्य पवमानस्य नवम्यां प्रस्तुतायां वाचयति । सघाशिऽपारय । इति । पञ्चहोतारं व्याख्याय समाप्ते साम्नि सम्प्रैषमाह । अग्नीच्छालाकान् विहरऽपशौ संवदस्व । इति । पूर्ववद्धविर्धानं प्रविश्य समस्तसोममुपतिष्ठते । विष्णो त्वन्न इत्यादिना । प्रातः सवनवच्छालाकान्विहृत्य धिष्ण्यऽव्याघारणं पृष्ठ्यास्तरणं च । अध्वर्युः अग्नीदुत्तर बर्हिरित्यादि अग्नीषोमीयवद्धृतः परिहरणान्तम् । आग्नीध्रः प्रातःसवनवदाभिघारहितान् सवनीयान् सादयति । अध्वर्युस्तैः प्रचरति । अयं तृतीयसवनीयप्रचारः ।

४१८ होतृसकाशे इडापात्रं निधाय प्राश्नावनाह । उन्नीमानेभ्योऽध्वं तीव्राँ आशीवतः कुरुध्वमुन्नेतः ऽय । इति । चमसाध्वर्यवः पूर्ववच्चमसानुन्नीय तेषु किंचित्किंचिदाशिरमवनीयोत्तरवेद्यां सादयन्ति अध्वर्युर्होतृचमसमादायाऽऽह । तृतीयस्य सवनस्यर्भुमतो विभुवतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राँ आशीर्वत इन्द्राय सोमाऽऽय । इति । वषट्कृते जुहोति । श्येनाय पत्वने स्वाहा । इति । अनुवषट्कृते होमः । तृप्यं स्वाहा । इति । द्विः

सर्वांश्चमसान् जुहुति । अयं तृतीयसवनीयहोतृचमसप्रचारः ।

४१९ अध्वर्युः सम्प्रैषमाह । प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानाम् । ... श्चमसाध्वर्यवो होत्रकचमसान् सशेषान्पूलमृतोऽभ्युन्नीयोपावर्तन्ते अध्वर्युमैत्रावरुणचमसादीन् क्रमेणाऽऽदाय पूर्ववत्प्रस्थितया ज्याभियजति । प्रशास्त्रा वषट्कृते । विष्ट०हा । इति जुहोति अनुवषट्कृते तृप्यन्तामित्यादिमन्त्रेण परणामपि । ब्राह्मणाच्छंसिचमसे । परिधये०हा । इति । पोतृचमसे । ऊर्जे०हा । इति । नेष्टृचमसे । पयसे०हा । इति अच्छावाकचमसे । प्रजा०हा । इति । आग्नीध्रचमसे । ऋतसू०हा । इति । अयं तृतीयसवनीयप्रस्थितयाज्याप्रचारः ।

४२० प्रदक्षिणमावृत्य होतुरग्रे उपवेशनादि इडोपहूतचमसभक्षान्तम् । भक्षमन्त्रे आदित्यवद्गणस्येति तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्येत्यूहः । नाराशंसभक्षानन्तरं ब्रह्मादयः सर्वे प्राचीनावीतं कृत्वा स्वस्वचमससमीपे त्रींस्त्रीन्पुरोडाशशकलान्प्रक्षिपन्ति । अध्वर्युप्रतिप्रस्थातारौ होतृचमससमीपे । स्वस्थाने उपविश्यानुमन्त्रयन्ते । अत्र पितरो यथाभागं मन्दध्वम् । इति । अध्वर्युरत्रत्य एव । इदं सौमिकपुरोडाशशकलदानम् ।

४२१ यजमानो हविःशेषं पत्नी हविष्यं चाश्नाति । अध्वर्युर्हविर्धानात्प्राञ्चायन्नाह । देवाय सवित्रे ऽनुब्रू३हि प्रतिप्रस्थातरन्तर्यामपात्रेण साविपात्राद्रूपं गृहीत्वा

पात्व मासीषद: । इति । प्रतिप्रस्थाता तथा गृह्णाति वामऽस्याम । उप०मि देवाय त्वा सवित्रे । इति । हुत्वा सशेषे वैश्वदेवं पूतभृत: परिप्लुया गृह्णाति । सुश०मि । इति । सदो गत्वा होत्रा समीक्ष्य शस्त्रं प्रतिगृणाति । प्रतिप्रस्थाता । होतुरेकया च दशभिश्चेति श्रुत्वा द्विदेवत्यपात्राणि मार्जालीये प्रक्षाल्य निदधाति । अध्वर्युः प्रद्यावा यज्ञैरित्यादिया-मदाहावं अवसाने ओथामो दैवेति प्रणवे च मदामो दैवेति । तद्राधो अद्येत्यादियावदाहावं अवसाने प्रणवे च मदामो दैवेति । शस्त्रान्ते तृतीयसवने उक्थं वाचीन्द्रा येत्याह । शस्त्रप्रायश्चित्तान्ते वैश्वदेवअदायाह उक्थशायज सोमस्य इति । वषट्कृते ऽनुवषकृते च जुहोति । अयं वैश्वदेव-ग्रहप्रचारः ।

४२२ चमसानुप्रकम्पयन्ति । एतत्पात्रं नाराशंसा अन्वा-यन्ति । पूर्ववत् भक्षः । स्रुचां पश्चाच्चमससादनानन्तरं प्रतिप्रस्थाता तूष्णीं समन्त्रकं वा शालामुखीये निरुप्य सौम्यं चरुं घृतमिदानीमभिघार्योद्वास्य सादयति यन्मे अग्नइत्यादिमन्त्रेण यजमानेनाभिमन्त्रिते ऽध्वर्युर्होतारं पृच्छति । पर्यक्ष्यसि सोम्यामू३ । न पर्यक्ष्यसी३ । इति । सर्वं सौम्यमागत्य ध्रुवाज्याच्चतुर्गृहीत्वा ऽऽश्राव्याह । घृतस्य यज । इति । वषट्कृते जुहोति । पुन रुपस्तीर्य द्विश्चरो-रवदायाभिघार्य न प्रत्यनक्ति । पूर्ववदाश्राव्याह । सौम्यस्य यज । इति । वषट्कृते प्राचीनावीत्याग्नेय्यां जुहोति । अयं घृतयाज्यासम्पुटितसौम्यचरुयागः ।

४२३ मेक्षणानुप्रहरणान्ते पुनश्चतुर्गृहीतं गृहीत्वा ऽऽह । घृत०मा इति । पूर्ववज्जुहोति । अपर्वाणि स्रुवा हुत्वा भिजु-

होति विष्णो त्वं न इत्यृचा। ततश्चरुमध्ये गर्तं कृत्वा प्रभूतमाज्यं लौकिकमानीयोद्गातृ व्यतिरिक्ताः स्वशरीरच्छायां तस्मिन्नवेक्षन्ते। यन्मे मनः०मयि। इति। चरुमुद्गातृभ्यो दत्वा प्राञ्चायन्नाह। प्रतिप्रस्थातरुपांशुपात्रेण पात्नीवतमाग्रयणाद्ग्रहं गृहाण०षदः। इति। प्रतिप्रस्थाता तथा गृह्णाति। उप०सि बृहस्पतिसुतस्यत इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाना३इ पत्नीवा:३। बर्हिषी अन्तर्धाय घृतेन श्रीणाति। अहं पुर०सनानाम्। इति। इदं पात्नीवतग्रहणम्।

४२४ बर्हिषी अपोद्धृत्य परिमृज्यानासादितमेवादायाऽऽह अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा सङ्ख्याप्याप उपप्रव०मान इति। पूर्वद्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति। भूत०यासम्। इति। चमर्व्यैवः सर्वेण सोमेन होतृचमसादींश्चमसान् अभ्युन्नीय सादयन्ति। होतृचमसे लपमुन्नयन्ति। अध्वर्युः स्तोत्रोपाकरणादि कृत्वा सम्होतारं व्याचष्टे। नेष्टा पत्नीमुद्गात्रा लक्षयित्वा वाचयति। विश्वस्यते०ईडिताः। इति। यदोद्गाता संज्ञां करोति तदा पत्नी ईषद्वस्त्रमपसार्योरुमूलात्पन्नेजनीः स्रावयति। इदं पन्नेजनीजलस्रावणम्।

४२५ आपोहिष्ठीयशंसनान्तमास्ते। अध्वर्युः स्वादुष्किलायमिति चतस्र उभयतोमोदं प्रतिगृणाति। तदीयाहावे मोदामो दैवोंशोंसामोदैवेति। प्रति०ता तन्तु तन्वन्निति श्रुत्वा ध्रुवं हस्ताभ्यां सुष्ठु गृह्णाति। द्यावा०मि। इति।

स्यानाञ्चालयति इति। विश्वे० यन्तु इति। आहरति दि-
वि०पार्थिवान्। इति। होतृचमसे ऽवनयति। ध्रुवं०रसन्
इति। अध्वर्युः पूर्ववद्धोतृचमसमादायाऽऽह। उक्थ०सो-
मानां इति पूर्ववज्जुहोति। चमसानपि पूर्ववच्चमसभ-
क्षणम्। मन्त्रे अग्निना वैश्वानरेण मरुद्भिरित्यूहः। आह-
वनीयस्योत्तरतः पूर्ववच्चमससादनम्। आशिरोपवेषनिरसना-
न्ते अध्वर्युः जुहोति। जनस्य गोपा०शुचिः स्वाहा। इति।
यन्मआत्मन इत्यादि समानम्। सर्वेषु चमसेषु त्रींस्त्रीन्
दूर्वाग्रन्थीनेकैकं दर्भपिञ्जूलं च प्रशास्तः प्रसुहीति प्रेष्य
प्रसर्पतेत्युक्ते सर्वे यथाप्रसृप्तं निःसर्पन्ति। अथ तृतीय सवन
मित्यारभ्यैतदन्तं कर्म तृतीयसवनमुच्यते।

४३६ सङ्कल्पप्रभृति सर्वं कर्म अग्निष्टोम इत्युच्यते।

समाप्तोयङ्ग्रन्थः शुभम्भूयात्।



॥ श्रीः ॥



# श्रौतपदार्थनिर्वचनम् ।

काशिकराजकीयप्रधानपाठशालायां आङ्गलसं-
स्कृतविभागे अध्यापकेन जोश्युपा-
ह्वविश्वनाथ शास्त्रिणा ।
संशोधितम् ।

इत्युपाह्व प्रोभूदत्त अग्निहोतरी संशोधिताद्वितीयावृत्तिः

# SHRAUTAPADARTHANIRVACHANAM.

A DICTIONARY OF SACRIFICIAL TERMS,
edited by
VISHWANATH SHASTRI,
*2nd Edition 1919.*
Revised by
PT. PROBHUDATT AGNIHOTRI,
BENARES.





Printed and Published by H. N. Bagchi,
at the Medical Hall Press, Benares Cantt.,
for E. J. LAZARUS & Co., Proprietors.

 1919. [*2nd edition, 1,000 copies.*

Price Rs. 6. [ मूल्यम् ६)



॥ इति ॥

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## १ इष्टिप्रकरणम् ।

---

१ इष्टिशब्द ऋत्विक्चतुष्टयसंपाद्यसपत्नीकयजमानकर्तृककर्मनामधेयम् ॥

२ तत्र यजते ऽसौ यजमान इतिविग्रहे यजमानशब्दः स्वार्थकर्मानुष्ठानकर्तृवाचकः ॥ *

३ ऋत्विङ्मध्ये यजमानो यं पूर्वं वृणीते कर्मण आरम्भसमाप्ती च यः करोति अध्वरं यज्ञं युनक्तीतिविग्रहेण † सोऽध्वर्युरित्युच्यते ॥

४ कर्मकाले यजमान आहवनीयस्य दक्षिणत उदङ्मुख उपविशतितस्य पूर्वस्यां दिशि तत्रैवोदङ्मुखो दक्षिणोत्तरिणोपस्थेन ‡ दक्षिणेऽङ्के उत्तानं सव्यं पाणिं प्रागग्रं निधाय तदुपरि तथैव न्यञ्चं § दक्षिणं

---

* कर्म जन्य फल भोक्तेति यावत् ।

† अयं विग्रहो यास्काचार्येण प्रदर्शितः । अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वाऽपि वाऽधीयाने युरुपबन्धोऽध्वर इति यज्ञ नाम ध्वरति हिंसाकर्मातत्प्रतिषेध इति । इदमयुक्तमित्यपरे यजमानस्याध्वरमिच्छतीत्यर्थे छन्दसिपरेच्छायामपि क्यज्वक्तव्य इति वार्तिकेनाध्वरशब्दात्क्यचि क्याच्छन्दसीत्यनेनोप्रत्यये ऽतो लोपे कव्यध्वरपृतनस्यर्चिलोप इति सूत्रेणाध्वराकारस्य लोपेऽध्वर्युशब्दः सिद्धो भवतीति कव्यध्वरेतिसूत्रस्योदाहरणमध्वर्युं वा मधुपाणिमिति प्रदर्शयतः कौमुदीकारस्य संमतम् ।

अथवा कव्यध्वरेति सूत्रे मनोरमायां "मृगय्वादिगणेऽप्यध्वर्युशब्दः पठ्यते तत्र व्युत्पत्त्यन्तरं बोध्य" मित्युक्तेर्मृगं यातीतिवद् अध्वरं यातीत्यध्वर्युशब्दः कुप्रत्ययान्तः । तत्राध्वराकारलोपोऽपि निपातनादिति, उभयथापि मूलप्रदर्शितव्युत्पत्त्याऽध्वर्युशब्दस्य सिद्धेः ॥ चरणव्यूहे तु "मन्त्रब्राह्मण कल्पानामङ्गानां यजुषामृचाम् । यथ्यां यः प्रविभागज्ञः सोऽध्वर्युः कल्पमुच्यते" इत्युक्तम् ।

‡ गार्हपत्यादिषु प्रायश्चित्ताहुतिदातृत्वं ब्रह्मणः केवलं बौधायनीयानामेव न त्वापस्तम्बकूरपयकेशिप्रभृतिसूत्रानुसारिणामिति सामान्य ब्रह्मलक्षणे चिन्त्यमेतत् । कातीयानां त्वनादिष्टहोममात्रं ब्रह्मकर्तृकम् ।

§ दक्षिणं च तदुत्तरं च दक्षिणोत्तरं तद्वता जानुना । उत्तरं सव्यजानोरुपरिस्थापितम् ॥

निधाय य आस्ते सर्वदा कर्मणि दत्तचित्तः प्रणीतप्रणयनादौ * अभ्यनुज्ञाकर्ता ऋग्यजुःसाममन्त्रकर्मभ्रेषे गार्हपत्यदक्षिणाग्न्याहवनीयेषु क्रमेण प्रायश्चित्ताहुतिहोमकर्ता † च स ब्रह्मपदवाच्यः ॥

५ यस्तु वेद्युत्तरश्रोण्युत्तरतः प्राङ्मुखो दक्षिणोत्तरिणोपस्थेन उपविशति अवकाशवदङ्गुली संहितौ पाणी हृदयदेशे अङ्के वा धारयति सामिधेनीः प्रयाजान् आज्यभागयाज्यापुरोनुवाक्याः सूक्तवाकं शंयुवाकं ‡ च पठति च स होतृपदवाच्यः ॥

६ यश्च ऊर्ध्वाग्रमसिवत् स्फ्यं § दक्षिणहस्ते धारयन् उत्करदेशे च दक्षिणामुखस्तिष्ठति अध्वर्युणा आश्रवणे कृते अस्तुशब्दपूर्वकश्रौषट्शब्दोच्चारणरूपप्रत्याश्रवणं करोति स आग्नीध्र इति अग्नीदिति चोच्यते।

७ यजमानस्य स्त्री यजमानवद्यज्ञफलभोक्त्री गार्हपत्यस्य पश्चिमदक्षिणे देशे पूर्वमुदङ्मुखी ऊर्ध्वजानुरुपविशति ततः पयस्वत्याचमनादि गार्हपत्ये समिदाधानान्तं कर्म करोति ततस्तृणनिरसनं कृत्वा तत्रैवोर्ध्वजानुः प्राङ्मुख्युपविशति पत्नीसंयाजप्रचारानन्तरं अवभृथस्थानीये अग्निहोत्रहवणीजलनिनयने पत्न्यञ्जलौ योक्त्र ‖ माधाय होत्रा कृते स्वयं पूर्ववत्समिदाधानं पुनःपरिषेकान्तं कृत्वा पूर्वं यथा वेद्युत्करयो ¶ मध्यमार्गेण प्रविष्टा तथा तेनैव मार्गेण विहारान्निर्गच्छति सा पत्नी भवति ॥

८ यागार्थं यत्र यत्र यावती भूमिः श्रुत्यादिभिः परिमाणविशेषविशिष्टत्वेन विहिता तत्र तत्र तावती भूमिः विहारपदवाच्या ॥

९ परस्परसंश्लिष्टानां चतुर्दशसंख्याकानां अणुनामकानां धान्यविशेषाणां यत्परिमाणं तद्, अथवा कोशसंस्थानवत् स्थापितानां पृथुप्रदेशेन संश्लिष्टानां चतुस्त्रिंशत्संख्याकानां तिलानां यत्परिमाणं तदङ्गुलपदवाच्यं परिमाणमिति बौधायनशुल्बसूत्रे प्रसिद्धम् ॥

१० पञ्चदशाङ्गुलं पदमुच्यते ॥

११ + शुद्धे रमणीये देशे समचतुरस्रा दीर्घचतुरस्रा वा अग्निहोत्र-

---

* न्युब्जम् । † पश्य वाक्यम् (५८) । ‡ पश्य । १८५ । २४० । २३३ । २५७ । § पश्य । ३४ । ‖ पश्यवाक्यम् ६५ । ¶ पश्य वाक्ये, ३२ । ३५ ।

+ कातीयानां दर्शपूर्णमास विहार निर्माणप्रकारः । गार्हपत्यस्य (प्रत्यक्स्थस्य) मध्यादाहवनीयस्य (प्राक्स्थस्य) मध्यपर्यन्तमन्तरमेकादश द्वादश वा प्रक्रमाः

होमशाला कर्तव्या वास्तुशास्त्रोक्तरीत्या तस्याः प्राच्यां दक्षिणस्यां च दिशि एकैकं द्वारं कार्यं सा अग्निहोत्रशालेति गीयते ॥ †

१२ तस्यां शालायां पश्चिमभागे मध्यदेशे सप्तविंशत्यङ्गुलव्यासं मण्डलाकारं गार्हपत्यायतनं भवति ॥

१३ ‡ तस्य बाह्यतः शुद्धमृत्तिकानिर्मिता षडङ्गुलपरिमितोच्छ्राया

---

प्रक्रमो द्वादशाङ्गुल इति परिशिष्टे । प्रक्रमः पदमित्यनर्थान्तरम् । गार्हपत्य कुण्डं सार्द्धत्रयोदशाङ्गुलमितकर्काटकभ्रामणेन वृत्तं कार्यम् । आहवनीयस्यतु समचतुरस्रं तस्य व्यासविस्तृती चतुर्विंशाङ्गुलमिते । गार्हपत्याहवनीययोर्मध्ये यावतीरज्जुस्तावत्या रज्ज्वाः षड्भागान्कृत्वा स्वषष्ठभागं तस्यांसंयोजयेत् एवं सप्तभागाःसमाजाताः । ततः सप्तमभाग सहितां रज्जुं त्रेधाविभज्य तृतीयांश द्वयेऽपि चिह्नं कृत्वा प्रान्तयोः पाशौ कृत्वा गार्हपत्यमध्यस्थित शङ्कौ आहवनीयमध्यस्थित मध्यशङ्कौच पाशौ दत्वा गार्हपत्यात्प्रथमचिह्ने दक्षिणस्यां कर्षिते तत्र चिह्नं कार्यम् ( अयं दक्षिणाग्नि कुण्डमध्यः ) तच्चिह्नादुत्तर भागे सार्द्धनवाङ्गुल प्रदेशे शङ्कुर्देयः । तत्र पूर्वापरं रज्जुर्देया । शङ्कुसकाशात्पूर्वाधिकेकोनविंशाङ्गुलैर्भ्रमणं कार्यमुराद्धस्य त्यागस्तेन अर्द्धचन्द्राकारो दक्षिणाग्निखरः सम्पद्यते । आहवनीय मध्यशङ्कोः सकाशात्पश्चिमस्यां त्र्यरत्निपरिमिते देशे शङ्कुर्देयः । तत्सकाशाद्दक्षिणस्यामुत्तरस्यां द्व्यरत्निपरिमितेदेशे शङ्कुर्देयः । आहवनीयमध्यशङ्कुसकाशात्सार्द्धारत्निपरिमितेदेशे दक्षिणत उत्तरतश्च शङ्कुर्देयः । चतुर्षुकोणस्थ शङ्कुषुसूत्रार्पणाद्विषम चतुरस्रावेदिः सिध्यति । ततः प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यन्तं कोणद्वयवेष्टनेन सूत्रं प्रदेयतस्यार्द्धं कर्तव्यम् । अर्द्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य आग्नेयस्थशङ्कुवेष्टनेन दक्षिणतः, एवमीशान कोणस्थशङ्कुवेष्टनेनोत्तरतश्च शङ्कुः पृथक्पृथग्देयः । (इदमेव सङ्घमध्यम् ) ताभ्यां शङ्कुभ्यां दलीभूतरज्जु चतुर्थांशेन वेदिमध्ये सङ्घषौ (अर्द्धचन्द्राकारौ) कार्यौ । तत्पश्चाद्दशाङ्गुलमवशिष्टाभूमिः श्रोणिरित्यभिधीयते । पुरस्तादाहवनीयं यावदंस इत्यभिधीयते । तत आहवनीयमध्यात्प्रथमचिह्ने उत्तरस्यां कर्षिते तत्र चिह्नं कार्यं ( अयमुत्करमध्यः ) तच्चिह्नात् त्र्यङ्गुलकर्काटभ्रामणेन वृत्तउत्करः कार्यः । अयं च द्व्यङ्गुलखातो भवति । तत अग्निकोणादारभ्य ईशानकोणपर्यन्तं वेद्यां संयोज्य (मिश्रयित्वा) सार्द्धत्रिहस्ता वेदिः सम्पादनीया । सङ्घषौ वर्जयित्वा वेद्यां सर्वत्र त्र्यङ्गुलः खातोविधेयः । कुण्डेषु मेखलाद्वा दशाङ्गुलोच्चा चतुरङ्गुलविस्तारा एकैव भवतीति ।

† कातीयानां तु "विंशत्यर त्निःशालास्यात्तदर्धेन तु विस्तृता । त्रिमितं चतुरस्रं स्यात्त्र्यरत्नि प्रमाणात" इति परिशिष्टोक्तपरिमाणमर्थात्परिमाणं वाऽग्न्यगारद्वयं पूर्वापरं कृत्वा पूर्वेऽग्न्यगारे पूर्वपश्चिमेचेति द्वारद्वयं, द्वितीयेऽग्न्यगारे पूर्वदक्षिणे चेति द्वारद्वयं कुर्यात् ।

‡ कातीयानां त्वेकैव मेखलेत्युक्तम् ।

षडङ्गुलपरिमितायामा प्रथमा मेखला भवति ॥

१४ तस्या उपरि पूर्वोक्तोच्छ्राया चतुरङ्गुलपरिमितायामा द्वितीया मेखला भवति ॥

१५ तदेतन्मेखलाद्वयसंस्थानं कुण्डमित्युच्यते ॥

१६ गार्हपत्यायतने स्थापितोऽग्निर्गार्हपत्यनामको गृहपतिना यजमानेन संयुक्त इतिव्युत्पत्त्या गृहपतिना संयुक्ते ञ्य इतिसूत्रेण ञ्य प्रत्ययात् ॥

१७ गार्हपत्यस्य मध्यादारभ्य पूर्वस्यां दिशि ऋजुत्वेन नीयमानं आहवनीयमध्यपर्यन्तं सूत्रं पृष्ठ्यासूत्रमित्युच्यते ॥

१८ तादृशसूत्रस्य आधारभूतत्वेनोपलक्षिता भूमिगता रेखा पृष्ठ्या इति व्यवह्रियते ॥

१९ पृष्ठ्यासूत्रस्य यस्मिन् देशे पूर्वोऽन्तःपतति स आहवनीयमध्यो भवति। आहवनीयमध्यशङ्कोः पूर्वस्यां दिशि एकः शङ्कुस्तथा पश्चिमायां दिशि च एकः शङ्कुः प्रादेशमात्रे देशे निखेयः । अरत्निद्वयायामा उभयतःपाशा रज्जुः कर्तव्या तस्या एकस्मात्पाशादारभ्य द्वादशाङ्गुलमिते देशे किंचिद्वर्णेचिह्नं कार्यं तथा अष्टादशाङ्गुलमिते भागे चिह्नं कर्तव्यम्। पूर्वनिखातपाश्चात्यपौरस्त्यशङ्क्वोः पाशौ प्रतिमोचनीयौ । तत्र चिह्नसमीपवर्ती पाशः पाश्चात्यशङ्कौ निधेयः । ततो द्वितीयचिह्ने सूत्रं गृहीत्वा दक्षिणत आकर्षणं कार्यं यस्मिन् देशे प्रथमलक्षणसंबन्धो भवेत्स आहवनीयायतनस्य नैर्ऋतकोणः । एवमुत्तरतो द्वितीयलक्षणे धृत्वा सूत्रमाकृष्य प्रथमं चिह्नं यत्र पतेत्स आहवनीयवायव्यकोणः । ततः तयोरेव शङ्क्वोः तस्या एव रज्ज्वोः पाशौ विपरीतौ निधाय अष्टादशाङ्गुलमिते चिह्ने रज्जुं धृत्वा दक्षिणत आकृष्य प्रथमचिह्नपातस्थानमाहवनीयस्याग्नेयकोणःएवमेवोत्तरतः द्वितीयचिह्ने धृत्वा आकृष्य प्रथमलक्षणपातस्थानमाहवनीयस्यैशानः कोणः । एवं रीत्या संपन्नं चतुष्कोणमाहवनीयायतनमुच्यते ॥

२० तस्य बाह्यतः गार्हपत्यकुण्डवद् द्विमेखलं चतुरस्रमाहवनीयकुण्डं भवति ॥

२१ तन्मध्ये स्थापितोऽग्निः आहूयते ऽस्मिन्नितिव्युत्पत्त्या मुख्य * होमाधारत्वाद् आहवनीयपदवाच्यः ॥

---

* प्रधानः ।

२२ पृष्ठ्यासूत्रस्य पञ्चमं षष्ठं वा भागं आगन्तुकं अधिकं पृष्ठ्यासूत्रे संयोज्य उभयतःपाशां रज्जुं कृत्वा पुनः सर्वस्य सूत्रस्य पञ्चभागान् कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ प्रतिमुच्य पञ्चधा विभाजितायां रज्जोर-परस्मादन्ताद् भागद्वये गते सति चिह्नं कृत्वा द्वितीयं पाशं आहव-नीयमध्यशङ्कौ नियोज्य चिह्ने सूत्रं धृत्वा दक्षिणत आकृष्य लक्षणसंपा-तस्थाने शङ्कुं निहन्यात्। ततः पञ्चदशाङ्गुलपरिमितां रज्जुं एकतः पाशां कृत्वा तस्मिन्निहते शङ्कौ तं पाशं प्रतिमुच्य तया रज्ज्वा मण्डलं परिलिखेत् तस्य मण्डलस्यान्तररेखायाः पूर्वनिहितशङ्कोश्च मध्ये अन्यं शङ्कुं निहन्यात्। तस्या एव रज्ज्वाः पाशं तस्मिन् शङ्कौ प्रतिमुच्य पञ्चदशाङ्गुलपरिमितया तयैव रज्ज्वा अन्यन्मण्डलं परिलिखेत्। अस्य मण्डलस्य रेखा पूर्वकृतमण्डलरेखायां उपरि दक्षिणभागे उत्तरभागे च पतति तयोः संसर्गस्थानयोरेकं सूत्रं धृत्वा पश्चिमपूर्वायतसूत्रकृतरेखात उत्तरतो विद्यमानमण्डलभागं त्यजेत् मण्डलस्य दक्षिणतो विद्यमानो भागः पूर्वकृतमण्डलस्य च दक्षिणो भागः शूर्पाकारः संपद्यते स दक्षि-णाग्नेरायतनं भवति॥

२३ तस्य बाह्यतः गार्हपत्यकुण्डवद् द्विमेखलं शूर्पाकारं दक्षिणा-ग्निकुण्डमित्युच्यते॥

२४ तन्मध्ये स्थापितोऽग्निर्दक्षिणाग्निरन्वाहार्यपचन इति चोच्यते॥

२५ पूर्वं पञ्चधा विभाजितायां रज्जोर्दक्षिणाग्न्यायतनसाधने यः पाशो गार्हपत्यमध्यशङ्कौ प्रतिमुक्तस्तं पाशं आहवनीयमध्यशङ्कौ प्रतिमुच्य आहवनीयमध्यशङ्कुपाशं गार्हपत्यमध्यशङ्कौ प्रतिमुच्य पञ्चधा विभा-जितरज्जोः द्वयोर्भागयोर्गतयोर्यत्पूर्वं चिह्नं कृतं तत्र सूत्रं धृत्वा उत्तरत-आकर्षणीयं चिह्नसंस्पृष्टा भूमिः स्तम्बयजुर्हरणसमये दर्भशकलानि मृत्तिकासहितानि यथा क्षिप्तेऽवकाशे लोके प्रक्षिप्यते तथा विधिव-शात् तस्यां भूमौ प्रक्षिप्यन्ते अत उत्किरन्त्यस्मिन् वेद्यादिसंबन्ध्यव-करादिकमिति व्युत्पत्त्या उत्कर इति गीयते॥

२६ तथास्थितं तदेव सूत्रं तस्मिन्नेव चिह्ने धृत्वा दक्षिणत आकर्ष-णीयं चिह्नसंस्पृष्टा भूमिः यागकाले यजमानस्य तत्रोपवेशनविधानाद्यज-मानस्थानमित्युच्यते॥

२७ आहवनीयायतनात्पश्चिमदिशि षट्त्रिंशत्यङ्गुलपरिमिते देशे शङ्कुर्निखातव्यः तद्दक्षिणतो द्वात्रिंशदङ्गुलपरिमिते देशे एकः शङ्कुर्निखेयः तथैवोत्तरतस्तावत्येव देशे द्वितीयः शङ्कुर्निखेयः दक्षिणशङ्कुस्थानं दक्षिणश्रोणिरित्युच्यते ॥

२८ उत्तरशङ्कुस्थानमुत्तरश्रोणिरिति गीयते ॥

२९ आहवनीयमध्यशङ्कोर्दक्षिणतश्चतुर्विंशत्यङ्गुलपरिमितदेशे एकः शङ्कुर्निखेयः तथैवोत्तरतस्तावत्येव देशे अपरः शङ्कुर्निखेयः दक्षिणशङ्कुस्थानं दक्षिणांस इत्युच्यते ॥

३० उत्तरशङ्कुस्थानमुत्तरांस इति गीयते ॥

३१ ततः षट्त्रिंशत्यङ्गुलपरिमितां रज्जुं तावदागन्तुकभागामुभयतःपाशां कृत्वा मध्ये लक्षणं कृत्वा दक्षिणश्रोण्यंसशङ्क्वोः पाशौ प्रतिमुच्य लक्षणे रज्जुं गृहीत्वा दक्षिणत आकृष्य शङ्कुं तत्र निहन्यात् । तत उभौ पाशौ समस्य लक्षणशङ्कौ पाशद्वयं प्रतिमुच्य रज्जुमध्येन दक्षिणश्रोणिशङ्कोरारभ्य दक्षिणांसशङ्कुपर्यन्तं लिखेत् । एवंकृते या रेखा उत्पद्यते सा वेद्या दक्षिणं पार्श्वमिति व्यवह्रियते ॥

३२ तथैव तस्या रज्ज्वाः पाशौ उत्तरश्रोण्यंसशङ्क्वोः प्रतिमुच्य रज्जुमध्येन चिह्नितेन रज्जुमुत्तरत आकृष्य चिह्नसंपातस्थाने शङ्कुं निहन्यात् तत उभौ समस्य अस्मिन्निहते शङ्कौ प्रतिमुच्य मध्यभागस्थचिह्नेन सूत्रं धृत्वा उत्तरश्रोणिशङ्कोरारभ्य उत्तरांसशङ्कुपर्यन्तं लेखां लिखेत् । सा लेखा वेद्युत्तरपार्श्वमित्युच्यते ॥

३३ अनया रीत्या दक्षिणोत्तरपार्श्वयुक्ता दक्षिणोत्तरश्रोणिसहिता दक्षिणोत्तरांसयुक्ता उरोरूपशरीरावयवत्वेन उपनिषद्युक्ता यागकाले दर्भैराच्छादिता आज्यवत्पुरोडाशादिरूपहविरासादनाश्रयभूता वेदिरित्युच्यते । तस्या बाह्यतः प्रथमा मेखला चतुरङ्गुलोत्सेधा चतुरङ्गुलायामा मृत्तिकानिर्मिता भवति तस्या मेखलाया उपरि द्व्यङ्गुलोत्सेधा द्व्यङ्गुलायामा तथैव द्वितीया मेखला भवति ॥

३४ खदिरकाष्ठनिर्मित अरत्निपरिमितो दीर्घश्चतुरङ्गुलपरिमितविस्तार आकारेण खड्गसदृशः स्फ्य इत्युच्यते ॥

३५ पुरोडाशभर्जनार्थं मृत्तिकया निर्मितानि वह्नौ परिपक्वानि द्व्यङ्गु-

लोष्टकायाणि यस्मिन् पुरोडाशे यावन्ति विहितानि तानि सर्वाणि मिलित्वा गार्हपत्यपश्चाद्भूमौ गार्हपत्यायतनान्तः पश्चिमभागे वा उपधीयमानानि कपालपदवाच्यानि ॥

३६ कस्मिंश्चित्पुरोडाशे एकमेव कपालं भवति तत्र तदेकं कपालं अश्वशफपरिमाणं अश्वशफाकारं उपधीयते स च पुरोडाशः श्रुतौ एककपाल इति गीयते ॥

३७ पुरोडाशस्यानेककपालत्वे तु अश्वशफाकारता अश्वशफपरिमाणता च कपालसमूहे बोद्धव्या । तत्राष्टाकपाले प्रकृतिभूते पुरोडाशे प्रथमं कपालं चतुरस्रं मध्ये उपधीयते तस्य पुरस्ताद् द्वितीयं शफाकारतासंपादनाय अर्धचन्द्राकारं तृतीयं तु मध्यमस्य पश्चाद्द्वितीयसदृशं चतुर्थं तु मध्यमस्य दक्षिणतस्तादृशमेव पञ्चमं तु दक्षिणस्य पुरस्तादाग्नेयकोणे शफाकारतासंपत्तियोग्यं षष्ठं तु दक्षिणस्य पश्चाद् नैर्ऋतकोणे समुदितस्य शफाकारतासंपत्तियोग्यं सप्तमं तु मध्यमस्योत्तरार्धे पश्चिमभागे शफाकारतासंपत्तियोग्यं अष्टमं तु मध्यस्योत्तरार्धे पूर्वभागे एवमष्टौ कपालानि समुदितानि अश्वशफपरिमितानि अश्वशफाकाराणि भवन्ति । एवं नवकपालादिषु अष्टाकपालन्यूनकपालादिषु च कपालरचना कपालविभागश्च अश्वशफाकारतातत्परिमाणसंपत्तिसंभवेन कर्तव्यो । एते च पुरोडाशास्तावत्सु कपालेषु भर्जनीयत्वादष्टाकपालादिपदवाच्या भवन्ति ॥

३८ दैर्घ्ये प्रादेशमात्री अरत्निमात्री बाहुमात्री वा हस्त्योष्ठीत्वपक्षे अष्टाङ्गुलपरिमितबिला हंसमुखीत्वपक्षे वायसपुच्छकात्वपक्षे च पञ्चाङ्गुलपरिमितबिला चतुरङ्गुलपरिमितबिला वा बिलावशिष्टभागेन दण्डयुक्ता विकङ्कतकाष्ठेन निर्मिता अग्निहोत्रहोमसाधनत्वादग्निहोत्रं हूयतेऽनयेति करणव्युत्पत्त्याऽग्निहोत्रहवणीत्युच्यते ॥

३९ वंशनिर्मितं व्रीह्यादीनां पुरोडाशादिसंबन्धिनां निस्तुषकरणोपयोगि शूर्पमित्युच्यते ॥

४० कृष्णमृगस्य चर्म व्रीह्याद्यवघातकाले उलूखलस्याधःस्थापनोपयोगि कृष्णाजिनमिति कथ्यते ॥

४१ खादिरकाष्ठनिर्मिता षट्त्रिंशदङ्गुलपरिमितायामा अग्रभागे

ग्रा स्वङ्गुलिषु कुम्बा*ष्टकयुता तण्डुलादिपेषणकाले दृषदः ऽधस्तात्
स्थापनायोपयुज्यमाना आग्नीध्रकर्तृकदृषदुपलादिसमाहननादौ करण-
भूता शम्यापदवाच्या ॥

४२ पलाशकाष्ठनिर्मितं द्वादशाङ्गुलपरिमितोच्छ्रायं उपरितनार्धभागे बिलयुक्तं चरुपुरोडाशसंबन्धिव्रीह्यादिकण्डनोपयोगि उलूखलमित्युच्यते ॥

४३ उलूखलार्धत्रिगुणायामं खदिरकाष्ठनिर्मितं कण्डनोपयोगि मुसलमित्युच्यते ॥

४४ पाषाणमयी पेषणकाले पेषणीयद्रव्याश्रयभूता दृषदित्युच्यते ॥

४५ पाषाणनिर्मिता पेषणसाधनभूता उपला कथिता ॥

४६ पलाशकाष्ठनिर्मिता अग्निहोत्रहवणीसदृशी मुख्यहोमकरणत्वात् हूयते ऽनयेति व्युत्पत्त्या जुहूपदवाच्या ॥

४७ अश्वत्थकाष्ठनिर्मिता जुहूतुल्या उप समीपे भ्रियते ध्रियत इतिव्युत्पत्त्या होमकाले अध्वर्युणा सव्यहस्तेन होमार्थधृतदक्षिणहस्तसंबन्धिजुह्वाः समीपे धारणात् उपभृदिति भण्यते ॥

४८ खदिरकाष्ठनिर्मितः अरत्निमात्रो दीर्घः अग्रभागे अङ्गुष्ठपर्वमात्रवर्तुलबिलयुक्तः आज्यहोमादौ करणभूतः स्रवत्याज्यादिद्रव्यमस्मादिति व्युत्पत्त्या स्रुवपदवाच्यः ॥

४९ विकङ्कतवृक्षसंबन्धिकाष्ठेन निर्मिता जुहूसदृशी होमाद्यर्थं स्रुवेण गृह्यमाणस्याज्यस्याधारभूता यागसमाप्तिपर्यन्तं वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति अप्रचलिता भवतीति व्युत्पत्त्या ध्रुवापदवाच्या ॥

५० खदिरकाष्ठनिर्मितं प्रादेशपरिमितं गोकर्णाकारं चतुरङ्गुलपरिमितदण्डयुक्तं प्राशित्रं नाम ब्रह्मणे दीयमानो हुतशेषहविर्भागः स ह्रियते ऽनेनेति करणव्युत्पत्त्या प्राशित्रहरणपदवाच्यम् ॥

५१ अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलपरिणाहं पदपरिमितायामबिलयुक्तं चतुरङ्गुलदण्डं इडाया आधारत्वात् इडापात्रमित्युच्यते ॥

५२ हुतहविःशेषादवदाय इडापात्रे स्थाप्यमानो हविर्भाग इडेत्युच्यते॥

---

*कुम्बो वर्तुलग्रन्थिसदृशाकारः ।

५३ अश्वत्थकाष्ठनिर्मितं अरत्निपरिमितं अग्रभागे चतुरङ्गुलचतुरस्र-फलकयुतं भर्जनपात्र्यां समुप्तस्य पिष्टस्य मदन्तीभिरद्भिः संमेलनकरणा-दौ करणतया विहितं फलकाविशिष्टभागदण्डयुतं मेक्षणपदवाच्यम् ॥

५४ गार्हपत्ये भर्जनपात्रीमधिश्रित्य तस्यां तप्तायां सत्यां अध्वर्युः सव्यहस्तेन उदग्रं पवित्रं धृत्वा दक्षिणहस्तेन कृष्णाजिनात् पिष्टानि क्षिपति तत्क्षेपणं संवाप इत्युच्यते ॥

५५ भर्जनपात्र्यधिश्रयणकाले यज्जलपात्रमधिश्रितं भवति तत्रत्यं जलं अप्शब्दविशेषणत्वाद्बहुवचनान्तेन मदन्तीशब्देनोच्यते ॥

५६ अनखच्छिन्नं साग्रं प्रादेशमात्रं मन्त्रसंस्कारयुक्तं समपरिमाणं प्रोक्षणादौ प्रायः उपयोगि दर्भद्वयं पवित्रसंज्ञं भवति ॥

५७ गार्हपत्याधिश्रितायां यस्यां पात्र्यां पिष्टानि समुप्यन्ते सा पिष्टोद्वपनीति पठ्यते ॥

५८ अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलदण्डं अष्टाङ्गुलबिलं प्रादेशमात्रं प्रणीतानामकं जलं नीयते ऽनेनेति करणव्युत्पत्त्या प्रणीताप्रणयनमि-त्युच्यते ॥

५९ पूर्वोक्तं पवित्रमन्तर्धाय मन्त्रेण प्रायश्चित्तादिहोमार्थं जुह्वा-दिषु तिसृषु स्रुक्षु पूरणार्थं च यस्यां स्थाल्यामाज्यं गृह्यते सा आज्य-स्थालीपदवाच्या ॥

६० कर्म द्विविधं समन्त्रकममन्त्रकं च । तत्र समन्त्रके कर्मणि यस्मिन् कर्मणि यो मन्त्रः श्रुत्यादिना मन्त्रान्ते कर्म कुर्वीतेत्यादिव-चनात् क्वचित्कर्मण आरम्भादादौ क्वचित्तु उपस्थानादिकर्मसु कर्मसम-कालमेव करणत्वेन विनियुक्तस्तस्य मन्त्रस्योक्तस्थाने पाठाभावः अवि-हितस्थाने पठनंच एवं कर्मणोऽकरणं अस्थाने कर्मानुष्ठानं च अनयैव रीत्या मन्त्रक्रिययोरुभयोरननुष्ठानं अस्थाने तयोरनुष्ठानं विहिताकरणं निषिद्धाचरणं च प्रायश्चित्तपदैकदेशस्य प्रायःपदस्य नष्टशब्दापरपर्या-यस्य वाच्यम् ॥

६१ प्रायो नाम नष्टं तस्य चित्तं नाम पुनः संधानं अकृतस्य कृत-त्वसंपादकं अन्यथा कृतस्य सुष्टुकृतत्वसंपादकं कृतस्य निषिद्धस्याकृत-त्वसंपादकं कर्म विधायकश्रुत्यादिनैव तथा प्रतिपादनात् तच्च जपहो-

मादिरूपं तीर्थयात्रास्नानादिरूपं दोषानुसारेण श्रुत्यादिप्रतिपादितं प्रायश्चित्तमिति गीयते ॥

६२ ध्रुवोपभृज्जुहूनां तु स्रुवो भेदाः स्रुवः स्त्रियामिति श्रौतव्यवहारमूलककोशाद् ध्रुवोपभृज्जुहूस्रुवाणां चतुर्णां वाचकः स्रुक्शब्दः ॥

६३ दर्भमुष्टिः प्रदक्षिणमावेष्ट्य द्विगुणः कृतः प्रादेशमात्र उपविष्टवत्सजानुसदृशसंपन्नः समन्त्रकवेदिसंमार्जनादिकर्मोपयोगी प्रच्छिन्नाग्रो वेद इत्युच्यते ॥

६४ इडापात्रतुल्यं भेदार्थं केनचिच्चिन्हेन युक्तं पक्वान् पुरोडाशान् कपालेभ्य उद्वास्य मन्त्रेणाज्योपस्तरणं कृत्वा यस्मिन्पात्रे कृतोपस्तरणस्थाने पुरोडाशान् स्थापयित्वा हविरासादनकाले वेद्यामासाद्य यागकाले तत्पात्रस्थानामेव पुरोडाशानामवदानं प्रधानहोमार्थं ब्रह्मभागार्थं यजमानभागार्थं स्विष्टकृदर्थं प्राशित्रनामकब्रह्मभागार्थं चतुर्धाकरणार्थं इडापात्रे यद्दानार्थं च क्रियते तत्पात्रं दारुपात्रीत्युच्यते ॥

६५ कर्मकाले आग्नीध्रोऽध्वर्युप्रेषितः पत्नीं मन्त्रेण येन गुणेन मुञ्जमयेन वेष्टनेन त्रिगुणितेन कटिदेशे संनह्यति स गुणो योक्त्रमित्युच्यते ॥

६६ वेदस्य यान्यग्राणि पूर्वं छिन्नानि तानि वेदस्य परिवासनानि इति षष्ठीसमासे परिवासनशब्दस्य कर्मल्युडन्ततया वेदपरिवासनानीत्युच्यन्ते ॥

६७ मेक्षणसदृश कपालोपधाने गार्हपत्यादङ्गारोद्धरणादौ उपयोगिनी धृष्टिरित्युच्यते ॥

६८ अध्वर्युर्यजमानो वाऽन्वाधानं करोति तत्र गार्हपत्यस्य पश्चात्पद्मासनेनोपविश्य त्रिभिः स्वाहाकारान्तैर्ऋङ्मन्त्रैः तिस्रः स्थूलाः समिधोऽभ्यादधाति ततो दक्षिणाग्नावूर्ध्वजानुरुपविश्य तथैवाभ्याधाय गार्हपत्यस्य पश्चान्मार्गेणागत्य आहवनीयाद् वायव्यदेशे प्रह्वोऽवस्थाय तथैव तिस्रः समिधोऽभ्यादधाति ततस्तत्रैव तिष्ठन् दशमेन ऋङ्मन्त्रेणोपस्थानं करोति तदेतत्सकलं कर्म अनुकूलं करिष्यमाणस्य कर्मणः समिधामाधानं इति व्युत्पत्त्या अन्वाधानमित्युच्यते ॥

६९ अनुकूलत्वं करिष्यमाणस्य कर्मणः अन्वाधाने कथमिति चेदित्थं यागात्पूर्वं अग्निषु प्रकृतोपयोग्यर्थकैर्मन्त्रैः समित्प्रक्षेपणेनाग्नयः करि

ष्यमाणयागे सावधाना आमन्त्रिता इव भवन्ति श्वः सद्यो वा अयमस्मासु होष्यतीति अत एव प्रक्षिप्तानां समिधां रक्षणमात्रमायतनेषु क्रियते यागकाल एव तु तासां प्रज्वलनम् अन्वाधानानन्तरमग्नीनां त्रिवारं परिसमूहनपर्युक्षणे विधीयेते तत्र जलसहितेन पाणिना अग्न्यायतनोपरिष्टाद्भागे ऐशानदिश आरभ्य पुनस्तद्दिक्पर्यन्तं प्रदक्षिणं संमार्जनं परिसमूहनमित्युच्यते ॥

७० तथैव दूरतो ऽस्पर्शनेन प्रदक्षिणं जलपरिषेकमात्रं पर्युक्षणपदवाच्यम् ॥

७१ पर्युक्षणानन्तरं अग्न्यायतनानां अवतरङ्गवल्यादिभिर्यत्सुशोभितकरणं सकृद्गोमयसंमार्जनपूर्वकं अध्वर्युयजमानपत्नीकर्तृकं तत् अग्न्यलङ्करणमित्युच्यते ॥

७२ अग्न्यलङ्करणानन्तरं यजमानस्तीर्थेन निर्गत्य अग्रेणाहवनीयं परीत्य पूर्वोक्ते स्वायतने उपविश्य पाणौ साग्रं प्रादेशमात्रमुदगग्रं दर्भद्वयं धृत्वा तेनैव दक्षिणेन पाणिना पयस्वतीमन्त्रेण त्रिरप आचामति तत आहवनीयं तूष्णीं पर्युक्षणवत्सकृत्पर्युक्ष्य चतुर्भिर्मन्त्रैश्चतस्रः समिध आहवनीय आधाय पूर्ववत्परिषिञ्चति तदेतद्यजमानकर्म व्रतग्रहणं व्रतोपायनमिति चोच्यते ॥

७३ आहवनीयायतनस्योत्तरतः प्रागग्रेषु दर्भेषु प्रणीताप्रणयने प्रणीता नाम आप आसाद्यन्ते तासां पश्चिमदेशः उत्करस्य तु पूर्वदेशः विहारप्रवेशनिर्गमयोर्मार्गः तीर्थसंज्ञकः ॥

७४ प्रणीताऽभाववति कर्मणि आहवनीयोत्तरदेशे आसादितस्य इध्मस्य पश्चिमभाग उत्करस्य पूर्वदेशस्तीर्थमित्युच्यते ॥

७५ चात्वालवत्सु कर्मसु चात्वालपश्चिमदेश उत्करपूर्वदेश एव तीर्थपदवाच्यः ॥

७६ व्रतोपायनान्ते सत्रयति यजमाने अध्वर्युः प्राचीमुदीचीमैशानीं वा दिशं गत्वा पलाशस्य शम्या वा प्राचीमुदीचीमैशानीं वा शाखां असिदेन छिनत्ति समन्त्रकं ततस्तां शाखां मन्त्रेण विहारदेशं प्रत्याहरति तदेतत्कर्म शाखाहरणमित्युच्यते ॥

७७ यः सोमेनेष्टवान् तस्य यजमानस्य दर्शेष्टौ इन्द्राग्निदेवतास्थाने

इन्द्रो महेन्द्रो वा देवतात्वेन विहितः तत्र सत्यपि पुरोडाशद्वये अधिकं द्रव्यद्वयं विहितं तत्रैकं पयः द्वितीयं दधि तदेतद् द्वयं होमार्थं सम्यग् नयतीति कर्तृव्युत्पत्त्या तादृशो यजमानः सन्नयतीत्यभिधीयते ॥

७८ दधिपयसी च पायसान्नाय्येति सूत्रेण निपातनात् कर्मव्युत्पत्त्या सान्नाय्यपदाभिधेये ॥

७९ सान्नाय्यदधिपयसोः संपादने गवां संख्या अशक्तत्वात् न्यूना क्रियते चेत् षट्त्वसंख्यातो न्यूना न कार्या षड्भ्यो गोभ्यो न्यूनसंख्याका गावो न कर्तव्याः ततो ऽधिकाश्चेदिष्टापत्तिरेव । पूर्वमाहृतया शाखया एतासां गवां वत्सानां दूरीकरणं समन्त्रकं वत्सापाकरणमित्युच्यते ॥

८० ततस्तस्याः शाखायाः पर्णानि छित्त्वा यं मूलभागं प्रादेशमात्रं छित्त्वा धृष्ण्याकारं करोति सान्नाय्यसंस्कारकाले गार्हपत्याङ्गाराणामुद्भिद्य निरूहणादौ उपयोगी स उपवेष इति गीयते ॥

८१ अग्रभागस्तु त्रिभिर्दर्भैर्वेण्याकारेण निबद्धः शाखापवित्रपद-वाच्यस्तस्य सायंदोहादावुपयोगः ॥

८२ असन्नयतस्तु यजमानस्य शाखाहरणाभावात् व्रतोपायनानन्तरं अध्वर्युः गार्हपत्यस्योत्तरतो विद्यमानमसिदं श्वपरशुं वादत्ते मन्त्रेण । लोहमयक्षुरः छेदनोपयोगी असिद इत्युच्यते ॥

८३ एवं बर्हिश्छेदनाद्युपयोगी श्वसदृशः कुठारः श्वपरशुरित्युच्यते ॥

८४ तयोरन्यतरद् गृहीत्वा मन्त्रेणाहवनीयदेशं गत्वा मन्त्रेण वेदि-मवेक्ष्य दर्भदेशं गत्वा प्रस्तरपर्याप्तं दर्भमुष्टिं परिगृह्णाति असिदादिना छेदनीयदर्भमुष्टेः आसमन्तात् भेदाय भ्रामणं परिग्रहणपदवाच्यम् ॥

८५ छिन्ने दर्भमुष्टौ भूमौ यो मूलभागो दृश्यते स छेदनक्रियाया आधारत्वात् अधिकरणे ल्युटा छेदनपदवाच्यः ॥

८६ छेदने भेदने चैव खनने पितृरक्षसोः । रौद्राभिचारणीयेषु उदकस्या-भिमन्त्रणमिति वचनात् छेदनभेदनखननपैतृकराक्षसरौद्राभिचारणकर्मसु कृतेषु शुद्ध्यर्थं विहितं दक्षिणकरस्य जलेन प्रक्षालनं उदकोपस्पर्शनमुच्यते ॥

८७ तत्र प्रकृतीष्टौ चतस्रो दर्भमुष्टयश्छिद्यन्ते प्रथमा दर्भमुष्टिर्मन्त्रैः संस्कृता वेद्यां जुहूर्यस्यामिधीयते विधृतिसंज्ञकयोः उदगग्रयोर्दर्भयोरु-परि या च प्रागग्रा स्थापिता भवति सा प्रस्तर इत्युच्यते ॥

८८ अन्यास्मिन्न अमन्त्रकसकलक्रियामात्रसाध्याः वेद्यास्तरणार्था: हविषां पात्राणां स्थापनयोग्या बर्हिःपदवाच्याः ॥

८९ दर्भत्रयं गृहीत्वा प्रदक्षिणमावेष्ट्य अग्रभागे अन्यद्दर्भत्रयं मूलेन संयोज्य वेष्टनेन ग्रथितमिव कृत्वा तदपि तथैवावेष्ट्य तदग्रभागे अन्य-द्दर्भत्रयं तथैव कृत्वा पुनस्तदग्रभागे तथा करोति एवं कृते ग्रन्थित्रयं मध्ये संपद्यते तद्दर्भसूत्रं द्विगुणं कृत्वा अन्ते ग्रन्थिः कार्यः अनेन बर्हि-र्बध्यते अत एतद् बर्हिःसंनहनं नाम शुल्वनामकम् ॥

९० एवमिध्मबन्धनार्थं इध्मसंनहनं नाम शुल्वनामकम् ॥

९१ बर्हिः संभरणानन्तरं अध्वर्युरिध्मदेशं गत्वा असिदेन स्वपरशुना वा इध्मं छिनत्ति तूष्णीं तस्मिन्नेकविंशतिसंख्याकानि काष्ठानि भवन्ति तत्र त्रितयं काष्ठानामाहवनीयस्य पश्चाद् दक्षिणत उत्तरतश्च प्रथम-मेखलाया उपरि स्थापनार्थं मेखलापरिमितायामं परित आहवनीयस्य निधानात् पुरस्तात्सूर्यस्य मनसा परिधित्वकल्पनात्परिधिसंज्ञकं भवति ॥

९२ अन्यानि काष्ठानि प्रादेशमात्राणि तत्र पञ्चदशसामिधेन्यर्थानि एक मनुयाजार्थं द्वे आहवनीयायतनस्यान्तरूर्ध्वाग्रे दक्षिणोत्तरयोर्भागयो रोपणार्थे एतान्यष्टादश काष्ठानि समित्पदवाच्यानि ॥

९३ क्वचिद्विकृतीष्ट्यादिषु अधिका अपि समिधः सामिधेनीवृद्धौ गृह्यन्ते एवमेकविंशतिदारुकः संघ इध्मपदवाच्यः ॥

९४ इध्मस्य छेदनकाले यानि काष्ठशकलानि इतस्ततः पतन्ति तानि करणव्युत्पत्त्या इध्मप्रव्रश्चनपदेनाभिधीयन्ते ॥

९५ चतुर्णामप्यृत्विजां भोजने पर्याप्तः दक्षिणाग्नौ सुपक्व ओदनः अनु पश्चात् यागानन्तरमृत्विग्भोजनार्थमाह्रियते इति कर्मव्युत्पत्त्या अन्वाहार्यपदवाच्यः ॥

९६ अन्वाहार्य ओदनो यस्यां स्थाल्यां श्रप्यते सा अन्वाहार्यस्था-लीत्युच्यते ॥

९७ मदन्तीनामिका आपो यस्मिन्पात्रे संताप्यन्ते तत्पात्रमपि मद-न्तीपदेन व्यवह्रियते ॥

९८ पुरोडाशचरुसंबन्धिव्रीह्यादीन् उलूखले मुसलेनावहत्य प्र

शूर्पेण निस्तुषकरणरूपं फलीकरणं करोति तत्र ये तुषादयः पतन्तिते करणव्युत्पत्त्या फलीकरणपदवाच्याः ॥

९९ तेषां यागानन्तरं दक्षिणाग्नौ जुह्वा चतुर्गृहीतेनाज्येन सह होमो विहितः अतः यागसमाप्तिपर्यन्तं तेषां स्थापनाय निर्मितं अश्वत्थमयं पात्रं फलीकरणपात्रमित्युच्यते ॥

१०० यदा गार्हपत्ये अध्वर्युः पत्नीसंयाजैः प्रचरति तदा देवानां पत्नीयागकाले स्वीयहविर्भागग्रहणार्थमागतानां देवानां पत्नीनां स्त्रीत्वात् लज्जया तिरोधानाय अश्वत्थकाष्ठनिर्मितं तिरोधानकरणयोग्यं कटाकारत्वात् अन्तर्धानकटमित्युच्यते ॥

१०१ अध्वर्युस्तीर्थप्रवेशानन्तरं गार्हपत्यस्योत्तरत उपविश्य इडाजपं कृत्वा देवा गातुविद इत्यृचं जपति तस्यामृचि यतो वातशब्दो वर्तते श्रुतौ वातशब्देन यागारम्भसमाप्त्योर्वर्णनात् इडा देवहूरिति यजुर्मन्त्रजप इडाजपपदेनोच्यते ॥

१०२ तत आहवनीयस्योत्तरतस्तिष्ठन् हस्तौ मन्त्रेण संमृशते एतत्कर्म पाण्योः सावधानत्वाय करिष्यमाणकर्मसुप्रेरणारूपं पाणिसंमर्शनमित्युच्यते ॥

१०३ * तत आहवनीयदक्षिणाग्निगार्हपत्यान् क्रमेण दर्भैः परिस्तृणाति अग्नेः षोडशभिर्दर्भैः प्राच्यादिषु परिस्तृतिरिति वचनात् प्राच्यां प्रथममेखलोपरि चतुर्भिर्दर्भैस्तथैव दक्षिणस्यां प्रतीच्यामुदीच्यां च क्रमेण स्तरणं परिस्तरणपदार्थः ॥

१०४ ततो गार्हपत्यस्य पुरस्तात् वेद्यां परिभोजनीयदर्भानास्तीर्य तेषु द्वन्द्वं न्यञ्चि प्रक्षालितानि यज्ञपात्राणि प्राक्संस्थान्युदगपवर्गाणि स्थापयति तदेतत्कर्म पात्रासादनपदार्थः ॥

१०५ ततो ब्रह्मणि स्वायतने उपविष्टे यजमानेन च समन्त्रकवृतीयवरणेन वृते परिभोजनीयदर्भैः संततां पृष्ठ्यां गार्हपमध्यादारभ्याहवनीयमध्यपर्यन्तं स्तृणाति मन्त्रेण एतत् कर्म पृष्ठ्यास्तरणमित्युच्यते ॥

---

* कर्कदेवयाज्ञिकादयस्तु कार्यक्रमेणाग्नीनां परिस्तरणमाहुः । तेना दावाहवनीयस्य परिस्तरणं ततो गार्हपत्यदक्षिणाग्न्योरिति क्रमः कर्काद्यनुयायिनाम् ।

१०६ ततो मन्त्रेण पूर्वं निहतं पवित्रमादाय समन्त्रकं सव्यहस्ते पवित्रं धृत्वा दक्षिणहस्तेन जलेनानुमार्ष्टि एतत्कर्म पवित्रकरणं नाम ॥

१०७ अभिमर्शनं नाम यदभिमृशेदिति विधीयते मन्त्रजपसमकालं तत्पदार्थस्पर्शनम् ॥

१०८ चित्तिरित्यादीनि दश वाक्यानि दशहोतृपदवाच्यानि ॥

१०९ अध्वर्युः पवित्रवत्यामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय तया शूर्पे तन्मुष्टिमात्रं व्रीह्यादिकं प्रक्षिपति एतत्कर्म निर्वापपदवाच्यम् ॥

११० ततः सशूकायामेवाग्निहोत्रहवण्यां तिरःपवित्रमप आनीय त्रिरुत्पूय उत्त*दयन्नुपस्थायतेन जलेन सपवित्रेणोत्तानेन दक्षिणपाणिना सेचनं पुरोडाशी†यादीनां यत् तत् प्रोक्षणमित्युच्यते ॥

१११ स्फ्यः कपालानि अग्निहोत्रहवणी शूर्पं कृष्णाजिनं शम्या उलूखलं मुसलं दृषत् उपला जुहूः उपभृत् स्रुवः ध्रुवा प्राशित्रहरणं इडापात्रं मेक्षणं पिष्टोद्वपनी प्रणीताप्रणयनं आज्यस्थाली वेदः दारुपात्री योक्त्रं वेदपरिवासनानि धृष्टिः इध्मप्रव्रश्चनानि अन्वाहार्यस्थाली मदन्ती फलीकरणपात्रं अन्तर्धानकटं च एते पदार्था अन्ये च ये विकृतिषु उपयुक्तास्ते सर्वे यज्ञायुधपदेन यज्ञपात्रपदेन च श्रुतौ गीयन्ते ॥

११२ उत्पवनं नाम द्रवद्रव्यस्याज्यादेः कस्मिंश्चित्पात्रे स्थितस्य दक्षिणोत्तराभ्यां हस्ताभ्यां परस्परं असंसृष्टे पवित्रे धृत्वा ताभ्यां तस्य द्रव्यस्य ऊर्ध्वभागे प्लवनं उत्पवनमित्युच्यते ॥

११३ उन्मर्दनं नाम स्तुतियुक्तमन्त्रोच्चारणेन पूजनरूपम् ॥

११४ समाहननं नाम आग्नीध्रकर्तृकं शम्याकरणकं यज्ञपात्राणां वादनम् ॥

११५ परापवनं नाम अध्वर्युकर्तृकं व्रीह्यादीनामुलूखले अवहतानां शूर्पेण फलानामन्तर्व्यवस्थितिर्यथा स्यात्तथा तुषादेर्निरसनम् ॥

११६ व्रीह्यादेरवघातानन्तरं यजमानो यं मन्त्रं किंयव्द्वन्तं जपति स मन्त्रो यज्ञयोगमन्त्र इत्युच्यते ॥

११७ पुरोडाशीयानां पेषणार्थं दृषदि स्थापनमधिवपनमित्युच्यते ॥

११८ दृषदि अध्युप्तानां पुरोडाशीयतण्डुलादीनामुपर्युभाभ्यां हस्ता-

* उन्मर्दनं चापे वदते । † हविषा मित्यर्थः ।

म्यामुपलायाः तिर्यक्स्थापितायाः पूर्वस्यां दिशि कर्षणं ततः प्रतीच्यां कर्षणं च प्रोहणमित्युच्यते ॥

११९ दृषदः सकाशात् उपलया पिष्टानां दृषदधःस्थापितकृष्णाजिने पातनं यस्य कस्यापि द्रव्यस्य पात्रात् हस्ताद्वाऽधः पतनं च प्रस्कन्दनमित्युच्यते ॥

१२० अध्वर्युः पेषणानन्तरं गार्हपत्यस्य पश्चात् धृष्ट्या पुरोडाशभर्जनार्थं गार्हपत्याङ्गारैः संतापयितुं यथाविहितानि प्रतिपुरोडाशं समुदितानि अश्वशफमात्राण्यश्वशफाकारतामापन्नानि कपालानि मन्त्रैर्विहितक्रमेण स्थापयति तदेतत्कपालोपधानमित्युच्यते ॥

१२१ उपधानं नाम उपधानं तूपबर्हः शय्यायां शयनीयवदिति कोशात्कस्यचित्पूजनीयस्य पदार्थस्य स्थापनार्थं उपबर्हस्थानीयाधाररचनम् ॥

१२२ एवमासादनं नाम यज्ञपात्रादीनां सुशोभिततया रचनम् ॥

१२३ निधानं यथाकथंचित्स्थापनमात्रम् ॥

१२४ उपहितानि कपालानि येन मन्त्रेण परस्परसंयुक्तानि क्रियन्ते स मन्त्रो योग इत्युच्यते ॥

१२५ अधिश्रयणं नाम वह्नौ स्थापयित्वा संतापनम् ॥

१२६ परिकर्माङ्गसंस्कार इति कोशात्परिकर्मशब्द ऋत्विग्यजमानभिन्नस्य कर्तव्यत्वेन विहितस्य कर्मणो वाचकः ॥

१२७ तत्कर्मकर्ता परिकर्मी भवति ॥

१२८ अनुमन्त्रणं नाम स्वयमन्येन वा कर्मणि कृते पश्चात्तत्कर्मकरणमन्त्रोच्चारणम् ॥

१२९ मन्त्राश्च कर्मकरणा इति सूत्रात् यैः कर्म क्रियते ते मन्त्रपदवाच्याः ॥

१३० गार्हपत्यस्य पश्चात् शकटं स्थापितं भवति तत्र विद्यमानस्य व्रीह्यादिद्रव्यस्य सर्पविशायामग्निहोत्रहवण्यां मुष्टिमात्रं निधाय तया मन्त्रेण कांचिद्देवतामुद्दिश्य शूर्पे प्रक्षेपो ऽथवा शकटाभावपक्षे गार्हपत्यस्य पश्चादुदगग्रं स्फ्यं निधाय तदुपरि दारुपात्रीं प्रागग्रां निधाय तस्यां पुरोडाशीयानोप्य तस्याः सकाशात् गृहीत्वा अग्निहोत्रहवण्यां निधाय पूर्ववत् शूर्पे प्रक्षेपणं निर्वाप इत्युच्यते ॥

१३१ यत्र अनधः सादयतीति विधीयते तत्र दर्भतृणादिकं किंचित् निधाय तदुपरि स्थापनमनधः सादनमुच्यते ॥

१३२ गार्हपत्यमभिमन्त्रयत इत्यादौ अभिमन्त्रणं नाम गार्हपत्यादेरवेक्षणसमकाले मन्त्रजपः ॥

१३३ यस्मिन्यागे व्रीह्यादेर्द्रव्यस्य निर्वापानन्तरमन्यद्रव्यनिर्वापः कर्तव्यो भवति तत्र एकस्य निर्वापानन्तरं निर्वापे करणभूताया अग्निहोत्रहवण्या वस्त्रादिना संमार्जनं पश्चान्निरुप्यमाणद्रव्ये पूर्वनिरुप्तद्रव्यसंबन्धितुषादिसंसर्गाभावार्थं क्रियते तत् यच्च तादृशयागे निरुप्तद्रव्यप्रोक्षणात्प्राग्वस्त्रसंमार्जनं तदपि प्रोञ्छनमित्युच्यते ॥

१३४ व्रीह्यादिप्रोक्षणार्थं अग्निहोत्रहवण्यां गृहीताः संस्कृता आपः प्रोक्षणीपदवाच्याः ॥

१३५ मन्त्रं विना क्रियमाणं कर्म तूष्णीमित्युच्यते ॥

१३६ हविः करोतीति हविष्कृदितिव्युत्पत्त्या ऐष्टिकादिकर्मणि अध्वर्योः कार्ये हविःसंपादने सहायत्वमात्रेण सोमे तु सवनीयनिर्वापप्रभृतिपुरोडाशासादनान्तस्य हविःसंपादनस्य स्वकर्तृकत्वेन सोमाङ्गभूते प्रवर्ग्याख्ये कर्मणि रौहिणसंज्ञकपुरोडाशाधिश्रयणादिकर्मकर्तृत्वेन च आग्नीध्र एव हविष्कृत्पदवाच्यः ॥

१३७ समाहननं नाम यज्ञपात्राणां तूष्णीं शम्यया ताडनं तत्र दृषदुपलयोः तु त्रिः समन्त्रकम् ॥

१३८ अवहननं नाम उलूखले उप्तानां व्रीह्यादीनां नैस्तुष्यसिद्ध्यर्थं मुसलेन कण्डनम् ॥

१३९ परापवनं नाम कण्डनेन पृथग्भूतानां तण्डुलादीनामेव शूर्पे स्थितिर्यथा स्यात्तुषादीनां तु अधःपतनं तथा कौशलेन शूर्पचालनम् ॥

१४० पात्रीस्थानां पिष्टानामुपरि संतप्तमदन्तीजलप्रक्षेपः आप्लावनमित्युच्यते ॥

१४१ मेक्षणेन जलपिष्टयोर्मिश्रणं संयवनमुच्यते ॥

१४२ मदन्तीजलेन सिद्धस्य पिष्टपिण्डस्य चतुर्थ्यन्तदेवतानामपूर्वं कल्पयेतिपदान्तेन मन्त्रेण अभिमर्शनानन्तरं कूर्मवदाकारे कृते पुरोडाशपदवाच्यता ॥

१४३ गार्हपत्यादेः सकाशाद् बहिष्कृतानामङ्गाराणां पुनर्गार्हपत्यादौ प्रक्षेपः प्रत्यूहनम् ॥

१४४ पुरोडाशस्य सर्वकपालस्पर्शनं प्रथनमित्युच्यते पुरोडाशस्य स्वक्ष्णसिद्धयर्थं पिष्टाद्युपवपनीस्थजलेन सर्वतः संमर्शनं त्वग्ग्रहणमित्युच्यते ॥

१४५ हविषामासमन्तात्प्रादक्षिण्येन उल्मुकस्य परिभ्रमणं पर्यग्निकरणमित्युच्यते ॥

१४६ संतप्तेषु कपालेषु निहितस्य पुरोडाशस्य गार्हपत्यस्य भस्मना तूष्णीं प्रच्छादनं अभिवासनमित्युच्यते ॥

१४७ ततोऽध्वर्युर्मन्त्रेण साङ्गारं भस्म वेदेन पुरोडाशस्योपरि प्रक्षिप्य परिकर्मिणः संप्रेष्यति ते च यथा सुशृतः स्यात्तथा श्रपयन्ति तदेतत्पुरोडाशश्रपणमित्युच्यते ॥

१४८ गार्हपत्याङ्गारान् मन्त्रेण गार्हपत्यायतनाद्बहिःपश्चाच्चिच्छते चाङ्गारा यथा मध्ये स्युस्तथा चुल्लीं स्थापयित्वा तस्यां नपुंसकलिङ्गस्थाने स्त्रीलिङ्गवत्पदघटितप्रथमकपालोपधानमन्त्रेण सजलां स्थालीमधिश्रित्य तस्यां मन्त्रेण पूर्वसंस्कृतानां तण्डुलानां प्रक्षेपणं क्रियते ते च परिपक्वास्तण्डुलाः चरुपदवाच्याः ॥

१४९ यदि पयःसहितां स्थालीमधिश्रित्य चरुः साध्यते तदा स पयसिचरुरित्युच्यते ॥

१५० हविःश्रपणानन्तरं प्राचीसंचालनोदकं गार्हपत्योल्मुकेनाभितप्यान्तर्वेदि स्फ्येन प्राचीस्तिस्रो लेखाः कृत्वा प्रत्यक् निर्निनयति त्रिभिः स्वाहान्तैर्मन्त्रैः एतादृशं कर्म अन्यत्रापि क्रियमाणं यथा उल्मुकं प्राच्यां निरस्येदित्यादौ कस्यचिद्वस्तुनो जाते कार्ये विधिप्राप्तविनियोगकरणं प्रतिपत्तिकर्मेत्युच्यते ॥

१५१ अध्वर्युर्मन्त्रेण वेदमादाय मन्त्रेण सकृत् द्विस्तूष्णीं वेदेन उदगपवर्गं प्रागवपन्तं वेदिं संमृज्य वेद्याःपश्चादुपविश्य मन्त्रेण दर्भाभ्यां सह स्फ्यमादाय अन्यतरेण दर्भेण स्फ्यं निमृज्य अवशिष्टं दर्भं वेदिपूर्वतृतीयभागे मन्त्रेण उदगग्रं निधाय मन्त्रेण तस्मिन् स्फ्येन प्रहृत्य मन्त्रेण मृदासहितं स्फ्यमादाय मन्त्रेण मृदं हृत्वा मन्त्रेण वेदिमवेत्य मन्त्रेण मृदमुत्करे निवपति आग्नीध्रस्तां मृदं तत्रैवोत्तानाभ्यां पाणिभ्यां

गृह्णाति एवं प्रहरणादि मूलविवपनान्तं समन्त्रकं त्रिवारं कृत्वा तूष्णीं चतुर्थं करोति तत्र चतुर्थे मृदो हरणे प्रहृतस्य दर्भस्थापितया सह हरणं क्रियते तदनन्तरं मन्त्रेण स्फ्येन वेदिदक्षिणांसमारभ्य दक्षिणश्रोणिपर्यन्तं वेदिदक्षिणप्रान्तं स्पृशति तथैव दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं वेदिपश्चिमप्रान्तं स्पृशति तथैव उत्तरश्रोणिमारभ्य उत्तरांसपर्यन्तं वेद्युत्तरप्रान्तं स्पृशति इदं स्फ्येन वेदिप्रान्तभागस्पर्शनं वेद्याः परितो यागार्थं करणरूपत्वात् उत्तरपरिग्राहापेक्षया पूर्वत्वाच्च पूर्वपरिग्राह इत्युच्यते ॥

१५२ पूर्वपरिग्राहानन्तरं यं मन्त्रं जपति स मन्त्रो वेदिः क्रियते अनेनेति करणव्युत्पत्त्या वेदिकरण इत्युच्यते ॥

१५३ वेदिकरणजपानन्तरं स्फ्येन मन्त्रेण प्राक्संस्थं वेदिं त्रिः खनति एतादृशं खननं उद्धननमित्युच्यते ॥

१५४ अध्वर्युप्रेषित आग्नीध्रः उद्धतदेशात् त्रिर्मृदमुद्धृत्य उत्करे निवपति ततोऽध्वर्युरुत्तरपरिग्राहग्रहणार्थं ब्रह्माणमनुज्ञापयति तेनानुज्ञातः पूर्ववत् स्फ्येन अन्यैस्त्रिभिर्मन्त्रैर्दक्षिणपश्चिमोत्तरप्रान्तभागान् स्पृशति एतत्स्पर्शनं पूर्वपरिग्राहापेक्षया उत्तरत्वादुत्तरपरिग्राह इत्युच्यते ॥

१५५ उत्तरपरिग्राहानन्तरं उत्करे न्युप्तां मृदं वेद्यामानीय स्फ्येन मन्त्रेण समीकरोति वेदिसंमार्जनप्रभृति समीकरणपर्यन्तं वेदेः करणमिति व्युत्पत्त्या वेदिकरणमित्युच्यते ॥

१५६ पलाशस्य अन्यस्य वा यज्ञियवृक्षस्य प्रादेशपरिमाणं काष्ठं समित्पदवाच्यम् ॥

१५७ अध्वर्युप्रेरणया वेद्यां विद्यमानस्य आज्यस्य समन्त्रकं अधोमुखतया यजमानकर्तृकमीक्षणं आज्यावेक्षणमित्युच्यते ॥

१५८ आज्यं पुनराहारमुत्पुनातीत्यत्र पवित्राभ्यामाज्यं प्राङ् नीत्वा पुनः पश्चादानयनं पुनराहारपदवाच्यम् ॥

१५९ आज्यस्थाल्या उत्तरतो वेद्यां प्रागग्रमुदगग्रं वा वेदं निधाय तस्मिन् प्रागग्रां जुहूं स्थापयित्वा तस्यां मन्त्रावृत्त्या आज्यस्थाल्याः सकाशात् स्रुवेणाज्यं गृह्णाति यजमानः प्रतिग्रहणमनुमन्त्रयते अध्वर्यु-

दक्षिणहस्तेन जुहूं संमृज्य परिकर्मिणे प्रयच्छति स च प्रणीतोत्तरतः स्थापितयोरिध्मबर्हिषोः पश्चिमदेशे जुहूप्रभृतीः स्रुव उदक्संस्थाः स्थापयति अध्वर्युः पूर्ववत् उपभृति आज्यं अष्टकृत्वो गृह्णाति ततस्तथैव संमृज्य पूर्ववत् प्रयच्छति स च परिकर्मी तथैव सादयति अध्वर्युः पूर्ववत् चतुष्कृत्वो ध्रुवायामाज्यं गृह्णाति तूष्णीं पूरयति तथैव प्रयच्छति अन्यश्च तथैव सादयति तदेतत्कर्म आज्यग्रहणमित्युच्यते ॥

१६० प्रोक्षणीनामुत्पवनादि कृत्वा समन्त्रकं इध्मवेदिबर्हींषि क्रमेण प्रोक्ष्य बर्हिरिध्मप्रणीतयोर्मध्येन प्राङ् नीत्वा प्रणीताहवनीययोर्मध्येन पुनराहृत्य वेद्यां पुरोग्रन्थ्यूर्ध्वाग्रं निधाय तिष्ठन्नग्राणि मन्त्रेण प्रोक्ष्य प्रह्वो मन्त्रेण मध्यानि प्रोक्ष्य आसीनो मन्त्रेण मूलानि प्रोक्ष्य प्रत्यङ्मुखाभ्यां स्रुक्पाणिभ्यां ग्रन्थिमासिच्य शिष्टं दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं प्रथमं प्रस्तरं गृहीत्वा मन्त्रेण मन्त्रेण निनयति ततः प्रोक्षणीधानं निरस्य बर्हिर्विस्रस्य मन्त्रेण तस्मिन् पवित्रे संयोज्य प्रस्तरं यजमानाय ब्रह्मणे वा दत्त्वा बर्हिःसन्नहनं विस्रस्य दक्षिणश्रोणिमारभ्य उत्तरांसपर्यन्तं निधाय तदुपरि प्रथमं दर्भमुष्टिं मन्त्रेण स्तृणाति तस्य पश्चात् द्वितीयं प्रागास्तृतदर्भमूलानि आच्छादितानि यथा स्युः ततस्तृतीयं तथैव स्तृणाति तदेतत्कर्म बर्हिरास्तरणं नाम ॥

१६१ ततः प्रस्तरं गृहीत्वा प्राङभिसृप्य मन्त्रेण आहवनीयस्य पश्चात् प्रथममेखलोपरि उदगग्रं मध्यमं परिधिं परिदधाति यजमानोऽनुमन्त्रयते एवं दक्षिणोत्तरौ परिधी दक्षिणोत्तरयोः क्रमेण प्रागग्रौ स्थापयति अग्रे सूर्ये मन्त्रेण परिधिं कल्पयति एतत्कर्म अग्निपरिधानमित्युच्यते ॥

१६२ परिभोजनीयेभ्यो मध्यमबर्हिर्मुष्टेर्वा अन्यतो वा आहृतं सारं दर्भद्वयं विशेषेण धृतिः धारणं प्रस्तरादीनां धारणं यस्मिन् इति व्युत्पत्त्या विधृतिपदवाच्यम् ॥

१६३ ते च विधृती वेद्यां मन्त्रेण उदगग्रे निधाय तयोरुपरि मन्त्रेण प्रागग्रं प्रस्तरं तदुपरि मन्त्रेण जुहूं प्रागग्रां तस्या उत्तरतो विधृत्योरधस्तात् मन्त्रेणोपभृतं तदुत्तरतस्तथैव ध्रुवां निधाय मन्त्रेणाभिमृशति तदेतत् स्रुगासादनमुच्यते ॥

१६४ स्रुगासादनानन्तरं स्रुचामुत्तरतः सस्रुवामाज्यस्थालीं निधाय सर्वाण्याज्यान्यभिमन्त्र्य दक्षिणेन सस्रुवामाज्यस्थालीं सव्येन दारुपात्रीं वेदं चादाय प्रदक्षिणमावृत्य प्रत्यङ् आहृत्य गार्हपत्यस्य पश्चादुपविश्य दारुपात्र्यां पुरोडाशसंख्यया मन्त्रावृत्योपस्तृणाति ततः प्रथमं दक्षिणपुरोडाशस्याङ्गारानपोहति तत्र अपोहनं नाम पूर्वं प्रक्षिप्तानां भस्ममिश्राङ्गाराणां धृष्ट्या दूरीकरणम् ॥

१६५ मन्त्रेण पुरोडाशस्य प्रकटीकरणं पुरोडाशप्रकाशनमुच्यते ॥

१६६ ततो वेदेन विरजसं कृत्वा ऽभिघार्य मन्त्रेण पात्र्याः सकाशात्पुरोडाशमुद्गृह्णाति इदं पुरोडाशोद्वासनमुच्यते ॥

१६७ ततो मन्त्रेण पुरोडाशस्योपरि सर्वत आज्यप्रक्षेप आर्द्रीकरणमित्युच्यते ॥

१६८ तथैव ततः अधोभागे आज्यलेपनं अधस्तादभ्यञ्जनमित्युच्यते ॥

१६९ ततः पुरोडाशं पात्र्यां तूष्णीं निधाय अन्यानपि पुरोडाशादीन् एवमेव उद्वास्य पात्र्यां निधाय स्रुवमभिपूर्य पुरोडाशयोर्मध्ये स्थापयित्वा सर्वाणि हवींष्यादाय वेदिमध्ये स्रुचां पश्चात्तूष्णीं सादयति यजमानस्तु व्याहृतिमन्त्रेण एतद् हविरासादनमित्युच्यते ॥

१७० आमन्त्रणं नाम संबोधनप्रथमान्तपदोच्चारणानन्तरं एहीत्यस्यानुषङ्गेणाकारणम् ॥

१७१ प्रादुर्गा आहवनीयादवस्यायेत्यादौ अधोमुखतया स्थानं अवस्थानमित्युच्यते ॥

१७२ उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे इति कोशात् दक्षिणबाहुना उद्धृतं सव्यांसस्थितं स्मृत्युक्तरीत्या निर्मितं यज्ञोपवीतमित्युच्यते॥

१७३ एतद्विपरीतं सव्योद्धृतं दक्षिणांसस्थितं प्राचीनावीतमित्युच्यते॥

१७४ मालावत्कण्ठलम्बितं निवीतमित्युच्यते ॥

१७५ केशवादिभिस्त्रिभिर्नामभिश्चतुर्थ्यन्तैरुदकं ब्राह्मेण तीर्थेन पीत्वाद्वाभ्यां करौ प्रक्षाल्य द्वाभ्यामोष्ठौ संमृज्य द्वाभ्यां मुखमवाङ्निमृज्य एकेन वामकरं प्रक्षाल्य एकेन पादौ संप्रोक्ष्य एकेन मूर्धानं संस्पृश्य एकेन ऊर्ध्वोष्ठमङ्गुल्यग्रैः संमृज्य द्वाभ्यां क्रमेण अङ्गुष्ठतर्जनीभ्यां दक्षि-

णवामनासारन्ध्रे संमृज्य द्वाभ्यां क्रमेण दक्षिणवामाक्षिणी अङ्गुष्ठानामिकाभ्यां निमृज्य द्वाभ्यां क्रमेण दक्षिणवामश्रोत्रे अङ्गुष्ठकनिष्ठिकाभ्यां संमृज्य एकेन अङ्गुल्यग्रैर्नाभिं संमृज्य एकेन पाणितलेन हृदयं एकेन अङ्गुल्यग्रैः शिरः संमृज्यद्वाभ्यां क्रमेण तैरेव दक्षिणवामभुजौ संमार्ष्टि तदेतत्स्मृत्युक्तं आचमनमित्युच्यते ॥

१७६ दक्षिणेनाङ्गेन य आवर्तते पर्यावृत्तो भवति स दक्षिणावृदित्युच्यते ॥

१७७ एवं सव्येनावर्तमानः सव्यावृत्पदवाच्यः ॥

१७८ सव्योत्तरेणोपस्थेन दक्षिणोत्तरेणोपस्थेन वा आसनं अङ्कधारणपदवाच्यम् ॥

१७९ विहारसंमुखस्वपृष्ठभागो यथा न भवेत् तथा कर्मकाले इतस्ततो गमनं विहाराव्यावृत्तिरित्युच्यते ॥

१८० वेदिश्रोण्योत्तरया पार्ष्णी समां निधायेत्यादौ तद्वयन्यो घुटिके गुल्फौ पुमान् पार्ष्णीरधस्तयोरित्यमरकोशात्पुल्लिङ्गोऽपि अत्र स्त्रीलिङ्गः पार्ष्णीशब्दो घुटिकाधोभागवाचकः ॥

१८१ प्रपदेन बर्हिराक्रम्येत्यादौ प्रपदशब्दः पादाग्रं प्रपदं पाद इति कोशात् अङ्गुलिपश्चाद्भागस्य पादाग्रस्य वाचकः ॥

१८२ तत्रैव आक्रमणं नाम बर्हिष उपरि प्रपदस्थापनम् ॥

१८३ अङ्गुल्यग्राण्यवकृष्येत्यत्र अवकर्षणं नाम आकुञ्चनम् ॥

१८४ एवं प्रति संदध्यादित्यत्र प्रसारणं प्रतिसंधानमित्युच्यते ॥

१८५ सामिधेनीरन्वाहेत्यादौ अध्वर्युप्रेषितो होता उत्तरया वेदिश्रोण्या समां पार्ष्णीं निधाय प्रपदेन बर्हिराक्रम्य संहितौ करौ हृदयदेशे अङ्कदेशे वा प्राञ्चौ धारयन् प्राङ्मुखस्तिष्ठन् प्रकृतीष्टौ पञ्चदश विकृतौ पाशुकादौ च ताभ्यो न्यूना अधिका वा या ऋचो मन्त्रस्वरेण पठति ता ऋचः समिधः आधीयन्ते याभिरिति करणव्युत्पत्त्या सामिधेनीपदेनोच्यन्ते ॥

१८६ अन्वाहेत्यनुवचनं विधीयते तत्र सामिधेनीनामनुवचने ऋक्पाठात्पूर्वं त्रिमात्रं हिं इत्युच्चार्य उपांशुसंहितया प्रणवान्ता व्याहृतीः

पठति तस्य उच्चैरुपांशु पठ्यमानस्य समुदितस्य आश्वलायनसूत्रे व्यवहारार्थं अभिहिंकार इति संज्ञा कृता ॥

१८७ तदनन्तरं पठ्यमानायाः प्रथमाया ऋचः त्रिवारं पाठो विहितः एवमन्तिमाया अपि अस्य त्रिःपाठस्य तत्रैव सूत्रे अभ्यास इति संज्ञा कृता ॥

१८८ सामिधेनीनां प्रथमाया ऋचः तुर्योरर्धर्चयोः संहितया पाठः ऋगन्ते टेः स्थाने त्रिमात्रः प्रणवः तदन्ते मकारः तेन च मकारेण सह उत्तरस्या ऋचः प्रथमार्द्धर्चेन संधानं कार्यं समाप्ते द्वितीयसामिधेन्यर्द्धर्चे उच्छ्वासः कार्यः एतदेकमवमानं ततः द्वितीयार्द्धर्चेन तृतीयसामिधेन्यर्द्धर्चे संधाय तेन च द्वितीयार्द्धर्चे प्रणवान्तं संधाय प्रणवान्तिममकारेण चतुर्थसामिधेन्यर्द्धर्चे तस्मिन्नेवार्धर्चे उच्छ्वसेत् एतद् द्वितीयमवसानम् । एवं च प्रथमोच्छ्वासे त्रयोऽर्धर्चाः द्वितीये तु चत्वारः संपद्यन्ते संकलनेन सप्त संपद्यः तत्र त्रिः पठ्यमानायाः प्रथमाया ऋचः षड् अर्धर्चाः द्वितीयस्या ऋच एकोऽर्धर्चः एतदनन्तरं प्रत्युच्छ्वासं द्वावर्धर्चौ भवतः । एवं प्रथमावत् उपान्त्याया द्वितीयार्धर्चमारभ्य तदीयप्रणवमकारेण अन्तिमाया अर्धर्चे संधाय तेन च द्वितीयार्धर्चे संधाय तदन्तिमप्रणवेन उत्तरस्या अर्धर्चे संधाय तदन्ते विरमेत् अन्तिमायां त्रिः पठ्यमानायां एतदेकमवसानं ततो द्वितीयार्धर्चमारभ्य तदन्तिमप्रणवमकारेण उत्तरस्या अर्धर्चे संधाय तेन च द्वितीयार्धर्चे संधाय तदन्तिमप्रणवमकारेण द्वादशाक्षरं निगदभागं संधाय तदन्ते विरमेत् एतत् अन्तिमायां द्वितीयमवसानं अनया रीत्या सामिधेनीनामाद्यन्त्ययोर्ऋचोः पठनं अन्यासामृचामपेक्षया अधिकस्य अर्धर्चस्य एकैकस्मिन् उच्छ्वासे उच्चारणात् अध्यर्धकारमन्वाहेति गामुलन्तेन अध्यर्धकारमित्यनेन पदेन आश्वलायनसूत्रे व्यवहृतम् ॥

१८९ ऋगारम्भे प्रथमार्धर्चे ऽवसाय ततो द्वितीयार्धर्चप्रणवमकारेण उत्तरस्या ऋचः प्रथमार्धर्चे संधाय तदन्ते विरमेत् एवं सर्वा ऋचः पठित्वा अवशिष्टं अन्तिमाया ऋचः द्वितीयार्धर्चे केवलं चतुर्मात्रप्रणवान्तं उक्त्वा विरमेत् एतादृशं पठनं तत्रैव सूत्रे संततमित्युच्यते ॥

१९० एतस्य सामिधेन्यनुवचनस्य अध्यर्धकारं पठनरहितस्य अभिहिंकारपूर्वकस्य चतुर्मात्रप्रणवान्तस्य शस्त्रे याज्यायां निगदे अनुवचने अभिष्टवने संस्तवने च अतिदेशः आश्वलायनसूत्रे कृतः अन्वाह अनुब्रूयात् इत्यादिशब्दैर्विहितं अभिहिंकारपूर्वकं अभ्यासविशिष्टं प्रथमाया ऋचः प्रथमार्धर्चं अवसाय द्वितीयार्धर्चान्त्यप्रणवेन प्रथमाया एव ऋचः द्वितीयपाठगतप्रथमार्धर्चं संधाय तदन्ते ऽवस्येत् अनया रीत्या सर्वा ऋचः पठित्वा अन्तिमाया ऋचः तृतीयपाठगतद्वितीयार्धर्चस्य अन्ते चतुर्मात्रप्रणवविशिष्टस्य परिशेषात् केवलस्य तावन्मात्रस्य पठनं अनुवचनमित्युच्यते ॥

१९१ एकस्या ऋचः द्वयोर्वा ऋचोरनुवचने अभ्यासो न भवति सामिधेन्यनुवचने अध्यर्धकारं पठनं विशेषः अनुवचनमात्रे अवसाने यः प्रणवः स चतुर्मात्रो भवति अन्यत्र तु त्रिमात्र एव तदन्तिमस्य मकारस्य स्थाने स्पर्शेषु परेषु तत्तद्वर्गस्य पञ्चमो वर्ण आदेशो भवति यवलेषु परेषु क्रमेण अनुनासिका यवला आदेशा भवन्ति रेफोष्मसु परेषु अनुस्वार आदेशो भवति अन्यत्र अविकृत एव मकारः एतस्य विकारमात्रस्य आश्वलायनसूत्रे अन्तापत्तिरिति संज्ञा ॥

१९२ एकश्रुति अनुब्रूयात् इति उच्यते तथा च अनुवचनमात्रे एकश्रुतिः सिद्ध्यति तत्र एकश्रुतिर्नाम उदात्तानुदात्तस्वरितानां स्वराणामभावः ॥

१९३ अध्वर्युः सामिधेन्यारम्भे एकां समिधमाहवनीये ऽभ्याधाय प्रणवेप्रणवे द्वितीयाद्येकादश समिधो ऽभ्याधाय उपान्त्यायाः प्रणवे तिस्रः समिधः सहैवाभ्याधाय आहवनीयस्योपरि प्रक्षिप्तानां समिधां प्रदीपनानुकूलवातोत्पादनार्थं अन्तिमायाः ऋचः अभ्यासकाले वेदं त्रिवारं प्राक् कम्पयति एतत्कम्पनं वाजनमित्युच्यते ॥

१९४ ध्रुवाज्यात् स्रुवेणोपहत्येत्यादौ उपहननं ग्रहणमेवोच्यते ॥

१९५ वह्नेः कंचिद्देशमारभ्य देशान्तरपर्यन्तं समन्वकं आज्यधारया आहरणं प्रक्षेपणं आघार इत्युच्यते ॥

१९६ स्रुवस्याधस्ताद् वेदं धृत्वा तेन दक्षिणं परिधिमारभ्य उत्तर-

पर्यन्तं समन्त्रकं आज्यधाराहरणं स्रौवाघार इति तिर्यगाघार इति चोच्यते ॥

१९७ प्रादेशतालगोकर्णास्तर्जन्यादियुते ततेऽङ्गुष्ठे इति कोशात् विस्तृताङ्गुष्ठाग्रमारभ्य विस्तृततर्जन्यग्रपर्यन्तः प्रादेश इत्युच्यते ॥

१९८ तस्य वेद्यां प्रागग्रतया मन्त्रेण स्थापनं प्रादेशकरणमित्युच्यते ॥

१९९ प्रादेशकरणे पर्याप्तवेद्यन्तर्गतभूमेः सकाशाद् वेद्यास्तृतबर्हिषः उदग्देशे वेद्यामेव नयनं व्यूहनमित्युच्यते ॥

२०० सामिधेन्यनुवचनानन्तरं होतृकर्तृकं प्रवरप्रवरणं विहितं तत्र प्रवरो नाम आश्वलायनादिभिः प्रवराध्याये यद्गोत्रस्य यावन्तः प्रकर्षेण वराः ऋषयः संबुद्ध्यन्तपदेन उक्तास्ते यथा शाण्डिलानां शाण्डिलासित देवलेति ।।

२०१ तेषामुच्चारणं प्रवरणमित्युच्यते ॥

२०२ तत्र क्षत्रियवैश्ययोर्यजमानयोः पुरोहितस्य प्रवरा वक्तव्याः प्रवरसंशये मानव इत्येव प्रवरो वक्तव्यः । प्रवरानन्तरं अग्नेर्वो निगदशेषो वक्तव्यः, तत्र गायत्र्यादिच्छन्दोरहितः ऋग्वेदे विहितः यजुर्मन्त्रः निगद इत्युच्यते ॥

२०३ होता निगदपाठानन्तरं द्वितीयान्तं देवतावाचकं शब्दमुच्चार्य संबुद्ध्यन्तमग्निशब्दमुच्चार्य आवहेति पदं प्लुताक्षरं पठित्वा अवस्यति ततः द्वितीयादिदेवतावाचकानि पदानि पूर्ववत् अग्निपदरहितानि आवहशब्दान्तानि पठति एतद्देवताह्वानमित्युच्यते ॥

२०४ आह्वानानन्तरं त्रयोदशाक्षरं निगदशेषं ब्रूयात् अयं सर्वो निगदः देवताह्वानगर्भत्वात् आवाहननिगद इत्युच्यते ॥

२०५ अध्वर्युप्रेषितः आग्नीध्रः इध्मसंनहनवेष्टितेन स्फ्येन मूलमारभ्य अग्रपर्यन्तं मध्यमदक्षिणोत्तरान् परिधीन् क्रमेण संमृज्य मन्त्रेणाहवनीयं संमार्ष्टि यागापेक्षया पूर्वत्वादयं पूर्वोऽग्निसंमार्ग इत्युच्यते ॥

२०६ ततोऽध्वर्युः जुहूप्रभृतीन्यग्रे प्राञ्चमञ्जलिं विधाय अग्निं नमस्करोति मन्त्रेण एतत्कर्म अञ्जलिकरणमित्युच्यते ॥

२०७ देवताह्वानकाले दक्षिणहस्तेन मन्त्रेण जुहूमादाय सव्येन तथैवोपभृतमादाय दक्षिणेन सव्येन वा पादेन अग्न्याज्ययोर्मध्यमार्गेण मन्त्रेण वेद्या दक्षिणतो गच्छति तदेतत्सर्वं समन्त्रकं गमनं द्वितीयादिकममन्त्रकं गमनं च अत्याक्रमणमित्युच्यते ॥

२०८ तत आहवनीये आहुतिप्रक्षेपार्थं तस्य दक्षिणतः मन्त्रेण स्वस्य स्थानं कल्पयति एतदध्वर्युस्थानमित्युच्यते ॥

२०९ ततः यजमानेन स्रुचि अन्वारब्धः सन् मध्यमपरिधेर्मध्यं जुह्वग्रेण संस्पृश्य मन्त्रेण अविच्छिन्नं प्राक्संस्थमाघारमाघारयति अयमाघारो नैऋव आघारः प्राक्संस्थ आघार इति चोच्यते ॥

२१० आघारहोमार्थं वह्नेः संनिधौ अधःकृतां जुहूं मन्त्रेण ऊर्ध्वां करोति एतत् उद्ग्रहणमित्युच्यते ॥

२११ ततः सव्यपादेनैव प्राङ्मुख एव मन्त्रेण पूर्वमार्गेणैव वेद्या उत्तरत आगच्छति तदेतदागमनं द्वितीयादिकममन्त्रकं चागमनं प्रत्याक्रमणमित्युच्यते ॥

२१२ ततः सकृत् मन्त्रेण द्विस्तूष्णीं जुह्वा ध्रुवायामाज्यं स्रावयति एतद् ध्रुवासमञ्जनमित्युच्यते ॥

२१३ यथायतनं स्रुचौ सादयतीत्यादौ पूर्वं यस्मात् स्थानात् स्रुचौ गृहीते तस्मिन्नेव स्थाने पुनः स्थापनं यथायतनसादनमित्युच्यते ॥

२१४ ततः उत्करदेशे संसृष्टं ऊर्ध्वाग्रं स्फ्यं धृत्वा स्वपृष्ठभागे आग्नीध्रमुपश्लिष्टं कृत्वा आश्राव्य आग्नीध्रेण प्रत्याश्राविते एकश्रुत्या मन्त्रं पठति तस्य मन्त्रस्य भरतवत्पदानन्तरं यजमानप्रवरान् तद्धितप्रत्ययरहितान् होतुर्विपरीतान् वतिप्रत्ययान्तान् पठित्वा अवशिष्टं ब्रह्मण्वदित्यादिमन्त्रभागं पठति तदेतत् अध्वर्युकर्तृकप्रवरणमित्युच्यते ॥

२१५ ततोऽमुकशर्मा मानुष इति होतुर्नाम गृह्णाति तत् श्रुत्वा होता मन्त्रेण उत्थाय अन्यं मन्त्रं जपति एतदुपोत्थानमित्युच्यते ॥

२१६ ततो मन्त्रेण अध्वर्युसमीपं गच्छति एतद्गमनं अभिक्रमणमित्युच्यते ॥

२१७ तत एकेनैव मन्त्रेण दक्षिणहस्तेन दक्षिणेंऽसे अध्वर्युं दक्षि-

णेनोदरणा सव्यहस्तेन वा आग्नीध्रं च स्पृशति अयमध्वर्य्वाग्नीध्रान्वारम्भ इत्युच्यते ॥

२१८ ततः स्फ्यवेष्टनेध्मसंनहनाद्यैः सकृन्मन्त्रेण द्विस्तूष्णीं स्वमुखमध्यात्मं स्पृशति तन्मुखसंमार्ग इत्युच्यते ॥

२१९ ततो होतृषदनं होता अभिमन्त्रयते तत्र होतृषदनं नाम वेद्युत्तरश्रोण्युत्तरदेशः होतुरुपवेशनस्थानम् ३

२२० होतृषदने उपवेशनार्थमास्तीर्णानां दर्भाणां किञ्चिदेकं तृणं अङ्गुष्ठानामिकाभ्यां गृहीत्वा मन्त्रेण नैर्ऋत्यां प्रक्षिपति तत् प्रक्षेपणं निरसनमित्युच्यते ॥

२२१ करणव्युत्पत्त्या मन्त्रोऽपि निरसन इत्युच्यते ॥

२२२ ततो मन्त्रेण होता स्वस्थाने उपविशति दक्षिणोत्तरिणोपस्थेन उपविश्यतेऽनेनेति करणव्युत्पत्त्या स मन्त्र उपवेशन इत्युच्यते ॥

२२३ ततो वेद्यास्तृतबर्हिः दक्षिणजानुशिरसा मन्त्रेण स्पृशति तदेतद्बर्हिरुपस्पर्शनमित्युच्यते ॥

२२४ होता इध्मप्रदीपनसमये एकं यजुर्मन्त्रं पञ्च ऋचश्च जपित्वा इध्मे प्रदीप्ते सति यस्य निगदस्य षडक्षरो मध्यभागः उपांशु पठ्यते तं निगदमुच्चैः एकश्रुत्या पठति तन्निगदघटकघृतीवतीशब्दस्य श्रवणानन्तरं अध्वर्युः प्रयाजहोमार्थं जुहूपभृतौ गृहीत्वातिक्रामति स्रुचौ जुहूपभृतौ आदाप्येते अनेनेति करणव्युत्पत्त्या स निगदः स्रुगादापन इत्युच्यते ॥

२२५ अध्वर्युर्जुहूपभृतावादाय अत्याक्रम्य स्वस्थाने तिष्ठन् आश्रावयति तत्र आश्रावणं आश्रुतं इति च प्लुताकार पूर्वकप्लुतादिश्रावयेति पदोच्चारणं आश्वलायनसूत्रे तु प्लुतो य ओकारस्तत्पूर्वकश्रावयेतिपदोच्चारणम् ।

२२६ आग्नीध्र इध्मसन्नहनवेष्टितं स्फ्यमूर्ध्वाग्रं धृत्वा उत्करे दक्षिणामुखः तिष्ठन् सर्वदा आश्रावणानन्तरं अस्तुशब्दपूर्वकप्लुतादिश्रौषट्पदमुच्चारयति तदेतत् प्रत्याश्रवणं प्रत्याश्रुतमिति चोच्यते ॥

२२७ यजेत्यादिलोण्मध्यमपुरुषान्तपदघटितेन येन वाक्येन अध्वर्य्वादिना होत्रादिः प्रेर्यते तद्वाक्यं प्रैष इत्युच्यते ॥

२२८ अध्वर्युप्रेषितो होता एकश्रुत्या पुरोनुवाक्यां पठति सा च प्रायः एकैव ऋक् भवति तस्याः प्रथमार्धर्चे एकमवसानं चतुर्मात्रप्रमा-वान्तद्द्वितीयार्धर्चे द्वितीयमवसानं यस्मिन् यागे मैत्रावरुणो भवति तत्र स एव पुरोनुवाक्यां पठति पुरः पूर्वं यागाद् देवतां अनुकूलयितुं या ऋगुच्यते इति व्युत्पत्त्या पुरोनुवाक्यापदं अनुवाक्यापदं च ऋग्विशेष-बोधकम् ॥

२२९ यच्छब्दस्य प्रथमाबहुवचने ये इति भवति तत्र एकारः प्लुतः पाठ्यः तत्पूर्वकं यजामहे इति तिङन्तं रेफान्तेन आगूःशब्देनोच्यते ॥

२३० पित्र्यायामिष्टौ तु यजामहे इत्यस्य स्थाने स्वधामहे इति पठ्यते सैव तत्र आगूरित्युच्यते ॥

२३१ वकारोत्तरवर्त्यकारस्य स्थाने प्लुतमोकारं कृत्वा वषट् इति शब्दः पठ्यते स वषट्कार इत्युच्यते ॥

२३२ पित्र्यायां तु वषट्कारस्थाने स्वधापदपूर्वकं नम इति पदं पठ्यते स एव तत्र वषट्कारो भवति ॥

२३३ आगूःपूर्विका वषट्कारान्ता प्रायशोऽर्धर्चावसाना बहु-स्थानेषु एकैव ऋक् क्वचिदनृगपि याज्यापदेनोच्यते ॥

२३४ याज्याया ऋचां मध्ये अन्त्योऽच् प्लुतो भवति रस्थानिको विसर्गः याज्याया अन्ते भवति चेत् वषट्कारेण संधौ अवसानाभावात् रेफ एव विसर्गस्थानेऽवतिष्ठते रेफस्थानिको विसर्गो यत्र तत्र लोप एव विसर्गस्य भवति याज्यान्तानामन्येषां तु व्यञ्जनानां यथाव्याकरणं वषट्कारेण सह संधिर्भवति एकारस्य ऐकारस्य वा याज्यान्तत्वे तयोः संध्यक्षरत्वात् प्लुतमकारं पृथगुच्चार्य इकारं ह्रस्वमेव अन्ते पठित्वा वष-ट्कारं पठेत् एवं ओकारस्य औकारस्य वा तथात्वे तयोरपि प्लुतं अकारं पृथगुच्चार्य उकारमन्ते पठित्वा वषट्कुर्यात् तत्र केवलः रकार रेफ इत्युच्यते ॥

२३५ कादयो मान्ताः यादयो हान्ताश्च वर्णा व्यञ्जनपदवाच्याः ॥

२३६ एकारादयश्चत्वारः अइउऋऌ इति च पञ्च वर्णाः अच इति स्वरा इति चोच्यन्ते ॥

२३७ संधिसंपन्नानि अक्षराणीतिसमासे एकारादयश्चत्वारो वर्णाः संध्यक्षराणीत्युच्यन्ते ॥

२३८ सामिधेनीप्रभृतिप्रयाजान्तं शंयुवाकानन्तरं च मन्द्रस्वरेण पठ्यते मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरं प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितमिति शिक्षोक्त्या मन्द्रस्तु गम्भीरे इत्यमरोक्त्या च कायाग्निप्रेरितो वायुः उरोदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र गम्भीरे स्वरे वर्णानुत्पादयति गानशास्त्रे यं प्रथमयाम इति वदन्ति स मन्द्रस्वर इत्युच्यते ॥

२३९ तस्य सप्त यमा भवन्ति तत्र षष्ठेन यमेन याज्या पठ्यते सप्तमेन वषट्कारः उच्चैस्तरां बलीयान् याज्याया इत्याश्वलायनसूत्रात् उच्चैस्तरां वा वषट्कार इति पाणिनिसूत्राच्च तत्र उच्चनीचभावेन आरोहणावरोहणक्रमेण संपाद्यमानाः गानशास्त्रे षड्जादिनामभिः प्रसिद्धा यमा इत्युच्यन्ते ॥

२४० दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथक् इति कोशात् अमावास्यायामन्वाधानं कृत्वा प्रतिपदि यागः क्रियते स यागो दर्श इत्युच्यते ॥

२४१ पौर्णमास्यामन्वाधाय प्रतिपदि क्रियमाणो यागः पौर्णमासेनेष्टपशुसोमा उपदिष्टा इति सूत्रात् पूर्णमासे भव इति व्युत्पत्त्या पौर्णमासशब्दप्रतिपाद्यः दर्शशब्दवत् लक्षणया पूर्णमासशब्दप्रतिपाद्यश्च भवति ॥

२४२ दर्शपूर्णमासयोरेव श्रुत्यादिषु सर्वविधेरुपदेशात् अन्यत्र च अचत्यस्य सर्वेतिकर्तव्यताकलापस्य अतिदेशात् दर्शपूर्णमासौ प्रकृतिपदवाच्यौ ॥

२४३ यत्रयत्र अतिदेशः प्रवर्तते स यागो विकृतिपदेन व्यवह्रियते ॥

२४४ तत्र प्रकृतौ पञ्च प्रयाजा भवन्ति एते च आगुरादयो यजूरूपाः वषट्कारान्ताः याज्यात्वात् भवन्ति तेषामन्ते वषट्कारात्पूर्वं सूत्रे वेतु वीतां व्यन्तु इति पदत्रयमध्ये अन्यतमं पदं पठितमस्ति याज्यान्तत्वप्रयुक्ता प्लुतिश्च तस्यैव भवति ॥ चतुर्णां प्रयाजानां वषट्ट-

ग्रीष्मवर्षाशरदो देवता: पञ्चमस्य तु हेमन्तशिशिरौ समस्तौ देवता तत्र द्वितीयः प्रयाजः यजमानस्य गोत्रेण वासिष्ठत्वे शौनकत्वे आत्रेयत्वे वाध्र्यश्वत्वे क्षत्रियत्वे वा आद्यो नराशंसपदघटितः अन्येषां तु तनूनपात्पदादिः चातुर्मास्यगतमुख्येष्टिषु नव प्रयाजा भवन्ति तत्र आद्याश्चत्वारः प्राकृता एव तदुत्तरं चत्वारो ऽपूर्वाः विहिताः तेषां मध्ये प्रथमस्य देव्यो द्वारो देवता द्वितीयस्य उषासानक्ता तृतीयस्य दैव्यौ होतारौ चतुर्थस्य तिस्रो देव्यः नवमो ऽपि प्राकृत एव पाशुके तु एकादश प्रयाजा भवन्ति ते च सर्वे ऽपि ऋग्रूपाः तत्र शाकलसंहितायां वसिष्ठेन दृष्टानि यानि सूक्तानि तदन्तर्गता एकादश ऋचः वासिष्ठगोत्रस्य यजमानस्य भवन्ति एवमात्रेयगोत्रस्य तद्दृष्टसूक्तान्तर्गताः वध्र्यश्वदृष्टसूक्तान्तर्गतास्तद्गोत्राणां गृत्समदस्य शौनकत्वात् गृत्समददृष्टसूक्तान्तर्गताः शौनकगोत्रस्य भवन्ति अत्र सर्वत्र द्वितीया ऋचो नराशंसपदघटिताः एते चतुर्विधाः प्रयाजा नाराशंसवन्त इत्युच्यन्ते ॥

२४५ मेधातिथिदृष्टसूक्तान्तर्गताः द्वादश ऋचः तत्र द्वितीयतृतीये ऋचौ क्रमेण तनूनपान्नराशंसपदघटिते अत एव ताः सर्वविधयजमानार्थाः एवं दीर्घतमसा दृष्टा अपि द्वादश व्यवस्थया पूर्वोक्तया एकादश सर्वार्था भवन्ति यत्र एकादश प्रयाजास्तत्र तेषां प्रैषाः मैत्रावरुणेन पठ्यमाना द्वादश प्रैषसूक्ते पठिता अपि पूर्वोक्तव्यवस्थया एकादशैव भवन्ति अत्र सूक्तद्वयगताः प्रयाजाः प्रैषाश्च उभयवन्त इत्युच्यन्ते ॥

२४६ ऋष्यन्तरदृष्टाः प्रयाजास्तनूनपात्पदघटितद्वितीयप्रैषवत्त्वात् तनूनपात्वन्त इत्युच्यन्ते ॥

२४७ प्रधानयागात्पूर्वं इज्यते यैरिति व्युत्पत्त्या एते सर्वे प्रयाजा इत्युच्यन्ते ॥

२४८ होता अन्यो ऽपि वा वषट्कारानन्तरं नियमेन यं मन्त्रं जपति स वषट्कारानुमन्त्रणमित्युच्यते ॥

२४९ वषट्कारसमकालं अध्वर्युर्जुहोति तदानीमेव चतुर्थ्यन्तं देवतानाम उद्दिश्य न ममेति यजमानः पठति स त्याग इत्युच्यते ॥

२५० ऋग्रूपाः प्रयाजाः वीधातूत्तरलोडन्तपदान्तकत्वात् वीतवत्पदान्ता इत्युच्यन्ते ॥

२५१ अध्वर्युः प्रयाजैरिष्ट्वा उदङ्ङत्याक्रम्य जुहूस्थाज्यशेषेण ध्रुवामभिघार्य क्रमेण हवींष्यभिघार्य उपभृतमभिघारयति तदेतत्प्रयाजशेषाभिघारणमुच्यते ॥

२५२ अध्वर्युः ध्रुवाज्यात् स्रुवेण जुह्वां एकवारमाज्यं गृहीत्वा अनुवाक्यापठनार्थं होतारं अनुब्रूहीत्यन्तेन मन्त्रेण संप्रेष्य पुनस्त्रिवारं गृह्णाति तदेतत् चतुरवत्तमित्युच्यते ॥

२५३ यस्यैव भवति स यजमानश्चतुरवत्ती भवति ॥

२५४ जामदग्न्या वत्सबिदार्ष्टिषेणास्तथैव च । भार्गवाश्च्यावना और्वाः पञ्चावत्तिन ईरिता इति वचनात् एतद्वचनोक्तगोत्राणां यजमानानां पञ्चवारमवद्यति एतत्पञ्चावत्तमित्युच्यते ॥

२५५ यजमानश्च पञ्चावत्ती भवति ॥

२५६ दो अवखण्डने इति पठितत्वात् स्थापितहविषः होमपरिमितस्य भागस्य ग्रहणार्थं खण्डनं अवदानमित्युच्यते ॥

२५७ अनया रीत्या अवदाय गृहीत्वा अत्याक्रम्य दक्षिणाभिमुख्या स्रुचा आहवनीयस्यैशानभागे आग्नेयमाज्यभागं हुत्वा उदङ्ङत्याक्रम्य पूर्ववदवदाय गृहीत्वा अत्याक्रम्य उदङ्मुख्या स्रुचा आग्नेयदेशे सौम्यमाज्यभागं जुहोति तत्र आज्यं भागो ययोरिति व्युत्पत्त्या तद्वैवते अग्नीषोमौ आज्यभागपदार्थौ ॥

२५८ आज्यभागानन्तरं जुह्वामुपस्तीर्य मन्त्रेण दक्षिणहस्तनमस्कारेण पुरोडाशात्रिरूपं हविरुपस्थाय उपविश्य मन्त्रेण हविरभिमृश्य पञ्चभिरङ्गुलिभिः अङ्गुष्ठमध्यमानामिकाभिर्वा प्रथमपुरोडाशादेः पूर्वार्धात् अवदाय सर्वाविद्रव्यस्य तु मेक्षणेनैवावदाय द्वितीयं पश्चार्धादवदाय पञ्चावत्तिनस्तु मध्यात्पूर्वार्धात्पश्चार्धादिति त्रिरवदाय अभिघारयति एवं रीत्या क्रियमाणं बहुपुरोडाशाद्यवदानमुच्यते ॥

२५९ अवत्तं हविरभिघार्य आज्यस्थाल्याज्येन मन्त्रेण अवदानस्थानान्याप्याययति तदेतत् प्रत्यञ्जनमित्युच्यते ॥

२६० एवं रीत्या अवदाय अत्याक्रम्य वषट्कृते प्राक्संस्था उदक्संस्था वा प्रधानाहुतीर्जुहोति सोऽयं प्रधानयाग इत्युच्यते ॥

२६१ प्रधानयागे अवदानानन्तरं अत्याक्रमणात्पूर्वं ध्रौवाज्येन स्रुवेण तूष्णीं करिष्यमाणतत्तत्प्रधानहोमदेशे स्विष्टकृद्धोमदेशे च एकामाहुतिं जुहोति सा पुरस्तादाहुतिरित्युच्यते ॥

२६२ एवं प्रत्याक्रमणानन्तरं प्रक्षिप्तस्य हविष उपरि अन्यामाहुतिं जुहोति सा उपरिष्टादाहुतिरित्युच्यते ॥

२६३ प्रधानहोमानन्तरं उपस्तीर्य सर्वेषां हविषां उत्तरार्धात् सकृत्सकृदवदानं पञ्चावत्तिनस्तु द्विरवदानं भवति एवं ततो द्विरभिघारयति अवत्ते स्विष्टकृति स्रुवेण दर्शे अमावास्यादेवताकां पौर्णमासे पौर्णमासीदेवताकामाहुतिं जुहोति स पार्वणहोम इत्युच्यते ॥

२६४ अत्र पुरोडाशादेरुपस्यानाभिमर्शने न भवतः अवदानदेशानां प्रत्यञ्जनं च न भवति एवमवदाय अत्याक्रम्य वषट्कृते अग्नौ ऐशानदेशे जुहोति सोऽयं स्विष्टकृद्धोम इत्युच्यते ॥

२६५ होता आज्यभागप्रभृति स्विष्टकृत्पर्यन्तं याज्यापाठे आगुरं उच्चार्य संहितया द्वितीयान्तं देवतानाम उच्चार्य याज्यां संहितया पठति तदेतत् देवतानामोच्चारणं देवतादेश इत्युच्यते ॥

२६६ स्विष्टकृतं यजेति श्रुत्वा आगुरमुच्चार्य देवतामादिश्य निगदं पठित्वा याज्यासंज्ञामृचं पठति स स्विष्टकृन्निगद इत्युच्यते ॥

२६७ अध्वर्युः स्विष्टकृद्धोमानन्तरं प्रत्याक्रम्य उपरिष्टादाहुतिं हुत्वा जुह्वां जलं गृहीत्वा संचाल्य तज्जलं मध्यमपरिधेरन्तर्देशे मन्त्रेण उदक्संस्थं प्रक्षिपति तत् अन्तःपरिधिनिनयनमित्युच्यते ॥

२६८ पुनर्जुहूं जलेन प्रक्षाल्य वह्नौ निष्टप्य पूरयित्वा मन्त्रेण परिधेर्बहिः जलं पूर्ववत् प्रक्षिपति तत् बहिःपरिधिनिनयनमित्युच्यते ॥

२६९ तत उपभृति विद्यमानमाज्यं जुह्वां कृत्वा यथायतनं जुहूप्रभृतीः सादयित्वा मन्त्रेण प्राशित्रहरणे प्रथमप्रधानद्रव्यसंबन्धिनं प्राशित्रमवद्यति स्रुवदण्डेनाभिघार्य प्रणीतानां पश्चिमतः सादयति स भागः प्राशितुः ब्रह्मणः अयमिति विग्रहेण प्राशित्रपदवाच्यः ॥

२७० तत इडापात्रं वेद्यां उदगग्रं निधाय तस्मिन् यावन्ति प्रधानद्रव्याणि तावदर्थं सकृदेव उदक्संस्थं आज्यस्थाल्याज्येनोपस्तीर्य प्रथ-

मप्रधानद्रव्यदक्षिणार्धादवदानदेशसंस्पर्शमकुर्वन् मन्त्रेण अवदाय इडा-पात्रे उपस्तीर्णदेशे निधाय उत्तरार्धात्तु तूष्णीं अवदानदेशसंस्पर्शं कुर्व-न्नेवावदाय तथैव निदधाति ततस्तस्यैव द्रव्यस्य पूर्वभागाद्यङ्गुलं चतुरङ्गुलं खण्डं तूष्णीमवदाय आज्यस्थाल्याज्येन सुसंतृप्तं संतर्प्य ध्रुवायाः पूर्वभागे निदधाति तत्खण्डं यजमानकर्तृकप्राशनार्थत्वात् यजमानभाग इत्युच्यते ॥

२७१ ततः द्वितीयादिप्रधानद्रव्याणां प्रथममवयवमवदाय निधाय उपस्तरणवदभिघारयति एतदिडावदानमुच्यते ॥

२७२ होतुः प्रदेशिन्याः उत्तमे पर्वणि आज्येन स्रुवेण अनक्ति तदङ्गुलिपर्वाञ्जनमुच्यते ॥

२७३ ततः होता उत्तरेण पर्वणा उत्तरं स्वीयमोष्ठं मन्त्रेण निमृज्य अधरं ओष्ठं अधरेण पर्वणा मन्त्रेण निमार्ष्टि अयमोष्ठनिमार्ग इत्युच्यते ॥

२७४ ततोऽपः स्पृष्ट्वा अध्वर्युणा दीयमानामिडापात्रीं अञ्ज-लिना प्रतिगृह्य सव्ये पाणौ कृत्वा तस्याः पश्चात् उदगङ्गुलिं पाणिमु-पधाय तस्मिन् अध्वर्युः उपस्तरणपूर्वकं इडायाः कञ्चिदंशं ददाति तं गृहीत्वा अङ्गुल्यङ्गुष्ठयोर्मध्येन स्वयं द्वितीयमंशं गृह्णाति अध्वर्युस्तदुपरि अभिघारयति होता तत् भागद्वयमङ्गुष्ठेनाभिसंगृह्य अङ्गुलीः प्रत्याहृत्य मुष्टिमकृत्वा दक्षिणभागे इडापात्रं प्रागग्रमुदगग्रं वा प्रतिगृह्य मुखसं-मितं नासिकासंमितं वा धारयति तच्च पाणिगृहीतं भागद्वयं अवान्त-रेडा इत्युच्यते ॥

२७५ तथा धारयित्वा कंचिन्मन्त्रं जपित्वा उच्चैरन्यं मन्त्रं पठति तत्र मन्त्रे यदध्वर्यव इति पदं तत् श्रुत्वा अध्वर्युः प्रथमं पुरोडाशं चतुर्धा कृत्वा बर्हिषि निदधाति तदेतत् चतुर्धाकरणमित्युच्यते ॥

२७६ अनया रीत्या इडापात्रं धारयित्वा मन्त्रपठनं इडोपह्वान-मित्युच्यते ॥

२७७ उपहूतायामिडायां अध्वर्युराग्नीध्रस्य हस्ते उपस्तीर्य प्रथमं इडायाः कंचिदंशं दत्त्वा अभिघार्य पुनरुपस्तीर्य द्वितीयं दत्त्वा अभि-घारयति तदेतत् षडवत्तमित्युते ॥

२७८ ततो ब्रह्मणे होत्रे च इडाभागं दत्त्वा स्वं भागं गृहीत्वा यजमानाय ददाति होता पाणिगृहीतामवान्तरेडां मन्त्रेण भक्षयति जुष्टिरसीत्यादिमन्त्रेण यजमानोऽनुमन्त्रयते । ततः सर्वे ऋत्विजः सयजमाना इडां भक्षयन्ति तदेतदिडाप्राशनमित्युच्यते ॥

२७९ इडापात्र्यां पूर्वं विधिना गृहीतं हविरिडेत्युच्यते ॥

२८० ततः अध्वर्य्वाग्नीध्रौ बर्हिषि उत्तानं दक्षिणं हस्तं निधाय तस्मिन् जलं सिञ्चतः होतृब्रह्माणौ तु परिस्तरणस्याधस्तादञ्जलिं निधाय अन्येन जलं सेचयतः यजमानस्तु मन्त्रं पठन् प्रस्तरस्याधस्तादञ्जलिं निधाय अध्वर्युणा जलं सेचयति तदेतत् सर्वं इडामार्जनमित्युच्यते ॥

२८१ अध्वर्युणा प्रेषितः आग्नीध्रः प्रणीतापश्चिमतः स्थापितं प्राशित्रहरणं गृहीत्वा आहवनीयपूर्वमार्गेण गत्वा ब्रह्मणे ददातिब्रह्मा मन्त्रेण तत् प्राशि दृष्ट्वा मन्त्रेण अञ्जलिना प्रतिगृह्यवेद्यां कुशेषु प्राग्दण्डं मन्त्रेण निदधाति तदेतत्कर्म प्राशित्रपरिहरणमित्युच्यते ॥

२८२ ब्रह्मा पात्रात्प्राशित्रभागमादाय स्थानान्तरं गत्वा मन्त्रेण प्राश्नाति एतत्प्राशित्रप्राशनमित्युच्यते ॥

२८३ ततः स्मृत्युक्तमाचमनं कृत्वा मन्त्रेण पुनराचामति तदन्वाचमनमित्युच्यते ॥

२८४ ततः मन्त्रेण सोदकेन पाणिना नाभिं स्पृशति तत् नाभ्यालम्भनमित्युच्यते ॥

२८५ ततः स्वस्थाने उपविश्य प्राशित्रहरणं प्रक्षाल्य तस्मिन् जलं प्रक्षिप्य तेन आत्माभिमुखं त्रिवारं भूमौ सिञ्चति एतत् अभ्यात्मानिनयनमुच्यते ॥

२८६ अध्वर्युकर्तृकप्राशित्रपरिहरणप्रैषोच्चारणानन्तरं यजमानो बर्हिषि निहितान्प्रथमपुरोडाशस्य चतुरो भागाननुमन्त्र्य एकैकं भागं दर्भेण स्पृष्ट्वा इदं ब्रह्मणः इदं होतुः इदमध्वर्योः इदमाग्नीध्रः इति उद्दिशति तदेतत् चतुर्धाकृतभागदानमित्युच्यते ॥

२८७ ततोऽध्वर्युराग्नीध्रभागं द्वेधा कृत्वा आग्नीध्रहस्ते उपस्तीर्य भागस्यैकदेशं दत्त्वा पुनरुपस्तीर्य द्वितीयमेकदेशं दत्त्वा द्विरभिघारयति

अत्र एतादृशं षडवत्तं भवति इडाभागे अन्यादृशं षडवत्तमुक्तं ततो वेदेन ब्रह्मणे ब्रह्मभागं ददाति स्रुवेण होत्रे होतृभागं दत्त्वा स्वयं स्वभागं जुह्वा गृह्णाति एतत् चतुर्धाकृतभागपरिहरणमित्युच्यते ॥

२८८ ब्रह्मा स्वभागं गृहीत्वा अग्निनयनानन्तरं वेद्यां कुशेषु स्थापिते प्रत्यग्दण्डे प्राशित्रहरणे निधाय अध्वर्युणा पूर्वं ध्रुवायाः पूर्वदेशे स्थापितं यजमानभागं तस्य पश्चात् कुशेषु निदधाति इदं भागनिधानमित्युच्यते ॥

२८९ ततः सर्वे ऋत्विजः स्वंस्वं भागं स्वस्वमन्त्रैः कामस्तुतिनामकैः प्रतिगृह्णन्ति स भागप्रतिग्रह इत्युच्यते ॥

२९० ततो ब्रह्मा आहवनीयस्य पूर्वमार्गेण वेद्या उत्तरतः गार्हपत्यस्य पश्चिमतश्च गत्वा दक्षिणाग्नौ श्रुतं अध्वर्युणा अभिघार्य दक्षिणस्यां श्रोण्यां स्थापितं अन्वाहार्यं मन्त्रेण पश्यति तदन्वाहार्यावेक्षणमित्युच्यते ॥

२९१ ततो मन्त्रेण स्पर्शमकुर्वन् तदीयगन्धं जिघ्रति तदन्वाहार्यावघ्राणमित्युच्यते ॥

२९२ ततो ब्रह्मणि अङ्गुष्ठानामिकाभ्यामन्वाहार्यैकदेशं गृहीत्वा यथागतमागत्य स्वस्थाने उपविश्य ब्रह्मभागे प्राशित्रहरणस्थे तमेकदेशं स्थापयति सति अध्वर्युरन्वाहार्यस्थालीं वेद्यां यजमानसंमुखीं स्थापयति यजमानस्तन्मध्यगतमन्वाहार्यं पश्यति तद्यजमानकर्तृकमन्वाहार्यावेक्षणमुच्यते ॥

२९३ ततः सर्वान् ऋत्विजः संबोध्य अयं वः ओदनः यूयं यथाभागं प्रतिगृह्णीध्वमिति वदति तदन्वाहार्यदानमित्युच्यते ॥

२९४ अध्वर्य्वाग्नीध्रौ सप्तदशकृत्वो ऽपास्य मन्त्रेण प्रतिगृह्णीतः होतृब्रह्माणौ आश्वलायनसूत्रपठितेन कामस्तुतिसंज्ञकेन मन्त्रेण प्रतिगृह्णीतः सो ऽयमन्वाहार्यप्रतिग्रह इत्युच्यते ॥

२९५ अपाननं नाम बाह्यवायोः नासापुटाभ्यामन्तराकर्षणम् ॥

२९६ ततो वेद्यां विद्यमानानां हविःशेषाणां वेद्या बहिः उत्तरतः प्रक्षेपणं हविरुद्वासनमित्युच्यते ॥

२९७ ततः एकविंशतिदारुकेध्मसंबन्धिनीं परिशेषितां समिधं

आहवनीये प्रक्षेप्तुं ब्रह्मणो ऽनुज्ञां याचमानः आग्नीध्रं आहवनीयसंमार्गं प्रेष्यति ब्रह्मा च कंचिन्मन्त्रं जपित्वा उच्चैरनुज्ञां ददाति अध्वर्युस्तां समिधमनुयाजहोमार्थमाहवनीये ऽभ्यादधाति तदनुयाजसमिदाधानमित्युच्यते ॥

२९८ आग्नीध्रः स्फ्ये पूर्वं वेष्टितमिध्मसंनहनं विमुक्तं कृत्वा तेन पूर्ववत् सकृत् परिधीन् संमृज्य मन्त्रेण आहवनीयं संमार्ष्टि सोऽयमुत्तराहवनीयसंमार्ग इत्युच्यते ॥

२९९ अध्वर्युर्जुहूपभृतावादायात्यक्रम्याश्राव्य आग्नीध्रेण इध्मसंनहनरहितस्फ्यहस्तेन प्रत्याश्राविते होतारं याज्यापठनार्थं प्रेष्यति होत्रा वषट्कृते प्रक्षिप्तसमित्पूर्वार्धे जुहोति पुनस्तथैवाश्रावणादि कृत्वा वषट्कारे समिन्मध्ये जुहोति पुनस्तथैव कृत्वा वषट्कृते समिधो मूलमारभ्याग्रपर्यन्तं संततधारया जुहोति सो ऽयमनुयाजप्रचारो ऽनुयाजहोमश्चोच्यते ॥

३०० यत्र अनु पश्चात् प्रधानयागानन्तरं इज्यन्ते यैरिति व्युत्पत्त्या होत्रा पठ्यमाना याज्यामन्त्रा अनुयाजा इत्युच्यते ॥

३०१ ते च वीधातुप्रकृतिकलोट्प्रथमपुरुषान्ताः वीतवत्पदान्ता इति प्रयाजवदुच्यन्ते ॥

३०२ अनुयाजप्रचारानन्तरं उदगागत्य यथास्थानं स्रुचौ सादयित्वा यजमानेन सह मन्त्रेण जुहूमूर्ध्वां उत्तानेन दक्षिणहस्तेन गृह्णाति एवं नीचेन सव्यहस्तेन अधस्तात् उपभृतं अध्वर्युयजमानौ कुरुतः तत उभौ प्रागग्रां जुहूं मन्त्रेण दक्षिणांसपर्यन्तं प्रापयतः तथैवोपभृतं प्रत्यगग्रां उत्तरश्रोणिपर्यन्तं प्रापयतः तदेतत्कर्म स्रुग्व्यूहनमित्युच्यते ॥

३०३ ततो ऽध्वर्युर्जुह्वा मध्यमदक्षिणोत्तरान्परिधीन् क्रमेण पृथक्पृथक्मन्त्रैरनक्ति एतत्कर्म परिध्यञ्जनमित्युच्यते ॥

३०४ ततः उपभृतं जलेन संस्पृश्य यथास्थानं स्रुचौ सादयित्वा जुह्वा आधारभूतं सविधृतिपवित्रं प्रस्तरं गृहीत्वा मन्त्रेण प्रस्तराग्राणि जुह्वामनक्ति तथैवोपभृति मध्यानि अनक्ति तथैव ध्रुवायां मूलानि अनक्ति तदेतत्प्रस्तराञ्जनमित्युच्यते ॥

३०५ प्रस्तरसंबन्ध्येकं तृणमादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां

हस्ताभ्यां प्रस्तरं धृत्वा जुहूमूर्ध्वामवष्टभ्य आश्राव्य प्रत्याश्राविते प्रैषं पठति स सूक्तवाकप्रैष इत्युच्यते ॥

३०६ अध्वर्युप्रेषितो होता यं मन्त्रं पठति स सूक्तवाक इत्युच्यते ॥

३०७ सूक्तवाकान्तर्गतमन्त्रविशेषपठनकाले अध्वर्युर्यद्यजमानं मन्त्रं पाठयति तत् उज्जितिवाचनमित्युच्यते ॥

३०८ सूक्तवाकस्य अन्तिमं देवेभ्य इति श्रुत्वा तिर्यञ्चं हस्तं कृत्वा कर्षन्निव प्रस्तरमाहवनीये ऽनुप्रहरति मन्त्रेणाध्वर्युस्तत्प्रस्तरप्रहरणमिति गीयते ॥

३०९ ततः पूर्वं प्रज्ञातं यथास्यात्तथा निहितं तृणं गृहीत्वा आग्नीध्रं संबोधयति अग्नीत् इति आग्नीध्रस्तु अध्वर्युं प्रति संवदस्व इति वदति पुनरध्वर्युस्तमाह अगानग्नीत् इति पुनराग्नीध्रस्तमाह अगन् इति पुनरध्वर्युस्तमाह श्रा ३ वय इति पुनराग्नीध्रस्तमाह श्रौ ३ षट् इति पुनरध्वर्युर्गृहीतं तृणं प्रदर्शयन्नाग्नीध्रं प्रत्याह इदं ब्रू ३ हि इति तत आग्नीध्रस्तं प्रत्याह अनुप्रहर इति ततो ऽध्वर्युस्तत् तृणमाहवनीये ऽनुप्रहरति तदेतत् तृणप्रहरणमित्युच्यते ॥

३१० ततो ऽध्वर्युर्होतारं प्रेष्यति स शंयुवाकप्रैष इत्युच्यते ॥

३११ अध्वर्युप्रेषितो होता यामृचं अर्धर्चे अवसाय एकश्रुत्या अन्ते प्रणवरहितां पठति सा ऋक् शंयुपदघटितत्वात् शंयुवाक इति गीयते ॥

३१२ आज्यभागप्रभृति सर्वं प्रधानयाज्यादिकं मध्यमस्वरेण पठनीयं तत्र कण्ठे माध्यन्दिनयुगं मध्यममिति शिक्षोक्तेर्जठराग्निना प्रेरितो वायुः कण्ठदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र वर्णानामभिव्यक्तिं करोति स मध्यमस्वर इति उच्यते ॥

३१३ स्विष्टकृत्प्रभृति शंयुवाकानामुत्तमस्वरेण पठ्यते तत्र तारं तार्तीयसवनं शीर्षण्यमिति शिक्षावचनात् जठराग्निप्रेरितो वायुः मस्तकदेशे संचारं कृत्वा पूर्ववत् वर्णानभिव्यञ्जयति स उत्तमस्वर इति पठ्यते ॥

३१४ शंयुवाकानन्तरं अध्वर्युर्होत्रे वेदं प्रदाय दक्षिणहस्तेन स्रुवमाज्यस्थालीं सव्येन जुहूमादाय दक्षिणेन यदा गार्हपत्यदक्षिणाग्न्योर्मध्येन गत्वा स्वयं पत्नीपश्चाद्भागेन गत्वा स्रुवादीनि पत्नीपुरोभागेन

नीत्वा गार्हपत्यस्य पश्चादूर्ध्वजानुरुपविश्य होतुः सकाशात् वेदं गृहीत्वा जुव्हा अधस्तादुपभृत्स्थाने धृत्वा आश्राव्य प्रत्याश्रावितो होतारं यजेति प्रेष्य तेन वषट्कृते आज्यस्थाल्याज्येन चतुरवत्तेन जुव्हा गार्हपत्ये सोमाय जुहोति पुनश्चतुरवत्तेन त्वष्ट्रे ततो देवानां पत्नीभ्यः ततो यजमानस्य प्रजाकामत्वे राकायै सिनीवाल्यै कुव्है अनुमत्यै च पृथक्पृथक् चतुरवत्तेन हुत्वा स्वाहान्तैरेतैरेव चतुर्भिर्नाममन्त्रैः स्रुवाहुतीर्हुत्वा त्रिभिर्ऋङ्मन्त्रैः स्रुवाहुतीरेव हुत्वा आश्रावणादि कृत्वा अग्नये गृहपतये यजति देवानां पत्नीनां यागकाले गार्हपत्यकुण्डस्योपरि पूर्वभागे अन्तर्धानाय अन्तर्धानकटं उदगग्रं स्थापयित्वा देवानां पत्नीरिष्ट्वा होतुरग्रेण गच्छति सोऽयं पत्नीसंयाजप्रचार इत्युच्यते ॥

३१५ तत्र गत्वा पूर्ववत् होतुरङ्गुलिपर्वणी अङ्क्त्वा होतुर्हस्ते चतुष्कृत्व आज्यं स्रुवेण ददाति एतदाज्यं आज्येडा इत्युच्यते ॥

३१६ पूर्वं इडापात्रं गृहीत्वा होता कांश्चिन्मन्त्रान् उच्चैः कांश्चिदुपांशु पठति तदा अध्वर्युयजमानाग्नीध्राः इडापात्रमन्वारभन्ते आज्येडां गृहीत्वा यदा पूर्ववत् मन्त्रान् पठति तदा अध्वर्युः पत्नीं चान्वारभते । अयं मन्त्रपाठः आज्येडोपह्वानमित्युच्यते ॥

३१७ ततोऽध्वर्युराग्नीध्रहस्ते षट्कृत्वः आज्यं स्रुवेण ददाति होता स्वहस्तगतमाज्यं प्राश्नाति आग्नीध्रश्च स्वहस्तगतमाज्यं प्राश्नाति अत्र होतृकर्तृकं प्राशनं आज्येडाप्राशनमित्युच्यते ॥

३१८ तत आचम्य होता परिस्तरणेऽञ्जलिमन्तर्धाय अन्येनापः सेचयति आग्नीध्रस्तं बर्हिषि दक्षिणं उत्तानं हस्तं निधाय सव्येन जलं सिञ्चति एतदाज्येडामार्जनमित्युच्यते ॥

३१९ एतदनन्तरं शंयुवाकस्य विकल्पः अध्वर्युर्जुह्वां चतुर्गृहीतं गृहीत्वा सव्येनाङ्गेन होतुरग्रेण गार्हपत्यस्य पश्चिममार्गेण गत्वा दक्षिणाग्नौ मन्त्रेण हुत्वा अपरं चतुर्गृहीतं गृहीत्वा इध्मप्रव्रश्चनान्यभ्याधाय जुह्वां फलीकरणानोप्य मन्त्रेण जुहोति अत्र पूर्वहोमो दक्षिणाग्निप्रायश्चित्तहोम इत्युच्यते ॥

३२० द्वितीयस्तु फलीकरणहोम इत्युच्यते ॥

३२१ ततः अपरेण गार्हपत्यं उत्तरतो गत्वा यजमानाय वेदं

दत्त्वा मन्त्रं वाचयति ततो यजमानाद्वेदमादाय होत्रे प्रददाति इदं वेदवाचनमित्युच्यते ॥

३२२ होता वेदं पत्न्यै प्रदाय मन्त्रं वाचयति अत्र होताध्वर्युर्वा-इत्याश्वलायनसूत्रात् अध्वर्युर्वा वाचयति एतत्पत्नीवेदवाचनमित्युच्यते॥

३२३ ततः पत्नी वेदशिरसा मन्त्रेण स्वनाभिं स्पृशति एतद् वेदशिरःकरणकनाभ्यालम्भनमित्युच्यते ॥

३२४ बौधायनसूत्रपठितत्त्वादध्वर्युः आश्वलायनसूत्रपठितत्वात् होता वा पत्न्याः कटौ आग्नीध्रेण पूर्वं निबद्धं योक्त्रं मन्त्रेण स्वस्वसूत्र-पठितेन विमुञ्चति एतत्पत्नीयोक्त्रविमोचनमित्युच्यते ॥

३२५ ततः पूर्ववत् होताध्वर्युर्वा तद्योक्त्रं पत्न्यञ्जलौ निधाय तस्मिन् जलमानयति मन्त्रेण पत्नी तु तेन जलेन स्वमुखमार्जनं आह्वाङ्गे करोति इदं मुखविमार्जनमित्युच्यते ॥

३२६ ततो गार्हपत्यं परिषेचयित्वा चतस्रः समिधो मन्त्रैः आधा-पयित्वा पुनः परिषेचयति एतद् उत्तरगार्हपत्यसमिदाधानमित्युच्यते ॥

३२७ ततः पत्नी तूष्णीं यथागतं तीर्थेन विहाराद्बहिर्निष्क्रामति एतत् पत्नीनिष्क्रमणमित्युच्यते ॥

३२८ अध्वर्युः उत्तरेण गार्हपत्यं प्राङागत्य आज्यस्थाल्याज्येन ध्रुवां मन्त्रेण पूरयति यजमानोऽपि तं मन्त्रं पठति एतत् ध्रुवाप्यायनमि-त्युच्यते ॥

३२९ ततो यजमानः स्वभागं ब्रह्मणा प्राशित्रहरणस्य पश्चात् कुशेषु वेद्यां स्थापितं मन्त्रेण प्राश्नाति एतद्यजमानभागप्राशनमित्युच्यते।

३३० ततोऽध्वर्युः आहवनीये आज्यस्थाल्याज्येन स्रुवेण देवदे-वताकया ऋचा एकामाहुतिं हुत्वा तथैव अल्पान्तरैर्यजुर्मन्त्रैर्नवाहुती-र्हुत्वा चतसृभिर्व्याहृतिभिश्चतस्र आहुतीर्हुत्वा द्वाभ्यामग्नीवरुणदेव-ताकाभ्यां ऋग्भ्यां हुत्वा द्वाभ्यामृग्भ्यां अयसे अग्नये हुत्वा देवदेवता-कया एकया ऋचा हुत्वा एकया ऋचा अग्नये स्विष्टकृते हुत्वा प्रजा-पतिदेवताकया एकया ऋचा जुहोति अयं होमः अध्वर्युकर्तृकनित्य-प्रायश्चित्तहोम इत्युच्यते ॥

३३१ ततो वेद्यास्तृतसर्वबर्हिर्मुष्टिभ्यः प्रत्येकं किंचित् किंचिद्

गृहीत्वा ध्रुवायां मन्त्रेण समज्य मन्त्रेणाहवनीये प्रक्षिपति तदेतद्बर्हिरेकदेशानुप्रहरणमित्युच्यते ॥

३३२ तत उत्थाय दक्षिणं पादं वेदिमध्ये निधाय ध्रुवया मन्त्रेण जुहोति सोऽयं समिष्टयजुर्होम इत्युच्यते ॥

३३३ येन मन्त्रेण जुहोति स मन्त्रः समिष्टयजुरित्युच्यते ॥

३३४ ततः प्रणीतापात्रं वेद्यां निधाय यजमानं मन्त्रं वाचयति ततोऽध्वर्युयजमानौ प्रतिदिशं प्रणीताजलेन कुशैर्मार्जयति । प्राच्यां दिशि देवा इत्यादिमन्त्रेण प्राच्यां, दक्षिणस्यामित्यादिमन्त्रेण दक्षिणस्यां, ततोऽप उपस्पृश्य प्रतीच्यमित्यादिमन्त्रेण प्रतीच्यां, उदीच्यामित्यादिमन्त्रेणोदीच्यां, ततोऽध्वर्युः प्रणीताजलशेषं वेद्यां मन्त्रेण प्रक्षिपति एतत्प्रणीताप्रणयननिनयनमित्युच्यते ॥

३३५ होता तु पूर्वोक्तपत्नीयोक्त्रविमोचनानन्तरमेव तद्योक्त्रं गृहीत्वा गार्हपत्यस्य पश्चाद् द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि वेदतृणानि निधाय अग्निहोत्रहवणीं जलपूर्णां तस्योपरि निधाय वेदतृणैरभिमृश्य पत्नीं मन्त्रं वाचयति ततः प्रतिदिशमुदकमूर्ध्वं सिञ्चन् तथैवोदकमूर्ध्वं सिञ्चतीं पत्नीं मन्त्रं वाचयति तदेतदुदकोदुनयनमित्युच्यते ॥

३३६ तत एकया ऋचा एकेन यजुर्मन्त्रेण च अग्निहोत्रहवणीगतेन जलेन दर्भैर्होता पत्नी च आत्मानं मार्जयेते ततो यजुर्मन्त्रेण उभौ निर्ऋतिदिशि जलं सिञ्चतः ततो होता वेदतृणानामधस्तात् कृतायां पत्न्यञ्जलौ तथाकृते स्वसव्यहस्ते च दक्षिणहस्तेन अग्निहोत्रहवणीमादाय तज्जलं सर्वं प्रक्षिपति तदेतदग्निहोत्रहवणीजलनिनयनमित्युच्यते॥

३३७ होता वेदतृणानि अग्रभागे दक्षिणहस्तेन धृत्वा तन्तुमन्तता मन्त्रेण गार्हपत्यादारभ्याहवनीयपर्यन्तं अविच्छिन्नं स्तृणाति एतत् वेदस्तरणमित्युच्यते ॥

४३८ तत आहवनीयस्य वायव्यदेशे तिष्ठन् आज्यस्थाल्याज्येन स्रुवेण त्रिभिर्ऋङ्मन्त्रैः प्रत्येकं हुत्वा तिसृभिर्व्याहृतिभिश्च प्रत्येकं हुत्वा समस्तव्याहृतिमन्त्रेण जुहोति अयं सप्ताहुतिहोमः होतृकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३३९ ततस्तत्रैव तिष्ठन् एकया ऋचा आहवनीयमुपतिष्ठते तत-स्तीर्थेन निष्क्रामति सा ऋक् होतृकर्मणां मध्ये चरमकर्मकरणत्वात् संस्थाजप इत्युच्यते ॥

३४० ब्रह्मा तु प्रणीताप्रणयननिनयनानन्तरं होतृवत् तत्रैव तिष्ठन् आहवनीये सप्ताहुतीर्हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रामति अयं होमो ब्रह्मकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते ॥

३४१ एतद्धोमानन्तरं यजमान उत्थाय प्राङ्मुखो भूत्वा स्वस्था-नादारभ्य त्रिभिर्यजुर्मन्त्रैः प्रत्येकं दक्षिणेन पदा द्वाभ्यां पादाभ्यां चतुर्थेन वा प्राचीं दिशं गच्छति तत्रैव स्थित्वा एकं यजुर्मन्त्रं पठति एतत्कर्म विष्णुक्रमक्रमणमित्युच्यते ॥

३४२ ते च मन्त्रा विष्णुक्रमपदवाच्या भवन्ति ॥

३४३ ततस्तत्रैव तिष्ठन् मन्त्रेणाहवनीयमुपतिष्ठते एतदाहवनीयो-पस्थानमित्युच्यते ॥

३४४ ततो बहिर्निष्क्रम्य तत्रैव वा तिष्ठन् मन्त्रेणादित्यमुपतिष्ठते एतदादित्योपस्थानमित्युच्यते ॥

३४५ ततो द्विषन्तं ध्यायन् मन्त्रेण दर्भेणात्मानं मार्जयते एत-दात्ममार्जनमित्युच्यते ॥

३४६ ततो दर्भं निरस्याप उपस्पृश्य स्वहृदयं मन्त्रेणाभिमृशति तदेतत् हृदयाभिमर्शनमित्युच्यते ॥

३४७ ततोऽप उपस्पृश्य उदङ्मुखः सन् मन्त्रेण प्रदक्षिणमावृत्य मन्त्रेणापसव्यमावर्तते एतद्यजमानावर्तनमित्युच्यते ॥

३४८ तत उपविश्याहवनीये मन्त्रेण समिधमाधाय मन्त्रेणाहव-नीयमुपस्थाय स्वायतन एव तिष्ठन् द्वाभ्यामृग्भ्यां एकेन यजुर्मन्त्रेण च गार्हपत्यमुपतिष्ठते तस्मिन् यजुर्मन्त्रे तु मह्यमितिपदानन्तरं स्वनाम शर्मपदघटितं चतुर्थ्यन्तमुक्त्वा ज्योतिष्मतीमित्यादिमन्त्रशेषं ब्रूयात् ततो यावन्तो यजमानस्य पुत्राः तावतां ज्येष्ठानुक्रमेण प्रत्येकं स्वनामवत् चतुर्थ्यन्तमुक्त्वा ज्योतिष्मतीमित्यादिमन्त्रशेषमुक्त्वा अन्ते तन्तवे इति-चतुर्थ्यन्तमुक्त्वा ज्योतिष्मतीमित्यादि ब्रूयात् एतद्यजमानकर्तृकगार्हप-त्योपस्थानमित्युच्यते ॥

३४९ तत एकं यजुर्मन्त्रं पठति स यज्ञसमाप्तौ पठ्यमानत्वात् यज्ञविमोक इत्युच्यते ॥

३५० ततः पूर्ववत्तिरःपवित्रमप आचम्य आहवनीयं परिषिच्य समन्त्रकं चतस्रः समिध आधाय पुनः परिषिञ्चति अयमुत्तराहवनीयपरिषेक इत्युच्यते ॥

३५१ तत एकामृचं जपति सा ऋक् यज्ञस्य पुनरालम्भ इत्युच्यते ॥

३५२ ततः प्रागुद्गीय गोपदवतीमृचं जपति अयं गोमतीजप इत्युच्यते ॥

३५३ ततो ब्राह्मणभोजनाय आत्मानं बौधायनसूत्रोक्तमार्गेण प्रेष्यति सो ऽयमात्मसंप्रेष इत्युच्यते ॥

३५४ उक्तान्यैष्टिकपदार्थानां नामानि इदानीमाधानसंबन्धिनां पदार्थानां नामान्युच्यन्ते तत्र गार्हपत्यदक्षिणाग्न्याहवनीयनामकानां त्रयाणामग्नीनां तत्तदायतनेषु स्वस्वसूत्रोक्तविधिना स्थापनं अग्न्याधानमाधानमिति चोच्यते ॥

३५५ समस्तपातकनिबर्हणार्थं आधानाधिकारसिद्ध्यर्थं आधानात्प्राक् स्थण्डिलकरणाद्यग्निप्रतिष्ठापनान्तं कृत्वा आघारहोमानन्तरं गायत्रीमन्त्रेण सवित्रे चरुं हुत्वा स्विष्टकृदर्थं अवदाय अन्तःपरिधि सादयित्वा एकविंशत्यृचस्य यद्देवा इत्यादिकस्य प्रथमानुवाकस्य एकैकया ऋचा आज्याहुतीर्हुत्वा त्रयोदशर्चस्य पदवीर्यमित्यादिकस्य द्वितीयानुवाकस्य एकैकयर्चा तथैव हुत्वा सप्तदशर्चस्य आयुष इत्याद्यनुवाकस्य ऋग्भिस्तथैव हुत्वा सिंहे व्याघ्र इत्यादिकस्याष्टर्चस्यानुवाकस्य ऋग्भिस्तथैव हुत्वा समित्पाणिर्यजमानः स्वायतने तिष्ठन् वैश्वानरायेत्यादिकेन द्वादशर्चेनानुवाकेनाग्निमुपस्थाय त्रयोदश समिध आधाय एकया ऋचा हुत्वा स्विष्टकृदादिहोमशेषं समाप्य वरं दत्वा अग्नेः पुरस्तात् अश्वत्थपर्णेषु हुतशेषं निदध्यात् । अयं होमः पापतारतम्यानुसारेण संवत्सरं मासं चतुर्विंशतिदिनानि षट् दिनानि त्रीणि दिनानि वा क्रियते । अस्य होमस्य अमावास्यायां पौर्णमास्यां वा आरम्भः यावन्ति होमदिनानि तावत्सु दिनेषु स्त्रीसंगममांसभक्षणपर्यङ्कशयनासत्यभाषणवर्जनं अयं कूष्माण्डपदेन श्रुत्यादिषु प्रसिद्धः ॥

३५६ अथान्यो होमः तत्र पूर्वाह्णे गृह्यमग्निं प्रतिष्ठाप्य आघारहोमान्तं कृत्वा गायत्र्या सवित्रे चरुणा हुत्वा अग्ने नयेति षडृचेनानुवाकेन प्रत्यृचं चरुणा हुत्वा सहस्रशीर्षेत्यष्टादशर्चेनानुवाकेन प्रत्यृचं हुत्वा अग्नेर्मन्व इति द्वाविंशत्यृचेनानुवाकेन तथैव हुत्वा या वामिन्द्रेति चतसृभिर्ऋग्भिस्तथैव हुत्वा यो वामिन्द्रेत्यष्टाभिर्ऋग्भिस्तथैव हुत्वा पवमानः सुवरिति सप्तदशर्चेनानुवाकेन तथैव हुत्वा यद्देवा इति विंशत्यृचेनानुवाकेन तथैव हुत्वा वैश्वानरो न इत्यष्टाभिर्ऋग्भिस्तथैव हुत्वा चतसृभिर्व्याहृतिभिः प्रत्येकं हुत्वा स्विष्टकृदादिहोमशेषं समापयेत् । ततो जलपूर्णं पात्रं गृहीत्वा नैर्ऋतीं दिशं गत्वा चतुष्पथे गोमयेनोपलिप्य तत्रोपविश्य जलपात्रं पुरस्तान्निधाय तस्य जले आत्मनः प्रतिबिम्बं अवेक्षमाणो मन्त्रान् जपेत् । ते च मन्त्राः सिंहे मे इत्यादयस्त्रिसप्ततिसंख्याकाः । ततस्तत्पात्रगतं जलं नैर्ऋत्यां दिशि स्ववैरिणो यस्यां दिशि निवसन्ति तस्यां वा दिशि मन्त्रेण निनयति । ततस्तत्पात्रं तस्यामेव दिशि परास्य पृष्ठतो ऽनवेक्षमाणः सन् यथागतमागत्य हस्तौ पादौ प्रक्षाल्य आचमनं कुर्यात् । एवमेकाहं त्र्यहं सप्ताहं पञ्चदश दिनानि एकं मासं मासद्वयं षण्मासं संवत्सरं वा शक्त्यनुसारेण कुर्यात् कर्मान्ते ब्राह्मणान् पायसान्नेन भोजयेत् गोहिरण्यादि च ब्राह्मणेभ्यो दद्यात् अयं होमः आधानाधिकारसंपादकसमस्तपापक्षयकरः अथ च सर्वकर्मानुष्ठानाधिकारसंपादकः सो ऽयं गणहोम इत्युच्यते

३५७ मृदा निर्मितं समचतुरस्रं प्रतिदिशं अष्टादशाङ्गुलविस्तृतं होमानुसारेण ततो ऽधिकं वा न तु ततो न्यूनं चतुरङ्गुलोच्चं मध्योन्नतं स्थण्डिलमित्युच्यते ॥

३५८ दक्षिणात्वेन दीयमानं धेनुसुवर्णादिकं व्रियते ऽनेनेति करणव्युत्पत्त्या वर इत्युच्यते ॥

३५९ आधानात्पूर्वदिने नान्दीश्राद्धं क्रियते यत्र सत्यवसुसंज्ञका विश्वेदेवाः तिलकार्यं यवैरेव क्रियते पैतृकमपि कर्म सव्येनैव क्रियते विश्वेषां देवानां पूजनानन्तरं मातृपितामहीप्रपितामह्य इज्यन्ते ततः पितृपितामहप्रपितामहाः ततो मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीकाः दर्भास्तु ऋजवो ऽमूलाः सायाः पितृकार्ये ऽपि भवन्ति

ब्राह्मणाश्च पितृस्थाने ऽपि युग्मा भवन्ति द्राक्षाः आमलकी फलानि चदक्षिणात्वेन दीयन्ते पितॄणां नामगोत्रोच्चारणं नैव क्रियते किंतु तस्य स्थाने सर्वत्र नान्दीमुखा इत्युच्यते सर्वत्र मन्त्रान्ते वृद्धिरिति पदमुच्चार्यते तद् नान्दीश्राद्धं वृद्धिश्राद्धमिति चोच्यते ॥

४६० आधानात्पूर्वदिने रात्रौ उदकशान्तिः प्रतिसरबन्धश्च क्रियते शुचिर्भूत्वा कर्म आधानाङ्गभूतत्वेन संकल्प्य गोमयेन गोचर्ममात्रं स्थलं उपलिप्य दर्भेण यज्ञियकाष्ठेन वा तूष्णीं भूमिमुद्धृत्य जलेन तूष्णी मवोक्ष्य तत्र पञ्चप्रस्थपरिमितव्रीहीणां तन्दुलानां वा स्थण्डिलं कृत्वा स्थण्डिलमध्ये प्रतीचीमारभ्य प्राचीपर्यन्तं मन्त्रेण दर्भेण लेखां कृत्वा स्थण्डिलोपरि दक्षिणभागे मन्त्रेण पूर्ववल्लेखां कृत्वा उत्तरभागे तथैव लेखां कृत्वा स्थण्डिलमध्ये दक्षिणां दिशमारभ्य उदीचीपर्यन्तं लेखां कृत्वा ऽप उपस्पृश्य नैर्ऋतीं दिशमारभ्य वायवीपर्यन्तं लेखां मन्त्रेण कृत्वा आग्नेयीमारभ्य ऐशानीपर्यन्तं लेखां मन्त्रेण कृत्वा लेखाकरणं दर्भं यज्ञियकाष्ठं वा व्याहृतिमन्त्रेण उत्तरस्यां दिशि निरस्य स्थण्डिलाद्बहिः उत्तरतः प्रागग्रान् दर्भानास्तीर्य तेषु प्रोक्षणीमुदकुम्भं पञ्चप्रस्थयवपूर्णकांस्यपात्रे सूत्रद्वयं च सादयित्वा सर्वाणि पात्राणि दर्भैः प्रच्छाद्य पवित्रं तूष्णीं कृत्वा प्रोक्षणीपात्रमुत्तानं कृत्वा तत्र उदगग्रं पवित्रं निधाय उदकमानीय तूष्णीं त्रिरुत्पूय प्रोक्षणीं पवित्रेण प्रोक्ष्य उदकुम्भमुत्तानं कृत्वा पवित्रेण प्रोक्ष्य कांस्यपात्रस्थसूत्रद्वयं च प्रोक्ष्य उदकुम्भं सुगन्धिद्रव्येण गुग्गुल्वादिना धूपयित्वा स्थण्डिलोपरि प्रागग्रान् दर्भानास्तीर्य गन्धोदकेनाक्षतपुष्पैः फलैश्चावकीर्य तत्रोदकुम्भं निधाय तस्योपरि पवित्रमुदगग्रं निधाय उदकुम्भे उदकं मन्त्रेण पूरयति । उदकुम्भे गायत्रीमन्त्रेण यवाक्षततन्दुलानोप्य उदकुम्भस्य समन्तात् व्याहृतिमन्त्रेण पुष्पदूर्वाफलान्यवकीर्य उदकुम्भं दूर्वादर्भैः प्रच्छाद्य उदकुम्भस्य पुरस्तात् उदगग्रान् दर्भान् मन्त्रेण परिस्तीर्य दक्षिणतो व्याहृति मन्त्रेण प्रागग्रान् पश्चिमतः उदगग्रान् मन्त्रेण उत्तरतः प्रागग्रान् मन्त्रेण परिस्तीर्य चतुरो ब्राह्मणान् चतसृषु पूर्वादिदिक्षु जपकर्तॄन् वृत्वा यजमानो ब्राह्मणाश्च दर्भहस्ताः दर्भाग्रैः कुम्भं स्पृशन्तो जपन्ति, शं न इत्यृचं गायत्रीं पच्छो ऽर्द्धर्चशः सर्वां च ततो वेदादीन् चतुरः ततः

त्रुण्वेति सूक्तं रक्षोघ्नं मदे चिदित्यर्धर्चे इन्द्रो दधीच इत्यनुवाकं यत इन्द्रेति द्वे ऋचौ महां इन्द्रेति द्वे ऋचौ यद्देवाः पुरःसद इति पञ्चपर्यायान् अग्नये रक्षोघ्ने इति पञ्च अग्निरायुष्मानिति पञ्च या वामिन्द्रेति चतस्रः यो वामिन्द्रेत्यष्टौ अग्ने यशस्विन्निति चतस्रः हिरण्यवर्णाः शुचय इति चतस्रः ऋताषाड्ऋतेत्यनुवाकं नमो अस्तु सर्पेभ्य इति चतस्रः अयं पुरो हरीति पञ्च पर्यायान् आशुः शिशान इत्यनुवाकं शं च मइत्यनुवाकं ममाग्ने वर्च इत्यनुवाकं अग्नेर्मन्व इत्यनुवाकं समीची नामासीति षट् पर्यायान् हेतयो नाम स्थेत्यनुवाकं शतायुधायेति पञ्च भूतं भव्यं भविष्यदित्यनुवाकं चक्षुषो हेतिरित्यारभ्य भ्रातृव्यं पातयामीत्यन्तं प्राणो रक्षतीत्यनुवाकं सिंहे व्याघ्र इत्यनुवाकं अहमस्मीत्यनुवाकं ता सूर्या इत्यनुवाकं अग्निर्नः पात्वित्यनुवाकं स्वध्यास्येत्यनुवाकं नवो नव इत्यनुवाकं अग्नये इत्यादीनुपहोममन्त्रान् दधिक्राव्ण इत्यृचं आपो हि ष्ठेत्यृचं यच्चिद्धि त इत्यृचं इमं म इत्यृचं पावमानीः उदुत्तममिति सूक्तं परिणो रुद्रस्येति सूक्तं ब्रह्म जज्ञानमिति ब्रह्मसूक्तं विष्णोर्नु कमिति विष्णुसूक्तं जातवेदस इति सूक्तं हिरण्यवर्णामिति श्रीसूक्तं तच्छंयोरित्यनुवाकं नमो ब्रह्मण इति मन्त्रं त्रिवारं जपन्ति ततः प्रणवेनोदकुम्भमुत्थाप्य प्रणवं त्रिरुच्चार्य पुनरुदकुम्भं तत्रैव स्थापयित्वा वृता ब्राह्मणाः सपत्नीकं यजमानं उदकुम्भोदकेन दर्भाग्रैः व्याहृतिभिः प्रोक्षन्ति इदं सर्वं कर्म उदकशान्तिरित्युच्यते ॥

३६१ अथ ब्राह्मणाः सूत्रद्वयमादाय नागेशं वासुकिं तत्र ध्यात्वा त्र्यम्बकमन्त्रेण त्रिवारं ऊर्ध्वं भस्मना सूत्रद्वयमालिप्य अग्निरायुष्मानिति मन्त्रेण यजमानस्य दक्षिणहस्तं गृहीत्वा बृहत्सामेति मन्त्रेण एकं सूत्रमपरं सूत्रं पत्न्या वामहस्ते बध्नीयुः बन्धनस्थाने यो ब्रह्मणेति मन्त्रेण भस्मना रक्षां कुर्युः यजमानः पूर्वस्यां दिशि जपकर्त्रे ब्राह्मणाय हिरण्यं दद्यात् दक्षिणस्यां दिशि जपकर्त्रे रजतं पश्चिमदिशि जपकर्त्रे कांस्यं उत्तरस्यां दिशि जपकर्त्रे वस्त्रं दद्यात् इदं कर्म प्रतिसरबन्ध इत्युच्यते ॥

३६२ बध्यमानं सूत्रद्वयं प्रतिसरपदवाच्यम् ॥

३६३ ततः प्रातःकाले एकविंशतिदर्भाणां त्रीणि पिञ्जूलानि कृत्वा एकेन पिञ्जूलेन कण्ठमारभ्य मुखपर्यन्तं मार्जयेद् द्वितीयेन नाभि

मारभ्य कण्ठपर्यन्तं मार्जयेत् तृतीयेन नाभेरधस्तात् गुल्फपर्यन्तं मार्जयेत् ततः पिञ्जूलानि प्रोह्य उदीच्यां दिशि परित्यजेत् ततो ऽप उपस्पृशति एतत्कर्म पवनमित्युच्यते ॥

३६४ सप्तानां दर्भाणां स्तबकः पिञ्जूलमित्युच्यते ॥

३६५ ततः आपो हि ष्ठेति तिसृभिर्ऋग्भिः प्रत्यृचं जलमाचामेत् एतत् मन्त्राचमनमित्युच्यते ॥

३६६ तत आत्मानं मन्त्रैर्मार्जयते ते च मन्त्राः दधिक्राव्ण इत्येका, यत्किं चेदमित्येका, कितवास इत्येका, हिरण्यवर्णा इति चतस्रः, पवमानः सुवर्चित्यनुवाकः, कया न इति तिस्रः, तरत्समन्दीति चतस्रः, समस्तव्याहृतिः, शं नो देवीरित्येका, एवं पत्न्यपि पवनादि कुर्यात् इदं मन्त्रमार्जनं मन्त्रप्रोक्षणमिति चोच्यते ॥

३६७ ऋत्विजश्च पवनादित्रयं कुर्युः ततः पुण्याहवाचनं तत्राग्निः प्रीयतामिति विशेषः । तच्चेत्थम् । आदौ गणपतिं षोडशोपचारैः संपूज्य मही द्यौरिति भूमिं संप्रार्थ्य ओषधयः समिति भूमौ शक्त्यनुसारेण व्रीहीणां राशिद्वयं उदक्संस्थं विधाय आकलशेष्विति राश्योः कलशद्वयं निधाय इमं मे गङ्ग इति कलशयोर्जलमापूर्य गन्धद्वारामिति गन्धं प्रक्षिप्य या ओषधीरिति सप्तधान्यानि प्रक्षिप्य काण्डात्काण्डादिति दूर्वाः अश्वत्थे व इति पञ्च पल्लवान् स्योना पृथिवीति सप्त मृदः स हि रत्नानीति पञ्च रत्नानि हिरण्यरूप इति हिरण्यं च प्रक्षिप्य युवाः सुवासा इति द्विसूत्र्या कलशकण्ठौ वेष्टयित्वा पूर्णा दर्वीति कलशयोरुपरि पूर्णपात्रे स्थापयेत् । ततः कलशयोस्तत्त्वायामीति वरुणमावाह्य षोडशोपचारैः पूजयित्वा युग्मान् ब्राह्मणान् उदङ्मुखानुपवेशयेत् । ब्राह्मणास्तु सपत्नीकं यजमानं प्रतिब्रूयुः मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भवेति । एताः सत्या आशिषः सन्तु इति यजमानो ब्रूयात् । ततः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णमुत्तरकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुःप्रमाणेन पुण्याहं दीर्घमायुरस्तु इत्यनेन मन्त्रेण उत्तरकलशं स्वशिरसा पत्नीशिरसा विवाहादौ संस्कार्यशिरसा च संयोज्य कलशस्थाने कलशं

स्थापयित्वा पुनर्गृहीत्वा मन्त्रेण तथैव कृत्वा पुनर्गृहीत्वा मंत्रेण तथैव इति त्रिवारं कुर्यात् । ततो यजमानः शिवा आपः सन्त्विति भवन्तो ब्रुवन्त्विति ब्राह्मणहस्ते जलं दद्यात् । ब्राह्मणाश्च शिवा आपः सन्त्विति वदेयुः । ततो यजमानो गन्धाः पान्तु सुमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्त्विति ब्राह्मणहस्ते चन्दनं दद्यात् । ब्राह्मणास्तु गन्धाः पान्तु सुमङ्गल्यं चास्त्विति वदेयुः । अक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्त्विति यजमानः अक्षतान् दद्यात् । ते च अक्षताः पान्तु आयुष्यमस्तु इति ब्रूयुः । ततः पुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्त्विति यजमानः पुष्पाणि दद्यात् । ब्राह्मणास्तु पुष्पाणि पान्तु सौश्रियमस्त्विति ब्रूयुः । ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्त्विति यजमानस्ताम्बूलानि दद्यात् । ब्राह्मणास्तु ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति ब्रूयुः । दक्षिणाः पान्तु बहुधेयं चास्त्विति यजमानो दक्षिणां दद्यात् । ब्राह्मणास्तु दक्षिणाः पान्तु बहुधेयं चास्त्विति ब्रूयुः । यजमानो दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति जलं दद्यात् । ब्राह्मणास्तु दीर्घमायुरित्यादि अस्त्वित्यन्तं ब्रूयुः । ततो यजमानः यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये इति ब्रूयात् ब्राह्मणाः वाच्यतामिति ब्रूयुः यजमानः भद्रं कर्णेभिरित्यृचं द्रविणोदा द्रविणस इत्यृचं सविता पश्चातादित्यृचं नवो नव इत्यृचं उच्चा दिवीत्यृचं सं त्वा सिञ्चामीत्यर्धर्चं च पठित्वा व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानां मनः समाधीयतां इति प्रार्थयेत् । समाहितमनसः स्मः इति ब्राह्मणाः । प्रसीदन्तु भवन्तः इति यजमानः प्रसन्नाः स्मः इति ब्राह्मणाः । ततो यजमानः शान्तिरस्त्वित्यादिभिः इष्टसम्पदस्त्वित्यन्तैराशीर्मन्त्रैः पात्रे जलं सिञ्चति अरिष्टनिरसनमस्तु यत्पापं तत्प्रतिहतमस्त्विति मन्त्राभ्यां पात्राद्बहिर्जलं सिञ्चेत् पुनः यच्छ्रेयस्तदस्त्वित्यादिभिः सर्वा इष्टदेवताः प्रीयन्तामित्यन्तैर्मन्त्रैः पात्रे जलं सिञ्चेत् ततो हता ब्रह्मद्विष इत्यादिभिः शाम्यन्त्वीतय इत्यन्तैर्बहिर्जलं सिञ्चति ततः शुभानि वर्धन्ता-

मित्यादिभिः महासेनः प्रीयतामित्यन्तैः पात्रे सिञ्चति ततः पुण्याह-
कालान् वाचयिष्ये इति ब्रूयात् ब्राह्मणास्तु वाच्यतामिति ब्रूयुः यजमानः
उद्गातेव शकुनइत्यृचं याज्ययेत्यादि संस्कुरुते इत्यन्तं ऐतरेयब्राह्मणं
यत्पुण्यमित्यादि कुरुते इत्यन्तं तैत्तिरीयब्राह्मणं च पठित्वा मह्यं सह
कुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय करिष्यमा-
णस्य अमुष्य कर्मणः पुण्याहं भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु
ओं पुण्याहमिति प्रतिब्रूयुः इमे वचनप्रतिवचने त्रिवारं पठनीये ततो
यजमानः स्वस्तये वायुमित्यृचं आदित्य उदयनीय इत्यादि स्वस्त्युद्य-
न्तीत्यन्तं ऐतरेयब्राह्मणं अष्टौ देवा इत्यादि अमृतं स्वस्तीत्यन्तं तैत्ति-
रीयं च ब्राह्मणं पठित्वा मह्यमित्यादि करिष्यमाणाय अमुष्मै कर्मणे
स्वस्ति भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु आयुष्मते स्वस्तीति
ब्रूयुः एवं पूर्ववत् त्रिवारं कुर्यात् यजमानः ऋध्याम स्तोममित्यृचं सर्वा-
मृद्धिमित्यादि य एवं वेदेत्यन्तं ऐतरेयब्राह्मणं ऋध्यास्म हव्यैरित्यादि
प्रतितिष्ठतीत्यन्तं तैत्तिरीयब्राह्मणं च पठित्वामह्यमित्यादिकर्मणः ऋद्धिं
भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु कर्म ऋध्यतामिति ब्रूयुः एवं
पूर्ववत् त्रिवारं कुर्यात् यजमानः श्रिये जात इत्यृचं श्रिय एवेत्यादि य
एवं वेदेत्यन्तं ऐतरेयब्राह्मणं यस्मिन् ब्रह्मेत्यादि अमृतासतामित्यन्तं
तैत्तिरीयब्राह्मणं च पठित्वा मह्यमित्यादि अमुष्य कर्मणः श्रीरस्त्विति
भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणास्तु अस्तु श्रीः इति ब्रूयुः एवं
त्रिवारं कुर्यात् ततो मङ्गलानि भवन्तु वर्षशतं पूर्णमस्तु गोत्राभिवृद्धि-
रस्तु इत्युक्त्वा कर्मप्रधानदेवतानाम प्रथमान्तमुक्त्वा अन्ते प्रीयतामि-
त्युक्त्वा शुक्रेभिरङ्गैरित्यृचं तवष्येष इत्यादि सभासद इतीत्यन्तं ऐतरेय
ब्राह्मणं च पठित्वा शिवंशिवमित्युक्त्वा पत्नीं वामभागे उपवेश्य वास्तो-
ष्पते इति चतस्र ऋचः पठन् दक्षिणकलशं वामहस्ते उत्तरकलशं दक्षि-
णहस्ते गृहीत्वा उभयोः कलशयोः संततधारां पात्रान्तरे कुर्यात् तत-
स्तेन जलेन युग्मा ब्राह्मणाः पत्नीयजमानयोरभिषेकं दूर्वाङ्कुरैः आम्रप-
ल्लवैश्च समुद्रज्येष्ठा इति चतसृभिस्त्रायन्तामिति तिसृभिः इमा आप
इति तिसृभिः देवस्य त्वेति यजुषा समस्तव्याहृतिभिः अभिषिञ्चन्ति
ततो यजमानः ब्राह्मणेभ्यो दक्षिणां दत्त्वा पुण्याहवाचनफलसमृद्धिर-

स्त्विति भवन्तो ब्रुवन्त्विति ब्रूयात् ब्राह्मणाः पुण्याहवाचनफलसमृद्धिरस्त्विति ब्रूयुः ततो यजमानो नानानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां ददाति इदं सर्वं कर्म पुण्याहवाचनमिति स्वस्तिवाचनमिति चोच्यते ॥

३६८ ततो गौरी पद्मा शची मेधा सावित्री विजया जया देवसेना स्वधा स्वाहा मातरो लोकमातरः धृतिः पुष्टिः तुष्टिः आत्मनः कुलदेवता ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी चामुण्डा गणपतिः एतासां देवतानां षोडशोपचारैः पूजनं मातृकापूजनमित्युच्यते॥

३६९ ततः गृह्याग्नेः पश्चात् प्रागग्रान् दर्भानास्तीर्य तेषु दक्षिणतः पत्नी उपविशति उत्तरतो यजमानः तयोरुत्तरतः प्राङ्मुखाः सर्वे ऋत्विजः ततः सपत्नीको यजमानः पुरुष एवेदमिति विष्णुं स्मृत्वा पुरस्तादित्यादि निविष्टमित्यन्तं जपित्वा मासपक्षाद्युल्लिख्य अग्नीनाधास्ये इत्युपांशु चिरुच्चार्य उच्चैस्त्रिर्वदेत् ततः तन्म इत्यादि काम इत्यन्तं ऋत्विजः प्रत्याह ऋत्विजस्तु तत्त इत्यादि काम इत्यन्तं प्रतिब्रूयुः यजमानः प्रणवपूर्वकं तथेत्याह तदेतत् सर्वं आधानसंकल्प इत्युच्यते ॥

३७० ततः सपत्नीको यजमानः ब्रह्मणः पादौ उपसंगृह्य अमुकशर्माहं ब्रह्मत्वेन त्वा गच्छामि याजयतु मां भवान् चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वामुकशर्माणं वृणे इति ब्रह्माणं वृणीते ब्रह्मा महन्मे इत्यादि भुविषीयेत्यन्तं जपित्वा चन्द्रमास्तेब्रह्मा स ते ब्रह्मा ब्रह्माहं ते मानुष इति ब्रूयात् ततो होतारं वृणीते अमुकशर्माहं होत्रेण त्वा गच्छामि याजयतु मां भवान् अग्निर्मे होता स मे होता होतारं त्वामुं वृणे ततो होता महन्मे इत्यादि जपित्वा अग्निष्टे होता स ते होता होताहं ते मानुष इति ब्रूयात् ततोऽध्वर्युं वृणीते अमुकशर्माहं आध्वर्यवेण त्वा गच्छामि याजयतु मां भवान् आदित्यो मे ऽध्वर्युः स मे ऽध्वर्युरध्वर्युं त्वामुं वृणे ततो ऽध्वर्युः महन्मे वोच इत्यादि जपित्वा आदित्यस्ते ऽध्वर्युः स ते ऽध्वर्युरध्वर्युरहं ते मानुषः इति ब्रूयात् तत उद्गातृवरणं विकल्पेन अमुकशर्माहं औद्गात्रेण त्वा गच्छामि याजयतु मां भवान् पर्जन्यो मउद्गाता स मउद्गातोद्गातारं

षडुपालानि भर्जनकपालं च मेक्षणं सहहुशलाकाम् । भर्जनमेक्षणं च दारुपात्र्या सह द्वे नवे पात्रे योक्त्ररहितान्यन्यान्यपि सादयतीति विशेषः ॥

दक्षिणाग्नेर्दक्षिणतो ब्रह्मयजमानावुपविशतः । ब्रह्मवरणमन्त्रो ब्रह्माणमिति पदं विहाय पठनीयः । ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति मन्त्रस्थाने अपः प्रणेष्यामि वाचं यच्छेति पठनीयम् । ऋत्विग्यजमानशब्दनिषेधात् । एवमग्रेऽपि सर्वत्र बोध्यम् । दक्षिणाग्नेरुत्तरतः प्रणीतासादनम् । गार्हपत्यमध्यादारभ्य दक्षिणाग्निमध्यपर्यन्तं पृष्ठ्यास्तरणम् । निर्वापे विशेषः । स्फ्योपरि पात्र्यां व्रीहीन् यवांश्च भेदेन निक्षिप्य पूर्वार्धमभिमृशति । अभिमर्शनमन्त्रे त्वं देवानामसीत्यत्र त्वं पितृणामसीति वह्नितमं देवहूतममित्यत्र वह्नितमं पितृहूतममिति च देवशब्दस्थाने पितृशब्दः प्रयुज्यते । अस्य मन्त्रस्य केवलप्रधानार्थत्वात् पुरोडाशीयवीक्षणं शूर्पनिरसनं च प्रतिधान्यमावर्तते । तन्त्रेणेत्यन्ये । मन्त्रयोस्तु तन्त्रपक्षे हविरर्थकपदानां द्विवचनान्तत्वेनोहः । यज्ञोपवीतं कृत्वा सोमाय पितृमते प्रकृतिवन्निर्वपति । प्रोञ्छनवस्त्रेणाग्निहोत्रहवणीं प्रोञ्छति । पितृभ्यो बर्हिषद्भ्यो यवान्निर्वपति । पितृभ्योऽग्निष्वात्तेभ्योऽपि यवानेव । निरुप्ताभिमर्शनातिशिष्टाभिमर्शनैकीकरणमन्त्राणां प्रतिधान्यमावृत्तिः । तन्त्रेणेत्यन्ये । तन्मते मन्त्रत्रयेऽपि हविर्वाचकपदानां द्विवचनान्तता । व्रीहियवयोर्भेदेन प्रोक्षणम् । व्रीह्यवघातकाले यवानुपोप्य वच्छन्ति । तन्दुलप्रक्षालनानिनयनान्ते यवानन्त्रेणोलूखले निधायावहन्ति । षडुपालान्युपदधाति गार्हपत्यस्य दक्षिणार्धे । तदुत्तरत आपितृयज्ञं वहेतिमन्त्रेणाङ्गारमानीय तदुपरि ध्रुवमसीतिमन्त्रेण भर्जनकपालमुपधायाधस्तादङ्गारैः परिचिनोति । अस्मिन् काले यवान् उलूखले तूष्णीं परितुद्य भर्जनकपाले घर्मोऽसीत्यादि मन्त्रेण प्रक्षिपति । शुक्लकृष्णादिभेदेन बहुरूपा धानाः भर्जनकौशलेन कृत्वाऽवतार्य वितुषीकृत्य द्विधा विभज्य पितृभ्यो बर्हिषद्भ्यो वः पितृभ्योऽग्निष्वात्तेभ्यो व इति क्रमेण भागद्वयमभिमृशति । ततः कृष्णाजिनावधूननादि कृत्वा धानानां द्वितीयं भागमधिवपति । असंवपन्तीतिप्रैषान्तं प्रकृतिवत्करोति । ततः पुरोडाशीयसंवपनादि प्रथनान्तं प्रकृतिवत्कृत्वा पुरोडाशस्योत्तरतो भस्ममिश्रेष्वङ्गारेषु नवं पात्रमधिश्रित्य तस्मिंस्त्रिस्तरः पवित्रं



लौकिकमाज्यमानीय तस्मिंस्तिरःपवित्रं धानानाम[illegible]
पति द्वितीये नवे पात्रे तिरःपवित्रमभिवान्यवत्साया दुग्धमानीय
तस्मिंस्तिरःपवित्रं सक्तूनोप्यैकयेषुशलाकया दक्षिणाभिमुखो रज्ज्वादिना
व्यतिषज्य मन्थति । स्थालीमुखलग्ना विप्रुषोऽन्तः प्रक्षिप्य धानानामु-
त्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रित्याज्यं प्राकृतं तदुत्तरतो निरूप्य हवींषि
पर्यग्नि कृत्वा पुरोडाशस्य त्वचं ग्राहयति । अन्ये तु धानानां भागदुघा-
भिमर्शनान्ते पुरोडाशीयसंवपनादिधानाप्रथमार्धाधिश्रयणान्तं विधाय
द्वितीयधानार्धाधिवपनार्थं कृष्णाजिनावधूननादिमन्थाधिश्रयणान्तमि-
च्छन्ति । गार्हपत्यस्य पश्चाद्दोप्य निनयनम् । अथ पैतृक्या वेदेर्मध्ये
दक्षिणाग्नेरिध्मं प्रणीय दक्षिणतो ब्रह्मयजमानौ उपवेश्य मन्त्रेण वेद-
मादत्ते । अग्नेः पूर्वार्धात् स्तम्बयजुर्हरतिमन्तर्वेदि बर्हिर्निधानम् ।
देवस्य सवितुः सवइत्यादिमन्त्रेण यत्प्रकृतौ उद्धननं तत् खननरूपमत्र
तु आलेखनरूपम् । खननाभावादितस्त्विहरेति प्रैषो न । उत्तरपरिग्रहो
ऽपि न । पत्नीसन्नहनाभावात् प्रोक्षणीरासादयेत्यादिप्रैषे पत्नीसन्नह-
नोद्देशो न । आज्यग्रहणे विशेषः । जुह्वां प्राकृतमन्त्रेण पञ्चकृत्वः षट्-
कृत्वो वा गृह्णाति । उपभृति प्राकृतमन्त्रेणैव दशकृत्वो द्वादशकृत्वो
वा गृह्णाति । ध्रुवायां तु गृह्यमाणस्याज्यस्य उभयार्थत्वाद्देवपदानन्तरं
पितृपदस्यापि प्रयोगः । तथा च तादृशप्राकृतमन्त्रेणैव षट्कृत्वः पञ्च-
कृत्वो वा गृह्णाति । अनुमन्त्रणे यजमानस्यान्तिममन्त्रावृत्तिः । तूष्णीं
प्रस्तरग्रहणम् । बर्हिःसन्नहनास्तरणं दक्षिणावेद्यंसे प्राचीनावीतं कृत्वा
दक्षिणांसादारभ्य प्रदक्षिणमग्न्यभिमुखैः सञ्चिकृष्टैः प्रथममुष्टिदर्भैरग्निम
भितः परिस्तृणाति । प्रथममुष्टिदर्भमूलानि द्वितीयमुष्टिदर्भाग्रैः प्रच्छा-
दयंस्त्रेधैव परिस्तृणाति । यज्ञोपवीती त्रिः प्रदक्षिणं परीत्य प्रस्तर-
पाणिर्द्वौ परिधी परिदधाति । नोत्तरम् । युनज्मि त्वा ब्रह्मणा दैव्येन
पित्र्येण हव्यायास्मै इत्यादि प्राकृतमन्त्रेण यजमानोऽग्निं योगेन
युनक्ति । ऊर्ध्वे समिधावग्नावाधायाग्नेः पश्चाद्विधृती सादयित्वा
तयोरुपरि तूष्णीं प्रस्तरं न्यस्यति । जुह्वादीन्मन्त्रेण प्रकृतिवत्सादयति ।
हविष्यासने विशेषः । स्योनन्तइति मन्त्रेण पात्र्यां सकृदुपस्तीर्य पात्रा-
न्तरे धानार्थमुपस्तृणाति । तन्मन्त्रे धानापरपदानां बहुवचनान्तत्वम् ।

व्रीहिपदस्थाने यवपदं च । पात्रान्तरं करम्भार्थमुपस्तृणाति । मन्त्रे तु यथार्थमूहो बोध्यः । धानानामभिघारणे उद्वासने आज्यसंतर्पणे मन्त्रस्य यथार्थमूहः । एवं करम्भस्यापि । अध्वर्युः सपुरोडाशां दारुपात्रीमाज्यस्थालीं चादायायतो गच्छति । तस्याः पश्चादन्यः कश्चिद्धाना गृहीत्वा गच्छति । करम्भमादाय तथैवान्यः । अध्वर्युर्गार्हपत्यान्वाहार्यपचनयोर्मध्येन गत्वाऽग्नेः पश्चाद्दक्षिणतः पुरोडाशमासादयति । तस्योत्तरतो धानास्तस्योत्तरतः करम्भम् । वेद्या दक्षिणतः परिश्रयणं निदधाति । वेद्या दक्षिणेंऽसे स्तीर्णे बर्हिषि कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशामग्राहतं रूप्यं च निदधाति । वेद्या उत्तरत उदकुम्भौ । वेद्या दक्षिणतो ब्रह्मयजमानावुपविशतः । उत्तरतोऽध्वर्युराग्नीध्रश्च । ततो यजमान आसन्नान्यभिमन्त्रयते । एतस्मिन् काले प्रतिप्रस्थाता पाणी संमृश्य प्राकृतवेद्यां पुरोडाशीयपात्राण्यासाद्य प्रतिपुरुषमेकातिरिक्तानेककपालान् चैयम्बकान्पुरोडाशांस्तूष्णीं निरुप्योप्य निनयनान्तं करोति । अध्वर्युर्होतारमामन्त्र्य अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति प्रेष्यति । प्रणवे प्रणवे एकैकां समिधमाधायैकां समिधमवशेषयति । अग्निर्देवो देवान्पितृन्यक्षत्सीदेत्येतावानेव प्रवरः । आज्यभागानन्तरं प्राचीनावीतिन ऋत्विजो व्यपक्रामन्ति । यजमानोऽग्निं परीत्योत्तरत उपविशति । अध्वर्युस्तस्य बाह्यतोऽग्निं परीत्य दक्षिणतस्तिष्ठति । तस्य बाह्यतोऽग्निं परीत्य गत्वा ब्रह्मोपविशति । आग्नीध्रस्तस्य बाह्यतोऽग्निं परीत्य दक्षिणतो गत्वा तिष्ठति । इदमुक्तमृत्विजामितस्ततो गमनं व्यपक्रमणमित्युच्यते ।

५०७ विपरिहरन्ति हवींषि स्रुचश्च । पुरोडाशं धानानामग्रेण नीत्वोत्तरतः सादयति । करम्भं धानानां पश्चान्नीत्वा दक्षिणतः सादयति । धाना यथास्थिता भवन्ति । जुहूमुपभृतोऽग्रेण नीत्वोत्तरतः सादयति । ध्रुवामुपभृतः पश्चान्नीत्वा दक्षिणतः सादयति । उपभृत्तथैव तिष्ठति । वेदिं परिश्रित्योत्तरतो द्वारं कृत्वा परिकर्मिणमाह । अनेनोदकुम्भेन सन्ततया धारया त्रिरपसलैः परिषिञ्चन्परीहीति । आग्नीध्रः प्राचीनावीतं कृत्वा कुम्भयोरेकमादायापसलैर्वेदिं त्रिः परिषिञ्चन्पर्येति । कुम्भं यथास्थानं निधाय यज्ञोपवीतं कृत्वा पुनर्वेदिं त्रिः





प्रदक्षिणं पर्येति । पुनः प्राचीनावीत्यध्वर्युर्जुह्वामुपस्तीर्य सोमाय पितृमते ऽनुस्वा३धेत्युपोत्तमं प्लुतं कृत्वा प्रेष्यति । पूर्वार्धात्पुरोडाशस्यावद्यति । तथा धानानामवद्यति । धानोपस्थानमन्त्रे धानापरपदानां बहुवचनान्तता । अभिमर्शनमन्त्रे ऽपि तथैव । पूर्वार्धात्करम्भस्यावद्यति । अत्रैतेषां त्रयाणां सकृदवदानमभिघार्य क्रमेण प्रत्यनक्ति । तत्र मन्त्रे धानापरपदानां बहुवचनान्तता । अत्याक्रम्योत्तरतो दक्षिणामुखस्तिष्ठन्नो३ स्वा३धेत्याश्रावयति । आग्नीध्रो दक्षिणतस्तिष्ठन्नस्तु स्वा३धेति प्रत्याश्रावयति । याज्याप्रैषः सोमं पितृमन्तं स्वधा कुर्विति । स्वा३धा नम इति होत्रा वषट्कृते जुहोति । सोमस्य पितृमतो ऽहं देवयज्ययान्नादो भूयासमिति यजमानो ऽनुमन्त्रयते । अध्वर्युः पितृभ्यो बर्हिषद्भ्यो धानानां मध्यार्धादवद्यति । तथा करम्भस्य ततस्तथैव पुरोडाशस्य । वृत्रहेति यजमानस्यानुमन्त्रणे विशेषः । पितृभ्यो ऽग्निष्वात्तेभ्यो ऽपरार्धात्करम्भस्यावद्यति । ततस्तथैव पुरोडाशस्य । तथैव धानानाम् । वृत्रहेत्यनुमन्त्रणं यजमानस्य । सर्वत्रान्नाद इत्यनुमन्त्रणमित्यन्ये । स्विष्टकृदर्थं पुरोडाशस्य दक्षिणार्धादवद्यति । तथा धानानां करम्भस्य च । द्विरभिघारयति न प्रत्यनक्ति । भर्जनमेक्षणमिक्षुशलाकां चादायोदङ्ङत्याक्रामति । अग्निं कव्यवाहनं स्विष्टकृतं स्वधा कुरु इति स्विष्टकृद्याज्याप्रैषः । पूर्वा आहुतीरतिहाय दक्षिणार्धपूर्वार्धे जुहोति । यजमानो ऽग्नये कव्यवाहनाय स्विष्टकृत इदं न मम । अग्नेः कव्यवाहनस्य स्विष्टकृतो ऽहं देवयज्ययायुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्याह । अध्वर्युर्भर्जनमेक्षणमिक्षुशलाकां चानुप्रहृत्य संस्रावेणाभिजुहोति । संस्रावनिनयनान्ते सर्वे यज्ञोपवीतिनो भवन्ति । पूर्ववद्द्विपरिक्रामन्ति । पुरोडाशमाहृत्य दक्षिणतः सादयति । उत्तरतः करम्भम् । दक्षिणतो जुहूम् । उत्तरतो ध्रुवाम् । ब्रह्मयजमानौ दक्षिणत उपविशतः । उत्तरतो ऽध्वर्युराग्नीध्रश्च । चतुर्धा करणं नास्ति । इडां यजमानपञ्चमा निघ्रेण भक्षयित्वा बर्हिषि प्रक्षिपन्ति । हविरुच्छिष्टमुद्वास्य प्राचीनावीतानि कुर्वते । यजमानः पुरोडाशं धानाः करम्भं च पात्र्यां निधाय मिश्रयित्वा त्रीन् पिण्डान् कृत्वा दक्षिणश्रोणिदक्षिणांसोत्तरांसेषु अपसव्यमुद्धृत्यावीत्य तेषु पर्णसमान्निधायाद्भिर्मार्जयति । मार्जयन्तां पितरः ।

मार्जयन्तां पितामहाः । मार्जयन्तां प्रपितामहा इति मन्त्राः क्रमेण । तेषु क्रमेणैकैकं पिण्डं ददाति । एतत्ते ततामुकशर्मन्ये च त्वामन्विति प्रथमम् । ततपदस्थाने पितामह पदघटितेन द्वितीयम् । प्रपितामहपदघटितेन तृतीयम् । एषा युष्माकमियमस्माकमिमां वयं जीवा जीवन्तोऽनुसंचरन्तो भूयास्मेतिमन्त्रेणोत्तरस्यां श्रोण्यां लेपं निमार्ष्टि । इदं प्रतिपिण्डं सर्वान्ते वा । अत्र पितरो यथाभागं मन्दध्वमिति वदति । सर्वे गार्हपत्याहवनीययोरन्तरेणोदञ्चो निष्क्रम्य यज्ञोपवीतानि कृत्वाहवनीयमुपतिष्ठन्ते सुसंदृशमित्यृचा प्राणावान्तया स च प्राणो यावदुच्छ्वासप्रतिबन्धसामर्थ्यं स्यात्तावत्पर्यन्तव्यः । अमीमदन्तेत्यृचा तथैव गार्हपत्यमुपतिष्ठन्ते प्राचीनावीतानि कृत्वा दक्षिणाग्निमभिप्रपद्यन्ते अक्षन्पितरोऽमीमदन्तेत्यादिमन्त्रेण । तं प्राप्योपतिष्ठन्ते परेतन पितर इत्यृचा प्राणान्तया पूर्ववत् । अथाध्वर्युः पूर्ववदनेनोदकमनेनेत्यादिप्रैषमाह । तत आग्नीध्रः परिषेचनादिपुनः पर्येतीत्यन्तं पूर्ववत्करोति । यजमानो मार्जयन्तां पितर इत्यादिमन्त्रैः पूर्ववन्मार्जयति । पितरस्तृप्णुन्त्विति मन्त्रेण पिण्डसमीपे कशिपूपबर्हणे निदधाति । आञ्जतां पितर इत्यादिमन्त्रैः प्रत्येकं पिण्डदानक्रमेण पिण्डानाञ्जनेनाङ्क्ते । अभ्यञ्जतां पितर इत्यादिमन्त्रैः पिण्डांस्तथैवाभ्यङ्क्ते । एतानि वः पितरो वासांसीत्यादिभिस्त्रिभिर्मन्त्रैः प्रत्येकं पिण्डदानक्रमेण विभज्य त्रेधा कृतां दशां वस्त्रस्थाने ददाति । आञ्जनादिषु द्वितीयतृतीयमन्त्रयोः पितृपदस्थाने पितामहप्रपितामहपदे भवतः । ततः षड्भिर्नमस्कारैरुपतिष्ठते । नमो वः पितरो रसाय पितरो नमो वो य एतस्मिन् लोके स्थेत्यादयः षण्मन्त्राः षण्नमस्कारा इत्युच्यन्ते ॥

५०८ वीरं मे दत्तेत्यादिमन्त्रस्तस्य द्वितीयतृतीयपदयोर्मध्ये पितर इत्यस्य पितामहा इत्यस्य प्रपितामहा इत्यूहपदस्य क्रमेण प्रवेशे मन्त्रत्रयं संपद्यते । तेन मन्त्रत्रयेण वीरं याचते । उत्तिष्ठत पितरः प्रेतेत्यृचा पितॄनुत्थापयति । यन्तु पितरो यथालोकमित्यृचा पितॄन्मनसा स्वस्थाने निवेशयति । मनो न्वाहुवामह इत्यृक्त्रयेण पितॄननुगतं मन आहूयते । ततः पिण्डान् पर्यावृत्तैः सहाग्नावनुप्रहरति परिश्रयणमपनीय यज्ञोपवीतिनः सर्वे भवन्ति । देवो यज यजेत्यनुयाजप्रैषे विशेषः । इषिता दैव्याः



षिद्धा होतार इति सूक्तवाकप्रैषे विशेषः । प्रस्तरप्रहरणानुमन्त्रणे देवतामित्यस्यानन्तरं पितॄनित्यस्य प्रक्षेपः । अत्र ऋत्विङ्नामग्रहणनिषेधात्प्रकृतिप्राप्तस्याग्नीदिति सम्बोधनस्याभावात्केवलं तूष्णीं प्रदर्शयत्याग्नीध्रमीक्षते । परिधेरेकत्वात्प्राकृतपरिधिद्वयप्रहरणमन्त्रे हतमित्यस्य स्थाने हतीत्येकवचनम् । प्रहरणानुमन्त्रणे देवतास्वित्यस्यानन्तरं पितृष्विति प्रयोक्तव्यम्। पत्नीसंयाजानां निषेधः । दक्षिणाग्नौ प्रायश्चित्तफलीकरणहोमौ हुत्वा ध्रुवामाप्याययति । यजमानः स्वभागं जिघ्रन् भक्षयति। अध्वर्युः प्रायश्चित्तानि हुत्वा समिष्टयजुर्जुहोति । प्रणीतानिनयनान्तं सर्वं ब्राह्मणतर्पणान्तं याजमानं कर्म । तत्राशीर्मन्त्रेषु नामग्रहणनिषेधादाशिषमाशासे तन्तवे इत्येव ब्रूयात् । नात्र व्रतविसर्गः । प्राचीनावीतानि कृत्वा कशिपूपबर्हणादीनि द्वे द्वे उद्वासयन्ति । यज्ञोपवीतिनः प्रजापते न त्व दित्यृचा गार्हपत्यमुपतिष्ठन्ते । यदन्तरिक्षं पृथिवीमित्यृचं जपन्ति । सर्वाग्निप्रणयने तु यथास्थानमग्निमानयन्ति । एतावत्सपरिकरं कर्म साकमेधपर्वान्तर्गतं पितृदेवताकत्वान्महापितृयज्ञः पित्र्येष्टिरिति चोच्यते ॥

५०९ एतदनन्तरं प्रतिप्रस्थाता त्रैयम्बकाननभिघारितान्पुरोडाशानुद्वास्य शरावे प्रक्षिप्य कपालान्युद्वासयति । अध्वर्युर्नीललोहिते सूत्रे तथा जयायां पलाशपर्णानामन्तिमं पर्णं तथा ग्रामसमीपस्थद्रुमशाखाद्दक्षिणाग्नेर्वा एकमुल्मुकं दर्भानुदपात्रं चादत्ते । यावन्तो गृह्याः स्मेत्यादिमन्त्रेण सर्वे गार्हपत्यमुपतिष्ठन्ते । उदङ्मुखाः किंचित्स्वगृहाद्बहिर्गत्वा चतुष्पथं प्राप्य तत्रोपलिप्योल्मुकं समाधाय ज्वलयित्वा परिस्तीर्यान्तिमे पलाशपर्णे सर्वेषां त्रैयम्बकाणामुत्तरार्धात्सकृत्सकृदवदायोपस्तरणाभिघारणवर्जं एक एव रुद्रो न द्वितीयायेत्यादिमन्त्रेण तिष्ठन् जुहोति । रुद्रायाम्बिकायाइदं न ममेति यजमानस्य त्यागः । अन्तिमपर्णं वृष्णगोष्ठे आखुवटे * वा न्यस्यति । त्रैयम्बकाणामेकैकं प्रतिपुरुषं प्रयच्छति । द्वौ यजमानाय । सर्वे दक्षिणानूरूनुपघ्नानास्त्र्यम्बकं यजामह इत्यृचाग्निं प्रदक्षिणं परियन्ति । उत्तरतः स्थित्वा भगाय स्थेति मन्त्रेण पुरोडाशान् हस्ताभ्यामूर्ध्वं गृह्णन्ति । एवं प्रदक्षिणगमनादि त्रिः कुर्वन्ति ।

* आखुवटो मूषकबिलम् ।

पतिकामा कन्या तु सव्यमूत्रमपघ्नानाऽपसव्यं पर्यंति । पुष्टिवर्धनपदस्थाने पतिवेदनपदं तथा चतुर्थपादस्थाने इतो मुक्षीय मा पतेरिति च विशेषः । ततोऽध्वर्युः सर्वान्पुरोडाशान्प्रजया त्वा पशुभिरित्यादिमन्त्रेण यजमानस्याञ्जलावावपति । अनेनैव मन्त्रेण यजमानः पत्न्यञ्जलावावपति । पत्नी भगकामाय दुहितुरञ्जलौ भगेन त्वा संसृजामीत्यादिमन्त्रेणावपति । अध्वर्युः सर्वान् पुरोडाशान् गृहीत्वा तृणनिर्मिते मूते प्रक्षिप्य नीललोहिताभ्यां सूत्राभ्यां विविधं बध्वा तत्प्रदेशएव शुष्के स्थाणावर्धच्छिन्ने वृक्षस्य शुष्कशाखायां वा मूतं तूष्णीं बध्नाति । सर्वे मूतं प्रेक्षमाणादेवमुपतिष्ठन्ते एष ते रुद्रभाग इत्यादिमन्त्रेण प्रणवान्तेन । यावदुच्छ्वासं प्रणवोच्चारणम् । आत्मनो मूतस्य च मध्ये दीर्घधाराक्षेपेणोदकं निनीयोदपात्रं तत्रैव परास्यानवेक्षमाणा आयान्ति । हस्तपादान्प्रक्षाल्य यथागतमागत्य महाहविः प्रणीतेष्वेवाग्निषु अन्वाधानादिकं कृत्वा आदित्यं चरुं निर्वपति । सप्तदश सामिधेन्यः । अंहसो मुच्येयमिति यजमानस्यानुमन्त्रणम् । अन्वाहार्यमासाद्य तिस्रो गा दक्षिणां ददाति । इदानीं व्रतविसर्गः इयं प्रसिद्धेष्टिरादित्येष्टिरिति चोच्यते ॥

५१० निवर्तनादि वैश्वदेववत् । मन्त्रविशेषः । य इमां महीं पृथिवीमित्यादीनि षड्वाक्यानि पठित्वाऽग्निस्तिग्मेनेत्यादिवाक्यानि पूर्ववत् । इदं सर्वं तृतीयं साकमेधपर्वेत्युच्यते ॥

५११ अथ शुनासीरीयनामकं चतुर्थं पर्व । यजमानः शुनासीरीयहविर्भिर्यक्ष्यइति संकल्पयति । आग्नेयोऽष्टाकपालः पुरोडाशः । सौम्यश्चरुः । सावित्रो द्वादशकपालः पुरोडाशः । सारस्वतश्चरुः । पौष्णश्चरुः । ऐन्द्राग्नो द्वादश कपालः पुरोडाशः । वैश्वदेवश्चरुः । इन्द्राय शुनासीराय द्वादशकपालः पुरोडाशः । वायव्यं पयः । सौर्य एककपालः पुरोडाशः । सविता सूर्यश्चोपांशु । शाखाहरणं कृत्वा वैश्वदेववद्ध्मावर्हिःसन्नहनादिकरोति । न सायंदोहः । पूर्ववदन्वाधानम् । पात्रासादने विशेषः । पञ्चचत्वारिंशत्कपालानि पञ्च चरुस्थाल्यस्तावन्ति मेक्षणानि च । तण्डुलप्रक्षालननिनयनान्ते प्रातर्दोहः । तत्र प्राकृतमन्त्रेषु प्राकृतदेवतास्थाने वायुपदं बोध्यम् । इन्द्राय शुनासीराय कपालोपधानानन्तरं पयःस्थालीमुपधाय तस्यां प्रातर्दोहमानीय मेक्षणेनालोड्य श्रपयति । तण्डु-

ततः सूर्यायैकं कपालमुपदधाति। अग्नीदितस्त्रिर्हरेत्यन्तं वैश्वदेववत्। उत्तरवेदेर्विकल्पः। तत्पक्षे ऽथ याचति स्फ्यमुदपात्रमित्यादि महाहविर्वत्। पञ्चविधं बर्हिः तदभावपक्षे ब्रह्मन्नुत्तरमित्यादि वैश्वदेववद्वाजिनवर्जम्। इन्द्रियाव्यवाव इति शुनासीरीययागानुमन्त्रणम् नभभागिति वायोः। सुदृशीक इति सूर्यस्य। अध्वर्युरेककपालं सकृद्गृहीतेनाभिजुहोति संसर्पो ऽसीत्यादिमन्त्रेण। यजमानः संसर्पायांहसस्पत्यायेदं न ममेति त्यक्त्वान्वाहार्यमासाद्य द्वादशगवं सीरं प्रथमजं वत्सं वा दक्षिणां ददाति। प्रतिग्रहमन्त्रे ऋत्विजां ब्रह्मणे द्वादशगवं सीरमिति विशेषः। निवर्तनादि वैश्वदेववत्। मन्त्रे विशेषः। एकं मासमुदसृजदित्यादीनि द्वादशवाक्यानि पठित्वा ऽग्निर्नस्तेनेत्यादि वैश्वदेववत्। अनुवत्सरीणां स्वस्तिमाशास्ते इति विशेषः। इदं चतुर्थं शुनासीरीयपर्वेत्युच्यते॥

५१२ अथ सवनेष्टिः। आग्नेयो ऽष्टाकपालः पुरोडाशः। ऐन्द्राग्न एकादशकपालः। वैश्वदेवो द्वादशकपालः। सर्वं प्रकृतिवत्॥ इयं सवनेष्टिरित्युच्यते॥

५१३ काम्या इष्टीः करिष्यमाणो यजमानः पूर्वं संवत्सरं द्वादशाहं वा जपादिभिः पूतः पयोव्रती ब्रह्मचारी भवति। ऋत्विजो ऽपि पयोव्रतरहितनियमान् कुर्वन्ति। एते धर्माः काम्येष्टिप्राङ्नियमा इत्युच्यन्ते॥

५१४ यासां कालविशेषो नोपदिष्टस्तासां काम्यानां पर्वणि शुक्लपक्षे देवनक्षत्रे प्रयोगः। नैमित्तिकेष्टीनां तु निमित्तानन्तरमेव। यजमानः प्रजाकामः प्रजाकामेष्ट्या यक्ष्ये इति संकल्पयति। सद्यस्काला इयमिष्टिः। ऐन्द्राग्नो व्रीहिमय एकादशकपालः पुरोडाशः। सप्तदशसामिधेन्यः। पौर्णमासतन्त्रम्। अध्वर्युः पाणिसंमर्शनानन्तरं गार्हपत्ये स्मार्तवदाज्यं संस्कृत्याहवनीये चतुर्होतृकूष्माण्डसारस्वतहोमं करोति। प्रधानमुपांशु। अन्वाहार्यमासाद्य वासो दक्षिणां ददाति। पुनरालम्भवर्जं सर्वं प्रकृतिवत्। वार्त्रघ्नावाज्यभागौ शुक्लपक्षे। वृधन्वन्तावपरपक्षे। अथ वा अग्नीषोमविकारे वार्त्रघ्नौ। ऐन्द्रसान्नाय्यविकारे तु वृधन्वन्तौ इत्यापस्तम्बसूत्रम्। उभावामिन्द्राग्नी आहुवध्या इति प्रधानस्य पुरोनुवाक्या। अग्नं

ह भूरि दावसराधामसि याज्या । अबोध्यग्निः समिधा जनानामिति स्विष्टकृतो ऽनुवाक्या । अवोचाम कवये मेध्यायेति याज्या । अन्यत्सर्वं हौत्रं प्रकृतिवत् । इयं प्रजाकामेष्टिरित्युच्यते ॥

५१५ धर्मसभायां व्यवहारादिभाषणायेन्द्रियवीर्यप्रतिष्ठार्थमिष्ट्या यक्ष्ये इति संकल्पः । इन्द्राग्नी रोचनादिव इति प्रधानानुवाक्या । श्नथद्वृत्रमिति याज्या । अन्यत्सर्वं प्रजाकामेष्टिवत् । इयमिन्द्रियवीर्यप्रतिष्ठाकामेष्टिरुच्यते ।

५१६ एतदिष्टिविधानानन्तरं श्रुतौ पौष्णं चरुमनुनिर्वपेतेत्युक्तम् । इन्द्रियवीर्यप्राप्त्यर्थमिष्ट्या यक्ष्य इति संकल्पः । पूषा देवता । चरुर्द्रव्यम् । वयमुत्वापथस्पत इति प्रधानानुवाक्या । पथस्पथः परिपतिं वचस्येति याज्या । पुष्टिमान्पशुमानित्यनुमन्त्रणम् । यत्र विशेषतः संयाज्ये नोक्ते तत्र पूर्वेष्टिगते संयाज्ये भवतः । अन्यत्प्रकृतिवत् । इयमनुनिर्वापपौष्णेष्टिः ।

५१७ जनसमूहं प्राप्तो यजमानः प्रतिष्ठाकाम इष्ट्या यक्ष्य इति संकल्पयति । क्षैत्रपत्यश्चरुः । क्षेत्रस्य पतिना वयमित्यनुवाक्या । क्षेत्रस्य पते मधुमन्तमूर्मिमिति याज्या । अन्नाद इत्यनुमन्त्रणम् । अन्यत्प्राकृतम् । इयं क्षैत्रपत्येष्टिः ॥

५१८ रक्षोगणपीडानिवृत्त्यर्थममावास्यायां महारात्रे रक्षोहननार्थमिष्ट्या यक्ष्य इति संकल्पयति । अग्नये रक्षोघ्ने ऽष्टाकपालः पुरोडाशः । वस्त्रादिना परितः श्रपणं कृत्वा प्रधानयागः । देवताया यद्विशेषणं स गुण इत्युच्यते ॥

५१९ तथा च प्रकृते ऽग्ने रक्षोहेति विशेषणं गुणस्तस्य विशेष्यविभक्त्यन्तस्य विशेष्योद्देशानन्तरं गुणस्यापि निर्देशः । एवं सर्वगुणानाम् । कृणुष्वपाजः प्रसितिमिति पञ्चदशर्चः आद्याभ्यासरहिताः सामिधेन्यः । रक्षोहणं वाजिनमाजिघर्मि इति पुरोनुवाक्याऽविज्योतिषा बृहतेति याज्या अन्नाद इत्यनुमन्त्रणम् । प्राक् स्विष्टकृतः स्रुवाहुतिमुपजुहोत्यध्वर्युर्हत स्वानास इत्यृचा । परिश्रयणं दूरीकृत्य स्विष्टकृदादि । अन्यत्प्राकृतम् । इयं राक्षोघ्नेष्टिः ॥

५२० गोमरणनिवृत्त्यर्थं पुरुषमरणनिवृत्त्यर्थं भयनिवृत्त्यर्थं पूतिगन्धनिवृत्त्यर्थं च पृथगिष्टिसंकल्पः अग्नये सुरभिमते ऽष्टाकपालः । प्रोक्ष-

णीषु सुगन्धान्विक्षिपति । सुगन्धवन्त ऋत्विजः कर्म कुर्वन्ति । अग्निर्होतान्यसीददित्यनुवाक्या । साध्वीमकर्देववीतिमिति याज्या । उक्तमनुमन्त्रणम् । प्राकृतमन्यत् । इयं सुरभिमदिष्टिः ॥

५२१ शेषजातिमरणनिवृत्त्यर्थं संकल्पः । अग्नये क्षामवते ऽष्टाकपालः । अक्रन्ददग्निस्तनयन्नित्यनुवाक्या । त्वे वसूनि पुर्वणीकेति याज्या । अग्निदेवताकयागे प्रायो ऽक्षाद इत्यनुमन्त्रणम् । गृहदाहनिवृत्तये ऽपीयमेवेष्टिः । इयं क्षामवदिष्टिः ॥

५२२ प्रतिबन्धकनिवृत्त्या काम्यकर्मफलसिद्ध्यर्थं संकल्प्य । अग्नये कामायाष्टाकपालः । तुभ्यं ता अङ्गिरस्तमेत्यनुवाक्या । अश्याम तं काममग्न इति याज्या । इयं कामेष्टिः ॥

५२३ सर्वायुः सिद्ध्यर्थं संकल्पः । अग्नय आयुष्मते ऽष्टाकपालः । इन्द्राय त्रात्रे एकादशकपालः । आनो अग्ने सुकेतुनेत्यग्नेराज्यभागस्यानुवाक्या । त्वं सोम महे भगमिति सोमस्य । अनयोर्जीवातुपदसत्त्वादिमौ जीवातुमन्तावुच्येते ॥

५२४ आयुष्टे विश्वतो दधदित्यग्नेरायुष्मतो ऽनुवाक्या । आयुर्दा अग्न इति याज्या । त्रातारमिन्द्रमिति त्रातुरिन्द्रस्यानुवाक्या । मा ते अस्यामिति याज्या । उभयत्रायुष्मानित्यनुमन्त्रणम् । पाहि नो अग्न एकयेति अग्ने त्वं पारयानव्यो अस्मानिति च संयाज्ये । इयमायुष्कामेष्टिः ॥

५२५ भूतिकाम इष्ट्या यक्ष्यत इति संकल्पः । अग्नये जातवेदसे ऽष्टाकपालः । तस्मै ते प्रतिहर्यतेत्यनुवाक्या । दिवस्परि प्रथमं जज्ञ इति याज्या । भूतिमानित्यनुमन्त्रणम् । इयं भूतिकामेष्टिः ॥

५२६ रुचं कामयमानः संकल्प्य । अग्नये रुक्मवते ऽष्टाकपालः । शुचिः पावक वन्द्य इत्यनुवाक्या । दृशानो रुक्म उर्व्या व्यद्यौदिति याज्या । इयं रुक्कामेष्टिः ॥

५२७ तेजस्कामः संकल्प्य । अग्नये तेजस्वते ऽष्टाकपालः । आयदिषे नृपतिं तेज आनडित्यनुवाक्या । स तेजीयसा मनसेति याज्या । इयं तेजस्कामेष्टिः ॥

५२८ अन्नकामेष्टिः । अग्नये ऽन्नवते ऽष्टाकपालः । उक्षान्नाय वशान्नायेत्यनुवाक्या । वधाहि सूनो असीति याज्या । इयमन्नकामेष्टिः ॥

५२९ अन्नाद्यकामः संकल्प्य। अग्नये ऽन्नादायाष्टाकपालः। तुभ्यं ता अङ्गिरस्तमेति पुरोनुवाक्या। तं अश्याम तं काममग्नइति याज्या। इयमन्नाद्यकामेष्टिः॥

५३० अन्नपतित्वकामस्य। अग्नये ऽन्नपतये ऽष्टाकपालः। पूर्वेष्टिगते याज्यानुवाक्ये। इयं अन्नपतित्वकामेष्टिः॥

५३१ दीर्घरोगमुक्त्यर्थं संकल्प्य। अग्निः पवमानः अग्निः पावकः अग्निः शुचिः। एतास्तिस्रो देवताः। द्रव्याण्यष्टाकपालाः पुरोडाशाः। अन्वाहार्यमासाद्य हिरण्यं दक्षिणां ददाति। अग्न अग्नेः पवमानस्य आयूंषि पवस इत्यनुवाक्या। अग्ने पवस्वेति याज्या। अग्ने पावक रोचिषेत्यनुवाक्या। सनः पावकदीदिव अग्नेः पावकस्य इति याज्या। अग्निः शुचिव्रततम इत्यनुवाक्या। उदग्ने अग्नेः शुचेः शुचयस्तवेति याज्या। इयं चिररोगमुक्तिकामेष्टिः॥

५३२ चक्षुष्कामस्य। चक्षुर्दोषनिवृत्त्यर्थं इष्ट्या यक्ष्ये इति संकल्पः। पूर्वेष्टिवत्सर्वम्। इयं चक्षुष्कामेष्टिः॥

५३३ पुत्रकामस्य अग्नये पुत्रवते ऽष्टाकपालः। इन्द्राय पुत्रिणे ऽष्टाकपालः। यस्त्वा हृदा कीरिणेति प्रथमस्यानुवाक्या। यस्मै त्वं सुकृते जातवेद इति याज्या। त्वे सुपुत्र शवस इति द्वितीयस्यानुवाक्या। उक्थउक्थे सोम इन्द्रं ममादेति याज्या। स्विष्टकृतो ऽग्निस्तुविश्रवस्तममित्यनुवाक्या। अग्निर्ददाति सत्पतिमिति याज्या। इयं पुत्रकामेष्टिः॥

५३४ रसकामस्य। अग्नये रसवते ऽजक्षीरे चरुः। अत्र पयसः प्रणयनं नापाम्। अग्ने रसेन तेजसेत्यनुवाक्या। आपो अद्यान्वचारिषमिति याज्या। इयं रसकामेष्टिः॥

५३५ वसुकामस्य। अग्नये वसुमते ऽष्टाकपालः। वसुर्वसुपतिर्हिकमित्यनुवाक्या। त्वामग्ने वसुपतिं वसूनामिति याज्या। इयं वसुकामेष्टिः॥

५३६ पतितत्वेन जनैरभिशस्यमानस्येष्टिः। वैश्वानराय द्वादशकपालः। वरुणाय चरुः। दधिक्राव्णश्चरुः। वैश्वानरो न ऊत्येत्यनुवाक्या वैश्वानरस्य। त्वमग्ने शोचिषेति याज्या। वरुणस्यावते हेडो वरुणेत्यनुवाक्या। उदुत्तमं वरुणेति याज्या। दधिक्राव्णो अकारिष-





मिति दधिक्राव्णो ऽनुवाक्या । आ दधिक्राः शवसा पञ्च कृष्टीरिति याज्या । अन्वाहार्यमासाद्य हिरण्यं दक्षिणा । इयमभिशापनिवृत्तीष्टिः ॥

५३७ ग्रामकामस्य । अग्नये वैश्वानराय द्वादशकपालः । मरुद्भ्यः सप्तकपालः । आहवनीयायतनाद् बहिः वैश्वानराय द्वादशकपालान्युपधाय प्रदक्षिणमावृत्य गार्हपत्यस्य पश्चान्मरुद्भ्यः सप्तकपालान्युपदधाति । तत्तदग्निना पर्यग्निकरणम् । दक्षिणं परिधिसन्धिं विमुच्य वैश्वानरमुद्वासयति । दक्षिणपरिधिमध्येन वा । पात्रान्तरे मारुतमुद्वास्य गार्हपत्यसमीपे स्थापयति । वेद्यां वैश्वानरमासादयति । सामिधेन्यनुवचनकाले वेद्यां मारुतं सादयति । वैश्वानरयागः पूर्ववत् । द्वैधसूत्रेऽत्र देवताविपर्यासः । मारुतस्यावदायान्यत्र निधाय वैश्वानरस्यावदायान्यत्र निधाय प्रथमं मारुतस्य यागः । ततो वैश्वानरस्य । अथ वा मारुतस्यावदानादि यागान्तं कृत्वा वैश्वानरस्यावदानादियागः । वैश्वानरस्य वैश्वानरो न ऊत्येत्यनुवाक्या । पृष्टो दिवीति याज्या । मरुतां तु मरुतो यद्ध वो दिव इत्यनुवाक्या । या वः शर्म शशमानायेति याज्या । मरुतामनुमन्त्रणं प्रावीर्वध्यासमिति । इयं ग्रामकामेष्टिः ॥

५३८ भिक्ष्यमाणाद्द्रव्यप्राप्तिकामस्य । अग्नये वैश्वानराय द्वादशकपालः । वैश्वानरो न ऊत्येत्यनुवाक्या । वैश्वानरस्य सुमताविति याज्या । इयं भिक्ष्यमाणाद्द्रव्यप्राप्तिकामेष्टिः ॥

५३९ भिक्षितद्रव्यप्राप्त्यनन्तरं वैश्वानर्या यजेत । प्रतिष्ठाकाम इष्ट्यायक्ष्य इति संकल्पः । पूर्ववदिष्टिः पशुकामस्य । ऐन्द्रश्चरुः । इन्द्रं वो विश्वतस्परीत्यनुवाक्या । इन्द्रं नरो नेमधितेति याज्या । इयं पशुकामेष्टिः ॥

५४० अथ द्वितीया । इन्द्रायेन्द्रियावते एकादशकपालः । इन्द्रियाणि शतक्रतो इत्यनुवाक्या । अनु ते दायि मह इन्द्रियायेति याज्या । इन्द्रियाव्यवाद इत्यनुमन्त्रणम् । इयं द्वितीया पशुकामेष्टिः ॥

५४१ ब्रह्मवर्चसकामस्य । इन्द्राय घर्मवते एकादशकपालः । आर्यास्मनुत्साप्तेत्यनुवाक्या । आमासु पक्वमिति याज्या । ब्रह्मवर्चसीत्यनुमन्त्रणमिन्द्रायेन्द्रियावते तथा इन्द्रायार्कवते च तथैव । इयं ब्रह्मवर्चसकामेष्टिः ॥

५४२ अन्नकामस्य । इन्द्रायार्कवतएकादशकपालः । इन्द्रमिद्गाथिनो बृहदित्यनुवाक्या । गायन्ति त्वा गायत्रिण इति याज्या । इन्द्रियाव्यन्नाद इत्यनुमन्त्रणम् । इयमन्नकामेष्टिः ॥

५४३ भूतिकामस्य त्रिहविष्का । इन्द्राय घर्मवते एकादशकपालः । पूर्वोक्ता याज्यानुवाक्याः । इन्द्रियाव्यन्नाद इति सर्वेषामनुमन्त्रणम् । इयं भूतिकामेष्टिः ॥

५४४ पापक्षयकामस्य । इन्द्रायांहोमुचे एकादशकपालः । अंहोमुचे प्रभरेमामनीषेत्यनुवाक्या दिवेव यन्मेति याज्या । अंहोमुगित्यनुमन्त्रणम् । इयं पापक्षयकामेष्टिः ॥

५४५ बद्धो वा शत्रुवेष्टितो वा तन्मोक्षार्थं संकल्प्य । इन्द्राय त्रात्रे एकादशकपालः । त्रातारमिन्द्रमवितारमिन्द्रमित्यनुवाक्या । मा ते अस्यां सहसावन्निति याज्या । त्रातइत्यनुमन्त्रणम् । इयं बन्धादिमोक्षकामेष्टिः ॥

५४६ महायज्ञान्वाजपेयादीन्कर्तुमशक्तस्तत्काम इष्टिं संकल्प्य । इन्द्रायार्काश्वमेधवते एकादशकपालः । अनवस्ते रथमित्यनुवाक्या । वृष्णे यत्त वृषेति याज्या । महायज्ञवानित्यनुमन्त्रणम् । इयं महायज्ञकामेष्टिः ॥

५४७ ग्रामकामस्य द्वितीया । इन्द्रायान्वृजवे एकादशकपालः । अन्वहमासा अन्वित्यनुवाक्या । अनु ते दायिमहइति याज्या । ग्रामण्यानित्यनुमन्त्रणम् । द्वितीया ग्रामकामेष्टिः ॥

५४८ दत्तद्रव्यप्राप्तिकामस्य । इन्द्राय प्रदात्रे एकादशकपालः । प्रदातारं हवामह इत्यनुवाक्या । प्रदाता वज्री वृषभ इति याज्या । प्रदातृमानित्यनुमन्त्रणम् । दत्तद्रव्यप्राप्तिकामेष्टिः ॥

५४९ तुल्येभ्यो ऽधिकश्रीकामस्य । इन्द्रायैकादशकपालः । रेवतीर्नः सधमाद इत्यनुवाक्या । प्रोष्वस्माइति याज्या । अधिकश्रीमानित्यनुमन्त्रणम् । अधिकश्रीकामेष्टिः ॥

५५० साधारणज्योतिष्टोमादियज्ञकामस्य । आग्नावैष्णव एकादशकपालः । अग्नाविष्णूसजोषसेत्यनुवाक्या । अग्नाविष्णूमहितद्वामिति याज्या । यज्ञवानित्यनुमन्त्रणम् । इयं यज्ञकामेष्टिः ॥

५५१ ब्रह्मवर्चसकामस्य द्वितीया । पुष्यनक्षत्रयुक्तपौर्णमास्यां प्रात-

रुद्रौ देवता । चरुर्द्रव्यम् । श्वेतवत्सायाः श्वेतवर्णाया गोर्दुग्धं मथितं सदाज्यं भवति । तेनाज्येन हविषः पात्राणां प्रोक्षणं मार्जनं च । अतः प्रोक्षणीपात्रे तदाज्यमेव जलस्थानआनयति । उन्महतमन्त्रे अप्शब्दस्य स्थाने आज्यपदस्योहः तद्विशेषणानां क्लीबत्वमेकवचनान्तता प्रोह्या । प्रोक्षणमन्त्रे ऽपि तथैव । द्वैधसूत्रे ऽनुक्रमण्डलौ स्रुवेण तदाज्यं प्रक्षिप्य तेन जलेन प्रोक्षणमार्जनानि विहितानि प्रोक्षणीरासादयेति प्रैषे प्रोक्षणमासादयेत्यूहः निनयनमन्त्रे गच्छतेत्यस्यस्थाने गच्छेतिपदम् । प्रधानयागकाले विहारस्य कटादिभिः परिश्रयणम् । तदपहाय स्विष्टकृदादि । सामिधेनीषु पृथुपाजा इत्यस्याः पूर्वं मद्रू देववत इति न यजमान रिष्यसीति च द्वे ऋचौ प्रक्षेप्तव्ये तथा च सप्तदश सामिधेन्यः । सोमारुद्राविवृहतमित्यनुवाक्या । सोमारुद्रायुवमिति याज्या । ब्रह्मवर्चसीत्यनुमन्त्रणम् ॥

५५२ भाविदुश्चर्मत्वाभावकामस्य सोमापौष्णश्चरुः । सोमापूषणा जननेत्यनुवाक्या । इमौ देवौ जायमानाविति याज्या । सुचर्मेत्यनुमन्त्रणम् । इयं दुश्चर्मत्वाभावेष्टिः ॥

५५३ समाने श्रैष्ठ्यमिच्छन् संकल्प्य । अग्नये वसुमते ऽष्टाकपालः । सोमाय रुद्रवते चरुः । इन्द्राय मरुत्वतएकादशकपालः । वरुणायादित्यवते चरुः । सर्वासां तन्त्रेण युगपत्प्रधानयागः । सर्वा देवताश्चतुर्थ्यन्ता उद्दिश्य अनुब्रूहीति प्रैषः । एवं सर्वत्र । उपस्तीर्य सर्वेषां क्रमेण द्विर्द्विरवदाय युगपद्यजति । पञ्चमे प्रयाजे स्वाहाग्निं वसुमन्तं सोमं रुद्रवन्तमिन्द्रं मरुत्वन्तं वरुणमादित्यवन्तं स्वाहेति सर्वेषां सकृत्स्वाहाशब्दः सर्वासामेकैवाग्निः प्रथमो वसुभिरित्यनुवाक्या । सनो देवो वसुभिरिति याज्या । श्रेष्ठ इत्यनुमन्त्रणम् । सप्तदश सामिधेन्यः । वार्त्रघ्नावाज्यभागौ । प्रेद्धो अग्न इमो अग्न इति संयाज्ये । इयं संज्ञानीष्टिरुच्यते ॥

५५४ यो मृत्यो बिभेति स पूर्णायुःप्राप्त्यर्थं संकल्पयत्यायुष्कामः शतकृष्णलया यक्ष्यइति । प्रजापतिर्देवता । आज्ये हिरण्यनिर्मितगुञ्जाप्रमाणकृष्णलमयश्चरुर्द्रव्यम् । पात्रासादने एका चरुस्थाली अवहननाद्यभावादुलूखलादेर्नासादनम् । घृतस्यैव प्रणीतापात्रे आनयनम् । घृतं

प्रथयिष्यामीति प्रभृति भवति । दक्षिणपाण्यां कृष्णलान्याप्य प्रक्षालितावचपति ।
ध्रुवासीतिमन्त्रेण नवं चरुपात्रमधिश्रित्य तिरःपवित्रे प्रणीताज्यमानीय घर्मोऽस्येत्यादिमन्त्रेण कृष्णलानोप्य श्रपयति । चरुधर्मेणोद्वास्य वेद्यामासादयति । उपस्तरणाभिधारणे यागकाले न भवतः । चतुर्णां कृष्णलस्थालीगतमेकमवदानम् । तथाज्येन सह एवं द्विरवदाय हवनकाले आज्यमेव जुहोति न कृष्णलानि । तूष्णीमवदानं प्रत्यञ्जनं च । पञ्चावत्तिनां त्रीण्यवदानानि तथा च द्वादश कृष्णलानि संपद्यन्ते । कृष्णलमेकं जुहुयाद्वा । हिरण्यगर्भः समवर्तताग्र इत्यनुवाक्या । प्रजापते न त्वदेतान्यन्य इति याज्या । आयुष्मानित्यनुमन्त्रणम् । चत्वारि कृष्णलानि स्विष्टकृतेऽवद्यति । पञ्चावत्तिनस्त्वष्टौ । इडापात्रे अष्टौ पञ्चावत्तिनो द्वादश । चत्वार्यवान्तरेडायै । प्राशित्रे एकम् । ब्रह्मयजमानभागयोरेकैकम् । सर्वत्राज्येन सह । चतुर्धाकरणं नास्ति । अवत्तानि ब्रह्मणो हस्ते दत्तानि च सर्वाणि समं विभज्य ऋत्विजो गृह्णन्ति । सामान्यदक्षिणाविकल्पः । फलीकरणहोमो न । इयं शतकृष्णलेष्टिः ॥

५५५ हिरण्यलाभकामस्य । आग्नेयोऽष्टाकपालः । सावित्रो द्वादशकपालः । भूम्यै चरुः । अग्ने त्वं सुजागृहि वयम् (?) — अग्नेः सप्रथवसवीयसेत्यनुवाक्या । निकाव्या वेधसः शश्वत इति याज्या । हिरण्यपाणिमूतय इति सवितुरनुवाक्या । वाममद्य सवितरिति याज्या । भूमेर्बलित्थापर्वतानामित्यनुवाक्या । स्तोमासस्त्वाविचारिणीति याज्या । स्वस्तिमानिति सवितुरनुमन्त्रणम् । अन्नाद इत्यग्नेः । हिरण्यवानिति भूमेः । अन्वाहार्यमासाद्य हिरण्यं दक्षिणां ददाति । इयं हिरण्यलाभकामेष्टिः ॥

५५६ हिरण्यलाभे जाते तत्प्रतिष्ठार्थं पुनरेतयेष्ट्या यजते । सा लब्धहिरण्येष्टिरुच्यते ॥

५५७ क्लीबत्वनाशपूर्वकपुंस्त्वकामस्य । सोमाय वाजिने श्यामाकश्चरुः । आप्यायस्व स मे तु त इत्यनुवाक्या । सन्ते पयांसीति याज्या । प्रप्रजया च पशुभिश्च जभिषीयेत्यनुमन्त्रणम् । इयं पुंस्त्वकामेष्टिः ॥

५५८ चक्षुष्कामस्य । अग्नये भ्राजस्वतेऽष्टाकपालः । सौर्यश्चरुः । पूर्ववदग्नेर्भ्राजस्वतो यागः । अग्नीध्रः षडवत्तदानात्पूर्वं इडावत्तचरोर्यजमानाय त्रीन् पिण्डान्प्रतिमन्त्रं प्रयच्छति । उद्गुत्यं जातवेदसमिति



प्रथमम् । सप्तत्वा हरितो रथइत्यृचा द्वितीयम् । चित्रं देवानामित्यृचा तृतीयम् । यजमानः पिण्डान् प्राश्याचम्येडाभागं प्राश्नाति । उदग्ने शुचयस्तवेत्यग्नेर्भ्राजस्वतो ऽनुवाक्या । विज्योतिषेति याज्या । उदुत्यं जातवेदसमिति सूर्यस्यानुवाक्या । चित्रं देवानामिति याज्या । चक्षुष्मानित्यनुमन्त्रणम् । इयं द्वितीया चक्षुष्कामेष्टिः ॥

५५९ कामसिद्ध्यर्थं या इष्टयो विहितास्ताः काम्येष्टिपदार्थैः सिद्धः ।

**श्रीपरमेश्वरः प्रसीदतु ॥**

**॥ शिवम् ॥**



॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## अथ पाशुकपदार्थानां नामान्युच्यन्ते ।

---

१ उत्तरायणं शुक्लपक्षो देवनक्षत्रं रेवती वाऽमावास्या यजनीयदिनं वाऽनुष्ठानसमयः । अयं पशुबन्धकाल इत्युच्यते ॥

२ आद्यप्रयोगे तु पूर्वेद्युर्नान्दीश्राद्धं रात्रावुदकशान्तिः प्रतिसरबन्धश्च क्रियते । परेद्युःस्नानादिपञ्चकानन्तरं पुण्याहवाचनम् । तत्र पशुदेवतायाः प्रथमान्तं नामोच्चार्य प्रीयतामिति यथार्थमूहनीयम् । इदं प्रथमप्रयोगपूर्वाङ्गमित्युच्यते ॥

३ दर्शपौर्णमासयागकालो यजनीयदिनमित्युच्यते ॥

४ गार्हपत्यस्य पश्चात्सपत्नीको यजमानो दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य विष्णुं स्मृत्वा याः पुरस्तादित्यादि पठित्वा स्वर्गकामः श्रीपरमेश्वरप्रीत्यर्थं वा ऐन्द्राग्नेन निरूढपशुबन्धेन यक्ष्ये इति त्रिरुपांशु त्रिरुच्चैर्वदति । अयं पशुबन्धसङ्कल्प इत्युच्यते ॥

५ प्रतिप्रस्थातृप्रशास्तृसहितान् षडृत्विजो वृत्वाऽर्चयित्वा प्रथमानुष्ठाने पशुना यक्ष्यमाणोऽन्वारम्भणीयया यक्ष्य इति सङ्कल्पपूर्वकमन्वारम्भणीयां समाप्याग्नीनरण्योः समारोप्योदवसाय मन्थति । यक्ष्ये करिष्ये इत्यादिपदोच्चारणसमकालीनदक्षिणहस्तकरणकपात्राधिकरणकजलप्रक्षेपसहितकरिष्यमाणकर्मानुष्ठानप्रतिज्ञा सङ्कल्प इत्युच्यते ॥

६ समारोपिताग्निमदरणीग्रहणपूर्वकं देवयजनदेशं प्रति गमनमुदवसानमित्युच्यते ॥

७ मन्थनानन्तरमध्वर्युरग्नीन् विहृत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये मनस्वत्या हुत्वा उद्धरणपक्षे पुनर्विहृत्य षड्ढोतारं मनसाद्रुत्यान्वारब्धे यजमाने चतुर्गृहीतेनाहवनीये जुहोति । स्रुवेण चतुर्वारं गृहीतमाज्यादि चतुर्गृहीतमित्युच्यते ॥



८ सूर्यन्ते चक्षुरित्यादीनि नव वाक्यानि षड्ढोतेत्युच्यन्ते ॥

९ वाचस्पतये ब्रह्मन्निदं न ममेति यजमानस्य त्यागः । पुनर्विहृत्योपस्थानवरदानान्तः कूष्माण्डहोमः । पुनर्विहृत्य प्रत्येकं चतुर्गृहीतेन सारस्वताहुती पुनर्विहृत्य चतुर्गृहीतेनेदं विष्णोर्विक्रमस्वेत्यृचा जुहोति विष्णवे इदमिति त्यागो यजमानस्य । इयमाहुतिः करिष्यमाणयूपग्रहणार्थत्वाद्ग्रहाहुतिरित्युच्यते ॥

१० अध्वर्युः पुनश्चतुर्गृहीतं गृहीत्वा सस्रुवामाज्यस्थालीं बर्हिर्हिरण्यमुदपात्रं चादाय सपरशुं तक्षाणमाहूय एहि यजमानेत्युक्त्वा पूर्वद्वारेण शालाया बहिर्निष्क्रम्य यस्माद्वृक्षाद्यूपग्रहणं चिकीर्षितं तस्य समीपं गत्वा प्रतीच्यां दिशि प्रह्वां शाखां स्वयं प्राङ्मुखोऽत्यन्यानगानित्यादियजुर्मन्त्रेणोपतिष्ठते । इदं यूपयोग्यशाखोपस्थानमित्युच्यते ॥

११ तत आज्यस्थाल्याः स्रुवेणोपहत्य शाखामूलमनक्ति । देवस्त्वा सवितामध्वेत्यादियजुषा । इदं यूपशाखाञ्जनमुच्यते ॥

१२ तत ओषधे त्रायस्वैनमितिमन्त्रेण यूपमूले ऊर्ध्वाग्रं बर्हिरन्तर्दधाति । तदुपरि स्वधितिना तिर्यक् छिनत्ति स्वधिते मैनꣳ हिंसीरिति मन्त्रेण । आज्यस्थाल्यादेः सकाशात्स्रुवादिना पात्रान्तरे आज्यादेर्ग्रहणं उपहननमित्युच्यते ॥

१३ शाखाछेदनकाले यः प्रथमः शकलः परापतति तं यूपावटे प्रक्षेपार्थं क्व चित् प्रज्ञातं स्थापयति । कस्य चिदपि पदार्थस्य उपयोगकाले शीघ्रलाभार्थं अत्रेदं मया स्थापितमस्तीति शीघ्रस्मृतिजनकसङ्केतः प्रज्ञातमित्युच्यते ॥

१४ यूपशाखां छित्वा ऽप उपस्पृश्य प्राच्यामुदीच्यां वापतन्तं यूपं दिवमग्रेण मालेखीरित्यादियजुषा ऽनुमन्त्रयते । वृक्षस्य छेदनदेशे हिरण्यं निधाय परिस्तीर्य परिषिच्य पूर्वाहृतेन चतुर्गृहीतेन वनस्पते शतवल्शमित्यादियजुषा स्वाहान्तेन जुहोति । वनस्पतय इदमिति यजमानस्य त्यागः । अयं छेदनप्रयुक्तहोम उच्यते ।

१५ सहस्रवल्शा वीति पादेन स्वहृदयमभिमृशति । ततो ऽप उपस्पृश्य काष्ठतक्षा परशुना मूलादारभ्याग्रपर्यन्तं यूपशाखायाः सर्वा अवान्तरशाखा अध्वर्युश्छेदयति यं त्वायं स्वधितिरित्यादियजुषा ।

सकलमन्त्रपाठो न प्रत्यवान्तरशाखम् । हस्तपरिघ्वङ्गादनधिकं प्रादेशपरिमाणादनूनं उपरेण पञ्चारत्निं चषालस्थापनार्थं चतुरङ्गुलाधिकमग्रं तक्षित्वा तस्याच्छिन्नो रायःसुवीर इति मन्त्रेण । छिन्नशेषस्य मूले चतुरङ्गुलमात्रमुपरं त्यक्त्वा ऽवशिष्टमष्टाश्रिं चतुरश्रिं वा तक्षति । स्वर्वेर्यमेकं शकलमधिमन्थनार्थं त्रीणि शकलानि स्थापयति । यूपाहुतिप्रभृत्येतावदन्तं कर्म यूपाहरणमित्युच्यते ॥

१६ तदनन्तरं पाशुकवेदिमानं उत्तरवेदितत्सम्बन्धोमानं चात्वालमानं उत्करकरणं च वरुणप्रघासवत्करोति । पाशुकवेदिमग्निवत्परिस्तृणाति । इदानीं यजमानो भोजनं वपनं नवनीताभ्यञ्जनमक्ष्णोरञ्जनं च करोति । इदानीं देवतासङ्कल्पं करोतीति केषां चिन्मतम् । अध्वर्युरिडाजपं कृत्वा ऽग्नीन् विहृत्यान्वाधाय व्रतग्रहणान्ते शाखाहरणपत्त्रे इषेत्वेत्यादियजुषा शाखामाच्छिनत्ति । तूष्णीमुत्तरशाखामाच्छिद्योभे शाखे तूष्णीमाहृत्य तूष्णीं यजमानमवेक्षयित्वोद्गूहति यजमानस्येत्यादिप्राकृतमन्त्रेण । ततो बर्हिः संभरणादि । एतावी विधृती भवत इति केचित् । पञ्चविधं बर्हिः । कार्ष्मर्यमयाः परिधयः । सप्तदश सामिधेन्यः । शाखापवित्रकरणमन्त्रे पशुं हव्यं करोतु मे इति विशेषः । सायमग्निहोत्रहोमानन्तरमुत्तरेण गार्हपत्यं दर्भान् संस्तीर्य तेषु पशुकुम्भीं शाखा पवित्रं च त्रिगुणां त्रिव्यायामां यूपरशनां द्विगुणां द्विव्यायामां पशुरशनां च कार्ष्मर्यमय्यौ वपाश्रपण्यौ विशाखामेकामपरामविशाखां कार्ष्मर्यमयं हृदयशूलं यजमानमुखसम्मितं मैत्रावरुणदण्डं चेति द्वन्द्वं सादयति । ततस्तान्युत्तानानि कृत्वा कमण्डलुगताभिरद्भिः शुन्धध्वमित्यादिप्राकृतमन्त्रेण प्रक्षालितवत्प्रोक्षति । पशोरङ्गानां हृदयादीनां श्रपणार्थभाण्डं पशुकुम्भीत्युच्यते ॥

१७ यूपस्य वेष्टनार्थं या रज्जुः सा यूपरशनेत्युच्यते ॥

१८ पशुबन्धनार्था रज्जुः पशुरशनेत्युच्यते ॥

१९ वपा श्रप्यते यस्यां सा वपाश्रपणीत्युच्यते ॥

२० यस्मिन् शूले पशुहृदयं प्रोतं भवति तत् हृदयशूलमित्युच्यते ॥

२१ अपरेद्युः प्रातरग्निहोत्रहोमानन्तरमन्वाधानव्रतरहितां बर्हि॰

ऽन्वाधानादिब्राह्मणतर्पणान्तामाग्नेयीमिष्टिं करोति । सा च सर्वापि प्रकृतिवत् क्रियते इयं पशुपूर्वेष्टिरित्युच्यते ॥

२२ पश्वनुष्ठानस्य सद्यस्कालत्वपक्षे तु नान्दीश्राद्धादिवेदिमानं च पूर्वेद्युरेव क्रियते । अपरेद्युः स्नानादिपञ्चकं ततः पशुसङ्कल्पानन्तरमन्वारम्भणीयेष्टिः क्रियते । अग्नीनरण्योः समारोप्य प्रत्यवरोह्य देवयजनदेशं प्रति नयति । मन्थनपक्षे ऽग्नीन्विहृत्य मनस्वत्या हुत्वा पुनर्विहृत्य बह्वोतृकूष्माण्डसारस्वतहोमान्तं समानम् । तदनन्तरमग्निदेवत्यां अग्न्यन्वाधानादिब्राह्मणतर्पणान्तां पशुपूर्वेष्टिं करोति । ततो यूपाहुत्यादिपाशुकवेदिपरिस्तरणान्तं करोति । ततः पशुदेवतासंकल्पं कृत्वा ऽन्वाधानादिकुम्भ्यादिप्रोक्षणान्तं करोति इति विशेषः । अयं सद्यस्कालपशुप्रकार इत्युच्यते ॥

२३ अपरेद्युराग्नेय्या इष्टेरनन्तरं यजमानो देवतासङ्कल्पं करोति । पाशुकं हविः । वपापुरोडाशाङ्गानि हवींषि । एकादश प्रयाजाः । अग्नीषोमावाज्यभागौ । इन्द्राग्नी पशुदेवता । वनस्पतिः पृषदाज्यदेवता । देवा आज्यपाः अग्निः स्विष्टकृत् । एकादशानुयाजाः । एकादशोपयाजाः । सूक्तवाकशंयुवाकौ । चत्वारः पत्नीसंयाजाः । एवमात्मकेन साङ्गोपाङ्गेन कर्मणा सद्यो यक्ष्ये इति । अयं पशुदेवतासंकल्प इत्युच्यते ॥

२४ ततः पाणिसम्मर्शनादि । अग्नीन् परिस्तीर्याहवनीयस्य पुरस्ताद्दर्भान् संस्तीर्य तेषु स्फ्यमग्निहोत्रहवणीं जुहूं वसाहोमहवनीमुपभृतं पृषदाज्यहवणीं स्रुवं स्वधितिं ध्रुवां प्राशित्रहरणीमिडां वेदमाज्यस्थाली दधिस्थालीमपूर्वाज्यस्थालीं योक्त्रं वेदाग्रं धृष्टिं उपवेषमिध्मप्रव्रश्चनमन्वाहार्यस्थालीं च द्वन्द्वं सादयति । एतत्पाशुकपात्रासादनमुच्यते ॥

२५ इमानि स्फ्यादीन्येकविंशतिसंख्याकानि पूर्वेद्युर्गार्हपत्यस्योत्तरत आसादितानि पशुकुम्भ्यादीनि चाष्टौ पाशुकपात्राणीति कथ्यन्ते ॥

२६ एतत्पाशुकपात्रासादनानन्तरं ब्रह्माणं दक्षिणतस्तूष्णीमुपवेश्य पुरुषांस्तीर्त्वा पवित्रे कृत्वायजमान वाचं यच्छेत्युक्त्वा वेषाय त्वेत्यग्निहोत्रहवणीमादाय प्रत्युष्टमित्यादिमन्त्रेण गार्हपत्ये प्रकृतिवत्प्रतितप्य प्र. ज्ञणीः संस्कृत्य प्रोक्षिताः स्थेत्यन्तं कृत्वा पाशुकपात्राणि प्रकृतिवत्प्रो-

स्याज्यं निरुप्य तूष्णीं दधि निरुप्यापूर्वाज्यं च निर्वपति । आज्यमधिश्रित्य पर्यग्नि करोति । पशुपूर्वेष्ट्यशक्तौ तु एतस्मिन् काले स्मार्तवत्संस्कृताज्येन चतुर्गृहीतेन अग्निपदं चतुर्थ्यन्तमुद्दिश्य स्वाहान्तेन पूर्णाहुतिहोममात्रं भवति । निर्वापानन्तरं प्राकृतमन्त्रेण वेदं हीत्वा प्रकृतिवत्पाशुकीं वेदिं त्रिः सम्मार्ष्टि । तस्याः पश्चादुपविश्य स्फ्यादानादि आग्नीदितस्त्रिर्हरेत्यन्तं प्रकृतिवत्करोति । अथ स्फ्यमुद्रपात्रं बर्हिः शम्यामित्येतत्समादाय यजमानपत्नीभ्यां सह चात्वालदेशं गत्वा वरुणप्रघासवच्चात्वालं कृत्वा उत्तरवेदिनाभिप्रच्छादनान्तं करोति । ततो देवस्यत्वेत्यादिनाऽभ्रिमादायाऽभ्रिरसि नारिरसीभिमन्त्र्य तयाऽर्धमन्तर्वेदि अर्धं बहिर्वेदि पदमात्रविष्कम्भं यूपावटं परिलिखति । परिलिखितमित्यादि यजुषा सकृत् द्विस्तूष्णीम् । यूपरोपणार्थं यो गर्तः खन्यते स यूपावट इत्युच्यते ॥

२७ इदं यूपावटपरिलेखनमुच्यते ॥

२८ अथाग्नीध्रं संप्रैषमाह । आग्नीदेहीमं यूपावटं खनोपरसम्मितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमति खनतात् इति । आग्नीध्रो यूपावटं खनति खानयति वा । अध्वर्युर्यदा चात्वालकरणादिनाभिप्रच्छादनान्तं करोति तदा प्रतिप्रस्थाता त्रिप्रादेशप्रमाणैरनियतकाष्ठैरिध्मं बध्वाऽग्निप्रणयनार्थमाहवनीये प्रक्षिप्य ज्वलयति । चात्वालकरणादि उत्तरवेदिनाभिप्रच्छादनान्तं वरुणप्रघासपर्वोक्तं कर्म औत्तरवेदिकमित्युच्यते ॥

२९ यूपावटपरिलेखनानन्तरमाग्नीध्रश्चात्वालमृदा पूरितां पात्रीमान्युद्धरणपात्र्युपयमनार्थमग्निसमीपे स्थापयति । अध्वर्युस्तूष्णीमुत्पूताः प्रोक्षणीः प्रतिप्रस्थात्रे प्रयच्छतीत्यादियजमानकर्तृकाहुतिद्वयहोमान्तं कर्म वरुणप्रघास पर्वोक्तं अग्निप्रणयननामकमिदानीं करोति । अग्निप्रणयनानन्तरं ब्रह्मा पाशुकवेद्या दक्षिणतउत्तरवेद्याश्रयेण मन्त्रेणोपविशति । तस्य पश्चाद्यजमानः । अध्वर्युस्ततः परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं प्रकृतिवत् स्तब्ध्वा सम्प्रैषमाह । प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्वधितिं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीं सन्नह्याज्येन दध्ना चोदेहीति । प्रोक्षण्यासादनादिप्रकृति वत् संमार्जनं

विशेषः । [illegible]
उपभृद्द्वयपृषदाज्यग्रहण्योश्च सम्मार्गः । जुह्वामाज्यग्रहणपर्यन्तं प्रकृति-
वत् । उपभृति चतुर्गृहीतं गृहीत्वा महीनां पयोसीति मन्त्रेण पृषदा-
ज्यग्रहण्यामाज्येनोपस्तृणीते । विश्वेषां देवानां तनूरिति द्वितीयमुपस्त-
रणम् । ऋद्ध्यासमद्येत्यादियजुषा तस्यां दर्भद्वयान्तर्धानेन दधि गृह्णाति ।
बर्हिर्द्वयं दूरीकृत्य विष्णो रूपमसीति प्रथममभिघारयति । एकमिषेत्या-
दिमन्त्रेण द्वितीयमभिघारणम् । यजमानश्चरोऽस्मेत्यादिचतुर्भिरुपभृदा-
ज्यग्रहानुमन्त्र्योत्तरैश्चतुर्भिर्मन्त्रैः पृषदाज्यग्रहाननुमन्त्रयते । अध्वर्युः
पञ्चविधं बर्हिः पाशुकवेद्यां स्तीर्त्वा कार्ष्मर्यमयान् परिधीन् उत्तरवेद्यां
परिधाय विधृत्योराश्ववालं प्रस्तरं निधायोपभृदनन्तरं तन्मन्त्रेणोपभृत
उत्तरतः पृषदाज्यग्रहणीमासाद्य तदुत्तरतो ध्रुवामासादयति । एतत्
जुह्वाद्यासादनं पाशुकस्रुगासादनमित्युच्यते ॥

३० आज्यस्थाल्याज्यपूरितं स्रुवं स्वधितिं चाग्रेण स्रुचां दक्षिणतो
नीत्वा प्रस्तरे जुह्वा दक्षिणतः सादयति । प्राकृते स्रुवासादनमन्त्रे
स्योनादिपदानां यथार्थमूहो द्विवचनमेकवचनस्थाने भवति । स्रुवस्व-
धिती यथा दक्षिणतो नीतौ तथैवोत्तरत आनीय ध्रुवायामवदधाति ।
अत्रापि प्रकृतिप्राप्तमन्त्रे ऊहयोग्यानामृषभादि पदानां यथार्थं द्विवच-
नान्तता भवति । स्वधितेर्द्वितीयस्य सत्त्वात् । सर्वाज्याभिमन्त्रणान्तं
प्रकृतिवत् । अन्वाधानप्रभृत्येतावदन्तं कर्म पश्वङ्गप्राकृतमुच्यते ॥

३१ ( अथकेवलपाशुकम् । ) प्रदक्षिणमावृत्या प्रत्यङ्ङावृत्य तूष्णीं
संस्कृता यवमतीः प्रोक्षणीर्बर्हिर्मुष्टिं सस्रुवां स्मार्ताज्यस्थालीं स्वरुं रशने
मैत्रावरुणदण्डं प्रथमपतितयूपशकलं हिरण्यमुदपात्रं चादायोत्तरवेदि-
समीपे निधायोदपात्रोदकेन यूपं प्रक्षालयति यत्ते शिक्वःपरावधीदित्यृचा ।
एतद्यूपप्रक्षालनमुच्यते ॥

३२ ततश्चात्वालोत्करयोर्मध्यमार्गेण यूपमानीय यूपावटस्य पुर-
स्ताद्यूपं प्रागग्रं शाययित्वोत्तरवेद्या उत्तरतस्तिष्ठन् पृथिव्यै त्वेत्यादि-
मन्त्रेण यवमतीभिः प्रोक्षणीभिर्मूलादारभ्याग्रपर्यन्तं सकृदेव प्रोक्षति ।
एतद्यूपप्रोक्षणमित्युच्यते ॥

३३ शुन्धतां लोक इत्यादिमन्त्रेण यूपावटे ऽवशिष्टाः प्रोक्षणी-

निनयति । यवोऽसि यवयेत्यादिमन्त्रेण यूपावटे यवान् प्रक्षिपति । प्राचीनावीती बर्हिर्मुष्टिं द्विधा कृत्वा एकं भागं प्रागग्रमपरं दक्षिणाग्रं च कृत्वा द्वयोर्भागयोर्मध्यं यूपावटस्य मध्ये यथा स्यात्तथा भागद्वयं निदधाति पितृणां सदनमसीति मन्त्रेण । तस्य मध्ये हिरण्यं निधाय तस्योपरि पितृभ्यः स्वाहेति मन्त्रेण स्रुवाहुतिं जुहोति । यजमानोऽपि प्राचीनावीती भूत्वा पितृभ्य इदं न ममेति त्यागं पठति । अध्वर्युर्यज्ञोपवीती प्रथमपतितं यूपशकलं यूपावटे प्रक्षिपति स्वावेशोऽस्यग्रेगा इत्यादिमन्त्रेण । अयं यूपशकलप्रक्षेप इत्युच्यते ॥

३४ ततः सस्रुवां स्मार्ताज्यस्थालीं स्वरुं यूपरशनां मैत्रावरुणदण्डमुदपात्रं चादाय एहि यजमानेति यजमानमामन्त्र्याग्रेण यूपं परीत्य दक्षिणत उदङ्मुखस्तिष्ठति । यजमानो यूपस्यावटस्य च मध्येनोत्तरतो गत्वा ऽग्रेण यूपं परीत्याध्वर्योर्यूपस्य च मध्येन पश्चाद्गत्वोदङ्मुखस्तिष्ठति । पत्नी तु अध्वर्योरुत्तरतो यजमानस्य दक्षिणतः पश्चाद्गत्वोदङ्मुखी तिष्ठति । उपरसमीपे अध्वर्युश्चषालमुन्मुच्याज्येन यूपाग्रे स्रुवेणानक्ति देवस्त्वा सवितेत्यादिमन्त्रेण । चषालमन्तरतो बाह्यतश्च स्वभ्यक्तं कृत्वा यूपाग्रे प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वेत्यादिमन्त्रेण । चषालो यूपकटक इति कोशात् पञ्चारत्निपरिमाणयूपस्य अग्रभागे अधिके चतुरङ्गुलोर्ध्वे सन्नामिते कटकवत् यः प्रवेश्यते स चतुरङ्गुलमात्रः सुबिलः चषाल इत्युच्यते ॥

३५ ततस्तत्क्षणकाले त्रिवृत्तामग्निष्ठामस्रिं स्रुवेणाभिघारयन्नाह । यूपायाज्यमानायानुब्रूहीति । अञ्जनप्रभृति स्वरुगूहनपर्यन्तं पत्नीयजमानौ यूपं नोत्सृजेताम् । अध्वर्युरुपर्याज्यमानयति । यजमानस्तेनाज्येन यूपमुपरवर्जं सर्वतः समनक्ति । पत्न्युपरमनक्ति । अत्र पञ्चारत्निपरिमाणयूपस्य मूलप्रदेशे प्रथमोऽरत्निपरिमितो भागो यो यूपावटे रोप्यते स उपर इत्युच्यते ॥

३६ अयं यूपायेत्यादिप्रैषो यूपाञ्जनप्रैष इत्युच्यते ॥

३७ यूपस्य चतस्रोऽष्टौ वा ऽस्रयो भवन्ति तत्राग्निसंमुखास्रिः अग्निष्ठास्रिरित्युच्यते ॥



३८ अध्वर्युरवटाद्बहिर्यूपमुच्छ्रयन्नाह । उच्छ्रीयमाणायानुब्रूहीति । अयं यूपोच्छ्रयणप्रैष इत्युच्यते ॥

३९ अध्वर्युर्यजमानेन सह यूपमुच्छ्रयति उद्दिवं स्तभानेत्यादिमन्त्रेण । याते धामानीति द्वाभ्यामृग्भ्यां यूपमवटे प्रवेशयति । अग्निष्ठामश्रिमाहवनीयस्याभिमुखीं करोति । एतद्यूपोच्छ्रयणमित्युच्यते ॥

४० ततः स्थिरस्य यूपस्य चषालं यजमानमवेक्षयति तद्विष्णोरित्यृचा । इदं चषालावेक्षणमित्युच्यते ॥

४१ ततो ब्रह्मवनिं त्वेत्यादिमन्त्रेणावटे प्रदक्षिणं मृत्तिकां प्रवेशयति । मैत्रावरुणदण्डेन यूपमभितः संहन्ति ब्रह्म दृंह क्षत्रं दृंहेत्यादिमन्त्रेण । इदं यूपसंहननमित्युच्यते ॥

४२ अवटं पार्श्वभूम्यपेक्षया ऽन्यूनमनतिरिक्तं पुरीषेण प्रच्छाद्यतत्रोदपात्रोदकं प्रदक्षिणं नीय यूपरशनामादाय त्रिः संभुज्य मध्यमेन गुणेन यूपं नाभिदघ्ने त्रिः प्रदक्षिणं परिव्ययन्नाह परिवीयमाणायानुब्रूहीति । अयं परिव्ययणप्रैष उच्यते ॥

४३ ततः परिवीरित्यृचा परिव्ययति । यूपसमीपमारभ्य परस्परसंलग्नं कृत्वा ऽन्तं प्रवेश्य कुशलक्रियया ग्रन्थिं कृत्वा रशनाग्रं निर्भिद्य रशनामूलं प्रवेश्याग्निष्ठायामस्यां मध्यमं रशनागुणं निर्भिद्य तत्र स्वरुं प्रवेशयति । अन्तरिक्षस्येत्यादि गूहामीत्यन्तेन मन्त्रेण । यूपतक्षणकाले पतितं शकलं प्रकृते गूह्यमानं स्वरुपदवाच्यम् ॥

४४ यूपप्रक्षालनप्रभृत्येतावदन्तं कर्म यूपसंस्कार इत्युच्यते ॥

४५ अथैनं पशुं हरिद्रामलकादिभिः स्नापितमन्तरेण चात्वालोत्करौ प्रपाद्य यूपाहवनीययोर्मध्येन दक्षिणतो नीत्वा यूपस्य पुरस्तात् प्रत्यङ्मुखं यः कश्चिद्धारयति । पशोरुक्तो यो वर्णो विधिवाक्ये यथा वायव्यं श्वेतमालभेतेत्यादौ श्वेतवर्णस्तादृशवर्णविशिष्टपश्वभावे अथ वा पशोः प्रतिषिद्धत्वे ऽध्वर्युर्नित्याज्यस्थाल्याज्येन वसाहोमहवन्या प्रायश्चित्ताहुतीर्जुहोति । अग्निर्मूर्धेत्यृचा । अग्नय इदं न ममेति त्यागो यजमानस्य । अग्नाविष्णू सजोषसेत्यृचा । अग्नाविष्णुभ्यामिति त्यागः । इन्द्रं विश्वा अवीवृधन्नित्यृचा । इन्द्रायेदमिति त्यागः । वायो शतं हरीणा-

मित्यृचा । वायवइदमिति त्यागः । प्रजापते न त्वदित्यृचा । प्रजापतयइदमिति त्यागः । एता आहुतयः पशुप्रायश्चित्ताहुतय उच्यन्ते ॥

४६ एकशृङ्गश्छिन्नकर्णोऽन्धो भग्नदन्तो वामनश्छिन्नपुच्छः शिपिविष्टो बधिरः कच्छनियुक्त एकखुरश्च पशुः प्रतिषिद्धपशुरुच्यते ॥

४७ प्रतिबर्हिर्मन्त्रं वदन्निषेत्स्वेति मन्त्रेण द्वे बर्हिषी गृहीत्वा पशोः शृङ्गयोर्मध्ये बर्हिर्भ्यामन्वारभ्येन्द्राग्निभ्यां त्वा जुष्टमित्यादिमन्त्रेण यजमानेन सह मनसा सङ्कल्प्योपाकरोति उपवीरसीत्याद्यृचा प्रजानन्तः प्रतिगृह्णमाना इत्यृचा इमं पशुं पशुपते इत्यृचा अनुमन्यस्वेति यजुषा च । इदं पशूपाकरणमित्युच्यते ॥

४८ बर्हिषी अन्यैः पदार्थैरसंसृष्टे प्रज्ञाते निधायोत्तरवेदिसमीपे पूर्वपरिगृहीतशकलत्रयमध्ये एकमधिमन्थनशकलं प्रागायतं निदधाति अग्नेर्जनित्रमसीति मन्त्रेण । तस्य पार्श्वयोः प्रागायते वृषणौ हस्ताभ्यां युगपदन्वञ्चौ निदधाति वृषणौ स्थ इति मन्त्रेण । उर्वश्यस्यायुरसीत्यादिमन्त्रेण दक्षिणेन हस्तेनोत्तरारणिं सव्येनाधरारणिमादत्ते । घृतेनाक्ते इत्यादिमन्त्रेणारणिद्वयमपूर्वोत्पन्नस्थाल्यां समनक्ति । अधिमन्थनशकले अरणी निधाय प्रजातीयं यजमानं वाचयति । गायत्रं छन्दोऽनुप्रजायस्वेत्यादियजुर्मन्त्रः प्रजात्यै अग्निप्रजननाय हितमिति व्युत्पत्त्या प्रजातीय इत्युच्यते ॥

४९ मन्थताह । अग्नये मथ्यमानायानुब्रू३हीति । अयं मन्थनप्रैष इत्युच्यते ॥

५० अग्नौ जाते सत्याह । जातायानुब्रू३हीति । यजमानान्वारब्धोऽध्वर्युर्जातमग्निमाहवनीये भवतं नः समनसावित्यृचा प्रहरति । अस्मात्प्रहरणात्पूर्वं प्रह्रियमाणायानुब्रू३हीति प्रैषो होतारं प्रति सम्प्रहरणप्रैष इत्युच्यते ॥

५१ अपूर्वोत्पन्नेन सकृद्गृहीतेन आज्येन आहवनीये प्रहृतस्याग्नेरुपरि आनाभिरग्निश्चरतीत्यृचा जुहोति । ततो देवस्य त्वेति मन्त्रेण द्विगुणां रशनामादाय तया सव्यशृङ्गवर्जं पशुं अरत्न्या शिरसि बध्नाति ऋतस्य त्वा देवहविरित्यादिमन्त्रेण । द्विगुणायाः पशुरशनायास्त्रिगुणायाः यूपरशना-



पशुनियोजनमित्युच्यते ॥

५२ अद्भ्यस्त्वौषधीभ्य इत्यादिमन्त्रेण तूष्णीं संस्कृताभिरद्भिः पशुं प्रोक्षति । पात्रान्तरे जलमानीय अपां पेरुसीति मन्त्रेण पशुं पाययति । तूष्णीं संस्कृताभिरद्भिः पशुमुपरिष्टात्प्रोक्ष्य स्वात्तं चिदित्यादिमन्त्रेण अधस्तात्प्रोक्षति प्रोक्षणीर्निधाति । एतत्पशुप्रोक्षणमित्युच्यते ॥

५३ अथेध्मात्समिधमाददान आह अग्नये समिध्यमानायानुब्रूहीत्यादि जोह्वाघारपर्यन्तं प्रकृतिवत् । तदनन्तरमुदङ्गागत्याघारशेषजौह्वाज्येन पशुं ललाटे समनक्ति मन्त्रे प्राणो वायुनेत्यादिमन्त्रेण । सं यजत्रैरङ्गानीति मन्त्रेण ककुदि । सं यज्ञपतिराशिषेति मन्त्रेण दक्षिणश्रोण्याम् । इदं पशुसमञ्जनमित्युच्यते ॥

५४ ततो ध्रुवां समज्य यथायतनं स्रुचौ सादयित्वा प्रवरं प्रवृणीते । तत्र होतुःप्रवरानन्तरं आश्राव्य प्रत्याश्राविते मित्रावरुणौ प्रशास्तारौ प्रशास्तादित्युक्त्वा मैत्रावरुणस्य नाम गृह्णाति । अमुकशर्मा मानुष इति । घृतवतीशब्दश्रवणानन्तरं जुहूपभृतावादायात्याक्रम्याश्राव्य प्रत्याश्राविते आह समिद्भ्यः प्रेष्येति । द्वितीयादिप्रयाजेषु प्रेष्येत्येव वदति प्रशास्तृप्रैषान्ते तेन सह यजेति वदति न वा चतुर्थाष्टमयोः प्रयाजयोरौपभृदाज्यस्य जुह्वां समानयनम् । स्वाहा कृतीभ्यः संस्रावस्य जुह्वां रक्षणं पञ्चमप्रयाजे यो यजमानस्य त्यागः स एव षष्ठादिषु । दशप्रयाजानिष्ट्वोदङ्ङत्याक्रम्य स्वरुं स्वधितिञ्चादाय तौ सह जुह्वां समज्य ताभ्यां सहैव पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति मन्त्रेण । स्वधितिं शमितुर्हस्ते प्रयच्छति स्वरुं रशनायामवगूहति । यथायतनं स्रुचौ सादयित्वाह । पर्यग्नये क्रियमाणायानुब्रूहि इति । अयं पर्यग्निकरणप्रैष इत्युच्यते ॥

५५ तत आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण शामित्रमथेण पशुं जघनेन स्रुव इत्येवंरीत्या त्रिः प्रदक्षिणं पर्येति । यथोल्मुकमन्तर्भवति स्वयं बहिर्भवति तथा । इदं पाशुकपर्यग्निकरणमुच्यते ॥

५६ ततोऽध्वर्युरपूर्वाज्यात्स्रुक्गृहीतेन परिशरणचयमध्ये प्रथमे एकां

उत्तरयोः परिसरणयोर्द्वे द्वे एवं पञ्चापाव्यानि जुहोति । प्रजानन्तइत्येका येषामीशे पशुपतिरिति द्वितीया ये बध्यमानमिति तृतीया य आरण्याः पशव इति चतुर्थी प्रमुञ्चमाना इति पञ्चमी । एता ऋचोपाव्यानीत्युच्यन्ते ॥

५७ प्रजापतयइदमिति प्रथमयोस्त्यागः । अग्नये वायवे विश्वेभ्यो देवेभ्य इति क्रमेण तृतीयादीनाम् । आग्नीध्रस्य पर्यग्निकरणार्थं प्रदक्षिणं गमनं परिसरणमित्युच्यते ॥

५८ अथ वा परिसरणानुसरणं विना यथासम्भवं होमः । अयमपाव्यहोम इत्युच्यते ॥

५९ आग्नीध्र आहवनीयसमीपे उल्मुकं निधाय यथागतमितः पुनः पर्येति । तदनन्तरं प्रतिप्रस्थाता उपवेषेण पुराणगार्हपत्यादुदीचोऽङ्गाराचिरुद्धरति मातरिश्वनो घर्मोऽसीति मन्त्रेण । तानादाय दक्षिणया द्वारा दक्षिणेन विहारं ब्रह्मयजमानयूपानामन्तरत आहरन् स्वयं बहिर्गच्छन् अन्तरेण चात्वालोत्करावुदग्गत्वा शामित्रशालायां निदधाति । अयं निहितोऽग्निः शामित्र इत्युच्यते ॥

६० आग्नीध्रः यूपोत्तरवेद्योर्मध्येन शामित्रशालां प्रतिनीयमानस्य पशोरग्रेण उल्मुकं गृहीत्वा गच्छति । अध्वर्युर्यजमानश्च पशुं वपाश्रपणीभ्यामन्वारभेते । अध्वर्युराश्राव्य प्रत्याश्राविते आह । उपप्रेष्यहोतर्हव्या देवेभ्यः इति । अयमुपप्रैष इत्युच्यते ॥

६१ अन्तरेण चात्वालोत्करावुदञ्चं नीयमानं पशुमनुमन्त्रयते नाना प्राणो यजमान इति मन्त्रेण । आग्नीध्र उदङ्मुखं निष्क्रम्य किञ्चिदागत्वा शामित्रसकाशे उल्मुकं निदधाति । अध्वर्युस्तस्योल्मुकस्योत्तरतः प्राग्वोदग्वोपाकरणबर्हिषोर्मध्ये एकं बर्हिरपास्यति पृथिव्याः सम्पृचः पाहीति मन्त्रेण । पूर्वं येन बर्हिर्द्वयेन पशोरुपाकरणं कृतं तदुपाकरणबर्हिरुच्यते ॥

६२ अध्वर्युः शमितारं प्रत्याह । अकृण्वन्तं मायुं संज्ञपयतेति । अयं शमितृप्रैषइत्युच्यते ॥

६३ तस्मिन् बर्हिषि प्रतीचीनशिरसमुदीचीनपादं पशुं शाययित्वा शमितारः संज्ञपयन्ति एवंरीत्या पशोर्मारणं संज्ञपनमित्युच्यते ॥

६४ यजमान ऋत्विजश्च संज्ञप्यमानं पशुमनवेक्षमाणाः [illegible] संज्ञपनकाले पृषदाज्यसमीपे आसते इह प्रजा विश्वरूपा रमन्तामित्यृचं च जपन्ति । शमितारः संज्ञपनानन्तरं संज्ञप्त इत्याहुः । अध्वर्युरुपाकरणप्रभृति संज्ञपनपर्यन्तं पशोर्वाशने वेपने पलायने मरणे शकृत्कृतौ मूत्रकरणे च प्रतिनिमित्तं निमित्तक्रमेण तिस्रस्तिस्र आहुतीर्जुहोति यदस्य पारे रजस इत्यादितिसृभिर्ऋग्भिः । तत्र द्वितीयस्यामृचि वाशने निमित्ते यस्माद्भीषा वाशिष्ठा इति पाठः । वेपने तु वाशिष्ठा इति पदस्य स्थाने वेपिष्ठा इति पदमूहनीयम् । एवं सर्वनिमित्तेषु । अग्नये वैश्वानरायेदमिति यजमानस्य त्याग आद्ये । अन्त्ययोस्तु रुद्राय मीढुष इति । उदकोपस्पर्शश्च । एता वाशनादिनिमित्ताहुतय उच्यन्ते ॥

६५ ततोऽपूर्वाज्यात्सकृद्गृहीतेन यत्पशुर्मायुमकृतेत्यादिमन्त्रेण जुहोति । अग्नय इति त्यागो यजमानस्य इयं संज्ञप्ताहुतिरित्युच्यते ॥

६६ शमितार उगेत्यादिमन्त्रेण पश्वभिमुखं गच्छन्ति । अदितिः पाशमित्यादि मन्त्रेण पाशात्प्रमुच्यमानं पशुमनुमन्त्रयते । अविशाखया वपाश्रपण्या पाशमादायारातीयन्तमित्यादिमन्त्रेण नैर्ऋत्यां दिशि निरस्यति । अथ प्रतिप्रस्थाता पत्नीमुत्थाप्योदककमण्डलुं धारयित्वा नमस्त आतानेतिमन्त्रेणादित्यमीक्षयति । अन्तरेण चात्वालोत्करौ पत्नीमुदङ्ङुपनिष्क्रमय्य प्राचीमुदानयन्ननर्वा प्रेहीत्यादिमन्त्रं वाचयति । अध्वर्युः पशुसमीपे अपो वीक्षमाणां पत्नीं आपो देवीरित्यादिमन्त्रं वाचयति । स्वयमेव मन्त्रं ब्रुवाणा पत्नी जलं सिञ्चन्ती सती क्रमेण पशोरङ्गान्याप्याययति । वाक् त आप्यायतामिति मन्त्रेण वाचं प्राणस्त इति नासिके । एवं चक्षुस्त इति चक्षुषी । श्रोत्रं त इति श्रोत्रे । चक्षुरादेर्द्वित्वात् मन्त्रे एकवचनान्तप्रयोगात्प्रतिस्थानं मन्त्रावृत्तिरिति केचित् । या ते प्राणाञ्छुगित्यादिमन्त्रं सकृदेव वदति । पूर्वमाप्यायितानि वागादीन्यङ्गानि संमृशति । ततो नाभिस्त आप्यायतामिति नाभिम् । पायुस्त इति गुदम् । ततः शुद्धाश्चरित्रा इत्यादिमन्त्रेण पशोश्चतुरः पादानेकीकृत्य प्रक्षालयति अतिशिष्टा अपः पशोः पृष्ठमूलादारभ्याग्रपर्यन्तं निनयति शं महोभ्यामिति मन्त्रेण । एतावत्कर्म संज्ञप्तपश्वाप्यायनमित्युच्यते ॥

६७ अध्वर्युः पत्नीमन्यत्र गमयित्वा पशोर्दक्षिणपार्श्वे द्वितीयमुपा-

करणमाह: ओषधे त्रायस्वैनमित्यनेन ...

मैनं हिंसीरिति मन्त्रेण तस्योपरि स्वधितिं तिर्यञ्चं निदधाति। बर्हिषा सह त्वचं छित्वा बर्हिषोऽग्रं दक्षिणहस्ताङ्गुल्यन्तराले सक्तं कृत्वा बर्हिषोऽधोभागस्योभावन्तौ सह गृहीत्वा रुधिराक्तं छिन्नप्रदेशं नैर्ऋत्यां दिशि रक्षसां भागोसीत्यादिमन्त्रेण निरस्यति। इदं त्वक्छेदनमित्युच्यते॥

६८ ततोऽप उपस्पृश्य छिन्नप्रदेशं पुनर्विस्तीर्णं कृत्वा इषेत्वेतिमन्त्रेण वपामुद्धरति। इदं वपोद्धरणं वपोत्खेदनमिति चोच्यते॥

६९ हृन्मेदस्तु वपा वसेतिकोशात् मेदोविशेषः सर्वोदरव्यापी पालिकाकारोतिश्वेतवर्णा वपेत्युच्यते॥

७० तया वपया सशाखां वपाश्रपणीं घृतेनेत्यादिप्रोर्णुवाथामित्यन्तेन मन्त्रेण प्रच्छादयति। अविशाखया वपाश्रपण्या वपाया अधोभागं गृहीत्वा वपां स्वधितिनाऽच्छिद्रो राय इत्यादिमन्त्रेण छिनत्ति। प्राङ्मुखः पर्यावृत्य वपामद्भिः प्रक्षालयति। एतद्वपाप्रक्षालनमित्युच्यते॥

७१ अथैनां वपां शामित्राग्नौ प्रतितपति। एतद्वपाप्रतितपनमुच्यते॥

७२ आग्नीध्रः शामित्रसकाशे पूर्वनिहितमुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरवेद्यभिमुखो गच्छति। तस्य पश्चादध्वर्युः उर्वन्तरिक्षमन्विहीतिमन्त्रेण गच्छति। यजमानोवपाश्रपणीमन्वारभते। आग्नीध्रउल्मुकमाहवनीये प्रक्षिपति। इदं पशूल्मुकप्रक्षेपणमित्युच्यते॥

७३ अध्वर्युराहवनीयस्योत्तरपार्श्वस्थेष्वङ्गारेषु पूर्वमङ्गुल्यन्तराले स्थापितं बर्हिषोऽग्रं प्रक्षिपति वायो वीहीत्यादिमन्त्रेण। अयमुपाकरणबर्हिरग्रप्रक्षेप इत्युच्यते॥

७४ प्रदीप्तस्य बर्हिरग्रस्य ज्वालायां वपां वपाश्रपण्या किञ्चित्प्रतितप्य यूपाहवनीययोरन्तरेण नीत्वा दक्षिणतः प्रतिप्रस्थात्रे प्रयच्छति। प्रतिप्रस्थाता आहवनीयस्य दक्षिणतः उदङ्मुखः स्थित्वा श्रपयति। अध्वर्युरासीनः श्रप्यमाणाया वपाया उपरि स्रुवेणाज्येन त्वामु ते दधिरे इत्यृचा स्रुवाहुतिं जुहोति। जातवेदसेऽग्नय इदमिति यजमानस्य त्यागः। इयं स्तोकाहुतिरित्युच्यते॥



७५ अथाध्वर्युर्होतारं सम्प्रेष्यति । स्तोकेभ्योनुब्रू३हीति इदं वपाश्रपणमुच्यते ॥

७६ वपायां शृतायां सत्यां पात्रान्तरेऽपूर्वाज्येन उपस्तीर्य वपाश्रपणीसकाशाद्वपामुद्धृत्य तस्मिन्पात्रेऽवधायाग्नावधिश्रित्य अपूर्वाज्येनाभिघार्योदगुद्वास्य तेनैवाज्येन सान्नाय्यवन्मन्त्रेणालङ्करोति । इदं वपालङ्करणमुच्यते ॥

७७ स्रुचां दक्षिणतः पञ्चहोत्रावपामासादयति । इदं वपासादनमुच्यते ।

७८ अग्निर्होतेत्यादीनि पञ्चवाक्यानि पञ्चहोतृपदवाच्यानि ॥

७९ यजमानेनासत्राभिमन्त्रणे कृते स्रुगादापनमन्त्रगतघृतवतीशब्दं श्रुत्वाऽध्वर्युर्जुहूपभृतावादायात्याक्रम्याश्राव्य प्रत्याश्राविते मैत्रावरुणं प्रत्याह । स्वाहा कृतीभ्यः प्रेष्येति अयमुत्तमप्रयाजप्रैषप्रैष उच्यते ।

८० मैत्रावरुणेन प्रेषितो होता एकादशीं प्रयाजयाज्यां पठति । होत्रा वषट्कृतेऽध्वर्युरुत्तमप्रयाजेन प्रचरति । तत उदङ्ङत्याक्रम्य प्रयाजशेषेण ध्रुवामभिघार्य पृषदाज्यमभिघार्य दक्षिणतो गत्वा वपामभिघार्य यथागतं प्रतिनिवृत्य चतुर्वारं ध्रुवाया आज्यं गृह्णान आह । अग्नय आज्यस्यावदीयमानस्यानुब्रू३हीति ततोऽत्याक्रम्याश्राव्य प्रत्याश्रावितआह । अग्नयआज्यं प्रस्थितं प्रे३ष्येत्ति । ततो मैत्रावरुणप्रेषितो होता यजति । होत्रा वषट्कृतेऽध्वर्युः प्रकृतिवत्प्रथमाज्यभागेन प्रचरति एवं द्वितीयाज्यभागेन । तत्र सोमायाज्यस्यावदीयमानस्यानुब्रू३हि सोमायाज्यं प्रस्थितं प्रे३ष्येति प्रैषयोर्विशेषः । उभयत्र याजमानं प्रकृतिवत् । अथापूर्वाज्येन जुह्वामुपस्तीर्य तदुपरि हिरण्यशकलमवधाय वपामेकीकृत्य स्रुवेणादधान आह । इन्द्राग्निभ्यां छागस्य हविषो वपाया मेदसोनुब्रू३हीति अयं वपानुयाज्याप्रैष उच्यते ॥

८१ वपां स्रुचि निधाय तदुपरि हिरण्यशकलं निधायापूर्वाज्येनाभिघार्यापूर्वाज्यस्थालीं सस्रुवामाहवनीयसकाशे निधायात्याक्रम्याश्राव्य प्रत्याश्रावितआह । इन्द्राग्निभ्यां छागस्यवपां मेदः प्रस्थितं प्रे३ष्येति अयं वपायाज्याप्रैष उच्यते ॥

८२ स्वाहा देवेभ्य इतिमन्त्रेण पुरस्तात् स्रुवेणाज्याहुतिं जुहोति । देवेभ्य इदमिति यजमानस्य त्यागः । अध्वर्युर्होतुर्याज्याया उपक्रमकाले जातवेदो वपयेत्यृचं स्वाहाकारान्तां पठन् वषट्कारसमकालं स्रुङ्मुखेन वपां जुहोति । याजमानं प्रकृतिवत् । देवेभ्यः स्वाहेति मन्त्रेणोपरिष्टात्स्रुवाहुतिं जुहोति । याजमानं पूर्ववत् । आज्यभागानन्तरमेतावत्कर्म वपायाग इति वपाप्रचार इति चोच्यते ॥

८३ ततो विशाखां वपाश्रपणीं प्रागग्रामविशाखां वपाश्रपणीं प्रत्यगग्रां च कृत्वाऽऽहवनीये स्वाहोर्ध्वनभसमित्यादृचा सस्वाहाकारयानुप्रहरति । इदं वपाश्रपण्यनुप्रहरणमुच्यते ॥

८४ ऊर्ध्वनभसे मारुतायेदमिति यजमानस्य त्यागः । वपाश्रपण्योरुपरि संस्रावेणाभिजुहोति । तत उदङ्ङुत्याक्रम्य यथायतनं स्रुचौ सादयित्वा षड्ऋत्विजो यजमानः पत्नी च चात्वालदेशं गत्वा परस्परस्याह्वानं कुर्युः । तद्यथा पत्न्येहि । होतरेहि । ब्रह्मन्नेहि । प्रतिप्रस्थातरेहि । प्रशास्तरेहि । आग्नीध्रेहि । यजमान एहि । इत्यध्वर्युराहूयति । ततः पत्नी होत्रादीनध्वर्य्वन्तानुक्तरीत्याहूयति । एवं होतृब्रह्मप्रतिप्रस्थातृप्रशास्त्राग्नीध्रयजमानाः क्रमेण आत्मानं वर्जयित्वा सर्वानुक्तरीत्याह्वानं कुर्युः तत इदमापः प्रवहतेति निमुञ्चामि शपथादिति च द्वाभ्यामृग्भ्यां चात्वाले सर्वे मार्जयन्ते । यजमानः सुमित्रा न आप ओषधयः सन्त्विति मन्त्रेणाञ्जलिनापो गृह्णाति दुर्मित्रास्तस्मै भूयासुरित्यादिमन्त्रेण नैर्ऋत्यां दिशि ता अपो निरस्यति । सर्वे अपः स्पृष्ट्वा स्वेस्वे स्थानउपविशन्ति । इदं वपामार्जनमित्युच्यते ।

८५ अथाध्वर्युराह । आग्नीत्पशुपुरोडाशं निर्वप प्रतिप्रस्थातः पशुं विशाधि इति । अयं पशुपुरोडाशनिर्वापप्रैष उच्यते ॥

८६ तत आग्नीध्रः पात्राणि सम्मृश्य शालामुखीयस्य पुरस्ताद्दर्भेषु पात्राणि सादयति । स्फ्यमेकादशकपालानि शूर्पं कृष्णाजिनं उलूखलं मुसलं दृषदमुपलां मेक्षणं पिष्टोद्वपनीं प्रणीताप्रणयनं दारुपात्रीं मदन्तीं च । प्राकृत आहवनीयः शालामुखीय इत्युच्यते ॥

८७ ततो ब्रह्मोपवेशनादि प्रकृतिवत् । निर्वापादिषु अग्निपदस्य स्थाने इन्द्राग्निपदम् । शालामुखीयस्य पश्चादाज्यलेपनिनयनान्तं



करोति । प्रतिप्रस्थाता हविष्कृदन्ते आप्यनिनयनान्ते वा सम्प्रैषमाह । शमितर्हृदयं जिह्वां वक्षस्तानि साधु कुरुतात्तनिममतस्नौ तानि साधु सव्यं दोरेकचरं कुरुतात्तानापार्श्वे अवधतात्दक्षिणां श्रोणिमध्युद्धिं कुरुतात् दक्षिणं दोः सव्यां श्रोणिमणिमद्गुदस्य तानि त्र्यङ्गानि कुरुतात्वनिष्ठुं च आघनीं चावधत्तात्बहूपः कुरुतात्त्रिः पशुं प्रच्यावयतात्त्रिः प्रच्युतस्य पशोर्हृदयमुत्तमं कुरुतादिति । अयं पश्वङ्गग्रहणप्रैष इत्युच्यते ॥

८८ अध्वर्युः शमित्राग्नौ पशुकुम्भीमधिश्रति द्यौरसि पृथिव्यसीत्यादिमन्त्रेण पशुकुम्भ्यां शाखापवित्रमुदगग्रं निदधाति तस्यां प्रभूतमुदकमानीय सर्वाण्यङ्गानि निक्षिप्य सुशृतानि यथास्युस्तथा श्रपयति । पश्वङ्गेषु शृतेषुसत्सु आग्नीध्रो दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन दारुपात्रीं वेदमित्येतत्समादायान्तर्वेदि पुरोडाशासादनान्तं करोति । यजमानेनासत्राभिमन्त्रणे कृते ऽध्वर्युर्जुहूपभृतोरुपस्तीर्य पुरोडाशस्य पूर्वार्धादवद्यन्नाह । इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रू३हीति अयं पशुपुरोडाशानुवाक्याप्रैष उच्यते ॥

८९ जुह्वां प्रकृतिवदवदाय प्रत्यञ्जनान्तं कृत्वोपभृति स्विष्टकृदर्थं पुरोडाशस्योत्तरार्धात्सकृदवदाय द्विरभिघार्य न प्रत्यनक्ति अत्याक्रम्याश्राव्य प्रत्याश्रावितआह इन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रे३ष्येति । अयं पशुपुरोडाशयाज्याप्रैष इत्युच्यते ॥

९० वषट्कृते जुहोति । इन्द्राग्निभ्यामिदमिति यजमानस्य त्यागोनुमन्त्रणं च प्राकृतम् । अध्वर्युरुपभृत्स्थं पुरोडाशं जुह्वां समावपमान आह । अग्नये नुब्रू३हीति । अयं पशुपुरोडाश स्विष्टकृदनुवाक्याप्रैष उच्यते ॥

९१ ततोऽत्याक्रम्य प्रत्याश्रावितआह अग्नये प्रे३ष्येति । अयं पशुपुरोडाशस्विष्टकृत्प्रैषप्रैष उच्यते ॥

९२ वषट्कृते प्रकृतिवज्जुहोति प्राकृताग्नेययागवद्यजमानस्य त्यागानुमन्त्रणे ततो हविरुच्छिष्टोद्वासनान्तं प्रकृतिवत् । ततः स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वाहार्यपचने इध्मप्रव्रश्चनान्यभ्याधाय फलीकरणहोमं कृत्वा प्रणीतानिनयनान्तं प्रकृतिवत् । अथ संप्रैषमाह । आग्नीदुत्तरं

बोहकपसादय प्रतिप्रस्थातः पशा संवदस्वेति । अथ पाशुकहविरासादनप्रैष इत्युच्यते ॥

९३ तत आग्नीध्रः स्रुचां दक्षिणतो बर्हिरास्तीर्य तदुपरि यूपाहवनीययोरन्तरेणेडसूनुमाहृत्य कृष्णशाखायामुपगूहति । प्रतिप्रस्थाता आज्यस्थालीं स्रुवं चादाय पूर्वगृहीतात्पृषदाज्याज्जुहूं गृहीत्वान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य शमितारं पृच्छति । शृतं३ हविः३ शमितः इति । शमिता हृदयशूलं पुरतो धारयन् शृतं इति प्रत्याह । प्रतिप्रस्थाता पुनः किंचिद्गत्वा पूर्ववत्पृच्छति । शमिता तथैवप्रत्याह पुनः किंचिद्गत्वा तथैव तृतीयप्रश्नोत्तरे । इमे प्रश्नोत्तरे शमितृप्रश्नोत्तरे इत्युच्येते ॥

९४ अत्र प्रथमगमने पूषा मा पशुपाः पात्विति मन्त्रः । पूषा मा पथिपाः पात्विति द्वितीयगमने मन्त्रः । तृतीयगमने पूषा मा धिपाः पात्वितिमन्त्रः । अथ वा तूष्णीमेव गमनत्रयम् एते हविरानयनार्थगमनमन्त्रा इत्युच्यन्ते ॥

९५ प्रतिप्रस्थाता उक्तरीत्या शामित्राग्निसमीपं गत्वा शमितुर्हस्ताच्छूलमादाय तेन शूलेन हृदयरूपमवदानं भित्वा तच्छूलं शमितुर्हस्ते दत्वा पृषदाज्येन हृदयादीन्येकादशावदानानि युगपदभिघारयति सन्ते मनसा मन इत्यादिना स्वाहाकारान्तेन मन्त्रेण । पुनराज्यस्थाल्याज्येन स्रुवगृहीतेन सर्वाण्यवदानान्यभिघार्योदगुद्वास्य पुनराज्येनाभिघार्य एकादशावदानानि प्रत्येकं यस्तआत्मा पशुष्वित्यादिमन्त्रेणालङ्करोति । उक्तमन्त्रेणाभिघारणं हविरलङ्करणमित्युच्यते ॥

९६ ततो विपूः कृत्वा हरतेति परिकर्मिणः प्रतिप्रेष्यति अयमङ्गाहरणप्रैष उच्यते ॥

९७ अध्वर्युर्जुहूमुपभृतिं च ध्रुवाज्येनोपस्तृणाति । इडापात्रे आज्यस्थाल्याज्येनोपस्तृणाति वसाहोमहवन्यामपूर्वाज्येनोपस्तृणाति स्वयं यूपस्य बहिर्मार्गेण गच्छन् जुहूं उपभृतं वसाहोमहवनीं इडापात्रं प्राशित्रहरणं च यूपाहवनीययोरन्तरेणाहृत्य दक्षिणतो हविषः सादयति । परिकर्मिणस्तु अङ्गानियूष्णः पृथक् कृत्वा यूषं पात्रान्तरे गृहीतं स्थापयन्ति । पश्वङ्गानि यूपाहवनीययोरन्तरेणाहरन्ति । अध्व-



र्युस्तान्यङ्गानि स्रुचां दक्षिणतः प्लक्षशाखसमीपे पञ्चहोत्रासादयति । ततः पात्रान्तरस्थं यूषं यूपाहवनीयोरन्तरेणाहृत्याङ्गानां दक्षिणतः सादयति । आसन्नानिहवींषि यन्मे अग्नइत्यृचा यजमानोऽनुमन्त्रयते । इदं पाशुकहविरासादनमित्युच्यते ॥

९८ ततोऽध्वर्युः प्लक्षशाखायां हृदयं निधाय स्वधितिना तस्याग्रे छिन्नप्रदेशादवद्यन्नाह । मनोतायै हविषोऽवदीयमानस्यानुब्रू३हीति । अयमङ्गावदानप्रैषइत्युच्यते ॥

९९ हृदयाज्जुह्वां द्विरवद्यति ततो जिह्वायाः सकाशात् द्विरवद्यति । ततो वक्षसस्तनिम्नश्च वृक्ययोर्मेदसी पृथक् स्थापयित्वा दक्षिणवृक्यात्सव्यवृक्यात्सव्याद्दोष्णो दक्षिणात्पार्श्वात्सव्यात्पार्श्वाद्दक्षिणश्रोण्या अध्युध्याऊर्ध्वप्रदेशाद्गुदं त्रेधा कृत्वा मूलमुपयड्भ्योऽयं स्विष्टकृदर्थं निधाय मध्यं द्वेधा कृत्वा जुह्वामवदधाति । पूर्वस्थापितदक्षिणवृक्यमेदं यूष्णा निधाय प्रसार्य तेन जुहूं प्रच्छाद्य यूष्णोपसिच्य ध्रुवाज्येन पूरितेन यूपाहवनीययोर्मध्याहृतेन स्रुवेण जुह्वां गृहीतान्यङ्गान्यभिघारयति । सर्वाण्यङ्गानि द्विर्द्विरवद्यति । सर्वत्रोपस्थानाभिमर्शप्रत्यञ्जनानि न भवन्ति । तत उपभृति सकृद्दक्षिणस्य दोष्णः सक्थ्नस्सव्यश्रोणेः पिशितमवदाय पूर्वोनिर्हितं गुदस्याग्रं निधाय यूषमानीय तदुपरि सव्यवृक्यमेदो निधाय प्रसार्य तत्रोपभृतं प्रच्छाद्य यूष्णोपसिच्य पूर्ववद्द्विरभिघारयति । अवत्तावशिष्टेभ्योऽङ्गेभ्यः प्राशित्रमवदायाज्यस्थाल्याः सकाशाद्गृहीताज्येन स्रुवदण्डेन जुह्ववदानवत् द्विरभिघार्य निदधाति । इडापात्र्यां अवदान काले ऽवशेषितान् हृदयजिह्वावक्षोभागान् तनिमं मतस्ने वनिष्ठुं च द्विर्द्विरादाय अन्यैरप्यनुक्तैरस्थिवर्जितैरङ्गैरिडां वर्धयित्वा यूष्णोपसिच्य जुह्वदाज्यस्थाल्याज्येन स्रुवेणाभिघारयति । वसाहोमहवन्यां वसां गृहीत्वा यूष्णोपसिच्य जुह्वद्वदपूर्वाज्येन स्रुवेणाभिघारयति इदं कर्म पश्वङ्गावदानमुच्यते ॥

१०० तत ऐन्द्रः प्राणो अङ्गे अङ्गइत्यादिमन्त्रेणावदानान्यभिमृशति । अयं मन्त्रोऽवदानाभिमर्शनमन्त्र इत्युच्यते ॥

१०१ अथ दक्षिणपार्श्वस्य मांसवत्प्रदेशेन वसाहोमहवन्यां गृहीतां वसां मिश्रयति श्रीरस्यग्निस्त्वेत्यादिमन्त्रेण । जाघनीं यथाहृतं प्रत्या-

हृत्य पश्चाद्धात्वा शामित्रमुखायस्य समीपे निदध्युः । पश्वङ्गानि जुहू उपभृतं इडापात्रीं वसाहोमहवनीं प्राशित्रहरणं च यथाहृतं पर्याहृत्य यथास्थानं निदध्युः । अध्वर्युर्यथागतं प्रत्येत्य जुहूपभृतावाददान आह । इन्द्राग्निभ्यां छागस्य हविषोनुब्रू३हीति । अयं पश्वङ्गानुवाक्याप्रैष उच्यते ॥

१०२ अत्याश्राव्याश्राव्य प्रत्याश्रावितआह इन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रे३ष्येति । अयं हविर्याज्याप्रैषप्रैष उच्यते ॥

१०३ प्रतिप्रस्थाता आहवनीयस्योत्तरतस्तिष्ठन् याज्याया अर्धर्चे होत्रा पठिते वसाहोमं घृतं घृतपावानः पिबतेत्यृचा जुहोति । अन्तरिक्षायेदमिति यजमानस्य त्यागः । अयं वसाहोम इत्युच्यते ॥

१०४ होतुर्वषट्कारे अध्वर्युर्जुह्वा जुहोति । यजमान इन्द्राग्निभ्यामिदं न मम । इन्द्राग्नियोरहं देवयज्ययेन्द्रियावी भूयासमिति त्यागानन्तरमनुमन्त्रयते । अयमङ्गयाग इत्युच्यते ॥

१०५ ततः प्रतिप्रस्थातोपविश्य वसाहोमशेषेण दिशो जुहोति दिशः प्रदिश इत्यादि मन्त्रेण । दिग्भ्य इदमिति यजमानत्यागः । अयं दिग्घोम इत्युच्यते ॥

१०६ ततोऽध्वर्युः प्रदक्षिणमावृत्य जुह्वामुपस्तीर्य स्रुवेण पृषदाज्यं सकृद् गृहीत्वाऽऽह । वनस्पतयेनु ऽब्रू३हीति । द्विरभिघार्य प्रसव्यमावृत्याश्राव्य प्रत्याश्रावितआह । वनस्पतये प्रे३ष्येति । वषट्कृते पूर्वा आहुतीरतिहाय जुहोति । वनस्पतयइदमिति यजमानस्य त्यागः आयुष्मानित्यनुमन्त्रणञ्च । अयं वनस्पतियाग इत्युच्यते ॥

१०७ अध्वर्युरुपभृति गृहीतान्यङ्गानि जुह्वां समावपमान आह । अग्नये स्विष्टकृतेनुब्रू३हीति । आश्राव्य प्रत्याश्रावितआह । अग्नये स्विष्टकृते प्रे३ष्येति । वषट्कृते पूर्ववज्जुहोति । संस्रावनिनयनानन्तरं होत्रकुलिपर्णाञ्जनादि करोति । उपहूतायामिडायां वनिष्ठुमग्नीधे षडवत्तं संपाद्य ददादि । इडाभागमपि ददातीति केषाञ्चिन्मते । षड्ऋत्विजो यजमानश्चेडां भक्षयन्ति । इदं पशिवडाभक्षणमुच्यते ॥

१०८ मार्जनानन्तरं ब्रह्मणो प्राशित्रं परिहरेत्यादि कृत्वा ब्रह्मणो वसाः परिहरेत्याह । तत आग्नीध्रस्तथा करोति । यजमानः अन्वाहार्यप्रति-





ग्रहानन्तरं ऋत्विग्भ्यो गां ददाति । देवस्येत्यादिप्रतिग्रहमन्त्रे ब्रह्मण ओदनमित्यस्य स्थाने रुद्राय गामिति विशेषः । अथाऽध्वर्युः सम्प्रैषमाह । आग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीति । अयमुपयाजप्रैष इत्युच्यते ॥

१०९ तत आग्नीध्रः शामित्राग्निसकाशादङ्गारानादाय होतुः पुरस्तादासादयति । प्रतिप्रस्थाता गुदतृतीयभागं वसाहोमहवनीभ्यादाय होतुरुत्तरपार्श्वे उपविश्य गुदं प्रत्यनुयाजमनुयाजप्रचारकाले स्वधितिना ऽसंभिन्दन् प्रच्छिद्य वसाहोमहवन्या पर्यावृत्य जुहोति । अध्वर्युः पृषदाज्यग्रहणीस्थं समस्तं पृषदाज्यं विहृत्य जुह्वां समानीय पृषदाज्यग्रहणीमुपभृत्स्थाने धृत्वा ऽत्याक्रम्याश्राव्य प्रत्याश्रावितमाह देवेभ्यः प्रेष्येति । वषट्कारसमकालं मध्वर्युः पृषदाज्यं जुहोति प्रतिप्रस्थाता गुदखण्डं समुद्रं गच्छ स्वाहेति मन्त्रेण जुहोति । देवाय बर्हिष इदमिति समुद्रायेदमिति च त्यागानन्तरं बर्हिषोऽहमित्यादि प्रकृतिवदनुमन्त्रणं च यजमानस्य । अध्वर्युर्द्वितीयादिष्वनुयाजेषु मैत्रावरुणं प्रतिप्रेष्येत्येव प्रेष्यति । ऊर्जादिषु बर्हिर्वर्जेष्वनुयाजेषु प्रशास्ता सह यजेति वदति । प्रतिप्रस्थाता द्वितीयादिष्वनुयाजेषु अन्तरिक्षं गच्छ स्वाहेत्यादि वैश्वानरं गच्छ स्वाहेत्यन्तैर्दशभिर्मन्त्रैर्होतुर्वषट्कारसमकालं क्रमेण दशगुदखण्डानि प्रच्छिद्य जुहोति । एते प्रतिप्रस्थातृकर्तृका गुदहोमा उपयाजा इत्युच्यन्ते ॥

११० यजमानस्य द्वितीयादिष्वनुयाजेषु त्यागाः क्रमेण । देवीभ्यो द्वाभ्य इदम्० अन्तरिक्षायेदम्० प्रथमानुयाजे । देवीभ्यामुषासानक्ताभ्यामिदम्० । देवाय सवित्र इदम्० द्वितीये । देवीभ्यां जोष्ट्रीभ्यामिदम्० अहोरात्राभ्यामिदम् तृतीये । देवीभ्यामूर्जाहुतिभ्यामिदं० मित्रावरुणाभ्यामिदम्० चतुर्थे । देवाभ्यां दैव्याभ्यां होतृभ्यामिदम्० सोमायेदम्० पञ्चमे । देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्य इदम्० यज्ञायेदम्० षष्ठे । देवाय नराशंसायेदम्० छन्दोभ्य इदम्० सप्तमे । देवाय वनस्पतय इदम्० द्यावापृथिवीभ्यामिदम्० अष्टमे । देवाय बर्हिषे वारितीभ्य इदम्० दिव्याय नभस इदम्० नवमे । देवायाग्नये स्विष्टकृत इदम्० अग्नये वैश्वानरायेदम्० । दशमे । इति द्वितीयादिषु दशसु त्यागा एते ।

अथानुमन्त्रणानि क्रमेण प्रथमादीनामेकादशानामनुयाजानाम् । बर्हिषोऽहन्देवयज्यया प्रजावान् भूयासम् । द्वारामहन्देव० प्रजावा० । उषासानक्तयोरहम्० जोष्ट्र्योरहम्० । ऊर्जाहुत्योरहं० । पशुमान्० । दैव्ययोर्होत्रोरहम्० । तिसृणां तिसृणामहम्० नराशᳪसस्याहन्देवयज्यया० । वनस्पतेरहम्० यायुष्मान्० । बर्हिषोवारितीनामहं० प्रजावान्० । अग्नेः स्विष्टकृतोऽहं० यायुष्मान् यज्ञेन प्रतिष्ठां गमेयम् । तत प्रतिप्रस्थाता बर्हिषि हस्तौ निमार्ष्टि अद्भ्यस्त्वौषधीभ्य इत्यादि मन्त्रेण । तनूत्वचमित्यादि मन्त्रेण यजमान औपयजिकं धूममन्वीक्षते । अध्वर्युरुद्दुत्याक्रम्य जुहूं स्वरुमवधायोत्तरवेदेः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन् दिवन्ते धूमो गच्छत्वित्यादि मन्त्रेण जुहोति । यजमानः वायवइदमिति त्यागं पठति । अयं स्वरुहोम इत्युच्यते ॥

१११ अध्वर्युर्यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुग्व्यूहने उपभृदनन्तरं तेनैव मन्त्रेण पृषदाज्यग्रहणीं व्यूहति । सूक्तवाकप्रैषे ब्रूहीति पदस्य स्थाने प्रेष्येति वदति । उज्जितिवाचने आज्यभागानन्तरं इन्द्राग्नियोरहं० वनस्पतेरहं० । देवानामाज्यपानामित्यादि प्रकृतिवत् । प्रस्तरेण सह शाखापवित्रं प्रहरति । अग्नीदित्यादि संस्रावहोमान्तं प्रकृतिवत् । उत्करे स्रुचौ विमुञ्चति । तन्मन्त्रे वामित्यादीनां द्विवचनानां स्थाने व इत्यादीनां बहुवचनानामूहः । पृषदाज्यग्रहण्यास्तृतीयत्वात् । प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य सोमं त्वष्टारं वाज्यस्थाल्याज्येन चतुर्गृहीतेनेष्ट्वा जुह्वामुपस्तीर्य जाघन्या अलोमप्रदेशात् द्विरवदायाभिघार्य देवानां पत्नीः पूर्ववद्यजति । पुनर्जुह्वामुपस्तीर्य जाघन्या अधोभागात् द्विरवदायाभिघार्याग्निं गृहपतिं यजति । अत्रैते चत्वार एव पत्नीसंयाजा भवन्ति । अन्तिमयोर्द्वयोर्होमद्रव्ये प्रकृत्यपेक्षया विशेषः प्रदर्शित एव । होतुर्हस्ते उपस्तीर्य जाघन्या अलोमप्रदेशात् द्विरवदाय दत्वाऽभिघार्य प्रकृतिवदिडामन्वारभते । इडोपह्वानानन्तरमग्नीधे जाघन्या अधोभागादेव षडवत्तं प्रकृतिवद्दत्वा स्रुचि चतुर्गृहीतं गृहीत्वाऽन्वाहार्यपचने प्रकृतिवत्प्रायश्चित्तं हुत्वा पत्नीव्रतं विसर्ज्य प्राङेत्य ध्रुवामाप्याय्य दर्शपूर्णमासोक्तप्रायश्चित्तानि हुत्वापञ्चधातून् समज्य प्रहृत्य दक्षिणेन पदा वेदिमाक्रम्य तिष्ठन् ध्रुवाज्यात्स्रुवेणोपहत्य जुहोति

यज्ञ यज्ञं गच्छेत्यादिमन्त्रेण । यज्ञायेदमिति यजमानस्य त्यागः । पुनस्तथैव जुहोति एषते यज्ञ इत्यादिमन्त्रेण । यज्ञपतय इदमिति यजमानस्य त्यागः । ततः स्रुवं निधाय ध्रुवामादाय प्रकृतिवत्समिष्टयजुर्जुहोति । ततो यजमानो विष्णुक्रमादिव्रतविसर्गान्तं प्रकृतिवत्करोति । ततोऽध्वर्युः स्फ्यमुदपात्रं हृदयशूलं चादाय एहि यजमानेति यजमानमामन्त्र्य पत्न्या सर्वैर्ऋत्विग्भिश्च सहान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति । अध्वर्युरग्रेण स्फ्येनोद्धृत्यावोत्यशुष्कार्द्रयोः सन्धौ हृदयशूलमुपगूहति । सर्वे शुगसि तमभिशोचेत्यादिमन्त्रं पठन्ति एवं हृदयशूलोपगूहनमुच्यते ॥

११२ अध्वर्युर्हृदयशूलं धाम्नो धाम्नो राजन्नित्यादि मन्त्रेण प्रोक्षति । यजमानोऽञ्जलिना ऽपो गृह्णाति सुमित्रान आप ओषधय इत्यादिमन्त्रेण । ता अपो नैर्ऋत्यां दिशि दुर्मित्रास्तस्मै भूयासुरित्यादि मन्त्रेण प्रक्षिपति । सर्वे अप उपस्पृश्य हृदयशूलमनवेक्षमाणा आगच्छन्तः सन्तोऽर्धपथे आर्द्राः सपलाशास्तिस्रस्तिस्रः समिध आददते । प्रत्येकदाने एधोस्येधिषीमहीतिमन्त्रः । आगत्याहवनीये यथाक्रमेण समिधोऽभ्यादधति । तत्र तिसृणां समिधामाधाने प्रत्येकं क्रमेण समिदसि स्वाहा तेजोऽसि स्वाहा तेजो मयि धेहि स्वाहेति त्रयो मन्त्राः । ततः सर्वे अपो अन्वचारिषमित्यृचा आहवनीयमुपतिष्ठन्ते । औपयाजिकेऽग्नौ वेद्यां स्तीर्णं बर्हिरुपोषति यत्कुसीदमित्यादि भवामीत्यन्तेन मन्त्रेण । इदं बर्हिरुपोषणमुच्यते ॥

११३ ततो यजमानो व्रीहिसक्तून् यवसक्तून् वा अपूर्वाज्येनोपस्तीर्णाभिघारितान् बर्हिषा प्रदीप्ते आहवनीये अञ्जलिना विश्वतोपर्णीत्यादिमन्त्रेण जुहोति । अग्नय इदमिति त्यागः हस्तौ परस्परं संघृष्याश्वादेकइत्यादिमन्त्रं पठन् लेपमपनयति । अयं पांशुकसक्तुहोम इत्युच्यते ॥

११४ यान्यपामित्यादिमन्त्रेण पूर्ववत् द्वितीयं जुहोति । अग्नय इदमिति त्यागः । पूर्वमन्त्रेण हस्तलेपमपनयति । अनृणा अस्मिन्नित्यादि मन्त्रेण तृतीयं जुहोति । अग्नय इदमिति त्यागः । हस्तलेपनि-

नयनं समन्त्रकं पूर्ववत् । वेद्यां तिष्ठन्नुत्तरवेद्यग्निमुपतिष्ठते अयं नोन-भेत्यादिमन्त्रेण इदमुत्तरवेद्यग्न्युपस्थानमुच्यते ॥

११५ सत्वं नोनभेत्यादि मन्त्रेण वायुमुपतिष्ठते । इदं वायूपस्थानमित्युच्यते ॥

११६ देवसꣳस्फानेत्यादिमन्त्रेणादित्यमुपतिष्ठते । इदं पाशुकादित्योपस्थानमित्युच्यते ॥

११७ आशासान इत्यादि यजमानाय तिष्ठेत्यन्तेन मन्त्रेण यूपमुपतिष्ठते । इदमन्तिमयूपोपस्थानमित्युच्यते ॥

११८ बर्हिरुपोषणप्रभृत्येतावत्पर्यन्तं कर्माध्वर्युर्यजमानो वा करोति । समारोपणपक्षे पत्नीयजमानाभ्यामन्वारब्धो ऽध्वर्युः उत्तरवेद्यग्निं अयन्तइत्यादिमन्त्रेण समिधि समारोपयति । तां समिधं आजुह्वान इत्यादि सीदतेत्यन्तेन मन्त्रेण शालामुखीये ऽभ्यादधाति । उद्बुध्यस्वाग्ने प्रतीत्यृचा अयस्तिꣳशदिति यजुषा च शालामुखीयं ज्वलयित्वा ऽपूर्वाज्यं स्रुचि चतुर्गृहीतं गृहीत्वा सप्तमे अग्नइत्यृचा पूर्णाहुतिं जुहोति । सप्तवते ऽग्नयइदमिति यजमानस्य त्यागः । यजमानो ऽध्वर्यवे गां वरं ददाति । ततो यज्ञो बभूवेत्यादि ब्राह्मणतर्पणान्तं प्रकृतिवत् । अथ समारोपणपक्षे ऽग्नीन् समारोप्याग्निहोत्रशालां गत्वा मथित्वा विहृत्य मनस्वतीं हुत्वा होमकाले उपस्थिते सत्यग्निहोत्रहोमं करोति । बौधायनसूत्रानुसारेण यजमानपत्नीप्रतिप्रस्थात्रध्वर्य्वाग्नीध्राणां पाशुकसम्बन्धिकर्माणि प्रतिपादितानि । आश्वलायनसूत्रानुसारेण होतृमैत्रावरुणयोः कर्माणि प्रतिपाद्यन्ते । तत्र पश्वनुष्ठानात्पूर्वं आग्नेयी आग्नावैष्णवीतीष्टिद्वयम् । अनयोरन्यतरा वा । अथवा क्वापि न । इति पक्षत्रयम् । एवं पश्वनुष्ठानानन्तरमपि पक्षत्रयम् । तत्राग्नेयीष्टौ अग्निर्मूर्धा दिवः ककुदित्यग्नेः पुरोनुवाक्या । भुवो यज्ञस्य रजसश्चनेतेति याज्या । अन्यत्सर्वं प्रकृतिवत् । इयं पाशुकाग्नेयेष्टिरित्युच्यते ॥

११९ आग्नावैष्णव्यामिष्टौ अग्नाविष्णू सजोषसेत्यग्नाविष्ण्वोः पुरोनुवाक्या अग्नाविष्णूमहिधामप्रियं वामिति याज्या । अन्यत्सर्वं

प्रकृतिवत् । अनया रीत्याः सत्याजपानीत्त [illegible]-
ष्टिरुच्यते ॥

१२० यूपायाज्यमानायानुब्रूहीति प्रेषितो होता पाशुबन्धिक्या वेदेः पश्चात् मन्त्रेण निरसनोपवेशने कृत्वा यूपाञ्जनीया ऋचोऽन्वाह । आदौ सामिधेनीवद्धिंकृत्य अञ्जन्ति त्वामध्वरे देवयन्त इत्यृचं त्रिवारमनुब्रूयात् । तृतीये वचने अर्धर्चं मुक्त्वा प्रेषान्तश्रवणपर्यन्तं विरमेत् । यूपायोच्छ्रीयमाणायानुब्रूहीति प्रेषितो द्वितीयार्धर्चान्तिमप्रणवान्तेनोच्छ्रयस्व वनस्पत इत्यृचं सन्धाय तदन्तिमप्रणवेन समिद्धस्य श्रयमाणः पुरस्तादित्यृचं तत उक्तरीत्यैव ऊर्ध्वऊषुणऊतयइति द्वे ऋचौ ततो जातो जायते सुदिनत्वे अह्नामित्यृचं सन्धाय तस्या अर्धर्चे प्रेषान्तरश्रवणपर्यन्तं विरमेत् । ततो यूपाय परिवीयमाणायानुब्रू३हीति प्रेषितो ऽर्धशिष्टार्धर्चप्रणवान्तेन युवासुवासाः परिवीतआगादित्यृचं परिधानीयां त्रिवारमनुब्रूयात् । समस्तव्याहृतिमन्त्रेण वाग्विसर्गः । इदं यूपाञ्जनीयानुवचनमित्युच्यते ॥

१२१ ततश्चातुर्मास्योक्तरीत्याऽग्निमन्थम् । पूर्वोक्ता ऋचो यूपाञ्जनाय हिता इति व्युत्पत्त्या यूपाञ्जनीया इत्युच्यन्ते ॥

१२२ अग्नये समिध्यमानायानुब्रूहीति प्रेषितः पृथुपाजाअमर्त्य इति द्वे धाय्यासंज्ञके ऋचौ अधिके कृत्वा वेदिश्रोण्योत्तरया पार्ष्णीं समां निधाय स्थित्वा सप्तदश सामिधेनीरनुब्रूयात् । आज्यभागदेवतानामावाहनानन्तरं इन्द्राग्नी आ३वह इति विशेषः । वनस्पतिमा३वह इति विशेषः । सम्मार्गैः सम्मृज्याप उपस्पृश्य प्रवृत्ताहुतीर्जुहोति प्रत्यगुदगाहवनीयादवस्थायाज्यस्थाल्याः स्रुवेणाज्यमादाय जुहोति । तत्र मन्त्राः । जुष्टो वाचे भूयासंजुष्टो वाचस्पतये देवि वाक् यद्वाचो मधुमत्तमं तस्मिन्मा धाः सरस्वत्यै वाचे स्वाहा । पुनः स्रुवेणाज्यमादाय पञ्चाहुतीर्विग्राहं जुहोति । स्वाहा वाचे । स्वाहा वाचस्पतये । स्वाहा सरस्वत्यै स्वाहा सरस्वते । महोभ्यः संमहोभ्यः स्वाहा । वाच इदमिति त्यागः प्रथमे । द्वितीयादिषु यथालिङ्गं यजमानस्य त्यागः । एताः षडाहुतयः प्रवृत्ताहुतय इत्युच्यन्ते ॥

१२३ [illegible]

रुणं प्रत्याह । ततः प्रशास्ता तीर्थेन प्रपद्यते । होता प्राङ्मुखः प्रशास्त्रे दण्डं प्रददाति दक्षिणोत्तराभ्यां पाणिभ्यां मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामि इति मन्त्रेण । ततः प्रशास्ता मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रतिगृह्णाम्यव्यक्तो विधुरो भूयास मिति दण्डं प्रतिगृह्णाति । इदं कर्म मैत्रावरुणदण्डप्रदानमित्युच्यते ॥

१२४ प्रशास्ता दण्डं प्रतिगृह्योत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेच्च चानेन कञ्चिदपि संस्पृशेत् आप्रैषवचनात् । होतृषदनात् दक्षिणतः प्रह्वो ऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात् । प्रैषांश्चादेशमनुवाक्यां च सप्रैषे पूर्वां प्रैषात् पर्यग्निस्तो कमनेतोचीयमानसूक्तानि च सोमे । उपविश्यान्यत्पठेत् । अध्वर्युणा समिद्भ्यः प्रेषितः सन् आह । होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्याः सङ्गथेवामस्य वर्ष्मन् दिव इडस्पदे वेत्वाज्यस्य होतर्यज १ । १ ॥ अयं समित्प्रैष इत्युच्यते ॥

१२५ अध्वर्युणा प्रेष्येत्युक्ते आह । होता यक्षत्तनूनपातमदितेर्गर्भे भुवनस्य गोपाम् ॥ मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज ॥ २ ॥ अयं तनूनपात्प्रैष इत्युच्यते ॥

१२६ प्रेष्येत्युक्ते आह । होता यक्षन्नाराशंसं नृशस्तं नृःप्रणेत्रम् । गोभि र्वपावान् स्याद्वीरैः शक्तीवान्रथैः प्रथमयावा हिरण्यैश्चन्द्री वे० ॥ ३ ॥ अयं नाराशंसप्रैष उच्यते ॥

१२७ होता यक्षदग्निमिलईलितो देवो देवां आवक्षद्दूतो हव्यवालमूरः ॥ उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वा० ॥ ४ ॥ अयमिडप्रैष उच्यते ॥

१२८ होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन्यज्ञे विचप्रचप्रथतां स्वासस्थं देवेभ्यः ॥ एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियन्द्रस्यास्तु वे० ॥ ५ ॥ अयं बर्हिःप्रैष उच्यते ॥

१२९ होता यक्षद्दुरऋष्वाः कवष्योकोषधावनीरुदाताभिर्जिहतां विपक्षोभिःश्रयन्तां सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो व्यन्त्वा० ॥ ॥ ६ ॥ अयं द्वारां प्रैष उच्यते ॥



१३० होता यक्षदुषासानक्ता बृहती सुपेशसा नृःपतिभ्यो योनिं कृण्वाने ॥ संस्मयमने इन्द्रेण देवैरेदर्हिः सीदतां वीतामाज्यस्य होत० ॥ ७ ॥ अयमुषासानक्ताप्रैष उच्यते ॥

१३१ होतायक्षद्दैव्याहोतारामन्द्रापोतारा कवीप्रचेतसा ॥ स्विष्टमद्यान्यः करदिषास्वभिगूर्तमन्यऊर्जासतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य० ॥ १३० ॥ अयं दैव्यहोतृप्रैष उच्यते ॥

१३२ होतायक्षत्तिस्रोदेवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम् ॥ देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य० ॥ ९ ॥ अयं तिसृणां देवीनां प्रैष उच्यते ॥

१३३ होतायक्षत्त्वष्टारमचिष्टुमपाकंरेतोधां विश्रयवसं यशोधाम् ॥ पुरुरूपमकाममकर्शनं सुपोषः पोषैः स्यात्सुवीरो वीरैर्वेत्वा० ॥ १० ॥ अयं त्वष्टृप्रैष उच्यते ॥

१३४ होतायक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमं नरः ॥ स्वदात्स्वधितिर्ऋतुथाद्यदेवो देवेभ्यो हव्यावाड्ढ्वे त्वा० ॥ ११ ॥ अयं वनस्पतिप्रैष उच्यते ॥

१३५ होतातु दण्डप्रदानानन्तरं होतृषदनस्य पश्चादवस्थायाहे दैधिषव्य इत्यादि मन्त्रेण होतृषदनाभिमन्त्रणादि स्रुगादापनान्तं प्रकृतिवत् करोति । प्रयाजसम्बन्धिन्यो याज्या ऋचो यत्र पठितास्तानि सूक्तान्याप्रीसूक्तानीति गीयन्ते ।

१३६ शौनकगोत्रस्य यजमानस्य समिद्धो अग्निर्निहितः पृथिव्यामित्याप्रीसूक्तं भवति । वासिष्ठगोत्रस्य जुषस्व नः समिधमिति सूक्तम् । अन्येषां सर्वेषां समिद्धो अद्य मनुषो दुरोणइति सूक्तम् । इत्येकः पक्षः । सुसमिद्धो न आवहेति काण्वगोत्रस्याप्रीसूक्तम् । समिद्धो अग्न आवहेति आङ्गिरसगोत्रस्य । समिद्धो अद्य राजसीति आगस्त्यगोत्रस्य । समित्समित्सुमना बोध्यस्मे इति विश्वामित्राणाम् । सुसमिद्धाय शोचिषेत्यात्रेयगोत्रस्य । समिद्धो विश्वतस्पतीति काश्यपगोत्रस्य । इमां मे अग्ने समिधं जुषस्वेति वाध्र्यश्वगोत्रस्य । समिद्धो अद्य मनुषो दुरोणइति जामदग्न्यगोत्रस्यानुक्तानामन्येषां च । इति द्वितीयः पक्षः । अध्वर्युप्रेषितो मैत्रावरुणः पूर्वोक्तैः समित्प्रैषादिप्रैषैर्होतारं प्रेष्यति ।

होता यजमानगोत्रानुसारेण तत्तत्सूक्तगता आप्रीसंज्ञकयाज्याः पठति । पर्यग्नये क्रियमाणायानुब्रू३हीति प्रेषितो मैत्रावरुणः अग्निर्होता नो अध्वर इति तृचं सूक्तं अभिहिंकारानन्तरं आद्योत्तमे ऋचौ त्रिरभ्यस्यान्वाह । एतदनुवचनं पर्यग्निकरणसाधनत्वात्करणल्युटा पर्यग्निकरणमित्युच्यते ॥

१३७ ततो मैत्रावरुणो होतारं प्रेष्यति । अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यवाट् प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य होतर्हव्या देवेभ्य इति । अयमध्रिगुप्रैषप्रैष इत्युच्यते ॥

१३८ ततो मैत्रावरुणप्रेषितो होताऽध्रिगुप्रैषमाह । दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं मातामन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनां अस्य पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् । एकधास्य त्वचमाच्छ्यतात्पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमस्य वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ताषड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षः संसृजतात् । वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवत् शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ । अपाप ॥ इति । अध्रिगो इत्यादि अपापेत्यन्तं त्रिवारं पठति । अयमध्रिगुप्रैष इत्युच्यते ॥

१३९ अत्र प्रैषे अस्ना रक्षः संसृजतादिति वाक्यं उपान्त्यवाक्यस्थं शमितार इति पदं अन्त्यवाक्यस्थं अपापेति पदं चोपांशु प्रयुज्यते । ततः शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तदिति मन्त्रं जपित्वा यथोपविष्ट एव दक्षिणाङ्गेनावृत्य प्रत्यङ्मुखो निहारं पृष्ठतः कृत्वास्ते । एवं मैत्रावरुणोऽपि । पशुसंज्ञपनानन्तरं होतृमैत्रावरुणौ तथैवावृत्य प्राङ्मुखावासाते । वपाश्रपणकाले अध्वर्युणा स्तोकेभ्योऽनुब्रूहीति प्रेषितो मैत्रावरुणो जुषस्व सप्रथस्तममित्यृचमिमं नो

वर्नामित्युच्यते ॥

१४० अध्वर्युणा स्वाहाकृतीभ्यः प्रेष्येति प्रेषितो मैत्रावरुणो होतारं प्रेष्यति । होतायक्षदग्निं स्वाहा ऽज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहा कृतीनां स्वाहा हव्यसूक्तीनां स्वाहा देवा आज्यपा जुषाणाअग्नआज्यस्य व्यन्तु होतर्यजेति । अयमेकादशस्य प्रयाजस्य प्रैषः स्वाहाकृतीप्रैष इत्युच्यते ॥

१४१ उक्तप्रैषेण प्रेषितो होता मन्त्रेण निरसनोपवेशने कृत्वा ऽग्निर्होतावेत्त्वित्यादि स्रुगादापनं पठित्वा एकादशीं प्रयाजयाज्यां पठति । वार्त्रघ्नावाज्यभागौ । मैत्रावरुणोनुवाक्यां पठति । प्रैषांश्चा-देशमनुवाक्यां चेत्याश्वलायनसूत्रे मैत्रावणो यत्र यागे भवति तत्र स एवानुवाक्यां पठेदित्युक्तत्वात् । होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यजेति प्रैषं मैत्रावरुणो ऽध्वर्युणाऽग्नयआज्यस्यावदीयमानस्या-नुब्रूहीति प्रेषितः पठति । अयंहोतायक्षदित्यादिप्रैष आग्नेयाज्यभाग-प्रैष इत्युच्यते ॥

१४२ अनेन प्रेषितो होता ऽग्निं जुषाणो अग्निराज्यस्येति याज्यां पठति । अध्वर्युणा सोमायाज्यस्यावदीयमानस्यानुब्रूहीति प्रेषितो मैत्रावरुणो ऽनुवाक्यां पठति । ततो ऽध्वर्युणा सोमायाज्यं प्रस्थितं प्रेष्येत्युक्ते प्रशास्ता होतायक्षत्सोमायाज्यस्य जुषतां हविर्होतर्यजेति प्रैषेण होतारं प्रेष्यति । अयं प्रैषः सौम्याज्यभागप्रैष इत्युच्यते ॥

१४३ अनेन प्रेषितो होता ये यजामहे सोमं जुषाणः सोम आज्यस्य हविष इति याज्यां पठति । अध्वर्युणा इन्द्राग्निभ्यां छागस्य वपाया मेदसोवदीयमानस्यानुब्रूहीति प्रेषितो मैत्रावरुणो आवृत्रहणा वृत्रहभिः शुष्मैरित्यनुवाक्यां पठति । तत इन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्येति प्रेषितः सन् होता यक्षदिन्द्राग्नी छागस्य वपाया मेदसो जुषेतां हविर्होतर्यजेति प्रैषेण होतारं प्रेष्यति । अयं वपाया-व्याप्रैष इत्युच्यते ॥

१४४ अनेन प्रेषितो होता शुचिं नु स्तोमं नवजातमद्येति याज्यां पठति । वपाहोमानन्तरं ब्रह्मा होता मैत्रावरुणश्च चात्वाले

मार्जयन्ते सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै सन्तु यो ऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति मन्त्रेण । मैत्रावरुणस्तु दण्डं निधाय । इदं ब्रह्मादिवपामार्जनमित्युच्यते ॥

१४५ ततः पुरोडाशश्रपणपर्यन्तं ब्रह्मादयस्तीर्थेन निष्क्रम्य तूष्णीमासते शृतेषु पशवङ्गेषु तीर्थेन प्रविश्य पुरोडाशेन प्रचरन्ति । तत्राभरतं शिक्षतं वज्रबाहू इति मैत्रावरुणो ऽनुवाक्यां पठति इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीत्यध्वर्युणा प्रेषितः सन् अध्वर्युणा इन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदिन्द्राग्नी पुरोडाशस्य जुषेतां हविर्होतर्यजेति वदति । अयं पशुपुरोडाशयाज्याप्रैष इत्युच्यते ॥

१४६ ततो होता गीर्भिर्विप्रः प्रमतिमिच्छमान इति याज्यां पठति । ततोऽध्वर्युणा ऽग्नये ऽनुब्रूहीत्युक्ते इलामग्ने पुरुदंसं सनिं गोरित्यनुवाक्यां मैत्रावरुणः पठति । अध्वर्युणा ऽग्नये प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यजेति पठति । अयं पुरोडाशस्विष्टकृत् प्रैष इत्युच्यते ॥

१४७ ततो होता स्वदस्वहव्यासमिषोदीदिहीति याज्यां पठति । अयं पशुपुरोडाशप्रचार इत्युच्यते ॥

१४८ इडाभक्षणान्ते मार्जनम् । मनोतायैहविषोवदीयमानस्यानुब्रूहीत्यध्वर्युणा प्रेषितो मैत्रावरुणः अभिहिंकृत्य अध्यर्धकारवर्ज सामिधेनीवत् त्वंह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह । इदं मनोतासूक्तमित्युच्यते ॥

१४९ अध्वर्युणा इन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीत्युक्ते मैत्रावरुण उभावामिन्द्राग्नी आहुवध्या इत्यनुवाक्यां पठति । अध्वर्युणा इन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेधउद्भृतं पुराद्वेषोभ्यः पुरापौरुषेय्याग्रभः ॥ घस्तांनूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामतउत्सादतोऽङ्गादङ्गादवत्तानां करतएवेन्द्राग्नीजुषेतां हविर्होतर्यजेति प्रेष्य होतारं प्रेष्यति । ततो होता प्रचर्षणिभ्यः पृतनाहवेष्विति



याज्यां पठति अस्या अर्धर्चे पठित्वा यावत्प्रतिप्रस्थाता वसाहोमं करोति तावद्विरमति । जाते वसाहोमे उत्तरार्धर्चेन वषट्करोति । अध्वर्युणा वनस्पतये ऽनुब्रूहीत्युक्ते मैत्रावरुणो देवेभ्यो वनस्पते हवींषीति पुरोनुवाक्यां पठति । अध्वर्युणा वनस्पतये प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित ॥ यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्रसोमस्याज्यस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यजेति प्रैषेण होतारं प्रेष्यति अयं वनस्पतियाज्याप्रैष इत्युच्यते ॥

१५० ततोहोता वनस्पतेरशनया नियूपेति याज्यां पठति । अध्वर्युणा ऽग्नये स्विष्टकृते ऽनुब्रूहीत्युक्ते मैत्रावरुणः पिप्रीहिदेवां उशतोयविष्ठेत्यनुवाक्यां पठति । अध्वर्युणा ऽग्नये स्विष्टकृते प्रेष्येत्युक्ते मैत्रावरुणो होतायक्षदग्निं स्विष्टकृतमयाडग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाडिंद्राग्न्योश्छागस्य हविषः प्रियाधामान्ययाड्वनस्पतेः प्रियापाथांस्ययाड्देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानमायजतामेज्याइषः कृणोतु सोअध्वराजातवेदा जुषतां हविर्होतर्यजेति होतारं प्रेष्यति । अयं पशुस्विष्टकृद्याज्याप्रैष इत्युच्यते ॥

१५१ ततो होतास्विष्टकृच्चिगदरहितामग्नेयदद्यविशो अध्वरस्य होतरिति याज्यांपठति । ततः पशिवडाभक्षणं मार्जनान्तं कृत्वा ऽनुयाजैश्चरन्ति अध्वर्युणा देवेभ्यः प्रेष्येत्युक्ते मैत्रावरुणः देवं बर्हिः सुदेवन्देवैः स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान्रायाबर्हिष्मतामदेवसुवनेवसुधेयस्यवेतु यजेति होतारम्प्रेष्यति । होताप्राकृतेनैव प्रथमानुयाजेन यजति । अध्वर्युणा प्रेष्येत्युक्ते मैत्रावरुणः देवीर्द्वारः संघाते विड्वीर्यामंछिथिराध्रुवादेवहूतौ वत्सईमे नास्तरुणमामिमीयात्कुमारोवानवजातोमैनाअर्वारेणुककाटः पृणावसुवने वसुधेयस्य व्यन्तु यजेति होतारं प्रेष्यति । होतादेवीर्द्वारोवसुवने वसुधेयस्यव्यन्त्वितीअप-

डिति याज्यां पठति । अध्व० रुणा:देवीउषासा नक्ता द्यास्मिन्यज्ञेप्रयत्यव्हेतामपिनूनं दैवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यजेति होतारं प्रेष्यति । सदेवीउषासानक्तावसुवने वसुधेयस्य वीतां वौषडिति यजति । अध्व०रुणा: देवीजोष्ट्री वसुधितीययोरन्याद्याद्वेषांसि युयवदान्यावक्षद्वसुवार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यजेति होतारं प्रेष्यति । होतादेवीजोष्ट्रीव०वीतां०डिति यजति । अध्व०रुणा: देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीतिमन्यानवेन पूर्वं दयमाना: स्याम पुराणे ननवंतामूर्जमूर्जाहुतीऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यजेति होतारं प्रेष्यति । होतादेवीऊर्जाहुतीवसु०वीतां०डिति यजति । अध्व०रुणा: देवादैव्या होतारा नेष्टारा पोतारा हताघशंसा वा भरद्वसूवसु०ष्यति । होता देवा दैव्याहोतारा वसु०वीतां०डिति यजति । अध्व०रुणा: देवीस्तिस्रस्तिस्रो देवीरिडासरस्वती भारती द्यांभारत्यादित्यैरस्पृक्षत्सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेलयावसुमत्या सधमादंमदेम वसुवने वसुधेयस्य व्यन्तु यजेति होतारं प्रेष्यति । होता देवीस्तिस्रस्तिस्रोवसु०व्यंतु३वै३० डिति यजति । अध्व०रुणा:देवो नराशंसस्त्रिशीर्षा षडक्ष: शतमिदेनं शितिपृष्ठा आदधति सहस्रमींप्रवहन्तिमित्रावरुणोदस्यहोत्रमर्हताबृहस्पतिस्तोत्रमश्विनाध्वर्यवंवसु०वेतुयजेति०ष्यति । होतादेवोनराशंसोवसु० वेत् ३०जति । अध्व०रुणा: देवोवनस्पतिर्वर्षप्रावाघृतनिर्णिग्द्यामग्रेणास्पृक्षदान्तरिक्षंमध्येनाप्रा: पृथिवीमुपरेणादृंहीद्वसु०वेतुयजेति हो०ति । होतादेवोवनस्पतिर्वसुवेत् ३०जति । अध्व०रुणा: देवं बर्हिर्वारितीनां निधेधासिप्रच्युतीनामप्रच्युतीनामप्रच्युतंनिकामधरणंपुरुस्पार्हं यशस्वदेना बर्हिषान्याबर्हींष्यभिष्यामवसु०वेतु यजे०ष्यति । होतादेवं बर्हिर्वारितीनां वसु०वेत् ३० जति । अध्व०रुणा- देवोअग्नि: स्विष्टकृत्सुद्रविणामन्द्र: कवि: सत्यमन्मायजीहोताहोतुर्होतुरायान अग्नेयान् देवानयजीषाङ्यां अपिप्रेर्यतेहोत्रेअमत्सततांसमनुषींहोत्रांदेवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्नेहोताभूर्वसुवनेवसुधेयस्य नमोवाके वीहियजे०ष्यति । होताअग्नेर्निगदेन आदौ होतायक्षदित्यस्य स्थाने

येयजामहइति पदं पठित्वा ऽन्तेयजेत्यस्य स्थाने वषट्कारं कृत्वा यजति । एते मैत्रावरुणेन पठ्यमाना एकादश अनुयाजप्रैषा इत्युच्यन्ते ॥

१५२ अध्वर्युणा इषिता दैव्या होतारौ भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता३ब्रूहीत्युक्तेमैत्रावरुणः अग्निमद्यहोतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशं गृह्णन्नग्नयआज्यं गृह्णन्त्सोमायाज्यं बध्नन्निन्द्राग्निभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभवदग्नयआज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनाघस्तां तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यर्षआर्षेयऋषीणां नपादवृणीतायं यजमानो बहुभ्यआसङ्गतेभ्यः ॥ एषमेदेवेषु वसु वार्यायक्ष्यत इति तायादेवादेवदानान्यदुस्ता न्यस्माआचशास्वाचगुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता३ब्रू३हीति प्रैषेण होतारं प्रेष्यति । ततो होता सूक्तवाकं पठति । तत्राज्यभागदेवतानन्तरं इन्द्राग्नीइदं हविरजुषेतामवीवृधेतां । वनस्पतिरिदं हविरजुषतावीवृधतमहोज्यायोकृत । ततो देवा आज्यपा इत्यादि प्रकृतिवत् संस्थाजपवर्जं सर्वं अध्वर्युणा उपोह्यमानं हृदयशूलमनुमन्त्रयते होता मैत्रावरुणो ब्रह्मा च शुगसि योस्मान् द्वेष्टि यं च वयं द्विष्मस्तमभिशोचेति मन्त्रेण । ततः । द्रुपेराज्ञोवरुणस्य गृहोमितो हिरण्ययः ॥ सनो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु ॥ धाम्नोधाम्नो राजन्नितो वरुण नोमुञ्च ॥ यदापोअघ्न्या इति वरुणेति शपामहे ततो वरुण नोमुञ्च ॥ मयि वायो मोघधीर्हिंसीरतो विश्वव्यचाभूस्त्वंवरुण नो मुञ्च ॥ सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै भूयासुर्योस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ एतैर्मन्त्रैस्तस्योपरिष्टादप उपस्पृशन्ति । शूलमनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तस्तिस्रस्तिस्रः समिधो गृह्णीयुः । अग्नेः समिदसि तेजोसि तेजोमयिधेहि इति प्रथमाम् । एधोस्येधिषीमहीति द्वितीयाम् । समिदसि समेधिषीमहीति तृतीयाम् । इत्योपतिष्ठन्ते आपोअद्यान्वचारिषमित्यृचा । ततो यथाक्रमेण समिधोभ्यादधत्याहवनीये । अग्नेः समिदसि तेजोसि तेजोमेदाः स्वाहेति प्रथमाम् । सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहेति

द्वितीयाम् । पितृणां समिदसि मृत्योर्मा पाहि स्वाहेति तृतीयाम् । इदं पाशुकसमिदाधानमित्युच्यते ॥

१५३ ततः संस्थाजपेनोपतिष्ठन्ते । एतावान् अथ आश्वलायनसूत्रानुसारेणेत्यादि ग्रन्थः होतृब्रह्ममैत्रावरुणपाशुककृत्यमुच्यते ॥

---

१५४ इदं सर्वं पाशुकं कर्म निरूढपशुरिति पशुबन्ध इति चोच्यते ॥

१५५ अथ सप्तमीहविर्यज्ञसंस्था पशुत्रयसाध्या सौत्रामण्याख्या तदीयपदार्थनामानि प्रोच्यन्ते । सा द्विविधा । एका कौकिली अपरा चरका सर्वापीयं नित्या हविर्यज्ञसंस्थान्तर्गतत्वात् । एतयान्नाद्यकामो यजेत स्वर्गकामश्चेत्यादिना फलश्रवणात्काम्यत्वमपि । बार्हस्पत्यं पशुं चतुर्थं यदीत्यादिना नैमित्तिकत्वमपि श्रूयते । यजेत्सौत्रामण्यामपत्नीकोऽप्यसोमपइत्यैतरेयब्राह्मणोक्ताया अपत्नीकासोमपयजमानकर्तृका सौत्रामणी सा कौकिल्येव स्वतन्त्रा । अग्निं चित्वा सौत्रामण्या यजेतेत्यादौ अङ्गत्वेन श्रूयमाणा चरकैव । तत्र कौकिल्या बौधायनसूत्रस्य समयस्यानुपलभ्यमानत्वात् आपस्तम्बोक्तसूत्रानुसारेण बौधायनसूत्राविरुद्धः प्रयोगः अनुक्तौ चरकातिदेशः । तस्य निरूढपशुकाल एवानुष्ठानकालः । पर्वणि यथा त्रिपशुरूपं प्रधानकर्म संपद्येत तथा कर्तव्यम् । तथा च द्वादश्यां नान्दीश्राद्धोदकशान्तिप्रतिसरबन्धादि कृत्वा त्रयोदश्यामैन्द्रेण पशुना आदित्यचरुणा च प्रचर्य चतुर्दश्यां त्रिपशूपसदं कृत्वा पर्वणि त्रिपशुमवभृथं महापितृयज्ञं च कृत्वा प्रतिपदि वायोधसेन पशुना आदित्येन चरुणा च प्रचर्य समापयति । असम्भवे पितृयज्ञोपि प्रतिपदि कार्यः । त्र्यहेपुरस्तादिति वचनं सुरासन्धानकरणपक्षे नवम्यामारम्भपरम् । अयं सौत्रामणीकाल इत्युच्यते ॥

१५६ यद्यपि सुरोच्छेषणभक्षस्यैव निषेधो न तु स्वाद्वीं त्वेत्यादिमन्त्रैः सुरासन्धानकरणादेस्तथापि कल्पोक्तसुरासन्धानप्रकारस्येदानीमुच्छिन्नत्वात् लोकविद्विष्टत्वात् पयोग्रहा वा स्युरित्यापस्तम्बवचनाच्च मुख्यसुराग्रहणमुपेत्य पयोग्रहग्रहणपक्षाश्रयणं क्रियते । यदि चयनं चिकीर्षति तर्हि त्रिपशौ प्रधानभूते एव कुर्यात् । आद्यन्तपश्वोस्तु न । तयोरङ्गत्वात् । समप्राधान्यपक्षे तयोरपि चयनं कुर्यात् । सुरा-

सन्धानपत्तस्यानाश्रयणात् [illegible]
र्तते । पयसः सुराप्रतिनिधित्वात् स्थानापत्त्यासुराधर्मा अनूहश्च भव-
न्ति । नतु साम्राय्यधर्मा आज्यधर्मा वा भवन्ति । यथा प्रयोगचातुर्मा-
स्यवत् एकप्रयोगत्वात्सर्वार्थमुदवसानम् । प्राकृतविहारात् अन्यत्र
गमनं कर्मानुष्ठानार्थं उदवसानमित्युच्यते ॥

१५७ ऋत्विग्वरणं षड्ढोतृकूष्माण्डादिहोमश्च सकृदेव सर्वप-
श्वर्थः । त एव विहाराः । दक्षिणतः पैतृकी वेदिः । आद्यन्तपशुब-
न्धयोः पाशुकी वेदिस्तु द्वादशपदा भवति ॥ त्रिपशौ साग्निचित्ये
निरग्निचित्ये वा ऽष्टादशपदा सा भवति । सौत्रामणीकर्मसम्बन्धिनः
पदार्थाः । त्रयो यूपाः । चयनार्थं शर्कराः साग्निचित्ये । सुराग्रहार्थं
क्रमेण पलाशन्यग्रोधाश्वत्थकाष्ठनिर्मितान्युलूखलाकाराण्यूर्ध्वमुखानि
प्रादेशमात्राणि त्रीणि पात्राणि । एतान्येव सुराग्रहा इत्युच्यन्ते ॥

१५८ यज्ञियस्यफलेग्रहेः पलाशादिवृक्षस्य तादृशान्येव त्रीणि
पात्राणि तानि पयोग्रहा इत्युच्यन्ते ॥

१५९ जुहूसदृशे महापुष्करे द्वे पात्रे ते द्रोणकलशपदवाच्ये ॥

१६० एकः कुम्भः । शतातृण्णास्थाली । नकलबदरकर्कन्धूनां
सक्तवः । नकलादयोबदरभेदाः यवगोधूमोपवाकानां सक्तवः । हरि-
तयवाः । श्येनस्य पक्षिणो द्वौ पत्रौ । सिंहव्याघ्रवृकाणां लोमानि ।
अजाविलोम्नां दशापवित्रमध्वर्योः । गवाश्वलोम्नां प्रतिप्रस्थातुः ।
नाभिदघ्नपादा अरत्निमात्रशीर्षण्यानूच्यामौञ्जविवयनाया सा आस-
न्दीत्युच्यते ॥

१६१ प्रभूतं पयः । अन्येपि यउपयुक्ताः पदार्थास्ते सम्पादनीयाः ।
श्रीपरमेश्वरप्रीत्यर्थं स्वर्गकामो वा कौकिल्या सौत्रामण्या यक्ष्ये त्रिरु-
पांशु त्रिरुच्चैः । अयं सौत्रामणीसङ्कल्प इत्युच्यते ॥

१६२ प्रशास्तृषष्ठानृत्विजो वृत्वा ऽर्हयित्वा । दृढाजपं कृत्वा ।
अन्वारम्भणीयामिष्टिं कृत्वा ऽरण्योरग्नीन् समारोप्य अथ वा ऽजस्रा-
नग्नीन् गृहीत्वोदवसायमथित्वा मनस्वत्या जुहोति । साग्निचित्येतु
याःपुरस्तादि जपित्वा स्वर्गकाम आरुणकेतुकमग्निं चेष्ये इत्ययमग्नि-
चयनसङ्कल्प इत्युच्यते ॥

१६३ पुनर्याः पुरस्तादित्यादि । श्रीपरमेश्वरप्रीत्यर्थमैन्द्रेण पशुना यक्ष्ये इत्ययमैन्द्रपशुसङ्कल्प इत्युच्यते ॥

१६४ ततोऽग्नीन् विहृत्य पक्तीनुकूष्माण्डसारस्वतहोमाः सर्वपश्वर्थमादावेव सकृत् । नतुप्रतिपश्वावर्तते । एकप्रयोगत्वात् । पशिवष्टिस्त्वावर्तते । परन्त्वाश्वलायनमते पूर्वोत्तरयोरैन्द्रपश्वोरङ्गत्वात् पशिवष्टिस्तयोर्न भवति । समप्राधान्ये तु सर्वपशुषु पशिवष्टिर्भवति । पशुचये च वेदियूपाहुत्यादि यूपोपस्थानान्तं निरूढवत्करोति । अस्मिन्नैन्द्रपशौ ऋषभो दक्षिणा । पुनरालम्भवर्जं सन्तिष्ठत एव पशुः । अयं सौत्रामणीपूर्वपशुरित्युच्यते ॥

१६५ अथ तदानीमेव पुनर्विहृत्यादित्येष्टिः । आदित्यौ द्वौ कौकिल्यां सौत्रामण्यामितिकर्मान्तसूत्रात् । अस्यामिष्टौ वत्सो दक्षिणा । वत्सं पूर्वस्यां ददाति मातरमुत्तरस्यामिति वचनात् । अंहसो मुच्येयमिति यजमानस्यानुमन्त्रणम् । पुनरालम्भवर्जं मियमिष्टिः सन्तिष्ठते । इयं सौत्रामणीपूर्वेष्टिरित्युच्यते ॥

१६६ ततोऽग्रहः सद्योवात्रिपशुः । श्री*परमेश्वरप्रीत्यर्थं त्रिपशुना पशुबन्धेन यक्ष्ये इति सङ्कल्प इदानीमेव चयनसङ्कल्प इत्येके । अयं त्रिपशुसङ्कल्प इत्युच्यते ॥

१६७ अथ त्रिपश्वनुष्ठानोपयोगिनी पाशुकी वेदिः । सा चेत्थं निर्मातव्या । प्राकृतविहारात्प्रत्रतः पूर्वनिर्मितामैन्द्रपश्वनुष्ठानोपयोगिनीं पाशुकवेदिमुद्वास्य यूपञ्चोद्वास्याहवनीयात्संचरमवशेष्य सौमिक्या वेदेर्द्विसप्तत्यधिकनवशतपदक्षेत्रफलायास्तृतीयां शतत्रफलमूलषट्त्रिंशत्यङ्गुलदण्डेन द्वादशपदा प्राची दशपदा पश्चादष्टादशपदा पुरस्तादिति सौत्रामणिकी वेदिःकार्या । शम्यामात्रोत्तरवेदिर्भवति द्वादशाङ्गुलपदपक्षे षट्तिलो नैकविंशत्यङ्गुलदण्डेन दशाङ्गुलपदपक्षे सप्तदशाङ्गुलदण्डेनापि । तत्रैव त्रिभागदण्डादि । त्रयोदशाङ्गुलसमचतुरस्रोत्तरनाभिः । साग्नीमपि गृह्णामीत्युपधानमन्त्रप्रभृति ये ब्राह्मणाबहुविदइत्यन्तं कृत्वा प्रारब्धाक्रितुकचयनपक्षे सद्यस्कालत्वपक्षे तु पशिवष्ट्यनन्तरं

* यत्करोषि यदश्नासि यज्जुहोसीत्यादिना सर्वकर्मणां परमेश्वर प्रीत्यर्थावगतेः ।





यूपाहुत्यादि भवति । अग्निचयनपक्षे तु वेदं विमाय परिस्तीर्य श्मश्रु-नखवपनस्नानवासः परिधानाञ्जनाभ्यञ्जनादि दीक्षायाश्च कुर्वन्ति । त्रिपशोर्देवतासङ्कल्पः । सैत्रामण्याः सप्तदश सामिधेन्यः । एकादश प्रयाजाः । आग्नीषोमावाज्यभागौ । अश्विनौ सरस्वती इन्द्रः सुत्रामा च ग्रहदेवताः । वनस्पतिः पृषदाज्यदेवता देवा आज्यपाः । अग्निः स्विष्टकृत् । समानं स्विष्टकृदिति पक्षे नात्र स्विष्टकृदुल्लेखः । इन्द्रः सविता वरुणश्च पुरोडाशानां देवताः । अग्निः स्विष्टकृत् । एकादशा-नुयाजाः । एकादशोपयाजाः सूक्तवाकशंयुवाकौ । अष्टौ पत्नीसंयाजाः एवमात्मकेनेत्यादिश्वः सद्यो वा यक्ष्येइति सङ्कल्प्य अग्नीन् विहृत्य अन्वाधानादिव्रतोपायनं शाखाहरणादि । चयनपक्षे मैत्रावरुण्याः शाखां प्लक्षशाखां चाहृत्य पञ्चविधं बर्हिः प्रसूमयं प्रस्तरं ऐक्षवी विधृती चयो-विंशतिदारुकमिध्मंचाहृत्य वेदं करोति । चयनपक्षे इदानीमेव वेदिक-रणम् । तदन्तरं यूपावटीयाच्छङ्कोः प्रत्यक् त्रिभागास्थयदस्युत्तमं च-परिलिख्य कर्षूः खात्वोद्धर्त्यपस्याः । अथ पाचत्याज्यस्थालीमित्या-दिमयिग्रहणाम्यये अग्निमित्यादिनादर्भस्तम्बे आहुतीर्हुत्वा अयपाच-लिस्फ्यमुदपात्रं बर्हिः शम्यामित्यादि वास्वाललेखनप्रभृत्युत्तरवेदिना-भिप्रच्छादनान्तं करोति । उत्तरवेद्या दक्षिणतश्चास्वालपुरीषेण हस्त-मात्रं चतुरङ्गुलोच्चतं चतुरस्रमायतनं करोति तत् खर इत्युच्यते ।

१६८ तत्र सुरां स्थापनं करोति । तस्य खरस्य पश्चादपरः खरः क्रियते तस्मिन् ग्रहाः स्थाप्यन्ते । ततोऽभ्यादानादि यूपावटकरणा-न्तम् । तत इन्द्रघोषस्त्वेत्यादिना संस्रावाभिघारणादि सिकतासमी-करणान्तं ततः शाखापवित्रमुपवेषं च करोति । ततोऽग्निप्रणयनं करोति । ततो ब्रह्मयजमानयोः स्वायतने उपवेशनम् । ततोऽध्वर्युरुत्तरपरिग्र-हादि- स्फ्यप्रक्षालनान्तं करोति । आग्नीध्रः बालामुखीये सुचः प्रति-तप्य सुववत् स्वर्धिति सम्मार्ष्टि । अध्वर्युः जुह्वादग्रहणादि सर्वाज्या-भिमन्त्रणान्तं करोति । ततः सायमग्निहोत्रं हुत्वा बालामुखीययो-रुत्तरतः दर्भेषु त्रिस्रः पशुकुम्भीः त्रीणि शाखापवित्राणि तिस्रोयूपरशनाः पशुरशनाश्च त्रीणि वपाश्रपणी युग्मानि । त्रीणिहृदयशूलानि त्रीण्य-योग्रहांस्तथा सुराग्रहांश्चनकलबदरकर्कन्धूनां यवगोधूमोपवाकानां च

सक्तून् द्वे श्येनपत्रे द्वे दशापवित्रे द्वौ द्रोणकलशौ शतातृण्णां स्थालीं चासादयति । एतानि सौत्रामणीपाशुकपात्राणीत्युच्यन्ते ॥

१६९ ततो मैत्रावरुण्याः सायंदोहः । श्वोभूते प्रातरग्निहोत्रानन्तरं प्रातर्दोहः । आरुणकेतुकचयनपक्षे महारात्रे जागृतो भूत्वा तदानीमेवापकृष्य प्रातरग्निहोत्रं जुहोति । कर्मणो विहितकालात्पूर्वमेव यदनुष्ठानं तदपकर्ष इत्युच्यते ॥

१७० तत आग्नेयीं पशिवष्टिं समाप्य संमार्जनादि करोति । आज्यं दधि च निरूप्यापूर्वाज्यं च निर्वपति । आज्यमधिश्रित्य पर्यग्नि करोति । चयनाभावे इदानीं वेदिकरणं अग्नेरुद्दिर्तात्स्रहरेत्यन्तम् । चयनपक्षे उत्तरपरिग्राहादि करोति । प्रतिप्रस्थाता स्फ्यमग्निहोत्रहवणीं जुहूद्वयमित्यादि पात्राण्यासाद्य कर्मणे वामित्यादि करोति । ऊर्ध्वमुखानां ग्रहाणां जुहूवत्संम्मार्गः । आज्यं निरूप्य महीनां पयोसीति पत्नीमाज्यमवेक्षयति । अध्वर्युर्द्रोणकलशे प्रभूतं पयो निर्वपति तूष्णीं । प्रतिप्रस्थाता सुरास्थानीयं पयः प्राक्तवेद्यां निदधाति । अध्वर्युः पर्य्यग्निकरणादि करोति । प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीं सन्नह्याज्येन दध्ना चोदेहि प्रतिप्रस्थातः सुरासोमस्य विद्धि इति प्रेष्यति । ततः प्रतिप्रस्थाता सुराकुम्भं दशापवित्रं श्येनपत्रं ग्रहान् द्रोणकलशं नक्तलबदरकर्कन्धूनां यवगोधूमोपवाकानां च सक्तून् सिंहव्याघ्रलोमानि शतातृण्णां स्थालीं चादाय पूर्वया द्वारा निष्क्रम्यान्तर्वेद्यासादयति । अथाध्वर्युः आज्यमुत्पूय स्वीयेनोदग्दशेनाजाविलोमनिर्मितेन दशापवित्रेण द्रोणस्थं पय उत्पुनाति पुनाति ते परिस्रुतमित्यृचा । प्रतिप्रस्थाता सुरास्थानीयं कुम्भस्थं पयः स्वीयेनोदग्दशेन गवाश्वलोमनिर्मितेन दशापवित्रेणान्तर्हिते स्वीयद्रोणकलशे ऽवनायोत्पुनाति ब्रह्मक्षत्रं पवते तेज इत्यादिना रसेनान्नं यजमानाय धेहीत्यन्तेन यजुषा । इदं सुरापयसोरुत्पवनमित्युच्यते ॥

१७१ सुरास्थानीयं पयः कुम्भे किञ्चित्परिशेषयति । ततो ऽध्वर्युः प्रोक्षण्युत्पवनादि स्वभ्यो स्थ इत्यादियजुषा स्रुवस्वधितिसादनान्तं कृत्वा वेद्यामेव ग्रहेषु वक्ष्यमाणमन्त्रैः क्रमेण पयो गृह्णाति ।



कुविदङ्ग यवमन्त इत्यृचा उपयामगृहीतोस्यश्विभ्यां त्वा जुष्टं गृह्णामीति यजुषा च प्रथमे गृहीत्वा यवसक्तुभिः संश्रित्य स्वीयश्येनपत्रेण परिमृज्य एष ते योनिस्तेजसे त्वा इति मन्त्रेण स्रुचां पश्चात् खरे सादयति । अग्रेण दक्षिणाग्निं वेद्यामेव पूर्वकृते द्वितीयखरे सादयतीत्यन्विलायन्ये उक्तम् । ततः पूर्वोक्तयैवर्चा उपयामगृहीतोसि सरस्वत्यै त्वा जुष्टं गृह्णामीति यजुषा च द्वितीये ग्रहे गृहीत्वा गोधूमसक्तुभिः संश्रित्य पूर्ववत्परिमृज्य एष ते योनिर्वीर्याय त्वा इति मन्त्रेण पूर्ववत्सादयति । ततस्तयैवर्चा उपयामगृहीतोसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति यजुषा च गृहीत्वोपवाकसक्तुभिः संश्रित्य परिमृज्य एष ते योनिर्बलाय त्वा इति मन्त्रेण सादयति । प्रागपवर्गमुदगपवर्गं वा ग्रहाणां खरे सादनम् । एतत्पयोग्रहासादनमित्युच्यते ।

१७२ ततः सर्वान् ग्रहानुपतिष्ठते । तेजोसि तेजो मयि धेहि इति मन्त्रेण प्रथमग्रहम् वीर्यमसि वीर्य्यम्मयि धेहि इति मन्त्रेण द्वितीयम् । बलमसि बलं मयि धेहि इति मन्त्रेण तृतीयम् । आग्नीध्रः द्रोणकलशस्थं सुरापयः पात्रान्तरे कृत्वा द्रोणोपरि धृतगोवालपवित्र-मवनीय धारां करोति प्रतिप्रस्थाता धारायां गृह्णाति । नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमन् सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसीः स्वां योनिमाविशन् । उपयामगृहीतोस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामि । आभ्यामृग्यजुर्भ्यां पर्णमये पात्रे गृहीत्वा बर्हिषी अन्तर्धाय कुवलसक्तुभिः सिंहलोमभिश्च संश्रित्य बर्हिषी दूरीकृत्य स्वीयेन श्येनपत्रेण परिमृज्य पयोग्रहाणां पुरतः उत्तरतो वा प्रागपवर्गमुदगपवर्गं वा सादयति एष ते योनिर्मोदाय त्वेति मन्त्रेण । नैयग्रोधे पात्रे द्वितीयं गृह्णाति । नानाहिवामित्यृचं पठित्वा उपयामगृहीतोसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामीति यजुषा । ततो बर्हिषी अन्तर्धाय बदरसक्तुभिः व्याघ्रलोमभिश्च संश्रित्य अपोद्धृत्य बर्हिषी स्वीयश्येनपत्रेण परिमृज्य एष ते योनिरानन्दाय त्वेति मन्त्रेण सादयति । आश्वत्थे पात्रे तृतीयं गृह्णाति नाना हि वामित्यृचा उपयामगृहीतोस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति यजुषा च । बर्हिषी अन्तर्धाय कर्कन्धुसक्तुभिर्वृकलोमभिश्च

संश्रित्य अपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य एष ते योनिर्महसे त्वेति मन्त्रेण सादयति । सिंहादिलोमाभावे सिंहव्याघ्रवृकान् ध्यायति । एतत्कर्म सुरास्थानीयपयोग्रहासादनमित्युच्यते ॥

१७३ सर्वान् ग्रहानध्वर्युः प्रतिप्रस्थाता यजमानश्चोपतिष्ठन्ते । ओजोसीत्यादि सुरावन्तमित्यन्तैर्वाक्यमन्त्रैः । तेषु तु नवसु वाक्यसमूहेषु प्रथमवाक्यसमूहान्तपठितस्य ऋतेन सत्यमिन्द्रियमित्यादिवाक्यत्रय-स्यानुषङ्गः क्रियते । तथाहि । ओजोस्योजो मयि धेहि । मन्युरसि मन्युं मयि धेहि । महोसि महो मयि धेहि । सहोसि सहो मयि धेहि । या व्याघ्रं विषूचिका । उभौ वृकं च रक्षति । श्येनं पतत्रिणं सिंहं सेमं पात्वंहसः । संपृचःस्थ सम्माभद्रेणपृंक्त । विपृचःस्थ विमा-पाप्मना पृंक्त । सोमो राजा मृतं सुतः । ऋजीषेणाजहान्मृत्युम् ऋतेन सत्यमिन्द्रियम् । विपानं शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोमृतं मधु ॥ १ ॥ सोममद्भ्यो व्यपिबत् । छन्दसा हंसः शुचिषत् । ऋतेन० ॥ २ ॥ अद्भ्यः क्षीरं व्यपिबत् । क्रुङ्ङांगिरसो धिया । ऋतेन० ॥ ३ ॥ अन्नात्परिस्रुतो रसम् । ब्रह्मणाव्यपिबत्क्षत्रम् । ऋतेन० ॥ ४ ॥ रेतो मूत्रं विजहाति । योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणा वृतः । उल्वं जहाति जन्मना । ऋतेन० ॥ ५ ॥ वेदेन रूपे व्यकरोत् । सता-सती प्रजापतिः । ऋतेन० ॥ ६ ॥ सोमेन सोमौ व्यपिबत् । सुतासुतौ प्रजापतिः ऋतेन० ॥ ७ ॥ दृष्ट्वा रूपे व्याकरोत् । सत्यानृते प्रजापतिः ऋतेन० ॥ ८ ॥ दृष्ट्वा परिस्रुतो रसम् । शुक्रेण शुक्रं व्यपिबत् । पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । विपानं शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोमृतं मधु ॥ ९ ॥ एतत्सुराग्रहोपस्थान-मित्युच्यते ॥

१७४ उपस्थायाप उपस्पृशन्ति । ततः प्रतिप्रस्थाता ग्रहान् गृहीत्वा ऽवशिष्टसुरं कुम्भद्रोणकलशं चादायाहवनीयस्यायतः दक्षिण-खरस्याग्निसमीपे सादयति । विशाखयोः शिक्यं शतमानं पवित्रं शता तृण्णस्थालीमावाखरस्य पूर्वतः पुराणभस्मना खरान्तरं कृत्वा तस्मिन् वल्मीकवपां निदधाति । ब्रह्माणं चोपवेशयति । अथ उपस्पृश्य यन्मे अग्नइत्यादिमन्त्रं वाचयति यजमानम् । ततो यूपप्रक्षालनादि पाशुकं

कर्म चरकवत्करोति । त्रयः पशव आलभ्यन्ते । तत्राश्विभ्यां धूम्रवर्णश्छागः । सरस्वत्यै मेषश्छागो वा । इन्द्राय ऋषभः । कलियुगे तु गवालम्भनिषेधादृषभप्रतिनिधित्वेन छागो भवति । छागऋषभकार्ये इति गोपालकारिकोक्तत्वात् । वृष्णिर्वेत्यापस्तम्बसूत्रोक्तत्वान्मेषो वा भवति । प्रतिनिधिस्वीकारेऽपि पशुनामादेशादौ ऋषभशब्द एव प्रयोक्तव्यः । न तु वृष्णिशब्द उक्षशब्दो गोशब्दो वा मन्त्रपाठे ऋषभशब्ददर्शनात् । एते सौत्रामणीपशव इत्युच्यन्ते ॥

१७५ पर्यग्निकरणे विशेषः । आग्नीध्रो द्वितीये पर्याये पर्यग्निकुर्वन् प्रतिप्रस्थात्रा उत्तरवेदेर्दक्षिणेन पथा गत्वा तत्र खरे उल्मुकैकदेशं प्रक्षिप्य करीषादिनोपसमाधायोपसमाहिते सति आग्नीध्रः शेषेणोल्मुकेन पर्यायान् समाप्य तदेवोल्मुकं पृथङ्निधाय पशुश्रपणकाले तदर्थं प्रणयति । अथोल्मुकप्रथमा इत्यादिना विहितस्य शामित्रशालां प्रति पशुनयनस्याङ्गभूतमुल्मुकं पृथङ्निहितस्यैवैकदेशो गृह्यते । तमेकदेशं कार्यानन्तरमाहवनीये प्रक्षिपति । ऋषभे निषण्णे सति तमुदुस्तिष्ठेत्यादिमन्त्रेणोत्थापयति । ततो वपाप्रचारान्तं पाशुकं चरकवद्भवति । पश्वङ्गमन्त्रेषु पशुबोधकशब्दानां पशुबहुत्वाद्बहुवचनान्तत्वेन सर्वत्रोहः कार्यः । अश्विभ्यां छागस्य वपाया मेदसोनुब्रू३हि इत्यनुवाक्याप्रैषः । अयमश्व्यनुवाक्याप्रैष इत्युच्यते ॥

१७६ अश्विभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्येति मैत्रावरुणं प्रत्यध्वर्युः प्रेष्यति । अयमश्वियाज्याप्रैषप्रैष इत्युच्यते ॥

१७७ सरस्वत्यै मेषस्य वपाया मेदसोनुब्रू३हि इति । अयं सरस्वत्यनुवाक्याप्रैष इत्युच्यते ॥

१७८ सरस्वत्यै मेषस्य वपां मेदःप्रस्थितं प्रेष्येति अयं सरस्वतीयाज्याप्रैषप्रैष इत्युच्यते ॥

१७९ यजमानः अश्विभ्यामिदम्० । अश्विनोरहन्देवयज्ययेन्द्रियावी भूयासम् । नेमानं महिमानं गमेय मिति वा । सरस्वत्या इदम्० । सरस्वत्या अहं देवयज्ययेन्द्रियावी भूयासम् । नेमानमित्यादिविकल्पः पूर्ववत् । अनुमन्त्रयते । एतद्यागद्वयानन्तरं अध्वर्युः इन्द्राय ऋषभस्य वपाया मेदसोनुब्रू३हि इत्ययमैन्द्रानुवाक्याप्रैष इत्युच्यते ॥

१९० इन्द्राय ऋषभस्य वपां मेदः प्रस्थितं प्रेष्येत्ययमैन्द्रयाज्या-प्रैषप्रैष इत्युच्यते ॥

१९१ ततो वपामार्जनान्तं समानम् । इदानीमेव वा पयोग्रहा-दिग्रहणम् । ततः प्रतिप्रस्थातः पशून् विशाधि इत्यादि करोति । नैतेषु पशुपुरोडाशा विद्यन्ते । ग्रहपुरोडाशा ह्येते इति वचनात् । शमितर्हृदयानि जिह्वावक्षांसि तानि कुरुतात्तनिमानिमतस्नस्तानि सार्धं सव्यानि दोषाण्येकचराणि कुरुताद्वानां पार्श्वाण्यवधताद्दक्षिणाः श्रोणीरध्युद्धीः कुरुताद्दक्षिणानि दोषाणि सव्या श्रोणीरणिमन्ति गुदानां तानि अङ्गानि कुरुताद्वनिष्टूश्च जाघनीश्चावधत्ताद्बहुरूपाः कुरुतात् त्रिः पशून् प्रच्यावयतात् त्रिःप्रच्युतानां पशूनां हृदयान्युत्तमानि कुरुतात् । तस्य तस्य पशोरित्यध्याहारं तु एकवत्सैवोप्यन्वेतीत्यनूहो वा । अयं सौत्रामणीपशुश्रपणप्रैष इत्युच्यते ॥

१९२ इदानीमप्रेषित एवाग्नीध्रः त्रीन्पुरोडाशान्निर्वपति । इन्द्रायै-कादशकपालम् । सवित्रे द्वादशकपालम् । वरुणाय दशकपालम् । सर्वाणि कपालानि त्रयस्त्रिंशद्भवन्ति । अत्रैव वरुणमेककपालं निर्वपति । आमिक्षाश्रपणं साग्नौ आप्यनिनयनान्तं करोति । पश्वङ्गश्रपणकाले ग्रहैः प्रचरन्ति । अध्वर्युः पयोग्रहान्वंशरज्ज्वादिना युगपद्दोमार्थमेकत्र बद्ध्वा आदत्ते । प्रतिप्रस्थाता तथैवैकीकृत्य सुराग्रहानादत्ते अध्वर्युर्मैत्रावरुणं सम्प्रेष्यति । अश्विभ्यां सरस्वत्या इन्द्राय सुरासोमानामनुब्रू३हि । अयं सुराग्रहानुवाक्याप्रैष इत्युच्यते ।

१९३ अत्याक्रामतोऽध्वर्युप्रतिप्रस्थातारौ । अध्वर्युराश्रावयति । आग्नीध्रेण प्रत्याश्राविते अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सुरा-सोमान्प्रस्थितान् प्रेष्य । इत्ययं प्रैषः सुराग्रहयाज्या प्रैषप्रैष इत्युच्यते ॥

१९४ होतृवषट्कारसमकालं प्रतिप्रस्थाता सुराग्रहान् अध्वर्युः पयोग्रहान् सहोभौ स्वाहान्ताभ्यां जुहुतः । सुरावन्तं बर्हिषदं सुवीरं यज्ञं हिन्वन्ति महिषा नमोभिः । दधानाः सोमं दिवि देवतासु मदे-मेन्द्रं यजमानाः स्वर्काः स्वाहा । इत्यध्वर्योः यस्ते रसः सम्भृत ओषधीषु सोमस्य शुष्मः सुरया सुतस्य । तेन जिन्व यजमानं मदेन सरस्वत्यश्विनाविन्द्रमग्निं स्वाहा । इति प्रतिप्रस्थातुः । वषट्कोक्तयोर-



हाव्यग्नेर्हविर्यस्मिन्नश्वास इत्यनयोर्निवृत्तिः । इमौ सुराग्रहहोममन्त्रा-वित्युच्येते ॥

१८५ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इदम् न ममेति त्यागो यजमानस्य । अत्र हुतानुमन्त्रणं नास्ति । सोमधर्मत्वात् । कर्णापत्ते आपस्तम्बसूत्रोक्तं अनुमन्त्रणं सान्नाय्यवत् याह्यम् । अहाव्यग्नेर्हविरा-च्यते सुवीव घृतं चमू इव सोमः । वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ १ ॥ यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अव-सृष्टास आहुताः । कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥ २ ॥ इति मन्त्राभ्यां सुराग्रहान् हूयमानान्वानुमन्त्रयते यजमानः । इदं मन्त्रद्वयं सुराग्रहहोमानुमन्त्रणमित्युच्यते ॥

१८६ होतुरनुवषट्कारे तु उभौ तूष्णीं जुहुतः । यजमानः आनयइदम्० । अग्नेरहन्देवयज्यया आयुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्यनुम-न्त्रयते । प्रतिप्रस्थातुर्दक्षिणाखरस्याग्नौ वा होमः । तत्पक्षे शालामु-खीयादग्नेरिध्मं प्रणीयोत्तरवेदिवत्सम्भारनिधानं अध्वराहुत्यादि परि-स्तरणपरिधीध्मादिसम्मार्गान्तं तूष्णीमध्वर्युपुरुषाः कुर्वन्तीति विशेषः प्रतिप्रस्थाता श्विनं संस्रावं सारस्वते ऽवनयति सारस्वतमैन्द्रे । ततः प्रत्याक्रम्याश्विनं पयोग्रहमध्वर्युर्भक्षयति । यमश्विना नमुचेरासुरादधि-सरस्वत्यसुनोदिन्द्रियाय । इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि इति मन्त्रेण । प्रतिप्रस्थाताग्नीध्रश्च सारस्वतं भक्षयतः । यदत्र रिप्तं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति मन्त्रेण । इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये । आत्मसनि पशुसन्यभयसनि लोक-सनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा । आभ्या मृग्भ्यामैन्द्रं ब्रह्मयज-मानौ भक्षयतः । प्रतिप्रस्थाता ऐन्द्रं सुराग्रहं होत्रे हरति । पयोग्रह-त्वात् होता प्रत्यक्षं भक्षयति । प्राणभक्षो वा यदि होता न भक्षयति तदा खरे उपविष्टः कश्चिद् ब्राह्मणो भक्षयति । नानाहिवामित्यृचा यदत्र शिष्टमित्यृचा च । यदि ब्राह्मणं न विन्देत्तर्हि आहवनीयस्य

दक्षिणतो भस्मनिमितखरस्यवल्मीकवपायामवनयति एताभ्यामेव मन्त्राभ्याम् । अयं सुराग्रहभक्षविधिरित्युच्यते ॥

१८७ अत्र ग्रहपात्राणां सुराभिनर्दन पूरणं श्येनपत्रावगूहनञ्च । वंशपादानुच्छ्रित्य तयोरुपरि दक्षिणाग्रं दीर्घवंशं निधाय वंशशिक्यं च बध्वा शिक्ये शतातृण्णं कुम्भं निधाय दक्षिणाग्रगोवालपवित्रान्तर्हितं कृत्वा पवित्रे शतमानं हिरण्यं निधाय तत्रावशिष्टं सुरास्थानीयं पयोऽवनयति । यत्पतितं द्रोणे धाराशेषं तद्दक्षिणामुखः प्राचीनावीती तिष्ठन् सोमप्रतीकाः पितरस्तृप्णुत इति मन्त्रेण शतातृण्णकुम्भतो धारा अग्नौ पातयति । तासु पतितासु अध्वर्युर्ब्रह्मा होता यजमानश्च प्राचीनावीतिनो दक्षिणामुखा उपतिष्ठन्ते । पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ १ ॥ पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्वआयवः ॥ २ ॥ जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूंरनु ॥ ३ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे ॥ ४ ॥ उभाभ्यान्देवसवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे ॥ ५ ॥ वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सधमाद्येषु । वयं स्याम पतयो रयीणाम् ॥ ६ ॥ वैश्वानरो रश्मिभि र्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् ॥ ७ ॥ बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्ने दक्षैः पुनाहि मा ॥ ८ ॥ एतैरष्टाभिर्मन्त्रैः एतत्सुराधारोपस्थानमित्युच्यते ॥

१८८ उपस्थानानन्तरं प्रत्यङ्मुखो ऽध्वर्युः त्वं सोम प्रचिकितो मनीषेति त्वया हि नः पितर इति वन्वन्नवात इति त्वं सोमपितृभिः संविदान इति तस्मै त इन्दो हविषा विधेमेति पञ्चभिर्ऋग्भिरुपतिष्ठते । उदङ्मुखो ब्रह्मा बर्हिषदः पितर ऊत्यर्वागिति त आगत वसेति आहं पितॄन्त्सुविदत्रानित्युपहूताः पितरः सोम्यास इति चतसृभिर्ऋग्भिरुपतिष्ठते । प्राङ्मुखो होता अग्निष्वात्ताः पितर एहगच्छतेति ये अग्निष्वात्ता ये ऽनग्निष्वात्ता इति वान्यायै दुग्धे इति अग्निष्वात्ता इति चतसृभिर्ऋग्भिरुपतिष्ठते । अत्र सुराग्रहस्यापनं





... भिषज्यन् स्वाहा ॥ १ ॥ अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इदं न ममेति यजमानस्य त्यागः । सम्पातमवनीय कुष्टिकशफावग्नावनुप्रहरति । एवं सर्वत्र । तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः । लोमानि शष्पैर्बहुधा नतोक्मभिस्त्वगस्य मांसमभवन्न लाजाः स्वाहा ॥ २ ॥ सर्वत्र यथालिङ्गत्यागः । तत्तत्पशुदेवतानाम्नेति केचित् । तदश्विना भिषजा रुद्रवर्त्तनी सरस्वती वयति पेशो अन्तरः । अस्थिमज्जानं मासरैः कारोतरेण दधतो गवां त्वचि स्वाहा ॥ ३ ॥ सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः । रसंपरिस्रुता न रोहितं नग्नहुर्धीरस्तसरं नवेम स्वाहा ॥ ४ ॥ पयसा शुक्रममृतं जनित्रं सुरया मूत्राज्जनयन्त रेतः । अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातं सब्वं तदारात् स्वाहा ॥ ५ ॥ इन्द्रः सुत्रामा हृदयेन सत्यः पुरोडाशेन सविता जजान । यकृत्क्लोमानं वरुणो भिषज्यन्मतस्ने वायव्यैर्न मिनाति पित्तं स्वाहा ॥ ६ ॥ आन्त्राणि स्थालीर्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः । श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी नाभिरुदरं न माता स्वाहा ॥ ७ ॥ कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः । प्लाशीर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः स्वाहा ॥ ८ ॥ एते मन्त्रा आश्विनकुष्ठिकशफहोममन्त्रा इत्युच्यन्ते ।

१९३ अथ द्वितीयस्य । मुखं सदस्य शिर इत्सतेन जिह्वा पवित्रमश्विनासंसरस्वती ॥ चप्यं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी स्वाहा ॥ १ ॥ अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन । पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते स्वाहा ॥ २ ॥ अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् ॥ सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान स्वाहा ॥ ३ ॥ इन्द्रस्य रूपमृषभो बलाय कर्णाभ्यां श्रोत्रममृतं ग्रहाभ्याम् । यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् स्वाहा ॥ ४ ॥ आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम । केशा न शीर्षन् यशसे श्रियै शिखा सिंहस्य लोम त्विषिरिन्द्रियाणि स्वाहा ॥ ५ ॥ अङ्गान्यात्मन्भिषजा तदश्विनात्मानमङ्गैः समधात्सरस्वती । इन्द्रस्य रूपं शत-

मानमायुश्चन्द्रेण ज्योतिरमृतं दधाना स्वाहा ॥ ६ ॥ सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति । अपां रसेन वरुणो न साम्नेन्द्रं श्रियै जनयन्नप्सु राजा स्वाहा ॥ ७ ॥ तेजः पशूनां हविरिन्द्रियावत्परिस्रुता पयसा सारघं मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुःस्वाहा ॥ ८ ॥ एते सारस्वतकुम्भिकशफहोममन्त्रा इत्युच्यन्ते ॥

१९४ अथ तृतीयस्य । तत्र सीसेन तन्त्रं मनसा मनीषिण इत्यादीनां षोडशानामृचां द्वाभ्यां द्वाभ्यामृग्भ्यां एकैकाहुतिर्भवति । तद्यथा । सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति । अश्विना यज्ञं सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥ तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य मां समभवल्लाजाः स्वाहा ॥ १ ॥ अनया रीत्या ऽष्टौ होमान् करोति । एते ऋग्द्वयात्मका मन्त्राः ऐन्द्रकुम्भिकशफहोममन्त्रा इत्युच्यन्ते ॥

१९५ अथा ऽध्वर्युः । मित्रोसि वरुणोसि । समहं विश्वैर्देवैः । इति द्वाभ्यां वाक्यमन्त्राभ्यां पूर्वं संपादितामासन्दीं यजमानायतने प्रतिष्ठापयति एतत्कर्म आसन्दीप्रतिष्ठापनमित्युच्यते ॥

१९६ ततः क्षत्रस्य नाभिरसि । क्षत्रस्य योनिरसि । एतद्वाक्यद्वयात्मकमन्त्रेण तस्यामासन्द्यां वास आस्तृणाति । एतदासन्द्यास्तरणमित्युच्यते ॥

१९७ चत्वारोपि वाक्यमन्त्रा आसन्दीप्रतिष्ठापने विनियुक्ता इति केचित् । तन्मते वासआस्तरणं न भवति । यजमानः स्योनामासीद । सुषदामासीद । मा त्वा हिंसीत् । मा मा हिंसीत् । इति वाक्यचतुष्टयात्मकेन मन्त्रेण उपविशति । एतदासन्द्युपवेशनमित्युच्यते ॥

१९८ अध्वर्युः निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः । इत्यृचा आसन्द्यामासीनं यजमानमभिमन्त्रयते । एतदासन्द्यासीनयजमानाभिमन्त्रणमित्युच्यते ॥

१९९ अध्वर्युः प्रत्यङ्मुखस्तिष्ठन् आसन्द्यामासीनं यजमानं आश्विनपात्रस्थसंस्रावेणाभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेश्विनो-

र्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामीति मन्त्रेण । ततः सारस्वतपात्रस्थसंस्रावेणाभिषिञ्चति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीति मन्त्रेण । ततः ऐन्द्रपात्रस्थसंस्रावेणाभिषिञ्चति । देवस्यत्वा० हस्ताभ्यां । इन्द्रस्येन्द्रियेण श्रियै यशसे बलायाभिषिञ्चामीति मन्त्रेण । तदनन्तरं कोऽसि कतमोऽसि । कस्मै त्वा कतमाय त्वा । इति वाक्यद्वयेन यजमानस्य हस्तौ सम्मृशति । एतद्यजमानहस्तसम्मर्शनमित्युच्यते ॥

२०० व्यस्ताभिर्व्याहृतिभिस्तिस्रः स्रुवाहुतीर्जुहोति । तद्यथा । भूः स्वाहा । भुवः स्वाहा । सुवः स्वाहा यथालिङ्गत्यागो यजमानस्य । अयं व्यस्तव्याहृतिहोमइत्युच्यते ॥

२०१ यजमानो राजसूयवन्मङ्गलनाम्ना ऽऽह्वयति । अन्त स्माव् यन् । सुश्लोकाँ३इति सङ्ग्रहीतारम् । सुमंगलाँ३ इति भागदुघम् । सत्यराजाँ३इति चत्तारं । एतत्कर्म मङ्गलनामाह्वानमित्युच्यते ॥

२०२ ततो यथालिङ्गमङ्गानि सम्मृशति । शिरो मे श्रीः । इति शिरः । यशो मुखम् । मुखम् । त्विषिः केशाश्च श्मश्रूणि । इति केशश्मश्रूणि । राजा मे प्राणो अमृतम् । इति नासिकाम । सम्राट् चक्षुः । इति चक्षुषी । विराट् श्रोत्रम् । इति श्रोत्रं । जिह्वा मे भद्रम् । इति जिह्वाम् । वाङ्महः इति वाचम् । मनो मन्युः इति मनः । स्वराड्भामः इति हृदयललाटे । मोदाः प्रमोदा अङ्गुलीरङ्गानि इत्यङ्गुलीरङ्गानि च । चित्तं मे सहः । इति चित्तम् । अभिसन्धाय हृदयम् । बाहू मे बलमिन्द्रियम् । इति बाहू । हस्तौ मे कर्मवीर्यम् इति हस्तौ । आत्मक्षत्रमुरो मम । इति मध्यशरीरमुरश्च । पृष्ठीर्मे राष्ट्रमुदरमंसौ । इति पृष्ठमुदरमंसौ च । ग्रीवाश्च श्रोण्यौ । इति ग्रीवाश्रोण्यौ । ऊरू अरत्नी जानुनी । इत्यूरू अरत्नी जानुनी विशोमेऽङ्गानि सर्वतः । इति सर्वाङ्गानि । नाभिर्मे चित्तं विज्ञानम् । इति नाभिम् । पायुर्मे पचितिर्भसत् । इति पायुम् । आनन्दनन्दावाण्डौ मे । इति वृषणौ । भगः सौभाग्यं पसः । इति प्रजननं । असम्भवतामभिसन्धाय

जपेत् । एवम् यथालिङ्गमङ्गानि संस्पृश्याप उपस्पृशति । इदमङ्गसंस्पर्शनमित्युच्यते ॥

२०३ अथासन्द्याः प्रत्यवरोहति । जङ्घाभ्यां पद्भ्यां धर्मोऽसि । विशि राजा प्रतिष्ठतीति वाक्यद्वयेन मन्त्रेण । अवरुह्य जपति । प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठामि पुष्टे । प्रतिद्यावापृथिव्योः प्रतितिष्ठामि यज्ञे । एतत्कर्म आसन्दीप्रत्यवरोहणमित्युच्यते ॥

२०४ अथाध्वर्युराज्याहुतिं जुहोति । त्रयो देवा एकादश । त्रयस्त्रिंशाः सुराधसः । बृहस्पतिपुरोहिताः । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाहुतयो मे कामान् समर्धयन्तु स्वाहा ॥ देवेभ्य इदम्० इति यजमानस्य त्यागः । अध्वर्युः पुनराज्याहुतिं जुहोति । भूः स्वाहा । यजमानः अग्नय इदं न ममेति, यजमानस्य त्यागः । अथ यजमानो यथालिङ्गमङ्गानि सम्मृशति । लोमानि प्रयतिर्मम । इति लोमानि । त्वङ्म आनतिरागतिः । इति त्वचम् । मांसं म उपनतिः । इति जिव्हाम् । वस्वस्थि मज्जा म आनतिः । इति मज्जानम् । लोमादीनि मज्जान्तान्यङ्गानि सम्मृश्याप उपस्पृशति । इदं लोमादिसम्मर्शनमित्युच्यते ॥

२०५ ततः चयनपक्षे स्विष्टकृतः पुरस्तान्मृत्युग्रहहोमो भवति । विद्युदसि विद्य वृष्टिरसि वृश्चमे० । आग्नीध्रः स्रुचावादाय स्विष्टकृत्प्रभृति इडान्तैः पशुभिः प्रचरति । मृत्युग्रहभक्षश्च । अथैनान्पुरोडाशान्पाचयति । ऐन्द्रमेकादशकपालम् । सावित्रं द्वादशकपालम् । वारुणं दशकपालं च । आग्नीत्पुरोडाशानाहरेति प्रेषित अग्नीध्रो दक्षिणेनाज्यस्थालीमित्यादिरीत्या व्याहृतिमन्त्रेण हवींष्यन्तर्वेद्यासादयति । यजमानः यन्मे अग्ने इत्यादिनाऽभिमन्त्रयते । अप्रैषः सप्रैषो वा प्रचारः । अप्रैष इति तु युक्तम् । अतएव होतुरादेशो ऽपि भवति अश्विनोरहन्देवयज्ययेन्द्रियावी भूयासम् सरस्वत्या अहं देवयज्यया स्वस्तिमान् पशुमान्भूयासम् । इन्द्रस्य सुत्राम्णोहन्देवयज्यया धर्मभाग्भूयासम् । एतानि क्रमेण आश्विनसारस्वतेन्द्रयागानां यजमानस्यानुमन्त्रणानि । सर्वेषां यागानामन्वादइत्येव वऽानुमन्त्रणम् इडामार्जनान्ते

तन्त्रेण स्विष्टकृदिडान्तम् इत्यापस्तम्बोक्तपक्षे अत्र मृत्युग्रहभक्षः । गर्भिणीं वडवामत्र वा ददाति । ततो हविरुच्छिष्टमुद्वासयति । चयनपक्षे मैत्रावरुण्यामित्तया प्रचर्य वाजिनेनेष्ट्वा आग्नीद्रे पथानङ्गारानित्यादि करोति । समुदितैस्त्रयाणां पशूनां गुदकाण्डैरुपयाजप्रचारो भवति । दिवं वो धूमो गच्छत्वन्तरिक्षम्० पृणध्वं स्वाहेत्यूहः । यद्येकस्तदा प्रकृतिवत् । सूक्तवाके यथालिङ्गमूहः । आज्यभागदेवतानन्तरं अश्विनोरहमुज्जितिमनूज्जेषम् । सरस्वत्या अहमुज्जितिमनूज्जेषम् । देवानामाज्यपानमित्यादि प्रकृतिवत् । त्रीणि समिष्टयजूंषि भवन्ति । यजमानो विष्णुक्रमान् क्रान्त्वा व्रतं विसृज्य यज्ञविमोकान्तं करोति । अथाध्वर्युः स्फ्यमुदपात्रं हृदयं शूलमित्यादि शूलोद्वासनान्तं कर्म करोति इदम् शूलकर्मेत्युच्यते ॥

२०६ अथावभृथेन चरन्ति । सामचैव नाहदेवीराप एष वो गर्भ इति चेति बौधायनचरकसौत्रामणीसूत्रात् सौमिको ऽवभृथ इति ज्ञेयम् । परिभोजनीयान्वेदं च कृत्वा पाणी सम्मृश्याग्नीन् परिस्तीर्य गार्हपत्यस्योत्तरतस्तृणेषु पात्राण्यासाद्योत्तरवेदिसमीपे ब्रह्माणमुपवेश्य पृषूयास्तरणादि करोति । उत्तरवेदिसमीपे प्रणीतासादनम् । प्रोक्षणीभिर्वा संयवनम् । पुराणगार्हपत्ये निर्वापादि । वारुणमेककपालं पुरोडाशं निर्वपति । आप्यनिनयनान्ते । प्रोक्षणीरासादय स्रुवं च स्रुचं च संमृड्ढि पत्नीं सवन्नाज्येनोदेहि इत्यध्वर्युराग्नीध्रं प्रेष्यति । प्रत्युष्टं रक्षः प्रत्युष्टा अरातयोऽग्नेर्वांतेजिष्ठेन तेजसा निष्टपामीत्यूहितमन्त्रेण स्रुवस्रुचोर्निष्टपनम् । पत्नीं सवन्नाज्यमवेक्षयित्वा यजमानं चाज्यमवेक्षयित्वा ऽज्यं प्रकृतिवदुत्पुनाति । विष्णवसि वैष्णवं धामासि प्रजापत्यम् । इत्यनेन मन्त्रेणाज्यमभिमन्त्रयते । स्योनं ते सदनमित्यादिमन्त्रेण एककपालमाविः पृष्टं कृत्वा यन्मे अग्ने इत्यादिनाभिमन्त्रयते। आज्यस्थालीं स्रुवं जुहूं स्फ्यं बर्हिर्मुष्टिमेककपालं पुरोडाशं प्रतिवसनीये वाससी सुराग्रहपात्राणि वालानि शततृण्णां स्थालीं हृदयशूलादीन्यादाय अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्ति । द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । याभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरञ्चेति मन्त्रेण । उरुं हि राजा वरु-

मश्चकार सूर्याय पन्थामन्वेतवाउ । अपदे पादाप्रतिधातवेक-रुतापवक्ता हृदया विधश्चित् । इत्यनेन यथापस्तत्र यन्ति । न सामानि गायन्ति । शतन्ते राजन् भिषजः सहस्रमुर्वी गम्भीरासु मतिष्टे अस्तु । बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्य-स्मत् । इत्यृचमपो दृष्ट्वा जपन्ति । अथामन्तमधितिष्ठन्ति । अत्र प्रसिद्धं दृश्यशूलैश्चरित्वा स्फ्येनोद्धृत्यावोद्य शुष्कस्य चार्द्रस्य च सन्धा-वित्यादि० वरुण नो मुञ्चेत्यन्तम् शूलानां कर्म करोति । तत उदक-समीपे दक्षिणापवर्गाणि वायव्यानि सादयति । षट् यज्ञपात्राणि द्वौ द्रोणकलशौ । एकं कुम्भम् । दशापवित्रादि एतानि पात्राणि वायव्या-नीत्युच्यन्ते ॥

२०७ यस्ते देव वरुण गायत्री छन्दाः पाशः । ब्रह्मन्प्रतिष्ठितः । तं त एतेनावयजे । इत्यनेन मन्त्रेण पर्णमयं सादयति । यस्ते देव वरुण त्रिष्टुप् छन्दाः पाशः । क्षत्रे प्रतिष्ठितः । तं त एतेनावयजे । एतावन्मन्त्रेण नैयग्रोधम् । यस्ते देव वरुण जगती छन्दाः पाशः । विशु प्रतिष्ठितः । तं त एतेनावयजे इति मन्त्रेणाश्वत्थम् । यस्ते देव वरुणानुष्टुप्छन्दाः पाशः । । पशुषु प्रतिष्ठितः । तं त एतेनावयजे । इत्यनेन मन्त्रेण शतातृण्णां स्थालीं यज्ञाणां दक्षिणतः । तदुत्तरत-स्तूष्णीं सतन्द्रोणकलशौ वालानन्यच्च यत्सोमावलिप्तं तत्सर्वं निद-धाति । एतदवभृथीयवायव्यासादनमित्युच्यते ॥

२०८ अथ बर्हिः प्रासनादि करोति । अपस्त्रिः संमृज्य बर्हिर्वे-लोश्चतुरः प्रयाजानिष्ट्वा आज्यभागाभ्यां प्रचर्य वारुणमेककपालं पूर्वा-र्धादपरार्धाच्चावदाय उच्चैर्जुहोति । अवते स्विष्टकृति स्रुवेण पञ्चा-हुतीर्जुहोति । यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः स्वाहा । यदिदिवाय० कृमेना व० । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः स्वाहा । यदि जाग्रद्यदि स्वप्न० वयम् । सूर्यो मातस्मादेनसो० सः स्वाहा । अत्र क्रमेण अग्नये वायवे सूर्यायेति यथालिङ्गं यजमानस्य त्यागाः । यद्ग्रामे यदरण्ये यत्सभायांयदिंद्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् । यदेकस्याधि-धर्मणि तस्याऽवयजनमसि स्वाहाप्रजापतय इदं न ममेति त्यागः ।

यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च स्वाहा । वरुणायेदं न ममेति त्यागः एताः पञ्चाहुतयः सौत्रामण्यवभृथाहुतय इत्युच्यन्ते ॥

२०९ ततः स्विष्टकृदादि । अपः सक्तत्संमृज्यापबर्हिषौ द्वावनुयाजौयजति । समुद्रे ते० स्रुवं प्रतिष्ठाप्य अभिपूर्वं हुत्वा ऽवभृथं यजमानो ऽनुमन्त्रयते । अवभृथनिचुम्पुण निचेरुरसि निचुङ्कुण । अव देवैर्देवकृतमेनोयाट् । अव मर्त्यैर्मर्त्यकृतम् । उरोरानोदेवरीरिषस्पाहि । अयमवभृथानुमन्त्रणमन्त्र इत्युच्यते ॥

२१० ततः सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भूयासुः । योस्मान् द्वेष्टि । यं च वयं द्विष्मः । द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाज्यम् । आपः शुन्धन्तु मैनसः । इति द्वाभ्यां मन्त्राभ्यामाप्लुत्य शालीनप्सु सम्प्रकीर्य अञ्जलिनोपसिच्य इमं विष्यामीति मन्त्रेण योक्त्रं विसृज्य अन्योन्यं धावयन्ति । ततोऽभिषेकादि । स्नात्वा प्रतिवसनीये वाससी परिधाय उद्वयन्तमसस्परि पश्यन्तोज्योतिरुत्तरम् । देवन्देवत्रासूर्यमगन्म ज्योतिरुत्तमम् इत्यादित्यमुपतिष्ठते । प्रतियुतो वरुणस्य पाशः । प्रत्यस्तो वरुणस्य पाशः । इति मन्त्रेणोदकान्तं प्रत्यस्यति । ततः प्रतिप्रस्थातरुचो नय । तिस्रस्तिस्रः समिधः कुर्वत इत्यादि । अपो अन्वचारिषं रसेन समसृक्ष्महि । पयस्वां अग्न आगमन्तं मा संसृज वर्चसा । प्रजया च धनेन च । समाववर्त्ति पृथिवी । समुषाः समु सूर्यः । समु विश्वमिदं जगत् । वैश्वानरज्योतिर्भूयासम् । विभुं कामं व्यश्नवै । एतैर्वाक्यमन्त्रैराहवनीयमुपतिष्ठते । अध्वर्युः स्रुवाहुतिं जुहोति । भूः स्वाहा । अग्नय इदम्० इति त्यागः । व्रतविसर्गादि पुनरालम्भब्राह्मणतर्पणान्तं कृत्वा औपर्यजिके औत्तरवेदिके वा ऽग्नौ उत्तरवेदिदक्षिणांसे बर्हिरुपोषति । यत्कुसीदमित्यादिहोम औत्तरवेदिके वा । वाय्वादित्ययूपोपस्थानसमारोपणाभ्याधानपूर्णाहुतिवरदानञ्चेति । व्रतविसर्गादि पुनरालम्भवर्जं ब्राह्मणतर्पणान्ता सन्तिष्ठते त्रिपशुसौत्रामणी । तदानीमेव अस्मिन्नेव ख्वो वा विहृत्य महापितृयज्ञवदनुष्ठानं भवति । याः पुरस्तादित्यादि । महापितृयज्ञहविर्भिर्यक्ष्ये इति सङ्कल्पः । प्रजापते न

स्वदेतानि यदन्तरिक्षं पृथिवीमुत द्यामित्युपस्थानान्तं करोति । अयं सौत्रामणीसम्बन्धिमहापितृयज्ञ इत्युच्यते ॥

२११ अथ प्रतिपदि ऐन्द्रपशुवत्सङ्कल्पप्रभृति । इन्द्राय वयोधसे पशुमालभते । नात्र समारोपः । सौत्रामणीत्रिपशुवेदिमुद्धास्य यूपं चोद्धास्य आहवनीयस्याग्रे द्वादशपदां वेदिं विमायोत्तरवेदिं शम्यामात्रीं प्रादेशमात्रीं योनिं च करोति । नात्र सौमिकी वेदि न चयनम् । ऋषभो दक्षिणा । पूर्णाहुत्यन्तं पुनरालम्भवर्जं ऐन्द्रं पशुं समापयति । अयं सौत्रामण्युत्तराङ्गैन्द्रपशुरित्युच्यते ॥

२१२ तदनन्तरं पुनर्विहृत्य पूर्ववदादित्येष्टिं करोति । समातरं गां दक्षिणां ददाति । पुनरालम्भवर्जं ब्राह्मणतर्पणान्तं करोति । इयं सौत्रामण्युत्तरादित्येष्टिरिति गीयते ।

२१३ तदनन्तरं अग्नीन् समारोप्य स्वान्यग्न्यायतनानि सम्प्राप्य मथित्वाऽग्नीन् विहृत्याग्निहोत्रं जुहोति । एतावता ग्रन्थेन कौकिल-सौत्रामणीसम्बन्धियजमानब्रह्माध्वर्य्वाग्नीध्रप्रतिप्रस्थातॄणां कर्माणि प्रतिपादितानि ।

अथ होतृमैत्रावरुणयोः कर्माश्वलायनसूत्रानुसारेण प्रोच्यते ॥ ऐन्द्रस्य पशोः पश्विष्ट्यादि सर्वं निरूढवद्भवति । आवाहनकाले होता आज्यभागदेवतावाहनानन्तरं इन्द्रमा३वह । वनस्पतिमा३वह । देवां आज्यपां इत्यादि प्रकृतिवत् । अध्रिगुप्रैषे मेधपतये मेधमित्यूहः । अध्रिगुप्रैषात्पूर्वमेव प्रयाजाः । आश्वलायनानुक्तत्वात् यजुर्वेदोक्तप्रकारेण । तद्यथा ये३ यजामहे भूर्भुवः स्वः समिद्धइन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः । गोभिर्वयावान् मधुना समञ्जन् त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं विदुरो ववाराद् वौ३० ॥ १ ॥ वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीः । इति वषट्कारानन्तरं जपति । ये३ यजमाहे नराशंशः प्रतिशूरो मिमानस्तनूनपात्प्रतियज्ञस्य धाम । गोभिर्वयावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेता३ वौ३० ॥ २ ॥ वाग्वष० । ये३य०सुवरीडितो देवैर्हरिवां अभिष्टिराजुह्वानो हविषा शर्धमानः । पुरन्दरो मघवान्वज्रबाहुरायातु यज्ञमुप नो जुषाणा३ वौ३० । वाग्वष० ॥ ३ ॥ ये३ य० सुयजुं षाणो बर्हि-

र्हरिवान् इन्द्रः प्राचीनं सीदत्प्रदिशा पृथिव्याः । उरुव्यचाः प्रथमानं स्योनमादित्यैरक्तं वसुभिः सजोषाः स्वाहा ॥ ४ ॥ वाग्वष० । येऽ३ य० सुवरिन्द्रं दुरःकवष्यो धावमाना वृषाणं यन्तु जनयः सुपत्नीः । द्वारो देवीरभितो विश्रयन्तां सुवीरा वीरं प्रथमानामहोभीऽ३ वै० ॥५॥ वाग्वष० । ये० य० सुवरुषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् । पेशस्वती तन्तुना संव्ययन्ती देवानां देवी यजतः सुरुक्मेऽ३ वौ३० ॥ ६ ॥ वाग्वष० । नचैद्वैतन्वत इति वचनात् । येऽ३ य० सुवर्दैव्यामिमाना प्रथमा पुरुत्रा होताराविन्द्रे प्रथमा सुवाचा० । मूर्धन्यज्ञस्य मधुना प्राचीनं ज्योतिर्हविषा वृधाताऽ३ वौ३० । वाग्वष० । अत्र याज्यान्तविसर्गलोपः । इतरश्च रेफीति वचनात् । येऽ३ य० सुवस्तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नी । अच्छिन्नं तन्तुं पयसा सरस्वतीडादेवी भारती विश्वतूर्तीऽ३० वौ३० ॥ ८ ॥ वाग्वष० । येऽ३ य० सुवस्त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे पुरूणि । वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवाऽ३न्वौ३० ॥ ९ ॥ वाग्वष० । येऽ३ य० सुववनस्पतिरवसृष्टो न पाशैस्त्मन्यासमञ्जन् शमिता न देवः । इन्द्रस्य हव्यैर्जठरं पृणानः स्वदाति हव्यं मधुना घृतेनाऽ३ वौ३० ॥१०॥ वाग्वष० । तत आश्वलायनसूत्रपठितमध्रिगुप्रैषेन पठति । अध्रिगुश्चापापश्चोभौ देवानां शमितारौ ताविमं पशुं श्रपयतां प्रविद्वांसौ यथा यथास्य श्रपणं तथा तथेति श्रुत्युक्तत्वादध्रिग्वपापनामकौ देवशमितारावुच्येते ॥

२१४ दशप्रयाजाः पूर्वमनुष्ठिताः । इदानीमेकादशेन यजति । स यथा । येऽ३ य०सुवस्तोकानामिन्दुं प्रतिशूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् । घृतप्रुषा मधुना हव्यमुन्दन्मूर्धन्यज्ञस्य जुषतां स्वाहाऽ३ वौ३० ॥ ११ ॥ वाग्वष० । एते एकादश आपस्तम्बसूत्रपठिता मन्त्राः सौत्रामणीप्रयाजा इति गीयन्ते ॥

२१५ अथैतेषां प्रैषा उच्यन्ते । ते च यथा । होतायक्षत्समिधेन्द्रमिडस्पदेनाभा पृथिव्या अधि । दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहान्वेत्वाज्यस्य होतर्यज ॥ १ ॥ होता यक्षत्तनूनपातमूतिभिर्जेतारमपराजितमिन्द्रं देवं सुवर्विदं पथिभिर्मधुमत्तमैर्नराशंसेन तेजसा

वेत्वाज्यस्य होतर्यज ॥ २ ॥ होता यक्षदिडाभिरिन्द्रमिन्द्रमीडितं मा-
जुह्वानममर्त्यम् । देवो दैवैः सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य
होतर्यज ॥ ३ ॥ होता यक्षद्बर्हिषेन्द्रं निषद्वरं वृषभं नर्यापसम् । वसु-
भीरुद्रैरादित्यैर्भिर्नियुद्भिर्बर्हिरासदद्वेत्वाज्यस्य होतर्यज ॥ ४ ॥ होता
यक्षदोजोवीर्यं सहो द्वार इन्द्रमवर्धयन् ॥ सुप्रायणा विश्रयन्तामृता-
वृधो द्वार इन्द्राय मीढुषे वियन्त्वाज्यस्य होतर्यज ॥ ५ ॥ होता यक्ष-
दुषे इन्द्रस्य धेनू सुदुघे मातरी मही । सवातरौ न तेजसा वत्समिन्द्र-
मवर्धतां वीतामाज्यस्य होतर्यज ॥ ६ ॥ होता यक्षद्दैव्याहोतारा भि-
षजा सखाया हविषेन्द्रं भिषज्यतः । कवी देवौ प्रचेतसाविन्द्राय धत्त
इन्द्रियं वीतामाज्यस्य होतर्यज ॥ ७ ॥ होता यक्षत्तिस्रो देवीस्त्रय-
स्त्रिधातवोऽपसम् । इडा सरस्वती भारती मही इन्द्रपत्नीर्हविष्मतीर्वि-
यन्त्वाज्यस्य होतर्यज ॥ ८ ॥ होता यक्षत्त्वष्टारमिन्द्रं भिषजं सुयजं
घृतश्रियम् । पुरुरूपं सुरेतसं मघोनिमिन्द्राय त्वष्टा दधदिन्द्रियाणि
वेत्वाज्यस्य होतर्यज ॥ ९ ॥ होता यक्षद्वनस्पतिं शमितारं शतक्रतुं
धियोजोष्टारमिन्द्रियम् । मध्वा समञ्जन्पथिभिः सुगेभिः स्वदाति
हव्यं मधुना घृतेन वेत्वाज्यस्य होतर्यज ॥ १० ॥ ततोऽग्निर्होता नो
अध्वर इत्यादि पर्यग्नये क्रियमाणान्वाह निरूढवत् । तदनन्तरं होता
यक्षदिन्द्रस्य स्वाहा ऽज्यस्य स्वाहा मेदसः स्वाहास्तोकानां स्वाहा
स्वाहा कृतीनां स्वाहा हव्यसूक्तीनां स्वाहा देवाँ आज्यपान् स्वा-
हेन्द्रं होत्राज्जुषाणा इन्द्र आजस्य वियन्तु होतर्यज ॥ ११ ॥ एते
एकादश आपस्तम्बसूत्रपठिताः प्रैषाः सौत्रमणीप्रयाजप्रैषा इत्युच्यन्ते ॥

२१६ ततो निरूढवदाज्यभागप्रचारः । ततो वपायागे । आवर्ष-
णिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः । स्तुतः श्रवस्य-
न्नवसो पमद्रियुक्त्वा हरी वृषणायाह्यर्वाङ्म् । इत्यनुवाक्यामध्वर्युप्रे-
षितो मैत्रावरुणः पठति । होता यक्षदिन्द्रं छागस्य वपाया मेदसो
जुषतां हविर्होतर्यज । अध्वर्युप्रेषितो मैत्रावरुणोऽनेन प्रैषेण होतारं
प्रेष्यति । ये३ य०सुर्वविव्रेषयन्माधिषणा जजानस्तवै पुरापार्यादिन्द्र-
मह्नः । अंहसो यत्र पीपरद्यथा नो नावेवयान्तमुभये हवन्ताऽ३इवौ३ ।
० । वा॥व० ॥ इत्यनया याज्यया होता यजति । होतृमैत्रावरुणयोर्नि-

ऋष्ठवच्चात्वाले वपामार्जनं भवति । पुरोडाशयागे । तँ सध्रीचीरूत यो वृष्णीयानि पौँस्यानि नियुतः सश्चुरिन्द्रम् । समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसङ्गिर आविशन्तो३म् । इत्यनुवाक्या मैत्रावरुणस्य । होता यक्षदिन्द्रं पुरोडाशस्य जुषतां हविर्होतर्यज । इत्यनेन प्रैषेण होतारं प्रेष्यति । ये३ यजामहे भूर्भुवः सुवः सत्यमित्तत्वावाँ अन्यो अस्तीन्द्रदेवो न मर्त्यो ज्यायान् । अहन्नहि परिशयानमर्णो वासृजो अपो अच्छा समुद्रां इवौ३० । वा३वष० । होता ऽनया याज्यया यजति । अथ स्विष्टकृतः त्वामीडते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः । यस्य देवैरासदो बर्हिराग्नेहान्यस्मै सुदिना भवन्तो३म् । इत्यनुवाक्या । होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज । अनेन प्रैषेण होतारं प्रेष्यति । ये३ य० सुवरग्निं तुरीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः । त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभावौ३० । वा३वष० । अङ्गयागे । मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीत्यध्वर्युप्रेषितो मैत्रावरुणो ऽभिहिङ्कृत्य त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह । ततः प्रससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु इन्द्राभरदक्षिणेनावसूनि पतिः सिन्धूनामसि रेवतीनो३म् । इति पुरोनुवाक्यां मैत्रावरुणो वदति । होता यक्षदिन्द्रं छागस्य हविष आदद्य० गृभः । घस्तानून० करदेवन्देवो जुषतां हविर्होतर्यज । इत्यनेन होतारं प्रेष्यति । ये३ य० सुवः सशेवृधमधिधाद्युम्नमस्मै महिक्षत्रं जननाषाडिन्द्रतव्यम् । रक्षा च नो मघोनः पाहि सूरीन्राये चनः स्वपत्या इषे धा३ वौ३० । वा३वष० । होता ऽनया याज्यया यजति । ततो देवेभ्यो वनस्पते हवींषीत्यादिवनस्पतियागो निरूढवत् । देवं बर्हिरिन्द्रँ सुदेवं देवैर्वीरवत्स्तीर्णं बर्हिर्वेद्यामवर्धयद्वस्तोर्वृतां प्राक्तोर्भृतं रायाबर्हिष्मतोत्यगाद्वसुवने वसुधेयस्य वेतु यज ॥ १ ॥ देवीर्द्वारइन्द्रं संघाते वीड्वीर्यामन्नवर्धयन्नावत्सेन तरुणेन कुमारेण च मीवितारूपावाणँ रेणुककाटं नुदन्तां वसुवने वसुवने वसुधेयस्य वियन्तु यज ॥ २ ॥ देवी उषासा नक्तेन्द्रं यज्ञे प्रयत्यह्वेतान्दैवीर्विशः प्रायासिष्टाँ सुप्रीते सुधीते अभूतां वसुवने वसुधेयस्य वीतां यज ॥ ३ ॥ देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धय

तोममेधात्वन्याघाद्वेषा स्याम्याबामीद्वसुवार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ ४ ॥ देवी ऊर्जाहुती दुघेसुदुघे पयसेन्द्रमवर्द्धतामिषमूर्जमन्यावाक्षीत्सग्धिꣳ सपीतिमन्यानवेन पूर्वं दयमाने पुराणेन नवमधातामूर्जमूर्जाहुतीवसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ ५ ॥ देवा दैव्या होतारा देवमिन्द्रमवर्धताꣳ हताघशꣳसावाभार्ष्टां वसुवार्याणि यजमानाय शिक्षितौ वसु० यस्य वीतां यज ॥ ६ ॥ देवी स्तिस्तिस्रो देवीः पतिमिन्द्रमवर्धयवस्पृतद्भारती दिवꣳरुद्रैर्यज्ञꣳसरस्वतीडावसुमति गृहान्वसुवने वसुधेयस्य वियन्तु यज ॥ ७ ॥ देव इन्द्रो नराशꣳसस्त्रिवरूथस्त्रिवन्धुरो देवमिन्द्रमवर्धयच्छतेन शितिपृष्ठानामाहितः सहस्रेण प्रवर्तते मित्रावरुणे दस्यहोत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वीतां यजः ॥ ८ ॥ देवइन्द्रो वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलो देवमिन्द्रमवर्धयद्दिवमग्रेणाप्रादान्तरिक्षं पृथिवीमदृꣳहीद्वसुवसुधेयस्य वेतु यज ॥ ९ ॥ देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत्स्वासस्थमिन्द्रेणासन्नमन्याबर्हीꣳष्यभ्यभूद्वसुवने वसुधेयस्य वेतु यज ॥ १० ॥ देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत्स्विष्टं कुर्वन्स्विष्टकृत्स्विष्टमद्य करोतु नो वसुवने वसुधेयस्य वेतु यज ॥ ११ ॥ एते एकादशानुयाजप्रैषाः । एषामेकैकेन मैत्रावरुणो होतारं प्रेष्यति । होता एतैरेव प्रैषैर्यजेत्यस्य स्थाने वषट्कारं कृत्वा यजति । एवं सति प्रैषाएव याज्या अग्निमद्येत्यादिप्रैषे यथादेवतमूहो भवति । अन्यत्सर्वं निरूढवत् । एतावत्कर्म सौत्रामणीपूर्वाङ्गैन्द्रपशुरित्युच्यते ॥

२१७ अथादित्येष्टिः । तत्रादितिर्देवता । चरुर्द्रव्यम् । सामिधेनिप्रभृति सर्वं प्रकृतिवत् । अदितिर्न उरुष्यत्विति प्रधानस्यानुवाक्या । महीमूषु मातरं सुव्रतानामिति याज्या । इति विशेषः । इतीयं सौत्रामणीपूर्वाङ्गादित्येष्टिरिति गीयते ॥

२१८ अथ त्रिपशोः । पश्विष्ट्यग्निप्रणयनमन्थनानि पूर्ववत् । आवाहनकाले । आज्यभागावाहनानन्तरम् । अश्विनावाꣳवह । सरस्वतीमाꣳवह । इन्द्रमाꣳवह । वनस्पतिमाꣳवहेत्यादि पूर्ववत् एतत्सौत्रामणीदेवतावाहनमित्युच्यते ॥

२१९ यजशब्दान्तैः प्रैषैर्मैत्रावरुणो होतारं प्रेष्यति । वषट्कारान्ताभिर्याज्याभिर्होता यजति होता यक्षत्समिधाग्निमिडस्पदेऽश्विनेन्द्रं सरस्वतीमजो धूम्रो नगो धूम्रैः क्वलैर्भेषजं मधु शष्पैर्न तेजइन्द्रियं पयः सोमः परिस्रुता घृतं मधु वियन्त्वाज्यस्य होतर्यज ॥ १ ॥ ये३य० सुवः समिद्धो अग्निरश्विना तप्तोघर्मो विराट् सुतः । दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रिया३वै३० ॥ १ ॥ वाग्वष० । होता यक्षत्तनूनपात्सरस्वत्यविर्मेषो न भेषजं पन्था मधुमता भरन्नश्विनेन्द्राय वीर्यम् । बदरैरुपवाकाभिर्भेषजं तोक्मभिः पयः सोमः परिस्रुता०वियन्त्वाज्यस्य होतर्यज ॥ २ ॥ ये०स्ववस्तनूनपाता भिषजा सुतेऽश्विनोभासरस्वती मध्वारजाꣳसीन्द्रियमिन्द्राय पथिभिर्वहा३न्वौ३० ॥ २ ॥ एते प्रैषायाज्ये वसिष्ठादिभिन्नानाम् । होता यक्षन्नराशꣳसंनग्नहुं पतिं सुरायै भेषजं मेषः सरस्वतीभिषग्रथोन चन्द्रमश्विनोर्वपा इन्द्रस्य वीर्यम् । बदरैरुप०वियन्त्वाज्यस्य होतर्यज ॥ २ ॥ ये० सुवरिन्द्रायेन्दुꣳसरस्वती नराशꣳसेन नग्नहुः । अधातामश्विनामधु भेषजं भिषजासुता ३वै३० ॥ २ ॥ वाग्वष० । एते प्रैषयाज्ये वसिष्ठादीनाम् । होता यक्षदिडेडित आजुह्वाना सरस्वतीमिन्द्र बलेन वर्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्राय वीर्यम् । यवैः कर्कन्धुभिर्मधुलाजैर्नमासरं पयः सोमः० वियन्त्वाज्यस्य होतर्यज ॥ ३ ॥ ये०तुवराजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् । इडाभिरश्विना विषँ समूर्जँ सँ रयिं दधू३वै३० । वाग्वष० । होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदाभिषङ्नासत्याभिषजाश्विनाश्वाशिशुमती भिषक् धेनुः सरस्वती भिषक् । दुहइन्द्राय भेषजं पयसोमः० वेत्वाज्यस्य होतर्यज ॥ ४ ॥ ये० सुवरश्विना नमुचेः सुतँ सोमँ शुक्रं परिस्रुता । सरस्वती तमाभरद्बर्हिषेन्द्राय पातवा३वै३० ॥ वाग्वष० ॥ ४ ॥ होतायक्षद्दुरोदिशः कवष्यो नव्यचस्वतीरश्विभ्यां न दुरोदिश इन्द्रो न रोदसी दुघे दुहे कामान्सरस्वत्यश्विनेन्द्राय भेषजम् । शुक्रं न ज्योतिरिन्द्रियं पयः सोमः० वियन्त्वाज्यस्य होतर्यज ॥ ५ ॥ ये० सुवः कवष्यो नव्यचस्वतीरश्विभ्यां न दुरोदिशः । इन्द्रो न रोदसी दुघे दुहे कामान्सरस्वती३वै३० ॥ ५ ॥ वाग्वष० । होता यक्षत्सुपेशसोषे नक्तं दिवाश्विना सञ्जजाने समञ्जाते सरस्वत्या त्विषिमिन्द्रे न भेषजम् ।

श्येनो न रजसा हृदा पयः सोमः०वीतामा०र्यज ॥ ६ ॥ ये०सुबहुषासा-नक्तमश्विना दिवेन्द्र सायमिन्द्रियैः । सञ्जानाने सुपेशसा समञ्जाते सरस्वत्या३वौ३० ॥ ६ ॥ बा०वष० ॥ होता यक्षद्दैव्या होतारा भिष-जाश्विनेन्द्रं न जागृवी दिवानक्तं न भेषजैः । शूष सरस्वती भिषक् सीसेन दुह इन्द्रियं पयः सोमः०वीतामा०र्यज ॥ ७ ॥ ये०सुब:पातं नो अश्विना दिवा पाहि नक्तं सरस्वति । दैव्या होतारा भिषजा पात-मिन्द्र सचासुता३वौ३० ॥ ७ ॥ बा०वष० । होता यक्षत्तिस्रोदेवीर्नभेषजं त्रयस्त्रिधातवोपसोरूपमिन्द्रे हिरण्ययमश्विनेडा न भारती वाचा सर-स्वती महइन्द्रायदधुरिन्द्रियं पयः सोमः० वियन्त्वा०र्यज ॥ ८ ॥ ये०सुबस्तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा । तीव्रं परिस्रुता सोम-मिन्द्राय सुषवुर्मदा३ वौ३० ॥ ८ ॥ होता यक्षत्त्वष्टारमिन्द्रमश्विना भिषजं न सरस्वत्योजो न जूतिरिन्द्रियं वृको न रभसो भिषक् । यशः सुरया भेषज श्रियानमासरं पयः सोम० वेत्वाज्य० यज ॥ ९ ॥ सुबर-श्विना भेषजं मधु भेषजं नः सरस्वती । इन्द्रे त्वष्टा यशः श्रिय रूप रूप-मधुस्सुतादि३ वौ३० ॥ ९ ॥ बा०वष० । होता यक्षद्वनस्पति शमितार शतक्रतुं भीमं न मन्यु राजानं व्याघ्रं नमसाश्विनाभामम् । सरस्वती भिषगिन्द्राय दुह इन्द्रियं पयः सोम० वेत्वाज्य० यज ॥ १० ॥ ये० सुबर्ऋतुथेन्द्रो वनस्पतिः शशमानः परिस्रुता कीलालमश्विभ्यां मधुदुहे धेनुः सरस्वती ३वौ३० ॥ १० ॥ बा०वष० । एते त्रिपशोरनुयाजानां प्रैषा याज्यासहिता उक्ताः एते मन्त्रा वक्ष्यमाणावेकादशौ याज्यास्त्रि प्रयाजयाज्याप्रैषौ च प्रैषाइत्युच्यन्ते ।

२२० ततो मैत्रावरुणो ऽग्निर्होता नो अध्वर इत्यादिपर्यग्नये क्रियमाणायान्वाह । ततो होता दैव्याः शमितार उत मनुष्या इत्यादि वाक्यरूपमध्रिगुसंज्ञकं यथार्थमाश्वलायनसूत्रोक्तप्रकारेणोहेन पठति । होता अध्रिगुं पठित्वा अध्रिगुश्चापापश्चोभौ देवाना शमितारौ ताविमं पशु अपयतां प्रविद्वा सौ यथायथास्य अपणं तथा तथा । इति त्रिर्जपति । ये० सुवर्णोभिर्न सोममश्विना मामरेण परिष्कृता । समधाता सरस्वत्या स्वाहेन्द्रे सुतं मधू३ वौ३० ॥ ११ ॥ बा०वष० । होता वक्ष्यमाणप्रैषेण प्रेषितो ऽनया याज्यया यजति । स प्रैषो यथा ।

होता यक्षदग्निꣳ स्वाहा ऽऽज्यस्य स्तोकानाꣳ स्वाहा मेदसां पृथक् स्वाहा छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै स्वाहर्षभमिन्द्राय सिꣳहाय सहसेन्द्रियꣳ स्वाहा ऽग्निं न भेषजꣳस्वाहा सोममिन्द्रियं स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणं भिषजां पतिं प्रियम्पाथो न भेषजम्। स्वाहा देवाꣳ आज्यपान् स्वाहा ग्निꣳ होत्राज्जुषाणो अग्निर्भेषजं पयः सोमःᵒवियन्त्वाज्यस्य होतर्यज॥ ११॥ आज्यभागानन्तरं वपायागो भवति। अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती। आशुक्रमासुराद्वसुमघमिन्द्राय जभ्रिरे३म्। इति सौत्रामण्याश्विनानुवाक्येति गीयते।

२२१ होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषतां हविर्होतर्यजेति प्रैषेण होतारं मैत्रावरुणः प्रेष्यति येᵒसुवर्यमश्विना सरस्वती हविषेन्द्रमवर्धयन्। स बिभेद बलं मघं नमुचा वासुरे सचा३ वौ३ᵒ॥ वाग्वषᵒ। अयं पुरोनुवाक्याप्रभृतिः सौत्रामण्याश्विनयाग इत्युच्यते।

२२२ यमश्विना सरस्वती हविषेन्द्रमवर्धयन्। स बिभेद बलं मघं नमुचा वासुरेसचौं३ इति पुरोनुवाक्या। होता यक्षत्सरस्वतीं मेषस्य वपाया मेदसो जुषताꣳ हविर्होतर्यज। इति प्रैषः। येᵒसुवर्यमश्विनाᵒ यत्। स बिभेद बलं मघम्ᵒसचा३ वौ३ᵒ। वाग्वᵒ। अयं सौत्रामणीसारस्वतयाग इति गीयते।

२२३ तमिन्द्रं पशवः सचाश्विनोभा सरस्वती। दधाना अभ्यनूषत हविषा यज्ञमिन्द्रियोम्३। इत्यनुवाक्या। होता यक्षदिन्द्रं वृषभोर्मेषस्य वपाया मेदसो जुषताꣳहविर्होतर्यज। इति प्रैषः येᵒसुवर्श्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती। आशुक्रमासुराद्वसुमघमिन्द्राय जभ्रिरा३ इवौ३ᵒ। वाग्वष। इति याज्या। अयं सौत्रामणीप्रधानैन्द्रवपायाग इत्युच्यते।

वपायागानन्तरं चात्वाले मार्जयित्वा ग्रहैः प्रचरन्ति। युवꣳ सुराममश्विना नमुचा वासुरे सचा। विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम्३। इयमृक् आश्विनग्रहानुवाक्येति गीयते।

२२४ होता यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणमिमे सोमाः

सुरामाणाश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तोम-दामासरेण परिष्कृताः । शुक्राः पयस्वन्तोमृताः प्रस्थिता वो मधुश्चुत-स्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्ताᳪ सोम्यं मधु पिबन्तु मदन्तु वियन्तु सोमᳪ होतर्यज । अयमाश्विनग्रहप्रैष इत्युच्यते ।

२२६ ये० युवः पुत्रमिव पितरावश्विनोभेन्द्रावतं कर्मणादᳪ सनाभिः । यत्सुरामं व्यपिबच्छचीभिः सरस्वती त्वामघवन्नभीष्णा३ द्बौ३० । वाऽवसुरासुतस्याग्ने वीही३ वौ३० । इत्यनुवषट्कारः । एतद्व्या-ख्यान्तं कर्म आश्विनसौत्रामणीग्रहप्रचार इत्युच्यते ।

२२७ होता अग्निष्वात्ताः पितर एह गच्छतेति तिसृभिर्ऋग्भिः प्रत्यङ्मुखः स्रवन्तीं स्थालीमुपतिष्ठते । एतत् स्थाल्युपस्थानमित्यु-च्यते ।

२२८ अथानूयाजः । तत्र त्वंह्यग्ने प्रथमो मनोतेति सूक्तं सामि-धेनीवन्मैत्रावरुणोन्वाह । अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् । हविषेन्द्रᳪ सरस्वती यजमानमवर्धयोम्३ । इत्यनुवाक्या । होता यक्षदश्विनौ छागस्य हविष आत्ताम०द्यभः । घस्तानून० करत एवा-श्विनौ जुषेताᳪ हविर्होतर्यज । इति प्रैषः । ये० सुवस्ता नासत्या सुपेशसा हिरण्यवर्तनी नरा । मध्य वसाहोमार्धमवसायोत्तरार्धे पठति । सरस्वती हविष्मतीन्द्रकर्मसुनोवता३ वौ३० । वाऽवष० । अयमाश्विन-हविःप्रचार इत्युच्यते ।

२२९ ता भिषजासुकर्मणा सा सुदुघा सरस्वती । स वृत्रहा शत-क्रतुरिन्द्राय दधुरिन्द्रियोम्३ । इत्यनुवाक्या । होता यक्षन्मेषस्य हविष आद०द्यभः । घस्तानूनम्० करदेवेन्द्रःसरस्वती सरस्वती जुषतां हवि-र्होतर्यज । इति प्रैषः । ये०सुवस्ताभिषजा सुकर्मणासा सुदुघा सरस्व-ती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियं ३ वौ३० । वाऽवष । अयं सारस्वतहविःप्रचार इत्युच्यते ॥

२३० ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । सवृत्रहा शत-क्रतुरिन्द्राय दधुरिन्द्रियोम्३ । होता यक्षदिन्द्रं वृष्णोर्मेषस्य हविष आद०द्यभः । घस्तानून०करदेवेन्द्रो जुषताᳪ हविर्होतर्यज इति प्रैषः । ये३० सुवरश्विना गोभिरिन्द्रियमश्वेभिर्वी३र्यं बलम् । हविषेन्द्रᳪ सर-

स्वती यजमानमवर्धया३ न्वौ३०। वा३व४। इति याज्या। अयमैन्द्र-हविःप्रचार इत्युच्यते॥

२३१ वनस्पतियागे स्विष्टकृत्कारे देवतानिगमे यथार्थमूहः। पुरोडाशानां प्रैषाभावात् अप्रेषित एव होता यजति। य इन्द्र इन्द्रियं दधुः सविता वरुणो भगः। स सुत्रामा हविष्पतिर्यजमानाय सश्चतो-म्३। होतैवेमामनुवाक्यां पठति। ये०सुवर्विरन्द्रं सविता वरुणो दध-द्यजमानाय दाशुषे। आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियां३ वौ३०। वा३व०। इति याज्या। अयं सौत्रामण्यङ्गैन्द्रपुरोडाशयाग उच्यते॥

२३२ सविता वरुणो दधत्सुत्रामा बलमिन्द्रियम्३। इत्यनु-वाक्या। ये०सुवः सवितारं वरुणः क्षत्रमिन्द्रियं दधुः स० यद्दधाना यज्ञमाशता३ वौ ३०। वा३व०। इति याज्या। अयं सौत्रामण्यङ्ग-साविउपुरोडाशयाग उच्यते॥

२३३ वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम्। सुत्रामा यशसा बलं दधाना यज्ञमाशताम्३। इत्यनुवाक्या ये०सुवर्वरुणं य इन्द्र इन्द्रियं दधु० यजमानायसश्चता३ वौ ३० वा३व०। इति याज्या। अयं सौत्रामण्यङ्गवारुणपुरोडाशयाग उच्यते॥

२३४ पशुभिः प्रचर्य पुरोडाशेन प्रचरन्तीति वचनाद्धविः प्रचारा-नन्तरं पुरोडाशप्रचारः। अथानुयाजाः। देवं बर्हिः सरस्वती सुदे-वमिन्द्रे अश्विना तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रियं वसुवने वसुधे-यस्य वियन्तु यज॥१॥ देवीर्द्वारो अश्विना भिषजेन्द्रेसरस्वती प्राणं न वीर्यं न सिद्वारो दधुरिन्द्रियं वसु०वियन्तु यज॥२॥ देवी उषासा-वश्विना भिषजेन्द्रेसरस्वती बलं न वाचमास्य उषाभ्यां दधुरिन्द्रियं वसु०वियन्तु यज॥३॥ देवी जोष्ट्री अश्विना सुत्रामेन्द्रेसरस्वती श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रियं वसुव०वियन्तु यज॥४॥ देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्र२ सरस्वत्यश्विना भिषजा शतशुक्रं न ज्योतिः स्तनयोराहुती धत्त इन्द्रियं वसु०वीतां यज॥५॥ देवा देवानां भिषजा होताराविन्द्रमश्विना वषट्कारैः सरस्वतीत्विषिं न हृदयेमतिं२ होतृभ्यां दधुरिन्द्रियं वसु०वीतां यज॥६॥ देवीस्ति-स्रस्तिस्रो देवीः सरस्वत्यश्विना भारतीडा शूषं न मध्ये नाभ्यामिन्द्रा-

यदधुरिन्द्रियं वसुवने०वियन्तु यज ॥ ७ ॥ देव इन्द्रो नराशᳪसस्त्रिव-रूथः सरस्वत्याश्विभ्यामीयतेरथो रेतो न रूपममृतं जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि वसु०वियन्तु यज ॥ ८ ॥ देव इन्द्रो वनस्पति-र्हिरण्यपर्णो अश्विभ्याᳪ सरस्वत्याः सुपिप्पल इन्द्राय पच्यते मध्वोजो न जूतिमृषभो न भामं वनस्पतिर्नो दधदिन्द्रियाणि वसु०वियन्तु यज ॥ ९ ॥ देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्यामूर्णम्रदाः सर-स्वत्या स्योनमिन्द्र ते सदईशायै मन्युᳪराजानं बर्हिषा दधुरिन्द्रियं वसु०वियन्तु यज ॥ १० ॥ देवो अग्निः स्विष्टकृद्देवान्यक्षद्यथा यथᳪ होताराविन्द्रमश्विना वाचा वाचᳪ सरस्वतीमग्निᳪ सोमᳪ स्विष्टकृ-त्स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा आज्यपा इष्टो अग्निरग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचितिᳪ स्वधां वसु०वियन्तु यज ॥ ११ ॥ एते एका-दश त्रिपश्वनुयाजप्रैषा उच्यन्ते ॥

२३५ एतेषामेकैकेन क्रमेण मैत्रावरुणो होतारम्प्रेष्यति । होता तु एतैरेव यजेत्यस्य स्थाने वषट्कारं कृत्वा क्रमेण यजति । अग्निमद्य होतारमवृणीतायᳪ सुता सुतो यजमानः पचन्पक्तीः पचन्पुरोडाशान् गृह्णन् ग्रहान् गृह्णन्नयआज्यं गृह्णन्सोमायाज्यं बध्नन्नश्विभ्यां छागᳪसर-स्याइन्द्राय बध्नन्त्सरस्वत्यै मेषमिन्द्रायाश्विभ्याᳪ बध्नन्निन्द्रायर्षभमश्वि-भ्याᳪ सरस्वत्यै सूपस्था अद्य देवो वनस्पतिरभवदानय आज्येन सोमा-याज्येनाश्विभ्यां छागेन सरस्वत्याइन्द्राय सरस्वत्यै मेषेणेन्द्रायाश्विभ्या-मिन्द्रायर्षभमश्विभ्याᳪ सरस्वत्या अचᳪस्तामेदस्तः प्रतिपचताग्रभीषुर-वीवृधन्त ग्रहैरपातामश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा सोमान्सुराम्ण उपोकृथामदाश्रौद्रीमदा अदन्नवीवृधन्ताङ्गूषैस्त्वामद्य ऋषभार्षेयर्षीणां न पादवृणीतायᳪ सुतासुतो यजमानो बहुभ्य आसङ्गतेभ्यः । एषमे-दे०सूक्ता३ ब्रूहि । अनेन मैत्रावरुणो होतारं प्रेष्यति अयं सौत्रामणी-सूक्तवाकप्रैष उच्यते ॥

२३६ अनेन प्रैषेण प्रेषितो होता सूक्तवाकं पठति । तत्र विशेषः । आज्यभागदेवतावाहनानन्तरम् । अश्विनाविदं हविरजुषेतामवीवृधेतां महो ज्यायोक्राताम् । सरस्वतीदं हविरजुषतावीवृधतमहो ज्यायोकृत ।

इन्द्र इदं हविरजुषताऽवृत । वनस्पतिरिदमित्यादि निरूढवत् । अथ सौत्रामण्यङ्गपितृयज्ञः । तत्प्रकारः सर्व आश्वलायनोक्तः लुप्तजपेत्याश्वलायनवचनान्मयि गृह्णामीत्यादिजपानां लोपः नेह प्रादेश इत्यादिना प्रादेशकरणादिनिषेधश्च । दक्षिणामुखस्तिष्ठन् अभिहिङ्कृत्यउशन्तस्त्वा निधीमहीत्यृचं त्रिरनवानमन्वाहताः सामिधेन्यो भवन्ति । तृतीयप्रणवेन सह आ३वह देवान्पितॄन्यजमानायेत्यस्यानुषङ्गः । आज्यभागदेवतावाहनानन्तरं सोमं पितृमन्तमा३वह । पितॄन्बर्हिषद आ३वह । पितॄनग्निष्वात्तानाऽवह । देवाꣳ आज्यपाꣳ आ३वह । अग्निं कव्यवाहनमा३वह । इत्यावाहने विशेषः । सीद होतरित्यध्वर्युणोक्ते तूष्णीं निरसनोपवेशने करोति । स्रुगादापने विशेषः । ईळामहै देवान्पितॄनीळेन्यानित्यादि । बर्हिर्वर्जं चत्वारः प्रयाजा भवन्ति । उत्तमप्रयाजे विशेषः । ये०सुव: स्वाहाऽग्निं स्वाहा सोमं स्वाहा सोमं पितृमन्तं स्वाहा पितॄन्बर्हिषदः स्वाहा पितॄनग्निष्वात्तान् स्वाहाग्निं कव्यवाहनं स्वाहा देवान् पितॄनाज्यपानित्यादि । आनो अग्ने सुकेतुनेत्याग्नेयाज्यभागस्यानुवाक्या । त्वꣳ सोममहेभगमिति सौम्यस्यानुवाक्या । जुषाणा इत्यादिरुभयोः पूर्ववद्याज्ये । अनयोरनुवाक्ययोर्जीवपदसत्वात् इमावाज्यभागौ जीववन्तावित्युच्यते ।

२३७ त्वꣳ सोम प्रचिकितो मनीषेति त्वया हि नः पितरः सोमपूर्व इति च द्वे ऋचौ एकानुवाक्या भवति ऋध्यर्धामनवानम् । ये० सुवः सोमं पितृमन्तं त्वꣳ सोमपितृभिः संविदानो० रयीणाꣳ स्व३धानमः । इति सोमस्य पितृमतो याज्यानुवाक्ये । बर्हिषदः पितर ऊत्यर्वागिति आहं पितॄन्त्सुविदत्राꣳ अवित्सीति च पूर्ववदनुवाक्या । उपहूताः पितरः सोम्यास इति याज्या । इति पितॄणां बर्हिषदाम् । अग्निष्वात्ता पितर एह गच्छतेति ये अग्निष्वात्ता येऽनग्निष्वात्ता इति च मिलित्वाऽनुवाक्या । वन्यायै दुग्ध इत्यादिर्याज्या । इति पितॄणामग्निष्वात्तानाम् । याज्याया आदौ ये स्वधामह इति ये यजामह इत्यस्य स्थाने प्रयुज्यते । अवघ्राणभक्षणम् । सुसन्दृशं त्वा वयमित्यादिनोपस्थानादि सर्वं चातुर्मास्यान्तर्गतपितृमेधवद्भवति । इन्द्राय वयोधसे पशुवपुरोडाशादि सर्वं निरूढवत् । आज्यभागावाहनानन्तरं इन्द्रं

वयोधसमा३वह । वनस्पतिमित्यादि निरूढवत् । प्रयाजेषु विशेषः । होतायक्षदिडस्पदे समिधानं महद्यशः सुषमिद्धं वरेण्यमग्निमिन्द्रं वयोधसम् । गायत्रीं छन्द इन्द्रियं त्र्यविं गां वयोदधद्वेत्वाज्यस्य होतर्यज ॥ १ ॥ ये० सुवः समिद्धो अग्निः समिधा सुषमिद्धो वरेण्यः । गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयोदधू३वौ३० । वा०व० होतायक्षच्छुचिव्रतं तनूनपातमुद्भिदं यं गर्भमदितिर्दधे शुचिमिन्द्रं वयोधसम् । उष्णिहं छन्द इन्द्रियं दित्यवाहं गां वयोदधद्वे०र्यज ॥ २ ॥ ये०सुवस्तनूनपाच्छुचिव्रतस्तनूनपाच्च सरस्वती । उष्णिहं छन्द इन्द्रियं दित्यवाड्गौर्वयोदधू३वौ३ । वा०व० । द्वितीयप्रयाजप्रैषयाज्ययोर्वसिष्ठादिषु तदितरेषु च प्रवृत्तिः । अन्यस्यानुक्तत्वात् । होतायक्षदीडेन्यमीडितं वृत्रहन्तममिडाभिरीड्य॒ सहः सोममिन्द्रं वयोधसम् । अनुष्टुभं छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधद्वे०र्यज ॥ ३ ॥ ये०सुवरिडाभिरग्निरीड्यः सोमो देवो अमर्त्यः । अनुष्टुप्छन्द इन्द्रियं त्रिवत्सो गौर्वयोदधू३वौ३० । वा०व० ॥ ३ ॥ होतायक्षत्सुबर्हिषदं पूषण्वन्तममर्त्य॒ सीदन्तं बर्हिषि प्रियेऽमृतेन्द्रं वयोधसम् । बृहतीछन्द इन्द्रियं पञ्चाविं गां वयोदधद्वे० यज ॥ ४ ॥ ये० सुवः सुबर्हिरग्निः पूषण्वा॒ स्तीर्णं बर्हिरमर्त्यः । बृहतीछन्द इन्द्रियं पञ्चाविर्गौर्वयोदधू३वौ३० । वा०व० ॥ ४ ॥ होतायक्षद्व्यचस्वतीः सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माणमिन्द्रं वयोधसम् । पंक्तिश्छन्द इहेन्द्रियं तुर्यवाहं गां वयोदधद्वे०यज ॥ ५ ॥ ये०सुवर्द्वुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः । पंक्तिश्छन्द इहेन्द्रियं तुर्यवाड्गौर्वयोदधू३वौ३० । वा०व० ॥ ५ ॥ वायक्षत्० वाहं गां वदध०र्यज ॥ ६ ॥ ये०सुवस्सुपेशसा सुपेशसा विश्वे देवा अमर्त्याः । त्रिष्टुप् छन्द इन्द्रियं पष्ठवाड्गौर्वयोदधू३वौ३० । वा०व० ॥ ६ ॥ होतायक्षत्प्रचेतसा देवानामुत्तमं यशो होतारा दैव्या कवी सयुजेन्द्रं वयोधसम् । विराजं छन्द इहेन्द्रियमनड्वाहं गां वयोदधद्वे०र्यज ॥ ७ ॥ ये० दैव्या होतारा भिषजेन्द्रेण सयुजायुजा । जगतीछन्द इहेन्द्रियमनड्वान् गौर्वयोदधू३वौ३० ॥ ७ ॥ वा०व० ॥ होतायक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्महीः पतिमिन्द्रं वयोधसम् । विराजं छन्द इन्द्रियं धेनुं गां वयो दधद्वेत्वाज्यस्यहोतर्यज ॥ ८ ॥ ये३०सुवस्तिस्र इडा सर-

स्वती भारती मरुतो विशः । विराट् छन्द इहेन्द्रियं धेनुर्गौ र्वयोदधू-र्वौ३० ॥ ८ ॥ वा०व०होतायक्षत्सुरेतसं त्वष्टारं पुष्टिवर्धनं रूपाणि बिभ्रतं पृथक् पुष्टिमिन्द्रं वयोधसम् । द्विपदं छन्दइन्द्रियमुक्षाणं गां वयो दधद्वे० ॥ ९ ॥ ये३०सुवस्त्वष्टा तुरीयो अद्भुत इन्द्राग्नी पुष्टिवर्धना । द्विपाच्छन्द इहेन्द्रियमुक्षा गौ र्न वयोदधू३र्वौ३० ॥ ९ ॥ वा०व० ॥ होतायक्षत्क्रतुं हिरण्यपर्णमुक्थिनं रशनां बिभ्रतं वशिं भगमिन्द्रं वयोधसम् । ककुभं छन्द इहेन्द्रियं वशां वेहतं गां न वयोदधद्वे० ॥ १० ॥ ये०सुवः शमिता नो वनस्पतिः सवितः प्रसुवन् भगम् । ककुप्छन्द इहेन्द्रियमुक्षागौर्नवयोदधू३र्वौ३० ॥ १० ॥ वा०व० ॥ ततो मैत्रावरुणस्याग्निर्होता नो अध्वर इत्यादि पर्यग्निकरणानुवचनं निरूढवत् । होतुर्दैव्याः शमितार आरभध्वमित्यादि ऐन्द्रपशुवत् । ततो मैत्रावरुण एकादशं प्रयाजप्रैषं पठति । स यथा । होतायक्षत्स्वाहाकृतीरग्निं गृहपतिं पृथग्वरुणं भेषजं कविं क्षत्रमिन्द्रं वयोधसम् । अतिच्छन्दसं छन्द इहेन्द्रियं बृहदृषभं गां वयो दधद्वे० ॥ ११ ॥ ये३य०सुवः स्वाहा यज्ञं वरुणः सुक्षत्रो भेषजं करत् । अतिच्छन्दाश्छन्द इन्द्रियं बृहदृषभो गौ र्वयोदधू३र्वौ३० ॥ ११ ॥ वा०व० ॥ आज्यभागप्रचारो निरूढवत् । अथ वपायागः । वसन्तेनर्तुना देवा वसवस्त्रिवृतास्तुतम् । रथन्तरेण तेजसा हविरिन्द्रे वयोदधाम्३ । इयमनुवाक्या । होतायक्षदिन्द्रं वयोधसं छागस्य वपाया मेदसो जुषताᳬ हविर्होतर्यज ॥ अयं प्रैषः । ये३य०सुवर्ग्रीष्मेण देवा ऋतुना रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बलᳬ हविरिन्द्रे वयोदधू३र्वौ३० ॥ वा०व० ॥ इयं याज्या । वपामार्जनं पूर्ववत् । अथ पुरोडाशयागः । वर्षाभिर्ऋतुनादित्यास्तोमे सप्तदशे स्तुतम् । वैरूपेण विशौजसा हविरिन्द्रे वयोदधाम्३ । इयमनुवाक्या । होतायक्षदिन्द्रं वयोधसं पुरोडाशस्य जुषताᳬ हविर्होत र्यज ॥ अयं प्रैषः । शारदेनर्तुना देवा एकविᳬशऋभवस्तुतम् । वैराजेन श्रियाश्रियᳬ हविरिन्द्रे वयोदधू३र्वौ३० । ये३ सुद्रविणᳬ सुदीतिᳬ सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः । त्वां दूतमरतिᳬ हव्यवाहं देवा अकृण्वन्नमृतस्य नाभी३र्वौ३ । इयं पुरोडाशस्विष्टकृतो याज्या । वा०व० ॥ अथाङ्गयागः ।

हेमन्तेनर्तुनादेवा मरुतस्त्रिणवेस्तुतम् । बलेन शक्करीः सहो हविरिन्द्रे वयोदधोम्३ । इयमनुवाक्या । होतायक्षदिन्द्रं वयोधसं छागस्य हविष आददद्यमध्यतो मेदउद्भृतम्० घस्ताम्० करदेवेन्द्रो वयोधा जुषतां यज । अयं प्रैषः । ये३० सुवःशैशिरेणर्तुनादेवास्त्रयस्त्रिꣳशत्रमृतस्तुतम् । अर्धर्चे वसाहोमार्थमारभेत् रैवतेन श्रिया श्रियꣳ हविरिन्द्रे वयोदधू३ वौ३० ॥ वात्रष० । वनस्पतियागादि पूर्ववत् । अथानुयाजाः । देवं बर्हिरिन्द्रं वयोधसं देवमिन्द्रमवर्धयद्गायत्रिया छन्दसेन्द्रियं तेज इन्द्रे वयोदधद्वु० वेतु० ॥ १ ॥ देवीर्द्वारो देवमिन्द्रं वयोधसं देवीर्देवमवर्धयन्नुष्णिहा छन्दसेन्द्रियं प्राणमिन्द्रे वयोदधद्वु०व्यन्तु० ॥२॥ देवीदेवं वयोधसमुषे इन्द्रमवर्धतामनुष्टुभा छन्दसेन्द्रियं वाचमिन्द्रे वयोदधद्वु० वीताम्० ॥ ३ ॥ देवी जोष्ट्री देवमिन्द्रं वयोधसं देवी देवमवर्धतां बृहत्याछन्दसेन्द्रियꣳ श्रोत्रमिन्द्रे वयोदधद्वु० वीताम्० ॥ ४ ॥ देवी ऊर्जाहुतीदेवमिन्द्रं वयोधसं देवी देवमवर्धतां पङ्क्त्या च्छन्दसेन्द्रियꣳ शुक्रमिन्द्रे वयोदधद्वु० वीताम्० ॥ ५ ॥ देवा दैव्या होतारा देवमिन्द्रं वयोधसमवर्धत्यं त्रिष्टुभा छन्दसेन्द्रियं बलमिन्द्रे वयोदधद्वु० वीताम्० ॥ ६ ॥ देवीस्तिस्रस्तिस्रो देवीर्देववयोधसंपतिमिन्द्रमवर्धयन् जगत्या छन्दसेन्द्रियं बलमिन्द्रे वयोदधद्वु०व्यन्तु० ॥ ७ ॥ देवो नराशꣳसो देवमिन्द्रं वयोधसन्देवो देवमवर्धयद्विराजा छन्दसेन्द्रियꣳ रेत इन्द्रेवयोदधद्वु० वेतु० ॥ ८ ॥ देवो वनस्पतिर्देवमिन्द्रं वयोधसं देवो देवमवर्धद्विराजा छन्दसेन्द्रियं भगमिन्द्रेवयो दधद्वु० वेतु० ॥ ९ ॥ देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवं देवमवर्धत्ककुभा छन्दसेन्द्रियं यश इन्द्रे वयोदधद्वु० वेतु० ॥ १० ॥ देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसं देवोदेवमवर्धयदतिच्छन्दसा छन्दसेन्द्रियं क्षत्रमिन्द्रे वयोदध०द्वु०वेतु० ॥ ११ ॥ एते एकादशानुयाजप्रैषाः' एषामेकैकेन मैत्रावरुणो होतारं प्रेष्यति । होता च एतैः प्रैषै र्यजशब्दस्थाने वषट्कारयुतैर्याज्याभूतैः क्रमेण यजति । सूक्तवाके आज्यभागानन्तरं इन्द्रो वयोधा इदꣳ हविरजुषतावीवृधतमहो ज्यायोऽकृत । इति विशेषः । अन्यत्सर्वं निरूढवत् । अथादित्येष्टिः । तत्रादितिर्देवता । चरुर्द्रव्यम् । अदितिर्न उरुष्यतीत्यनुवाक्या । महीमूषुमातरं सुव्रतानामिति याज्या ।

उपदेशादितराणीति वचनात्सर्वं याजुषवत् । शेषं प्रकृतिवत् ॥ इदं कोकिलसौत्रामणीहोतृमैत्रावरुणकर्मेत्युच्यते ॥

॥ शुभं भूयात् ॥

---

॥ श्रीः ॥

# श्रौतपदार्थनिर्वचनम् ।

## अथाग्निष्टोमसम्बन्धिपदार्थनामान्युच्यन्ते ।

१ तस्य वसन्ततौ दैवनक्षत्रेषु पौर्णमास्याममावास्यायां तयोः प्रतिपदि वा यथा सुत्या दीक्षा वा भवेत्तथारम्भः क्रियते ॥ इत्ययमग्निष्टोमारम्भकाल इत्युच्यते ॥

२ एका तिस्रो वा दीक्षा । अमावास्यायां सुत्यायां तत्प्रतिपदपि द्वादश । बहुदीक्षासु त्वन्तिमदिने प्रवर्ग्यसम्भरणम् । एकादीक्षायां तद्दिने चरणात्पुरो वा । इयमग्निष्टोमीयदीक्षानिर्णय इत्युच्यते ॥

३ यस्य पित्रादिभिः सोमयागो न कृतस्तस्य प्रायश्चित्तत्वेन ऐन्द्राग्नः पशुः श्रुतिचोदितः । तस्य पूर्वं पृथगनुष्ठानम् । अथवाऽग्निष्टोमाङ्गाग्नीषोमीयपशुना समानतन्त्रता । एवं यस्य त्रिपुरुषपर्यन्तं वेदाध्ययनं न जात, मग्न्याधानं च न जातं स दुर्ब्राह्मण इत्युच्यते । तस्य प्रायश्चित्तत्वेनाश्विनः पशुर्विहितः तस्यानुष्ठानमपि पूर्वपशुवद्विकल्पेन बोध्यम् ॥

४ अग्निष्टोमारम्भस्य पूर्वदिने नान्दीश्राद्धं भवति । रात्रावुदकशान्तिः प्रतिसरबन्धश्च । आरम्भदिने प्रातः स्नानादिपञ्चकं यजमानपत्न्योः षोडशर्त्विजाञ्च । पुण्याहवाचने इन्द्रादयः प्रीयन्तामिति विशेषः । यजमानो गार्हपत्यस्य पश्चादुपविश्य पत्न्या सह प्राणानायम्य पुरुष एवेदमित्यृचा विष्णुं स्मृत्वा यः पुरस्तादित्यादि हृदये निविष्टमित्यन्तं जपति । ततो देशकालौ सङ्कीर्त्य विच्छिन्नसोमपीथसन्धानार्थमैन्द्राग्नेन पशुना दौर्ब्राह्मण्यपरिहारार्थमाश्विनेन पशुना च

आग्नीषोमीयेण पशुना समानतन्त्रं यक्ष्यमाणो द्वादशस्तोत्रेण द्वादशशस्त्रेण रथन्तरसाम्ना सप्तदशर्येण शतगवदक्षिणेन ज्योतिष्टोमेनाग्निष्टोमसंस्थेन चतुष्टोमेन सोमेन स्वर्गकामो यक्ष्ये । एवं त्रिरुपांशु त्रिरुच्चैः सङ्कल्पयति । अयमग्निष्टोमसङ्कल्प इत्युच्यते ।

५ सङ्कल्पानन्तरं तन्म इत्यादि ओं तथेत्यन्तं प्रकृतिवत् । सोमादि द्रव्यं इन्द्राग्न्योर्देवताः अस्मिन् ज्योतिष्टोमेऽग्निष्टोमे सोमे सोमप्रवाकं त्वामहं वृणे । इति सोमप्रवाकं वृणीते । स भविष्यामीति वदति इदं सोमप्रवाकवरणमुच्यते ॥

६ सोमाख्ये यज्ञे यो यजमानेन वृतः सन् ब्रह्मादीनामाह्वानं करोति स सोमप्रवाक इत्युच्यते ॥

७ ततो यजमानः सोमप्रवाक सोमं मे प्रब्रूह्यृत्विग्भ्यः । इति सोमप्रवाकं प्रत्याह । ततः स केभ्य इति पृच्छति । ततो यजमानः देवदत्तादिभ्य इति ब्रह्मादीनां नामान्याह । ततः सोमप्रवाको ब्रह्मादीनां गृहेषु क्रमेण गत्वा तानाहूयति । तद्यथा । यज्ञदत्तशर्मणः सोमो भविष्यति तत्र भवता ब्रह्मत्वं कर्तव्यम् । ततो ब्रह्मा को यज्ञः कऋत्विजः का दक्षिणेति सोमप्रवाकं पृच्छति । ततः स ज्योतिष्टोमोऽग्निष्टोमः सोमो यज्ञः । रङ्गनाथशर्मादय ऋत्विजः । शतं गावो दक्षिणेति प्रत्याह । एवं सर्वेषामृत्विजां सोमप्रवाकेन साकं प्रश्नोत्तराणि भवन्ति । तत्र ब्रह्मत्वमित्यस्य स्थाने हौत्रं आध्वर्यवं औद्गात्रं प्राशास्त्रं ब्राह्मणाच्छंसित्वं प्रतिप्रस्थातृत्वं प्रस्तोतृत्वं अच्छावाकीयं नेष्टृत्वं प्रतिहर्तृत्वं आग्नीध्रं उन्नेतृत्वं सुब्रह्मण्यत्वं पोतृत्वं ग्रावस्तुत्त्वं एते शब्दा बोध्याः । इदमृत्विगाह्वानमित्युच्यते ॥

८ यजमानः सोमप्रवाकेनाहूतान् यज्ञशालायां प्राप्तानृत्विजः क्रमेणाधानवद्वृत्वार्हयति द्वितीयिनस्तृतीयिनः पादिनश्च । होता ब्रह्माऽध्वर्युरुद्गाता च प्रथमा इत्युच्यन्ते ॥

९ मैत्रावरुणो ब्राह्मणाच्छंसी प्रतिप्रस्थाता प्रस्तोता च द्वितीयिन इत्युच्यन्ते ॥

१० अच्छावाक आग्नीध्रो नेष्टा प्रतिहर्ता च तृतीयिन इत्युच्यन्ते ॥

११ ग्रावस्तुत्योन्नेतारः सुब्रह्मण्यश्च पाठिन इत्युच्यन्ते ॥

१२ ततो वृता यजमानाध्वर्यून् परिकर्मिणश्च सोमप्रवाकवद्वृत्वाऽऽह्वयति । इदं सौमिकर्त्विग्वरणमित्युच्यते ॥

१३ अध्वर्युस्तीर्थेन प्रविश्येडादिशान्तिं जपित्वा पशुबन्धवद्यजमानेन सहायन्तेयोनिर्ऋत्विय इत्यृचाऽग्निं समारोपयति । यजमान उदकुम्भं पुरस्कृत्य अध्वन्वारब्धः सोमारणीसहितः सर्वैः सम्भारैश्च सहितः सर्त्विक् आनोभद्रा इत्यादिशान्तिसूक्तानि पठन् यज्ञशालायास्य दक्षिणतः पश्चाद्वाचेदुत्तरेण शालां परीत्य पूर्वाह्णे पूर्वद्वारेण प्रविशति । सा च भृत्यैः कुशलैः पूर्वमेव कारिता भवति । प्राचीनवंशा चतुर्दिक्षु तोरणा दक्षिणतो वर्षीयसी चतुर्दिक्षु रत्निमात्रमध्यद्वारवती षोडशप्रक्रममध्या सा द्वादशप्रक्रमविस्तीर्णा दीर्घचतुरस्रा । तस्याः शालायाः दक्षिणतो व्रत श्रपणागारं भवति । पश्चात्पत्नीशाला । इदं कर्म शालाप्रवेश इत्युच्यते ॥

१४ इयं शाला प्राग्वंश इत्युच्यते ॥

१५ प्राग्वंशस्य पश्चिमाच्छङ्कोरनुस्यन्त्यां सार्धपदत्रयं सार्धतिलद्वयाधिकाङ्गुलद्वयं च मुक्त्वा शङ्कुं निहन्ति । स च गार्हपत्यमध्यशङ्कुः । सार्धतिलद्वयाधिकसप्तदशाङ्गुलया रज्ज्वा शङ्कौ पाशं प्रतिमुच्य मण्डलं परिलिखति । तद्गार्हपत्यस्यायतनं भवति । एवं सति पश्चाद्गार्हपत्यस्य सार्धपदद्वयमवशिष्टं भवति । पञ्चतिलाधिकचतुस्त्रिंशदङ्गुलं च गार्हपत्यस्यायतनं सम्पद्यते । प्राग्वंशपूर्वशङ्कोः प्रत्यञ्चमनुस्यन्त्यां सार्धपदत्रये शङ्कुं निहन्ति । स आहवनीयमध्यः । द्विपदमाहवनीयायतनं सम्पद्यते । आहवनीयस्याग्रे सार्धपदमवशिष्टं भवति । गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वेत्यादिप्रकारेण दक्षिणाग्नेर्मध्यदेशं कल्पयित्वा शङ्कुं निहत्य पादोनतिलाधिकचतुर्विंशत्यङ्गुलया रज्ज्वा मण्डलं परिलिख्य मध्यशङ्कोरञ्जसा उदगर्धतिलद्वयाधिकद्वादशाङ्गुले षडङ्गुले वा शङ्कुं निहत्य तत्र पाशं प्रतिमुच्य तयैव रज्ज्वा मण्डलं परिलिख्य तयोः संसर्गौ नियम्योत्तरं धनुरुत्सृजेत्, दक्षिणं दक्षिणाग्नेरायतनं भवति । आहवनीयस्य पश्चात्प्राकृतवेदिः ।

मन्त्रशब्दादवशिष्टो विशयः । इत्यन्तादन्तपदेन दुराशिको विहारः । शेषं प्रकृतिवत् । अयं दुराशिको विहार इत्युच्यते ॥

१६ ऋत्विजस्तीर्थेन प्रविश्येडादिशान्तिं जपन्ति अध्वर्युः पशुव-त्स्वयंमथित्वाऽऽयतनान्युद्धृत्यावोक्ष्याग्नीन् विहृत्य परिस्तीर्य परिषिच्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा मनस्वत्याऽऽ-हवनीये जुहोति । पुनर्विहृत्याध्वर्युब्रह्माग्नीध्रयजमाना यथायतनं पूर्वां शान्तिं पठन्ति । नमो वाचे नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपति-भ्यो मा मामृषयो मन्त्रपतयः परादुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन् परादां वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् ॥ शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती ॥ भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उ-पस्तरणं मे प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदि-ष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ओं शान्तिः शान्तिः शान्तिः ॥ नमो वाचे इत्यत आरभ्यैतावान्मन्त्रः पूर्वशान्तिरित्युच्यते ॥

१७ अथाध्वर्युः प्राग्वंशशालाया अग्रभागे धनुर्मात्रे गर्तं खात्वा शोधितया मृदाऽभिपूर्य तदुत्तरतस्तृणेषूदकुंभस्थं वराहविहतं वल्मीक-वपां शुक्लां दूर्वां कंसे स्थापय इत्यासाद्य तेषामुत्तरतः प्रागग्रेषु दर्भेषु प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य उत्तरस्य शालाखण्डस्याग्रे स्फ्येनोद्धृत्यावोक्ष्य सैकतं परिमण्डलं खरं कृत्वा तं कुशैर्दूर्वाभिः प्रच्छाद्य परिश्रित्योत्तरतो द्वारं कृत्वा खरसमीपे धर्मकपालपिष्टानि शर्करापिष्टानि अजकृष्णाजिनलोमानि फलकं वेणुशलाकां च सादयति । कुशलं कर्तारं संनिधाप्य गार्हपत्ये प्रवर्ग्यमदन्तीरधिश्रित्य वेदमुभयतस्तष्टामरत्नि-मात्रीं वैणवीमभ्रिं प्राचीं निधाय द्वाराणि परिश्रित्य पत्नीशालायां पत्नीमुपवेश्याग्नीन्परिस्तीर्य दक्षिणेनाहवनीयं ब्रह्मयजमानावुपवेश्य यजमानेऽन्वारब्धे युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो

विपर्यस्यतः । विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परि-ष्टुतिः स्वाहा । इति मन्त्रेणाहवनीये जुहोति । यजमानः देवाय सवित्र इदं न ममेति त्यागं पठति । दीक्षिते तु यजमाने स्वाहाकार-रहितं पूर्वोक्तं मन्त्रं जपत्यध्वर्युः । वाराहेणोत्खाता मृत्तिका वराहवि-हतमुच्यते ॥

१८ वल्मीकमृत्तिका वल्मीकवपेत्युच्यते ॥

१९ ततोऽध्वर्युः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति पूर्वं वेद्यां स्थापितां वैणवीमभ्रिमादत्ते । अभ्रि-रसि नारिरस्यध्वरकृद्देवेभ्यः । इति अभ्रिं सव्येन धृत्वा दक्षिणहस्तेना-भिमन्त्रयते । उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानव इन्द्रप्राशूर्भवासचा । इत्युत्तिष्ठते । प्रैतु ब्रह्मणस्पतिः प्रदेव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः । इति तीर्थेन निष्क्रामति । तूष्णीं दक्षिणतो ब्रह्मयजमानावुपवेशयति । देवी द्यावापृथिवी अनु मे मꣳसाथम् । इति मृदमुपतिष्ठते । ऋध्यासमद्य मखस्य शिरः । इति मृदमभ्र्या प्रहरति । अप उपस्पृश्य मखाय त्वा । इति मृदं हरति । मखस्य त्वा शीर्ष्णे । मृदमुत्तरतः कृष्णाजिने निवपति । एव-मभ्रिप्रहरणादि निवपनान्तं समन्त्रकं त्रिः कृत्वा तूष्णीं चतुर्थं करोति । स्वल्पां मृदं परिशेषयति । ततः इयत्यग्र आसीः । वराहविहतमुपति-ष्ठते । अभ्रिप्रहरणादि समन्त्रकं त्रिः कृत्वा चतुर्थं तूष्णीं कृत्वा वराह-विहतमपि परिशेषयति । देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः । इति वल्मीकवपामुपतिष्ठते । अभ्रिप्रहरणादि वराहविहतवत् । इन्द्र-स्यौजोसि । इतिदूर्वामुपतिष्ठते । अभिप्रहरणादि पूर्ववत् । अग्निजा असि प्रजापतेरेतः । इति छागपय उपतिष्ठते । अभ्रिप्रहरणादि पूर्ववत् छागपयो न परिशेषयति । मृद्गुणेशेषानत्रैव कृष्णाजिने प्रकिरति । अध्वर्युब्रह्मयजमाना अन्यतोमुखा अनभिरवसन्तः एतु ब्रह्मणस्पतिरा-देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञमानयन्तु नः । इति तत्कृष्णाजिनमानयन्ति । आयुर्धेहि प्राणं धेह्यपानं धेहि व्यानं धेहि चक्षुर्धेहि श्रोत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां

धेहि मां धेहि मयि धेहि । इति तत्कृष्णाजिनं खरे सादयन्ति । अध्वर्युः अर्मकपालशर्करापिष्टैः कृष्णाजिनलोमभिश्च कृष्णाजिनस्थां मृदं संसृज्य । मधु त्वा मधुना करोतु । इति मदन्तीभिरद्भिः सम्मिश्रयति मखस्य शिरोसि । इति मृदः पिण्डं करोति । स्वल्पां मृदं परिशेषयति । यज्ञस्य पदेस्थः इति अङ्गुष्ठाभ्यां पिण्डं त्रेधा विभज्य त्रीन् पिण्डान् कृत्वैकैकस्य त्रींस्त्रीन् पिण्डान् करोति । गायत्रोसि । इति तेषां एकं पिण्डं कर्त्रे प्रयच्छति । कर्ता गायत्रेण त्वा छन्दसा करोमि । इति तेन पिण्डेन महावीरस्य मूलं करोति । अध्वर्युः । त्रैष्टुभोसि । इति द्वितीयं पिण्डं प्रयच्छति । कर्ता । त्रैष्टुभेन त्वा छन्दसा करोमि । इति तेन मध्यं करोति । अध्वर्युः जागतोसि । इति तृतीयं प्रयच्छति कर्ता जागतेन त्वा छन्दसा करोमि । इति तेन बिलं करोति । प्रादेशोच्छ्रायं पृथुबुध्नं पृथुग्रीवं मध्ये सन्नतं महावीरं कृत्वा वेणुशलाकयोदरं कृत्वा बिलस्याधस्त्र्यङ्गुले रास्नां परिमण्डलं पर्यस्यति मखस्य रास्नासीति मन्त्रेण । अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसा । इति बिलं प्रकाशयति । सूर्यस्य हरसाश्राय । इति महावीरमादित्येनाभितपति । तूष्णीं खरे निदधाति । अध्वर्युर्निहितमनुमन्त्रयते मखोसीति मन्त्रेण । एवमेकस्य प्रथमस्य पिण्डस्य त्रिभिः पिण्डैः कृतो मन्त्रविशेषो महावीर इत्युते ॥

२० एवं पिण्डद्वयस्य त्रींस्त्रीन्पिण्डान् कृत्वा तैर्महावीरद्वयं समन्त्रकं करोति । अतिशिष्टया मृदा सशेषया तूष्णीं पिन्वने रौहिणकपाले आज्यस्थालीं च करोति अवशेषितया मृदापि सशेषया प्रवाते पतितलिप्योपघातयति । रौहिणपुरोडाशभर्जनार्थे कपाले रौहिणकपाले इत्युच्येते ॥

२१ महावीरादिषूपघातेषु शुष्केषु सत्सु अध्वर्युर्गार्हपत्यादग्निमाहृत्य पुंसोश्वस्यैकविंशतिशकृत्पिण्डान् आदीपयति वृष्णो अश्वस्य निष्पदसि वरुणस्त्वा धृतव्रत आधूपयतु मित्रावरुणयोर्ध्रुवेण धर्मणेति मन्त्रेण । अस्य मन्त्रस्यावृत्त्या त्रीनपि महावीरान् क्रमेणान्तर्बहिश्च धूपयति । तूष्णीं पिन्वनादीनि धूपयति शालाया उत्तरतो गर्तं खात्वा अवनेनावस्तीर्याद्भिलान्महावीरानायातयति । तेषां पुरस्तात् पिन्वने

पश्चाद्रौहिणकपाले आज्यस्थालीं च । इन्धनेनोपरिष्टात् प्रच्छाद्य मृदाऽवलिम्पति । अर्चिषे त्वा । इति पुरस्तादग्निनोपोषति । शोचिषे त्वा । इति दक्षिणतः । ज्योतिषे त्वा । इति पश्चात् । तपसे त्वा । इत्युत्तरतः । महावीरादिषु पक्वेषु गोपयश्छागपयसी धृष्टिमश्मपन्दावं सतं सन्दंशौ खार्यौ शिक्यं कृष्णाजिनं चादाय । अभीमं महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम् । इत्याभ्यामृग्भ्यामपाक्रामति । सिद्ध्यै त्वा । इति धृष्टिमादत्ते । देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या । इति तया धृष्ट्या प्रथमान्महावीरादङ्गारानुद्वपति । उत्तिष्ठ बृहन् भवोर्ध्वस्तिष्ठ ध्रुवस्त्वम् । इति सन्दंशेन महावीरमुद्धरति । अपद्यमाना पृथिव्यामाशा दिश आपृण । इति स्वस्थाने सादयति । सूर्यस्त्वा चक्षुषान्वीक्ष ऋजवे त्वा सुक्षित्यै त्वा भूत्यै त्वा । इति महावीरमीक्षते । इदमहममुमामुष्यायणं ब्रह्मवर्चसेन पर्यूहामि । इति यजमानस्य नामगोत्रे उच्चार्य प्रदक्षिणं पुरीषेण पर्यूहति । सन्दंशेन महावीरं सते निधाय । गायत्रेण त्वा छन्दसा छृणद्मि त्रैष्टुभेन त्वा छन्दसा छृणद्मि जागतेन त्वा छन्दसा छृणद्मि छृणत्तु त्वा वाक् छृणत्तु त्वोर्क् छृणत्तु त्वा हविश्छृन्धि वाचं छृन्ध्यूर्जं छृन्धि हविर्देवपुरश्चरसघ्यासं त्वा । इति महावीरमन्तर्बहिश्छागपयसा छृणत्ति । गोपयसा तूष्णीमभिषिञ्चति । एवं द्वितीयतृतीययोर्महावीरयोः समन्त्रकं अङ्गारोद्वपनादि भवति । तूष्णीं पिन्वनादीनाम् सर्वं खार्यां निधाय कृष्णाजिनेन प्रच्छाद्योत्तरे शालाखण्डे शिक्ये स्थापयति । यथा पत्नीदर्शनविषयो न भवेत्तथा । पूर्ववदुत्तरां शान्तिं जपन्ति । शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः । अहानि शं भवन्तु नः शꣳरात्रिः प्रतिधीयताम् । शमुषा नो व्युच्छतु शमादित्य उदेतु नः । शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम सन्दृशि । इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्मह्यवास्तुः स भूयाद्योस्मान् द्वेष्टि यञ्च वयं द्विष्मः । प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठः स भूयाद्योस्मान् द्वेष्टि यञ्च वयं द्विष्मः । आवात वाहि भेषजं विवात वाहि यद्रपः ।

त्वꣳ हि विश्वभेषजो देवानां दूत ईयसे । द्वाविमौ वातौ वात आसि-न्धोरापरावतः । दक्षं मे अन्य आवातु परान्यो वातु यद्रपः । यददो वात ते गृहे ऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आवह वात आवातु भेषजꣳ शंभूर्मयो-भूर्नो हृदे । प्रण आयूꣳषि तारिषत् । इन्द्रस्य गृहोऽसि तन्त्वा प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन । भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्ये नार्तां देवतां प्रपद्ये श्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्म कोशं ब्रह्म प्रपद्य ओं प्रपद्ये । अन्तरिक्षं मउर्वन्तरं बृहदग्नय: पर्वताश्च पयोवातः स्वस्त्या स्वस्तिमान् तया स्वस्त्या स्वस्तिमानसानि । प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः । कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता । कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढाचिदारुजे वसु । अभीषुणः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः । वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् । शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् । सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रा-स्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । आपोहिष्ठामयोभुव-स्तान ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथावनः । पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु । अन्तरिक्षꣳशान्तं तद्वायुना शान्तं तन्मे शान्तꣳ शुचꣳ शमयतु । द्यौः शान्ता सादित्येन शान्ता सा मे शान्ता शुचꣳ शमयतु । पृथिवी शान्तिरन्तरिक्षꣳ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशः शान्तिरग्निः शान्तिरन्तरिक्षꣳ शान्तिरादित्यः

शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्ति-र्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्ति-र्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः । तयाहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः । एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः । उद्वायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणो-दस्थाममृताꣳ अनु । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे । य उदगान्म-हतोर्णवाद्विभ्राजमानः । सरिरस्य मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु । ब्रह्मणश्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं वेद तदहं धारयाणि मामद्वेदो धिविस्रसत् । मेधामनीषे मा विशताꣳ समीचीं भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि । आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महिगोत्रारुजासि भूयिष्ठभाजो अधिते स्याम । ब्रह्म प्रावादिष्म तन्नो माहासीत् । ओं शान्तिः शान्तिः शान्तिः । शन्नो वात इत्यादय एतावन्तो मन्त्राः उत्तरशान्तिरित्युच्यते ॥

२२ इदं महावीरादिसम्भरणं प्रवर्ग्यसम्भरणमित्युच्यते ॥

२३ यजमानो गार्हपत्यस्य पश्चादुपविश्य आज्यं पशवः पुरो-डाशीया एते मे यज्ञार्थाः यावद्यज्ञे उपयोक्ष्यन्ते तावन्मे यज्ञार्थे शेषाद् ब्राह्मणा भुञ्जीरन् इह यक्ष्ये इति सङ्कल्प्य एदमगन्म देवयजनं पृथिव्या यद्देवासो अजुषन्त पूर्व ऋक्सामाभ्यां यजुषा सन्तरन्तो रायस्पोषेण समिषा मदेम इति मन्त्रेण । इतः पश्चादित उत्तरत इतः पुरस्तात् । इतो

दक्षिणतः इति देवयजनमध्ये स्थित्वा प्रागादिदेवयजनभूमिं निश्चिनोति । अयं यज्ञभूमिनिश्चयो देवयजनाध्यवसाय उच्यते ॥

२४ अध्वर्युः वेद्युत्करयोर्मध्येन राजानं प्रपाद्य मध्यमे वंशे राजानं बध्वा पुनरग्नीन् विहृत्य परिस्तीर्य दक्षिणतो ब्रह्मयजमानावुपवेश्य स्रुचि चतुर्गृहीतं गृहीत्वा मनसा हुत्वा । महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता । वाचस्पते हृद्विधेनामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोममपात् । मादैव्यस्तंतुश्छेदिमामनुष्यः । नमो दिवे । नमः पृथिव्यै स्वाहा । इति मन्त्रेण यजमाने ऽन्वारब्धे सत्याहवनीये जुहोति । यजमानो वाचस्पतये ब्रह्मण इदं न मम इति त्यागं पठति । पुनर्विहृत्य कूष्माण्डैर्हुत्वोपस्थानं वरदानं च कृत्वा पुनर्विहृत्य चतुर्गृहीतं गृहीत्वापशुबन्धवद्यूपाहुतिं जुहोति । अपरं चतुर्गृहीतं गृहीत्वाज्यस्थालीं सस्रुवां बर्हिर्हिरण्यमुदपात्रमादायेत्यादिप्रकारेण समन्त्रकेण पशुबन्धवदवतक्षणनिधानान्तं यूपाहरणं करोति । ततः पत्नीयजमानौ व्रतश्रपणागारे पर्युषितत्वादिदोषरहितं सर्पिर्मिश्रं पयोमिश्रं वा भक्षयतः । इदं भक्षणीयद्रव्यं व्रतमित्युच्यते ॥

२५ अध्वर्युः वाससी क्षुरं द्वाविंशतिदर्भपिञ्जूलानि नवनीतमञ्जनद्रव्यं सतूलां शरेषीकाञ्चादाय एहि यजमानेति यजमानमाह्वयति । तीर्थदेशं गच्छति । एवं प्रतिप्रस्थाता ऽपरिमितानि दर्भपिञ्जूलान्यादाय पत्न्या सह तीर्थं गच्छति । अध्वर्युः आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । इति प्राङ्मुखस्यासीनस्य यजमानस्य दक्षिणं गोदानमद्भिः क्लेदयति । ओषधे त्रायस्वैनम् । इति एकदर्भपिञ्जूलस्यैकं भागं दक्षिणगोदाने ऊर्ध्वाग्रमनूक्षयति । स्वधिते मैनꣳ हिꣳसीः । इति पिञ्जूलस्योपरि तिर्यञ्चꣳ स्वधितिं निदधाति । देवश्रूरेतानि प्रवपे । इति दर्भपिञ्जूलं मध्ये वपति । यजमानः स्वस्त्युत्तराण्यशीय । इति उत्पान्तं प्रत्यभिमृशति । एवं वामगोदाने दर्भपिञ्जूलस्याधस्य वपनं कृत्वा । अध्वर्युर्नापिताय क्षुरं प्रयच्छन् नापितं प्रेष्यति । नापितोप्तकेशश्मश्रुं मे निकृत्तनखं प्रब्रूतात् । अयं नापितप्रैष इत्युच्यते ॥

२६ प्रतिप्रस्थाता पत्न्या दक्षिणसव्योपपक्षयोरपरिमितदर्भपिञ्जूलवपनं करोति । ततो नापितोपपक्षौ मे निकृत्तनखौ प्रकृतात् । अनेन प्रैषेण नापिताय क्षुरं प्रयच्छन् प्रेष्यति । अयं प्रतिप्रस्थातृनापितप्रैष इत्युच्यते ॥

२७ ततो नापितो यजमानस्य केशश्मश्रुवपनं नखनिकृन्तनं च कृत्वा पत्न्या उपपक्षवपनं नखनिकृन्तनं च करोति । दक्षिणगोदानच्छेदनादि एतदन्तं कर्म दीक्षाङ्गवपनमित्युच्यते ॥

२८ अध्वर्युः आपो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु । इति यजमानं स्नपयति । विश्वमस्मत्प्रवहन्तु रिप्रम् । इति अङ्गधूलिं सम्यक् प्रधाव्य प्रप्लावयति । यजमानः उदाभ्यः शुचिरापूत एमि । इति तीरं प्रत्येति । वस्त्रस्य प्रान्तभागेन आत्मानं प्रतिच्छाद्य तिरः पवित्रं पयस्वत्या पय आचामति ऐष्टिकवत् । सोमस्य तनूरसि तनुवं मे पाहि । इति प्रदक्षिणमहतं वासः परिधत्ते । प्रतिप्रस्थाता तूष्णीं पत्नीं स्नपयित्वा अहतं वासः परिधापयति । इमे दीक्षाङ्गस्नानपरिधाने उच्येते ॥

२९ यजमानः पाणिभ्यां नवनीतं सम्प्लाव्य । महीनां पयोसि वर्चोधा असि वर्चो मयि धेहि । इति तेन मुखमभ्यङ्क्ते । तूष्णीमनुलोममङ्गानि । पृष्ठं यजमानस्याध्वर्युरभ्यङ्क्ते । पत्नी तूष्णीं स्वयमेवाभ्यङ्क्ते । इदं दीक्षाङ्गाभ्यञ्जनमुच्यते ॥

३० अध्वर्युः प्रत्यङ्मुख उपविश्य । वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि । इति सव्येन पाणिना शरेषीकया यजमानस्य दक्षिणमक्ष्यनक्ति । द्विस्तूष्णीम् । एवं सव्यमक्ष्यनक्ति । पत्नी स्वयमेव तूष्णीमक्षिणी उत्क्रमेणाङ्क्ते । इदं दीक्षाङ्गाञ्जनमुच्यते ॥

३१ चित्पतिस्त्वा पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । इति सप्तभिर्दर्भपिञ्जूलैर्यजमानस्य मुखं पावयति । वाक्पतिस्त्वा पुना०श्मिभिः । इति सप्तभिः पिञ्जूलैर्नाभिम् । देव स्त्वा सविता पुना०श्मिभिः इति सप्तभिर्गुल्फौ । पिञ्जूलानि प्रोक्ष्योदग्दिशि निरस्यति । तस्य ते पवित्रपते पवित्रेण यस्मै कम्पुनेतच्छकेयम् । इति

मन्त्रं यजमानं वाचयति । एवं प्रतिप्रस्थाता पत्नीं तूष्णीमप ऽमितैर्दर्भ-पिञ्जूलैः पावयति । इदं दीक्षाङ्गपवनमुच्यते ॥

३२ अथाऽध्वर्युर्यजमानेनात्मनः सव्यं पाणिं ग्राहयित्वा । यद्वो देवा स आगुरे यज्ञियासो हवामहे । इति शालामानयति । इन्द्राग्नी द्यावापृथिवी आप ओषधीः । इति पूर्वया द्वारा शालां प्रवेशयति । तीर्थेन प्रवेश्याग्रेणाहवनीयं नीत्वा यस्य दक्षिणतः कुशेषु कृतनिरसन-मुदङ्मुखमुपवेशयति । अयं दीक्षाङ्गशालाप्रवेश उच्यते ॥

३३ त्वं दीक्षाणामधिपतिरसि । इत्याहवनीयमीक्षयति । अध्व-र्युयजमानौ इमं मन्त्रं पठतः । इह मा सन्तं पाहि । इत्युभौ स्वात्मा-नमीक्षेते । प्रतिप्रस्थाता पत्नीमपरया द्वारा प्रवेशयति । प्रैतु ब्रह्मण-स्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इह । गार्हपत्यस्योत्तरमार्गेण प्राचीमुदानयन्निमं मन्त्रं वाचयति । सा तीर्थेन प्रविश्यासने निरसनं कृत्वा । सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । इत्युपविशति । अयं पत्नीशालाप्रवेश उच्यते ॥

३४ अथ यजमानो गार्हपत्यस्य पश्चादुपविश्य दीक्षणीयेष्ट्या यक्ष्ये इति सङ्कल्पयति । दीक्षणीयेष्टिसम्बन्धि हविः । व्रीहिमयः । पुरोडाशो द्रव्यम् । पञ्च प्रयाजाः । अग्नीषोमावाज्यभागौ अग्नाविष्णू देवता । देवा आज्यपा इत्यादि प्रकृतिवत् । अध्वर्युरिडाशान्तिं देवा गातुविद इत्यृचं च गार्हपत्यस्योत्तरत उपविश्य जपति । ततोऽग्नीन् विहृत्यान्वाधानं कृत्वा आज्येडान्तां दीक्षणीयामिष्टिं सूर्यास्तात्प्रागेव समापयति दीक्षणीयेष्टिप्रभृतिष्विष्टिषु व्रतग्रहणं ब्रह्मवरणं पत्नीसन्न-हनादूनेतिरिक्तं धीपाते इत्यस्य वाचनान्तं ब्रह्मयजमानभागौ चतुर्धा करणं अन्वाहार्य फलीकरणं समिष्टयजुः प्रणीतास्थापनं विष्णुक्रमश्च न भवन्ति । ततस्त्वां त्रयोविꣳशतिर्धेति इध्मसम्भरणमन्त्रे ऊहः । प्राकृतदेवतास्थाने अग्नाविष्णुभ्यामित्यादूहो यथास्थानं कर्तव्यः । प्रधानयागानुमन्त्रणमग्नाविष्णवोरहन्देवयज्यया वृत्रहा भूयासमिति । यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणी-

यायां मन्द्रतरमातिथ्यायामुपांशूपसत्सु इति बौधायनसूत्रात् यथेच्छस्वरो दीक्षणीयायां भवति । आज्येडान्ते उलूखले मुसले इत्यृचा दक्षिणाग्नौ प्रायश्चित्तहोमं कृत्वा प्राड्त्याध्वर्युरेव ध्रुवामाप्याययति । एतावत्कर्म दीक्षणीयेष्टिरित्युच्यते ॥

३५ ततोऽध्वर्युर्ध्रौवाज्यमाज्यस्थाल्यां प्रत्यवनीय तेनाज्येन स्रुवेण अन्वारब्धे यजमाने वक्ष्य आहुतीर्जुहोति । आकूत्यै प्रयुजे ऽग्नये स्वाहा । मेधायै मनसे ऽग्नये स्वाहा । दीक्षायै तपसे ऽग्नये स्वाहा । सरस्वत्यै पूष्णे ऽग्नये स्वाहा । एता आहुतयो दीक्षाहुतय इत्युच्यन्ते ॥

३६ स्वाहेत्यस्य स्थाने इदं न ममेति पाठेन यजमानस्य सर्वत्र त्यागः । ततः आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा । इति चतुर्गृहीतेन स्रुचा जुहोति । अद्भ्यो द्यावापृथिवीभ्यामन्तरिक्षाय बृहस्पतय इदं० मेति यजमानस्य त्यागः । पुनश्चतुर्गृहीतेन स्रुचं पूरयित्वा । विश्वेदेवस्य नेतुर्मर्तो वृणीत सख्यम् । विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा । इति जुहोति । यजमानः सवित्र इदं० । ततस्तूष्णीमन्तर्वेदि प्रणीतां निनयति । ततः साङ्गं कृष्णाजिनं कृष्णविषाणां वासो मेखलामौदुम्बरदण्डमुष्णीषं च अग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति । प्रतिप्रस्थाता तथैव कुम्बं कुरीरं वासो योक्त्रं च पत्न्यै प्रयच्छति । तद्यथा । अध्वर्युर्यजमानायतने साङ्गं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । यजमानः । ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मापातमस्य यज्ञस्योदृचः । इति आस्तीर्णस्य कृष्णाजिनस्य पश्चात्प्राङ्मुख उपविश्य कृष्णाजिनस्य श्वेतभागे दक्षिणाङ्गुष्ठो भवेत् कृष्णभागे तस्यैवाङ्गुलयो भवेयुस्तथा सम्मृशति । इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि । ययाति विश्वा दुरिता तरेम सुतर्माणमधिनावꣳ रुहेम । इति कृष्णाजिनस्योपरि दक्षिणं जान्वाच्याभिसर्पति । उपस्थं कृत्वोपविशति । इदं दीक्षोपवेशनमुच्यते ॥

३७ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ । इति कटिप्रदेशे मौञ्जीमेखलां प्रदक्षिणं पर्यस्यति । इति दीक्षाङ्गमेखलाबन्धनमुच्यते ॥

३८ पाहि मा मा मा हिꣳसीः । इति निष्टर्क्यं ग्रन्थिं करोति । प्रतिप्रस्थाता । आशासाना सौमनसमित्यृचा सन्नह्यामि पयसा घृतेन सन्त्वानह्याम्यप ओषधीभिः । सन्त्वा नह्यामि प्रजयाहमद्य सा दीक्षिता सनवो वाजमस्मे इत्यृचा च पत्नीं योक्त्रेण सन्नह्यति । इदं दीक्षाङ्गपत्नीसन्नहनमुच्यते ॥

३९ अध्वर्युः । विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छ । इति यजमानं वाससाप्रोर्णोति । नक्षत्राणामातीकाशात्पाहि । इति वसनस्यातीकाशेषु वाचयति । वस्त्रस्यान्तान् शिरस्येव सङ्क्षिपति । श्रिया ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसाय । इति प्रदक्षिणमुष्णीषेण यजमानस्य शिरो वेष्टयति । इदमुष्णीषवेष्टनमित्युच्यते ॥

४० प्रतिप्रस्थाता तूष्णीं पत्नीशिरसि कुम्बकुरीरमध्यूहति । इदं कुम्बकुरीराध्यूहनमुच्यते ।

४१ अध्वर्युः । इन्द्रस्य योनिरसि । इति यजमानाय त्रिवलिं पञ्चावलिं वा कृष्णविषाणां शाणया रज्ज्वा बद्ध्वां प्रयच्छति । यजमानः । मा मा हिꣳसीः । इति प्रतिगृह्य वसनप्रान्ते बद्ध्वा । कृष्यै त्वा सुसस्यायै । इति तयान्तर्वेदि विद्यमानं लोष्टमुद्धन्ति । कृष्णमृगशृङ्गं कृष्णविषाणेत्युच्यते ।

४२ सुपिप्पलाभ्यस्त्वौषधीभ्यः । इति तया दक्षिणं गोदानं कण्डूयते । प्रतिप्रस्थाता पत्न्या वसनस्यान्ते शङ्कुं बद्ध्वा । एतेन कण्डूयस्वेति वदति । सूपस्था देवो वनस्पतिः । इति यजमानपरिमितं ऊर्ध्वाग्रं दण्डं यजमानाय ददाति । यजमानः । ऊर्ध्वो मा पाह्यंहसः । इति दण्डं प्रतिगृह्णाति । इदं दीक्षाङ्गदण्डग्रहणमुच्यते ॥

४३ अध्वर्युः । स्वाहा यज्ञं मनसा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभे । इति मन्त्रं यजमानं वाचयति । यजमानो मुष्टिं कृत्वा वाचं नियमयति नक्षत्रोदयपर्यन्तम् । अध्वर्युः आहवनीयसमीपे तिष्ठन् त्रिरुपांशु ब्रवीति अदीक्षिष्टायं ब्राह्मणो नीलकण्ठशर्मा पाराशरगोत्रोऽनन्तशर्मणः पुत्रो रामशर्मणः पौत्रो नृसिंहशर्मणो नप्ता तमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो

देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यश्च ब्रूमः । इति । ततः शालाया बहिर्निष्क्रम्य त्रिरुच्चैरेवमेव ब्रवीति । इदं दीक्षितत्वज्ञापनमुच्यते ॥

४४ दीक्षितोसि दीक्षितवादं वद सत्यमेव वद मा ऽनृतं मा स्मयिष्ठा मा कण्डूया मा ऽपावृथा यदि स्मयासै अपि हस्तस्मयासै यदि कण्डूयासै कृष्णविषाणया कण्डूयासै यदि वाचं विसृजेर्वैष्णवीमृचमनुब्रूतान्न्म। त्वान्यत्र दीक्षितविमितात्सूर्योभ्युदियान्माभिनिर्मुक्ताद्यानि देवतानामानि यथाख्यातं तान्याचक्षाथ यान्यदेवतानामानि यथाख्यातं तान्यावक्षाथ उपरिष्टाद्विचक्षणं धेहि चनसितवतीं विचक्षणवतीं वाचं वद कृष्णाजिनान्मा व्यच्छेत्सा दण्डाच्च । इति यजमानं संशास्ति। इदं यजमानशासनमुच्यते ।

४५ यजमानः सर्वं तथा करोति । विश्वे देवा अभिमामावृत्रन्पूषा सन्यासोमो राधसा देवः सविता वसोर्वसुदावा । इत्यप्रत्याख्यायिनं दातारं प्रतिसनीहारान् प्रहिणोति । सनिरत्वध्येषणायाचनाभिषक्तियोचनार्थेनेति कोशाद्याचनीयं द्रव्यं सनिरित्युच्यते ।

४६ रास्वेयत्सोमाभूयोभरमापृणन् पूर्त्या विराधिमाहमायुषा । इति धनमाहरन्तं सनीहारं दृष्ट्वा जपति । चन्द्रमसि मम भोगाय भव । इति आनीतं हिरण्यं रजतं वा प्रतिगृह्णाति । वस्त्रमसि मम भोगाय भव । इति वस्त्रम् । उस्रासिम०व । इति गां हयोसि मम० । इत्यश्वम् । छागोसि मम०छागम् । मेषो ऽसि मम० । इति मेषम् । प्राजापत्यमसि मम भोगाय भव । इत्यनादिष्टं सर्वमन्यत् । एतत्कर्म सनियाचनमुच्यते ।

४७ अध्वर्युः आहवनीयस्योत्तरतस्तिष्ठन् । आग्नीन् ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति प्रेष्यति । ततः पूर्वद्वारेण निष्क्रम्य गोश्चतुर्भ्यः स्तनेभ्यः पयो दोहयित्वा गार्हपत्यस्य पश्चादुपविश्य उदीचोङ्गारान्निरुह्य तेषु तत्पयोधिश्रित्य दर्भोल्मुकेनाभिद्योत्य तस्मिन् पयसि स्रुवेणापः प्रत्यानीय पुनरभिद्योत्य त्रिः पर्यग्निकृत्वा मेक्षणेनालोड्य श्रपयित्वोदगुद्वास्याङ्गारान्प्रत्यूह्य उत्तरे शालाखण्डे शिक्ये स्थापयति । प्रतिप्रस्थाता दक्षिणद्वारेण निष्क्रम्य पत्न्यै व्रतं

दोहयित्वाऽध्वर्युर्दक्षिणाग्नौ श्रपयित्वा दक्षिणे शालाखण्डे शिक्ये निदधाति । एतत्पत्नीयजमानव्रतपयः साधनमुच्यते ॥

४८ यजमानः नक्षत्रोदये जाते सति दण्डकृष्णाजिने समादाय पूर्वद्वारेण बहिर्निष्क्रम्य शालाया अग्रतस्तिष्ठन् भूर्भुवः सुवरिति सकृदुपांशूक्त्वा व्रतं कृणुतेति त्रिरुच्चैर्वदति । अध्वर्युणा वाचं यच्छेति प्रोक्तस्य वाङ्नियमस्य इदानीमेव विसर्गः अब्दुं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीः । अमेध्यदर्शने सत्युक्तमन्त्रेण यजमानः सूर्यमुपतिष्ठते । रात्रौ तु आहवनीयम् । उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट । इमं मन्त्रं पर्जन्येनाभिवृष्टोऽभिवृष्यमाणो वा जपति । अनृतभाषणे कृते सति इमं मे वरुण तत्त्वायामि त्वं नो अग्ने स त्वं नो अग्न इति चतस्रो वारुणीर्ऋचो जपति । देवाञ्जनमगन्यज्ञस्ततो मास्य यज्ञस्याशीरनुवर्धताम् । भूतिर्दधा घृतेन मुञ्चतु यज्ञो यज्ञपतिमꣳहसः । दण्डस्य कृष्णाजिनस्य वा विच्छेदे सति इमं मन्त्रं जपति । असंस्कृतपयः पाने यथाविहितस्तनातिक्रमे च जलेनाचमनं कृत्वा । शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशिवाः । इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे । इति जपति । वमनेष्ठीवने वा जाते । यदत्रापि रसस्य मे निरष्टविषमस्पृतः । अग्निष्टत्सोमः पृथिवी पुनरात्मन् दधातु मे । इति जपति । रेतः स्कन्दने सति । यन्मे रेतः परितोषात्तदर्पिथ । अग्निहोत्रमिव सोमेन तदहं पुनराददे । इति तद्रेतोऽनुमन्त्र्य । इमं मे वरुण तत्त्वायामीति द्वे स्रुवाहुती जुहोति । मूत्रं करिष्यन् पुरीषं वा पृथिव्याः सकाशात् लोष्ठमादत्ते । इयं ते यज्ञिया तनूः । इति । ततो मूत्रं पुरीषं वा तस्मिन् स्थले करोति । अपो मुञ्चामि न प्रजामꣳहोमुचः स्वाहा कृताः पृथिवीमाविशतेति मन्त्रान्ते । तत आचम्य । पृथिव्या सम्भव । इति लोष्ठं पूर्वगृहीतं यथास्थानं निदधाति । कफे निर्गते सति । कफस्यामामापः स्थ स्वाहाकृताः पृथिवीमाविशत । इति जपति । अश्रुपाते जाते । बीभत्सानामापः स्थ स्वाहा० । इति जपति । स्वेदे निर्गते सति । तपस्यानामापः स्थ स्वाहा० इति जपति । दुःस्वप्नदर्शने सत्युत्थायाहवनीयसमीपमेत्य । दुःस्वप्नपापस्वप्नोपभुक्तैर्ब्रह्माहमन्तरं करवे

नहि स्वप्नमुपपद्यत । इति जपति । स्वप्नेऽन्नभोजने दृष्टे । यदन्नमद्यते नक्तं न तत्प्रातः क्षुधोऽवति । सर्वं तदस्मान्माहिंसीर्नहि तद्ददृशे दिवा । इति जपति । स्वदेहे रुधिरमुत्पतितं दृष्ट्वा कण्डूयित्वा वा । नमो रुद्रियाभ्योऽद्भ्यः स्वाहा । इति जपति । पर्जन्ये वर्षति सति यदि धावेत्तदा । नमो रुद्राय वास्तोष्पतय आयने विद्रवणे उद्याने यत्परायणे । आवर्तने विवर्तने यो गोपायति तंहुवे । इति जपति । अन्येन दीक्षितेन सह समागमे । कया नश्चित्र आभुवदित्यृचं जपति । देवयजनादन्यत्र स्थाने सूर्योदयास्तमयौ यदि स्यातां तदा । सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानो ऽग्निर्मा पातु चक्षुषः । सक्षूष सवितर्विश्वचर्षण एतेभिः सोमनामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते । इति जपति एतानि दीक्षाव्रतशेषप्रायश्चित्तानीत्युच्यन्ते ॥

४९ शयनकाले स्वायतने प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य । अग्ने त्वंसुजागृहि वयं सुमन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः । अनेन मन्त्रेणाग्न्यभिमुखः शेते । अयं दीक्षितस्य यजमानस्य शयनमन्त्र इत्युच्यते ॥

५० पत्नी गार्हपत्यस्य पश्चात्तूष्णीं शेते । अध्वर्युः मध्यरात्रे यजमानं प्रबोध्य । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । इति यजमानः पयो व्रतयिष्यन्नप आचामति । दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधां यज्ञवाहसं सुपारा नो असद्वशे । इति ततोऽध्वर्युणादत्तं व्रतं पयः स्वायतने उपविश्य कंसेन परिश्रित्य व्रतयति । ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नःपान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा । इति प्राश्याचम्य । शिवाः पीता भवथ यूयमापोस्माकं योनावुदरे सुशेवाः । इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे । इति जपति । प्रतिप्रस्थातृदत्तं व्रतं पयः परिश्रित्य पत्नी तूष्णीं व्रतयति । उभावपि स्वं स्वं पात्रं निर्णिज्य प्रयच्छतः । इदं व्रतसंज्ञकपयोभक्षणमुच्यते ।

५१ अध्वर्युः अपररात्रे प्रेष्यति । त्रिस्तनव्रतं दोहयता ऽग्नीन् ज्योतिष्मतः कुरुत व्रत्य वाचं यच्छ पत्नि वाचं यच्छ । इति अध्वर्युप्रतिप्रस्थातारौ पूर्ववद्दोहयित्वा श्रपयित्वा पूर्ववत्संस्कृत्य शिक्ये स्थाप-

घस्तः । द्वैतमेव चतुस्तनं व्रतं पय्या भवति । यजमानः सूर्योदयानन्तरं प्रवेशेन शालां तिष्ठन् । भूर्भुवः सुवरिति जपित्वा व्रतं कृणुतेति त्रिरुच्चैर्वदति । अध्वर्युः एहि यजमान इत्याहूय शालां प्रपादयति । यजमानो गार्हपत्यस्य पश्चादुपविश्य प्रायणीयेष्ट्या यक्ष्ये इति प्रकृतिवत्सङ्कल्पयति । प्रायणीयेष्टिसम्बन्धि हविः । व्रीहिमयश्चरुः । आज्यञ्च । पञ्च प्रयाजाः अग्नीषोमावाज्यभागौ । पथ्या स्वस्ति । अग्निः । सोमः । सविता । अदितिश्च प्रधानदेवताः । देवा आज्यपा इत्यादि प्रकृतिवत् । अस्यामिष्टौ अन्वाधानं नास्ति । अध्वर्युः असिदादानादि कर्म प्रकृतिवत्करोति । चरोः पयसि जले वा श्रपणम् । पयसि श्रपणपक्षे तु ब्रह्मन्नपः पयश्च प्रणेष्यामीति विशेषः । यज्ञयोगमन्त्रजपान्ते गार्हपत्ये स्मार्तवदाज्यं संस्कृत्याहवनीये स्रुवेण जुहोति । कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठ अधिरोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् स्वाहा । इति । कवयेऽग्नय इदम्० । इति यजमानस्त्यजति । अयमुपहोमः सोमशोधनादि प्रैषाङ्गहोम इत्युच्यते ॥

५२ अध्वर्युः उपनिष्क्रम्य प्रेष्यति । सोमविक्रयिन् सोमꣳशोधयोपवणाणां काले रोहेति चर्मण्यपामन्ते ब्राह्मणो दक्षिणत आस्तां ता गावो क्रूरं मा गुर्यासु सोमक्रयणी च सोमवाहनावनड्वाहौ सोमवाहनमनः प्रक्षालयतोद्धृतफलकम् । इत्यनेन प्रैषेण प्रेषितः सोमविक्रयी सोमशोधनादि यथोक्तं करोति । ततोऽध्वर्युः प्रकृतिवत् स्रुगादानादि कृत्वा चातुर्मास्यवत् चरुं श्रपयित्वा । सूर्यन्ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः । इति षड्ढोतृनामकेन वाक्यसमूहेनान्तर्वेदि चरुमासादयति । प्रकृतौ तु समस्ताभिर्व्याहृतिभिर्हविरासादनम् । प्रयाजशेषेणाभिघारणे विशेषः । प्रथमं ध्रुवां पञ्चकृत्वोऽभिघार्य ततश्चरुमभिघार्य उपभृतमभिघारयति । अस्यामिष्टौ आज्यभागप्रचारो वैकल्पिकः । पृथक् पृथक् चतुर्गृहीतेन ध्रौवाज्येन प्राच्यां दक्षिणस्यां प्रतीच्यां उदीच्यां च क्रमेण पथ्यां स्वस्तिं अग्निं सोमं सवितारं चोपांशु यजति । सर्वत्र दब्धिरसीत्यनुमन्त्रणम् यजमानस्य । अदितिम् वरुणा मध्ये यजति । प्रचाद इत्यनुमन्त्रणम् । अदितियागानन्तरं

अध्वर्युः । मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू न उपगन्तन । इति मारुतीमृचमनुपठति । स्विष्टकृद्यागे विशेषः । जुह्वामुपस्तीर्य ध्रुवाज्याच्चतुरवदाय सकृच्चरोरुत्तरार्धादवदाय द्विरभिघार्य चरुसम्बन्धिमेक्षणं जुहूपभृतोरधोभागेन नीत्वा आग्नीध्राय प्रयच्छन्नाह । अतिवालयतादेव मा नुप्राहार्षीः । इति । ततोऽत्याक्रम्य स्विष्टकृता प्रचरति । आग्नीध्रो मेक्षणमग्नेरुपरि प्राङ् नीत्वाऽभ्युद्योत्तरतः सादयति । ततोऽध्वर्युर्जुहूसङ्क्षालनादि करोति । इडावदाने विशेषः । इडामुपस्तीर्य ध्रुवाज्यादष्टकृत्वोऽवदाय द्विश्चरोरवदायाभिघारयति । हविरुच्छिष्टोद्वासनानन्तरं परिकर्मिणः सम्प्रेष्यति । अनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राश्नीताथैतां चरुस्थालीं सत्तामकाषामेतन्मेक्षणमेतं वेदमेतद्बर्हिश्चतुष्टयमुदयनीयामुपनिधत्तात् । परिकर्मिणो यथाप्रैषं कुर्वन्ति । स्रुग्विमोकानन्तरं तूष्णीमन्तर्वेदि प्रणीता निनीय तूष्णीं ध्रुवामाप्याय्य स्रुवि चतुर्गृहीतं गृहीत्वा स्रुगग्रे सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा दर्भमूले प्रग्रथ्य जुह्वे लम्बमानमवदधाति । इयं ते शुक्र तनूरिदं वर्चस्तया सम्भव भ्राजं गच्छेति मन्त्रेण । जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा । इत्यन्वारब्धे यजमाने जुहोति । वाचे सोमक्रयण्याऽइदं० मेति यजमानोऽनुमन्त्रयते । इयं सोमक्रयाहुतिरित्युच्यते ॥

५३ पुनश्चतुर्गृहीतं गृहीत्वा स्फ्यमुदपात्रं बर्हिर्हिरण्यं चादाय एहि यजमानेति तमामन्त्र्य उदुरणीहस्तया पत्न्याऽनुगतेन यजमानेन सह पूर्वद्वारेण शालाया बहिर्निष्क्रम्य शालाया अग्रे तिष्ठन् चतुर्गृहीतं स्रुक्स्थमाज्यं यजमानमवेक्षयति । शुक्रमस्यमृतमसि वैश्वदेवꣳ हविः । इति यजुर्मन्त्रेण । हिरण्यमन्तर्धायादित्यमुदीक्षयति । सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता । इति मन्त्रेण । सोमक्रयणीं गां शालाया अग्र पृष्ठ्या सूत्रस्थाने उदङ्मुखीं स्थितामनुमन्त्रयते । चिदसि मनासि धीरसि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतः शीर्ष्णी सा नः सुप्राची सुप्रतीची सम्भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाऽध्यक्षायानु त्वा माता मन्यतामनु पिता नु भ्राता सगर्भ्यो नु सखा सयूथ्यः सा देवि देवम-

च्छेहीन्द्राय सोमꣳरुद्रस्त्वा वर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या । इदं सोमक्रयण्यनुमन्त्रणं उच्यते ।

५४ दक्षिणास्येमेस्यसप्तमं पदं नोपयध्वम् । इति प्रेष्यति । उदग्दिशं प्रतिनीयमानायाः सोमक्रयण्या दक्षिणस्य दोष्णः षट् पदान्यनुक्रामति । तत्रैकैकपदा नु क्रमणे षण्णां मन्त्राणां मध्ये एकैको मन्त्रः पठनीयः । वस्व्यसि । रुद्राऽसि । अदितिरसि । आदित्याऽसि । शुक्राऽसि । चन्द्राऽसि । एतैः षड्भिर्मन्त्रैः अध्वर्युः गोर्दोष्णः प्रक्षेपस्थाने स्वदक्षिणं पादं प्रक्षिप्य क्रमेण गच्छति । इदं सोमक्रयण्यनुगमनमुच्यते ॥

५५ बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेतु । इत्यनेन मन्त्रेण सप्तमस्य दोष्णः प्रक्षेपस्य स्थानं दक्षिणहस्तेन गृह्णाति स्पृशतीति यावत् । तस्मिन् स्थाने हिरण्यं निधाय परिस्तीर्य परिषिच्य पूर्वाहूतेन चतुर्गृहीतेन । पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहा । इति मन्त्रेण । सोमक्रयण्या इदमिति याजमानम् । हिरण्यमपनीय । परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योस्मान् द्वेष्टि यञ्च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामि । स्फ्येन पदं परिलिखिता सकृन्मन्त्रेण द्विस्तूष्णीम् । अप उपस्पृश्य । स्फ्येनोपसङ्गृह्य पद्गुरण्यां संवपति । अस्मे रायः इति मन्त्रेण । मन्त्रकर्मणोरावृत्तिः । त्वे रायः । इति पद्गुरणीं यजमानाय प्रयच्छति । यजमानः । तोते रायः इति मन्त्रेण पत्न्यै प्रयच्छति । सन्देवि देव्योर्वश्या पश्यस्व । इति पत्नीं सोमक्रयण्या समीक्षयति । पत्नी । त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव सन्दृशि । इति यजमानं समीक्षते । यजमानः । माहꣳरायस्पोषेण वियोषम् । इति सोमक्रयणीं समीक्षते अध्वर्युः हिरण्यं प्रक्षाल्य मध्यमायामङ्गुलौ बध्वा पदरेशे उदकमपनिनीय पत्नीं गमयति । एतावत्कर्म पद्गुरण्योग्रहणमुच्यते ॥

५६ ततोऽध्वर्युस्तत्रैव चन्द्रं छागां कृष्णशुक्ले उर्णास्तुके उष्णीषं वाससी कृष्णाजिने सोमक्रयणीं चादायोपरवदेशं गत्वा पृच्छति । सोमविक्रयिन् शुद्धस्ते सोमाः ३ । इति सोमविक्रयी शुद्ध इति ब्रवीति । यजमानः । एष ते गायत्रो भाग इति मे सोमाय ब्रूतात् । एष ते

त्रैष्टुभो भाग इति मे सोमाय ब्रूतात् । एष ते जागतो भाग इति मे सोमाय ब्रूतात् । छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् । इति मन्त्रैः सुविचित राजानमुपतिष्ठते । इदं क्रयणाङ्गसोमोपस्थानमित्युच्यते ॥

५७ अध्वर्युर्वस्त्रं द्विगुणं कृत्वा चर्मण उत्तरार्धे प्राग्दशमास्तृणाति । अꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतो ऽमात्योसि शुक्रस्ते ग्रहः । इति सहिरण्येन पाणिना राजानमभिमृशति । इदं क्रयणाभिमर्शनमित्युच्यते ॥

५८ अभित्यंदेवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभिप्रियं मतिमूर्ध्वा यस्याऽमतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः इत्यस्य मन्त्रस्य पञ्चकृत्व आवृत्त्या सोमस्य पञ्चमुष्टीर्विमाति । तत्र प्रथमविमानं अङ्गुष्ठसंहितया प्रदेशिन्या । द्वितीयं साङ्गुष्ठयोपकनिष्ठिकया । तृतीयं तथैव प्रदेशिन्या । चतुर्थं तथैव कनिष्ठिकया पञ्चमं तथैव मध्यमया । इति समन्त्रकविमानम् । ततस्तूष्णीं पञ्चकृत्वो विमाति । तच्च कनिष्ठिकया मध्यमया कनिष्ठिकया प्रदेशिन्या महानाम्न्येति क्रमेण । एवं दशकृत्वो मिमानः सन् क्रीयमाणस्य सोमस्यार्धं मुष्टिदशकरूपं द्विगुणिते वस्त्रे गृहीत्वा प्रजाभ्यस्त्वा इति मन्त्रेणाविशिष्टमर्धं गृह्णाति तच्च त्रिमिते सोमे प्रक्षिपति । एतत्सोमविमानमित्युच्यते ॥

५९ ततो वस्त्रस्य प्रान्तानेकत्र करोति । प्राणाय त्वा । इति प्रदक्षिणमुष्णीषेण वेष्टयति । व्यानाय त्वा । इति प्रान्तभागानुपगूहति । अङ्गुल्या मध्ये वायुसञ्चारार्थमवकाशं करोति । एतत्सोमवेष्टनमित्युच्यते ॥

६० प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनुप्राणन्तु । इति यजमानं सोममवेक्षयति । ततस्तत्सोमवद्वस्त्रं चर्मणि निदधाति । एतत्सोमावेक्षणमित्युच्यते ॥

६१ सोमविक्रयिणा तस्मिन् गृहीते सति अध्वर्युर्जलेन तदभ्युक्षति । चर्म दूरे प्रक्षिप्योत्थाय पृच्छति । सोमविक्रयिन् क्रय्यस्ते सोमाः ३ । सोमविक्रयी क्रय्य इति प्रत्याह । अध्वर्युराह । मूजवतः ३ ।

इति सोमक्रयण्या सोमं पणते । ततः क्रीतः सोमः वयांसि व्याचक्ष्व इति सोमविक्रयी प्रत्याह । अध्वर्युः एषा ते सोमक्रयणी चन्द्रं ते छाग ते वस्त्रं ते । ततो हिरण्येन पणते । सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यक्ते गोः । इति कौत्साय हिरण्यं दर्शयति । अस्मे चन्द्राणि । इति यजमानाय प्रददाति । तपसस्तनूरसि प्रजापतेर्वर्ण-स्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामि । इति प्रतीचीमयीवयाऽजया सोमं राजानं पणते । अस्मे ते बन्धुः । इति यजमानं समीक्षते । तदनन्तरम् मयि ते रायः श्रयन्ताम् । इति आत्मानं समीक्षते । तदनन्तरमजां प्रदक्षिणमावर्त्य अभ्युत्योदङ्मुखीं तां कौत्साय ददाति । अस्मा । मित्रो न एहि सुमित्रधाः । इति सोमं राजानमादत्ते । इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳस्योनः स्योनम् । इति यजनानस्य दक्षिणे ऊरौ सादयति । अध्वर्युः वयः सुपर्णा उप-सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धिचक्षुर्मु-मुग्ध्यस्मान्निधयेऽवबद्धान् । इति कृष्णविषाणायायजमानस्योष्णीष-मपनयति । यजमानः । उष्णीषं जलेनाभ्युक्ष्य कौत्साय परिकर्मिणे वा ददाति । दण्डं मैत्रावरुणाय प्रयच्छति । तदानीमध्वर्युर्यजमानं वाच-यति । त्वां गावो वृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः । वर्ष्मन् क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनि । मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषाप्रयच्छामि । इति । अध्वर्युः । अस्मे ज्योतिः । इति शुक्लोर्णास्तुकयजमाने प्रक्षिपति । कृष्णोर्णास्तुकान्तु । इदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामि इत्युपग्रथ्य । सोमविक्रयिणि तमः । इति तया सोमविक्रयिणं भुवोर्वि-ध्यति । सोमक्रयहेतून् पदार्थाननुदिशति । स्वानभ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तानक्षध्वं मा वो दभन् । इति मन्त्रेण । ततो तस्मिन्नेव स्थाने उदकुम्भस्यजलं सर्वं प्रक्षिपति । सोम-विक्रमिन् क्रय्यस्ते सोमा इत्यारभ्यतदन्तं कर्म सोमक्रयणमित्युच्यते ॥



६२ यजमानः । उदायुषा स्वायुषोदोषधीनाᳬ रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताᳬ अनु । इत्यनेन मन्त्रेण राजानमादायोत्तिष्ठति । ततो राजानं स्वशिरसि निधाय । उर्वन्तरिक्षमन्विहि । इति प्राङ्मुखस्य शकटस्य दक्षिणतोऽभ्येति । ततोऽध्वर्युः । अदित्याः सदोऽसि । इति शकटस्य नीडे कृष्णाजिनमास्तृणाति । यजमानः अदित्याः सद आसीद इति कृष्णाजिने सोमं राजानं स्थापयति । अध्वर्युयजमानौ । अस्तभ्ना द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः । आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि । इत्यनेन राजानमुपतिष्ठेते । अध्वर्युः । वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु । हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ । राजानं प्राग्दिशं वर्जयित्वा सर्वासु दिक्षु उक्तमन्त्रेण वाससा वेष्टयति । उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । इति पूर्वदिशि ऊर्ध्वग्रीवमन्तर्लोम कृष्णाजिनं बध्नाति । सोमग्रहणपूर्वकोत्थानमारभ्यैतदन्तं कर्म शकटे सोमस्थापनमित्युच्यते ॥

६३ उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ । इति मन्त्रेणानीयमानौ सोमवाहनावनड्वाहौ प्रतिमन्त्रयते । वरुणस्कम्भनमसि । इति । दक्षिणमनड्वाहं योजयति । वरुणस्य स्कम्भसर्जनमसि । इति । शम्यामवगूहति । प्रत्यस्तो वरुणस्य पाशः । इति योक्त्रमवगूहति । एवमेवोत्तरस्यां धुरि उत्तरमनड्वाहं योजयति । ततो दक्षिणामीषामन्वारभ्य होत्रे प्रेष्यति । सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वय मा तु त्वमाह्वार्यजमान आह्वास्यति । यजमानः ईषयोर्मध्ये तिष्ठन् पलाशशाखां धारयन् । सुब्रह्मण्योम् इति त्रिरुपांशु सुब्रह्मण्या माह्वयति । ततः सुब्रह्मण्येन सुब्रह्मण्यायामाहूतायां होत्रा च अनुवचनस्य प्रथमायामृचि त्रिरुक्तायां सत्यां शकटं प्रच्याव्य दक्षिणामुखं परिवर्त्य वहन्ति । प्रच्यवस्व भुवस्पते विश्वान्यभिधामानि मा त्वा परिपरीविदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरादघच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः सᳬस्कृतम् । इत्यनेन मन्त्रेण । अध्वर्युरेवं मन्त्रं पठति । ततोऽध्वर्युयजमानौ । यजमानस्यस्वस्त्ययन्यस्यपि पन्था-

नगरमाहि स्वस्ति गामनेहसं येन विश्वाः परिद्विषो वृणक्ति विन्दते वसु। इमं मन्त्रं पठन्तौ अध्वर्यू प्रतीचीं दिशं प्रति शकटं नयतः । एतत्कर्म शकटपरिवहनमित्युच्यते ॥

६४ ततोऽध्वर्युर्व्रीहीनरणीं राजासन्दीं च गृहीत्वा शालाया अग्रभागे तिष्ठन् ओह्यमानं राजानं प्रति मन्त्रयति । नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजातायकेतवे दिवस्पुत्राय सूर्याय शꣳसत । इत्यनेन मन्त्रेण । शकटवोढारः शालाया अग्रभागे उदगीषं शकटमुपस्थापयन्ति । ततोऽध्वर्युः वरुणस्य स्कम्भनमसि । इति उपस्तम्भने स्थापयति । शकटादेर्यथास्थितस्थित्यर्थं यदूर्ध्वं काष्ठद्वयं रज्ज्वादिना परस्परबद्धं भवति तदुपस्तम्भनमित्युच्यते ॥

६५ वरुणस्य स्कम्भसर्जनमसि । इति दक्षिणस्यानडुहः शम्यामुत्कर्षति । उन्मुक्तो वरुणस्य पाशः इति योक्त्रं मुञ्चति तत एहि यजमानेति यजमानमाहूय पूर्वया द्वारा शालां प्रवेशयति । यजमानः स्वस्थाने उपविश्य आतिथ्येष्ट्या यक्ष्ये इत्यातिथ्येष्टिं सङ्कल्पयति । अस्यामिष्टौ वैष्णवो नवकपालः पुरोडाशः । अनुयाजानामभावः । प्रधानमुपांशु । आश्ववालः प्रस्तरः । ऐक्षवी विधृती । पञ्चविधं बर्हिः । कार्ष्मर्यमयाः परिधयः । सप्तदश सामिधेन्यः । योक्त्रेध्मप्रवृश्चनान्वाहार्यस्थालीवर्जं प्रकृतिवत्पात्राण्यासादयति । पूर्वं यान् व्रीहीन् गृहीत्वा शालाद्वारे प्राप्तस्य सोमस्य राज्ञ उपस्थानं कृतं तानेव व्रीहीन्निर्वपति । एते च व्रीहय उपस्थानव्रीहिपदवाच्याः ॥

६६ अत्र निर्वापमन्त्रे विशेषः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि । देवस्य त्वा सवितुः प्र०भ्याꣳसोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि । देव०भ्यामतिथेरातिथ्य-

मसि विष्णवे त्वा०मि । देवभ्यामग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा०मि । देवभ्यां ॅ श्येनाय त्वा सोमभृते विष्णवे त्वा०नि ।। एतैः पञ्चभिर्यजुर्मन्त्रैः पञ्च मुष्टीन्निर्वपति । तन्दुलप्रक्षालनजिनयनानन्तरं दक्षिणवदुत्तरमनड्वाहं विमुञ्चति । चत्वारो ब्राह्मणा राजासन्दीं धृत्वा शालां प्रवेशयन्ति । याते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । इत्यनेन मन्त्रेण यजमानः सोममादत्ते । गयस्फानः प्रतरणः सुवीरो वीरहा प्रचरा सोमदुर्यान् । इति तं शालां प्रवेशयति ।। आसन्दीधरा ब्राह्मणा राजासन्दीं वेद्युत्करयोर्मध्येन नीत्वा ऽग्रेणाहवनीयं पर्यानीयाहवनीयस्य दक्षिणतः सादयन्ति । तत्रैव यजमानः सोमं नीत्वा आसन्दीसमीपे तिष्ठति । अध्वर्युः अदित्याः सदो ऽसि । इति आसन्द्यां कृष्णाजिनमास्तृणाति । यजमानः अदित्याः सद आसीद । इति कृष्णाजिने राजानं स्थापयति । वरुणो ऽसि धृतव्रतो वारुणमसि । इति राजानमुपतिष्ठते । अध्वर्युः । शयोर्देवानाॅ सख्यात् । कृष्णाजिनान्तानेकीकृत्य रज्ज्वा बद्ध्वा मध्यमे वंशे प्रग्रथ्नाति । मा देवानामयसश्छिन्नस्महि । इति आसन्द्याः पश्चिमपादयोर्मध्ये राजपादौ प्रक्षालयामीति भावयन्नञ्जलिना जलं सिञ्चति । ततः कश्चित् शूद्रस्तूष्णीं प्रक्षालयति । तन्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंॅस मा न आयुः प्रमोषीः । इति यजमानः पुनरुपतिष्ठते । एतावत्कर्म सोमासन्दीप्रतिष्ठापनमित्युच्यते ॥

६० ततो ऽध्वर्युः । मा राजानं चाहवनीयं चान्तरेण कश्चन सञ्चारीन्मैनॅ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा सधस्याद्यो ऽनुप्रपादीत् । अयमन्तरागमननिषेधप्रैष इत्युच्यते ॥

६८ यजमानो राजानं सोमं मधुपर्केण पूजयति। तत्र निवेदितां गामध्वर्युरुत्सृजतेति वदति। अयं सोममधुपर्क उच्यते॥

६९ अध्वर्युः। कृष्णाजिनावहननादि प्रकृतिवत्करोति। उत्तरेषु अधिवपनादिषु विष्णुमेव निगमयति। पुरोडाशमधिश्रित्य गार्हपत्ये मदन्तीरधिश्रित्याज्यनिर्वापादि प्रकृतिवत्। सर्वाण्याज्यानि चतुर्गृहीतानि भवन्ति। पृथिवी होता। द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता। इति चतुर्होत्रातिथ्यमासादयति। आसन्नाभिमन्त्रणानन्तरं सम्भारान् व्याचष्टे। अग्निर्यजुर्भिः। सविता स्तोमैः। इन्द्र उक्थामदैः। मित्रावरुणावाशिषा। अङ्गिरसो धिष्णियैरग्निभिः। मरुतः सदोहविर्धानाभ्याम्। आपः प्रोक्षणीभिः। ओषधयो बर्हिषा। अदितिर्वेद्या। सोमो दीक्षाया। त्वष्टेध्मेन। विष्णुर्यज्ञेन। वसव आज्येन। आदित्या दक्षिणाभिः। विश्वेदेवा ऊर्जा। पूषा स्वगाकारेण। बृहस्पतिः पुरोधया। प्रजापतिरुद्गीथेन। अन्तरिक्षं पवित्रेण। वायुः पात्रैः। अहं श्रद्धया। एते मन्त्राः सम्भारपदवाच्याः॥

७० तत उत्करे कृष्णाजिनमास्तीर्य अग्नेर्जनित्रमसीत्यादिमन्त्रैः पशुवन्मन्थनं कृत्वा निर्मन्थ्येन प्रचर्याभिहुत्य अग्नये समिध्यमानायानुब्रूहीत्यादि प्रकृतिवत् करोति। न समिधं परिशिनष्टि। अनुयाजाभावात्। चतुर्थे प्रयाजे सर्वमौपभृतमाज्यं जुह्वामानीय प्रयाजशेषेण ध्रुवामभिघारयति। उपभृतं नाभिघारयति। आज्यभागानन्तरमुपांशु प्रधानेन प्रचरति। विष्णोरहं देवयज्ययान्नादो भूयासम्। अन्नाद इत्यस्य स्थाने शिपिविष्टपदं वा। इति यजमानस्य प्रधानयागानुमन्त्रणम्। ततः स्विष्टकृदिडे प्रचर्य प्राशित्रं परिहृत्य प्रणीता निनीय तूष्णीं ध्रुवामाप्याययति। सन्तिष्ठते आतिथ्येष्टिः। आतिथ्येष्टिसङ्कल्पप्रभृत्येतावदन्तं कर्म्म आतिथ्येष्टिरिति गीयते॥

७१ ततो वेद्यां कंसं चमसं वा निधाय ध्रुवाज्यात्पञ्चकृत्वो वक्ष्यमाणमन्त्रैर्गृह्णाति । ते च मन्त्राः । आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि । तनूनप्त्रे त्वा गृह्णामि । शाक्वराय त्वा गृह्णामि । शक्मन्नोजिष्ठाय त्वा गृह्णामि । इति । इदं तानूनप्त्राज्यग्रहणमित्युच्यते ॥

७२ मुख्यक्रमेण यजमानान्ता ऋत्विजस्तमवमृशन्ति । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम् । इति मन्त्रेण । इदं तानूनप्त्रावमर्शनमित्युच्यते ॥

७३ अध्वर्युर्यजमानं वाचयति । अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते माधाः । यजमानः अध्वर्य्वादीन् सर्वानृत्विजः क्रमेणोपहूय तानूनप्त्रमवजिघ्रति । प्रजापतौ त्वा मनसि जुहोमि । इति मन्त्रेण सकृत् द्विस्तूष्णीम् । एतत्तानूनप्त्रावघ्राणमित्युच्यते ॥

७४ अथैनत्पात्रमद्भिः संस्पृश्य शालाया उत्तरभागे निनयति । अत्र कंसे गृहीतमाज्यं तानूनप्त्रमित्युच्यते ॥

७५ ततोऽध्वर्युराग्नीध्रं पृच्छति । अग्नीन्मदन्त्यापा३ः । इति । आग्नीध्रस्तमाह । मदन्ति देवीरमृता ऋतावृधः । इति । ततोऽध्वर्युः । ताभिरेहि । इत्याह । इदं मदन्तीपाचनमित्युच्यते ॥

७६ ततो यजमानान्ताः सर्वे मुख्यादिक्रमेण मदन्तीरुपस्पृश्योपोत्थाय सोमसमीपं गत्वा तं विस्रस्य हिरण्यमवधाय सोमं राजानं मदन्तीजलेनाप्याययन्ति । अꣳशुरꣳशुस्ते देवसोमाप्यायतामिन्द्रायैकधनविद आतुभ्यमिन्द्रः प्यायतामात्वमिन्द्राय प्यायस्व । इति मन्त्रेण । अध्वर्युर्यजमानं वाचयति । आप्यायय सखीन् त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय । इति । इदं सोमाप्यायनमित्युच्यते ॥

७७ ततो मदन्तीजलं स्पृष्ट्वा यथास्थानमुपविशन्ति । अध्वर्युः वाजवतीभ्यां स्रुचौ व्यूह्य परिधीन् समज्य यथायतनꣳ स्रुचौ सादयित्वा विधृतीभ्यां सह प्रस्तरं गृहीत्वा ऽप्रतिशृणंस्त्रेधा ऽनक्ति । अक्तꣳ रिहाणा इत्यादिमन्त्रैः । अत्र प्रस्तरानुप्रहरणं नास्ति । अतस्तदर्थमाश्रावणमपि न । न बर्हिरनुप्रहरति प्रस्तरं वेद्या दक्षिणार्धे निधाय तस्मिन् यजमानान्ताः सर्वे मुख्यादिक्रमेण निह्नुवन्ते । एष्टा रायः । प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै । इति सव्यं पाणिं प्रस्तरस्योपरि उत्तानं निधाय तदुपरि दक्षिणं पाणिं न्यञ्चं निधाय द्यावापृथिव्योर्नमस्काररूपो निह्नव उच्यते ॥

७८ आतिथ्याबर्हिष एकदेशेन विधृतिभ्यां च सह तमेव प्रस्तरं बद्ध्वा तेष्वेव परिधिषु एकादश समिच्छकलानुपसङ्गृह्य तदुभयमाहवनीये ऽतिबाल्याद्भिरभ्युक्ष्योत्तरतः सादयित्वा यजमानमाह । अवान्तरदीक्षां गृहाण इति । अयमवान्तरदीक्षाप्रैष इत्युच्यते ॥

७९ ततो यजमान आहवनीयमुपतिष्ठते । अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि । इति । अध्वर्युः यजमानं संशास्ति । सन्तरां मेखलां समायच्छस्व सन्तरां मुष्टीकुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पुर्वव्रतनꣳ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातो धिव्रतय । इति यजमानो यथाप्रैष करोति । इदं यजमानशासनमित्युच्यते ॥

८० ततो ऽध्वर्युब्रह्मप्रतिप्रस्थात्राग्नीत्प्रस्तोतृहोतृयजमाना मदन्तीजलं स्पृष्ट्वा नमो वाच इत्यादि पूर्वोक्तां शान्तिं जपन्ति ।

अध्वर्युर्गार्हपत्यस्य पुरस्तादास्तीर्णेषु दर्भेषु सम्राडासन्दीं स्थूणां गोदोहनीं छागायै शङ्कुशफोपयमनं स्रुवं रौहिणहवन्यौ द्वे धृष्टी त्रीणि पवित्राणि षट् शकलान्येतान्यौदुम्बराणि वैकङ्कतीं समिधं त्रयोदश वैकङ्कतान् परिधीन् वैकङ्कतीं प्रचरणीं काष्मर्यमयान्परिधीन् सौवर्णराजतौ रुक्मौ द्वे घर्मदुघे धेनुं च छागां च बहिः स्थापयित्वा द्वौ कुशमयौ वेदौ एकं मौञ्जमपरिवासितं मौञ्जरज्जुदाम मुञ्जप्रलवान् रौहिणपिष्टानि सिकताश्चासाद्य गार्हपत्याहवनीययोरुत्तरतः स्फ्येनोद्धृत्यावोक्ष्य सिकताभिः प्रादेशपरिमितौ परिमण्डलौ खरौ कृत्वा शालाया उत्तरे खण्डे तथैव चतुरस्रमुदङ्निष्पन्दनवन्तमुच्छिष्टखरं कृत्वा प्रचरणीयं महावीरं शफाभ्यां परिगृह्य प्रवृञ्जनीये खरे सादयित्वा मौञ्जेन वेदेनापिधाय आहवनीयस्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राग्बिलौ उपशयौ महावीरौ वेदाभ्यां परिगृह्यासाद्य अतिशिष्टां मृदं चासाद्य स्थूणां शङ्कुं चादाय जघनेन गार्हपत्यं परीत्य दक्षिणया द्वारोपनिष्क्रम्य होतृद्रुपगोचरदेशे गोवत्सबन्धनार्थं स्थूणां निहत्य मौञ्जेन दाम्ना घर्मदुघाया गोर्वत्सं तत्र बद्ध्वा तदुत्तरतः शङ्कुं निहत्य तत्र छागां बद्ध्वा छागायाः शिशुं कटादिनाऽऽच्छाद्य प्रवर्ग्यकर्तॄन् सम्बुद्ध्यन्तेन एहि पदोत्तरेण यज्ञियेन नाम्नाऽऽहूय शालायाश्चत्वार्यपि द्वाराणि वस्त्रादिना परिश्रित्य पत्नीशाले पत्नीमुपवेश्य तस्यापि द्वारं परिश्रित्याग्नीन् दर्भैः परिस्तीर्य गार्हपत्यस्य दक्षिणतो ब्रह्मयजमानावुपवेश्य सपवित्रायां प्रचरण्यां मदन्तीरप आनीयोत्पूयादधान आह । सम्राडासन्द्यामासादनप्रभृति प्रचरणीग्रहणान्तं कर्म प्रवर्ग्यसामग्रीसम्पादनमित्युच्यते ॥

८१ ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्याग्नीद्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातः प्रवर्ग्यं विहर प्रस्तोतः सामानि गाय । अयं प्रवर्ग्यारम्भप्रैष इत्युच्यते ॥

८२ ब्रह्मणा भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वा ॐ प्रचरतेत्याज्ञप्तो ऽध्वर्युः प्रचरणीयं महावीरं वेदमपास्य प्रोक्षति । यमाय त्वा सूर्यस्य हरसे । इति । अभिप्राप्नुवन् परान् सम्भारान् प्रोक्षति । अध्वर्युः प्रोक्षितपात्रं स्थानान्तरे सादयति । इदं प्रवर्ग्यपात्रसम्भारप्रोक्षणमुच्यते ॥

८३ अध्वर्युराहवनीये कार्ष्मर्यमयान् परिधीन् परिधाय तस्य समीपे औदुम्बरान् शकलान् वैकङ्कतीं समिधं च सादयित्वा गार्हपत्यसमीपे त्रयोदश वैकङ्कतान् परिधीन् सौवर्णराजतौ रुक्मौ मञ्जुप्रलवान् रौहिणपिष्टानि सादयति । आग्नीध्रः गार्हपत्यस्य पश्चाद्भागे धृष्टिभ्यां प्रतीचोऽङ्गारानिरूह्य रौहिणकपाले उदक्संस्थे तदुपर्युपधाय मदन्तीभिः रौहिणपिष्टानि संयत्य पिण्डौ कृत्वा कपालयोरधिश्रित्य स्थाल्यां तिरःपवित्रमाज्यमनीयाधिश्रित्योभयं पर्यग्निकृत्वा रौहिणौ पुरोडाशौ श्रपयति । इदं रौहिणपुरोडाशश्रपणमित्युच्यते ।

८४ प्रतिप्रस्थाता मौञ्जवेदाग्रेण महावीरं स्रुवं पिन्वने रौहिणहवन्यौ उपयमनं च सम्मृज्याज्यमुत्पूय रौहिणहवन्योरुपस्तीर्य रौहिणपुरोडाशावभिघार्योद्वास्य रौहिणहवनीभ्यां परिगृह्य वेद्यां दक्षिणं पुरोडाशं दक्षिणपरिधिसन्धिसमीपे पूर्वाह्णिके प्रवर्ग्ये प्राञ्चौ आपराह्णिके तु प्रत्यङ्मुखौ यथाभवतस्तथा सादयति । इदं रौहिणपुरोडाशासादनमित्युच्यते ।

८५ अध्वर्युः प्रचरणीयं महावीरं शफाभ्यां सव्यहस्ते गृहीत्वा आज्यस्थाल्याः सकाशात्सकृदाज्यं स्रुवेण गृहीत्वा ऽनवानं सन्तताः सप्ताहुतीर्गार्हपत्ये जुहोति । प्राणाय स्वाहा व्यानाय स्वाहा । ऽपानाय स्वाहा चक्षुषे स्वाहा । श्रोत्राय स्वाहा । मनसे स्वाहा । वाचे सरस्वत्यै स्वाहा । इति मन्त्रैः ततश्चतस्र आहुतीः पुनः पुनराज्यमादाय जुहोति । दक्षाय स्वाहा । क्रतवे स्वाहा । ओजसे स्वाहा । बलाय स्वाहा । इति मन्त्रैः । सर्वत्र यथालिङ्गं प्राणायेदं न ममेत्यादिरूपो यजमानस्य त्यागः । अयं प्रवर्ग्यारम्भहोम इत्युच्यते ।

८६ महावीरमाज्येनानक्ति । देवस्त्वा सविता मध्वानक्तु इति मन्त्रेण । इदं महावीराञ्जनमुच्यते ॥

८७ प्रतिप्रस्थाता राजतं रुक्मं प्रवृञ्जनीये खरे उपगूहति । पृथिवी तपसस्त्रायस्व । इति । इदं रुक्मोपगूहनमुच्यते ॥

८८ अध्वर्युः व्यतिषक्तान् प्रागुदगग्रान् कृत्वा रुक्मोपरि-मञ्जुप्रलवान् कृत्वा प्रदक्षिणमादीपयति । तद्यथा । अर्चिरसि इति पुरतः । शोचिरसि । इति दक्षिणतः । ज्योतिरसि । इति पश्चिमतः । तपोऽसि । इत्युत्तरतः । तान् प्रवृञ्जनीये खरे सम्प्र-कीर्य सꣳसीदस्व महाँ असि शोचस्व देववीतमः । विधूममग्ने अरुषं मियेध्यसृज प्रशस्तदर्शतम् । इति तेषु महावीरं साद-यति । इदं खरे महावीरसादनमुच्यते ॥

८९ अञ्जन्तियं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः । पितुर्न पुत्र उपसिप्रेष्ठ आ घर्मो अग्निमृतयन्न सादीत् । इति महावीरमाज्येन पूरयति । इदं महावीराज्यपूरणमुच्यते ॥

९० अनाधृष्या पुरस्तादग्नेराधिपत्य आयुर्मेदाः । पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मेदाः । सुषदा पश्चाद्देवस्य स-वितुराश्रोत्रं मेदाः । विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्ये ब्रह्म

... तेजो मघा यशो मघाऽस्तपो मघा मनो मघाः । एतैः पञ्चभिर्मन्त्रैः क्रमेण यजमानो महावीरस्य प्राग्दक्षिणतः पश्चिमत उत्तरत उपरि च प्रादेशान् करोति । मन्त्रानध्वर्युरपि पठति । इदं महावीरप्रादेशकरणमुच्यते ॥

९१ यजमानो भूमिमभिमृशति । मनोरश्वा ऽसि भूरिपुत्रा विश्वाभ्यो मानाष्ट्राभ्यः पाहि सूपसदा मे भूया मा मा हिꣳसीः । इति । अध्वर्युः । तपोष्वग्ने अन्तराꣳ अमित्रान्तपाशꣳ समररुषः परस्य । तपा वसो चिकितानो अचित्तान्वितेतिष्ठन्तजरा अयासः । इति गार्हपत्यात् धृष्टीभ्यामुदीचोङ्गारान्निरूहति । तैरेनं महावीरं प्रदक्षिणं परिचिनोति । चितः स्थ परिचितः स्वाहा मरुद्भिः परिश्रयस्व । इदं महावीराङ्गारपरिश्रयणमुच्यते ॥

९२ महावीरस्य दक्षिणतः प्रागग्रमेकं वैकङ्कतं परिधिं परिदधाति । मा असि । इति मन्त्रेण । तथैव मन्त्रेणोत्तरतो द्वितीयम् । प्रतिप्रस्थाता पश्चादुदगग्रं तृतीयम् । प्रमा असि । इति मन्त्रेण । अनेनैव मन्त्रेण पुरस्ताच्चतुर्थम् । प्रतिमा असि । एतस्य मन्त्रस्यावृत्त्या ऽध्वर्युर्द्वौ परिधी प्रथमद्वितीयवत् क्रमेण परिदधाति । संमा असि । एतन्मन्त्रावृत्त्या प्रतिप्रस्थाता तृतीयचतुर्थवत्परिदधाति । विमा असि । इत्यस्यावृत्त्या द्वौ पूर्ववदध्वर्युः । उन्मा असि । एतदावृत्त्या द्वौ पूर्ववत्प्रतिप्रस्थाता । अध्वर्युस्त्रयोदशं परिधिं महावीरस्य दक्षिणत ऊर्ध्वाग्रमुच्छ्रयति । अन्तरिक्षस्यान्तर्धिरसि । इति । वैकङ्कतपरिधानमिदमुच्यते ॥

९३ ततः दिवं तपसस्त्रायस्व । इति सौवर्णरुक्मेणा ऽपिदधाति । ततः आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रारुजा ऽसि भूयिष्ठभाजो अधते स्याम । शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौ-





रिवा ऽसि। विश्वा हि माया अवसि स्वधा वो भद्रा ते पूषन्निहरातिरस्तु । अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्रत्वदस्ति। एताभिस्तिसृभिर्ऋग्भिर्घर्ममुपतिष्ठते। इदं घर्मोपस्थानमित्युच्यते ॥

९४ प्रज्वलिते ऽग्नौ सौवर्णरुक्ममपकृष्य धवित्राण्यादत्ते-गायत्रमसि । इत्येकम् । त्रैष्टुभमसि । इति द्वितीयम् । जागतमसि । इति तृतीयम् । गृहीतैर्धवित्रैर्महावीरस्य पश्चात् प्राङ्मुखो जान्वाच्य युगपत्त्रिरूर्ध्वं धुनोति । मधु मधु मधु । इति मन्त्रेण । उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति । तयोरेकमग्नीधे प्रतिप्रस्थाता प्रयच्छति । होतुरभिष्टवनस्य प्रणवे प्रणवे महावीरस्योपरि धून्वन्तो ऽध्वर्युप्रतिप्रस्थात्राग्नीध्रा महावीरं त्रिः प्रदक्षिणीकृत्योत्तरतस्तिष्ठन्ति । इदं महावीरप्रदक्षिणगमनमुक्तं ॥

९५ ततो ऽध्वर्युः सर्वाणि धवित्राण्यादायात्मनः पश्चिममार्गेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे प्रयच्छति । तयोरेकं प्रतिप्रस्थाताग्नीधे प्रयच्छति। महावीरस्य पश्चात्प्राङ्मुखो ऽध्वर्युरुपविशति। पुरस्तात्प्रतिप्रस्थाता। उत्तरत आग्नीध्रः । एवमुपविश्य प्रणवे प्रणवे धून्वन्तः स्रुवेण महावीरमाप्यायन्ति । इदं महावीराप्यायनमुच्यते ॥

९६ होतुः सकाशाद्याभिर्वर्तिकामित्युपश्रुत्याध्वर्युयजमानौ महावीरमुपोत्थाय प्रेक्षतः । दश प्राचीर्दश भासि दक्षिणा दश प्रतीचीर्दश भास्युदीचीः । दशोर्ध्वाभासि सुमनस्यमानः । स नो रुचंधेह्यहृणीयमाणः । अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसा समारुचितो रोचय । इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा । समारुचितो रोचय ।

वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसा। समाव्य। द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसा। समाव्य। बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा समाव्य। रोचितस्त्वं देव घर्म देवेष्वसि रोचिषीयाहं मनुष्येषु। सम्राड् घर्म रुचितस्त्वन्देवेष्वायुष्माँ तेजस्वी-ब्रह्मवर्चस्यसि। रुचितोऽहं मनुष्येष्वायुष्माँ स्तेजस्वी ब्रह्मवर्चसी भूयासम्। रुगसि। रुचं मयि धेहि। मयि रुक्। दश पुरस्ताद्रोचसे। दश दक्षिणा। दश प्रत्यङ्। दशोदङ्। दशोर्ध्वोभासि सुमनस्यमानः। सनः सम्राडिषमूर्जन्धेहि। वाजीवाजिने पवस्व। रुचितो घर्मो रुचीय। अयं मन्त्रसमूहो-महावीरप्रेक्षणमन्त्र इत्युच्यते॥

९७ होत्रा अग्नवतीमश्विनेत्यृच्युक्तायां सर्वे धवित्रा-ण्यूर्द्ध्वं धारयन्ति। होत्रा उरुरुदुषयसः पृश्निरग्रिय इत्यृच्युक्तायां रुचितो घर्म इत्युक्त्वा यथेतन्निरपसव्यं परीत्य धवित्राणि निधाय सर्वे घर्ममुपतिष्ठन्ते। अपश्यं गोपामनिपद्यमानम्। आ च परा च पथिभिश्चरन्तम्। ससध्रीचीः सविषूचीर्वसानः। आवरीवर्ति भुवनेष्वन्तः। अत्र प्रावीः। मधुमाध्वीभ्यां मधुमाधूचीभ्याम्। अनु वां देववीतये। समग्निनागत। सन्देवेन सवित्रा। सँसूर्येण रोचते। स्वाहा समग्निस्तपसाऽगत। सन्देवेन सवित्रा सँसूर्येणारोचिष्ट। धर्ता दिवो विभासि रजसः। पृथिव्या धर्ता। अन्तरिक्षस्य धर्ता। धर्ता देवो देवानाम्। अमर्त्यस्तपोजाः। हृदे त्वा मनसे त्वा सूर्याय त्वा। ऊर्द्ध्वमिममध्वरं कृधि। दिवि देवेषु होत्रा यच्छ। विश्वासां भुवां पते। विश्वस्य भुवस्यनस्पते। विश्वस्य मनसस्पते। विश्वस्य वचसस्पते। विश्वस्य तपसस्पते। विश्वस्य ब्रह्मणस्पते। देवश्रूस्त्वं देवघर्म देवान् पाहि। तपोजां वाचमस्मे नियच्छ

देवा युवम् । गर्भो देवानाम् । पिता मतीनाम् । पतिः प्रजानाम् मतिः कविनाम् । सन्देवो देवेन सवित्रा यतिष्ट । सःसूर्येणा ऽरुक्त । आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि । पिता नोऽसि पिता नो बोध । आयुर्धास्तनूधाः पयोधाः । वर्चोदा वरिवोदा द्रविणोदाः । अन्तरिक्षप्र उरोर्वरीयान् । अशीमाह त्वा मा मा हिंसीः । एतत्सर्वकर्तृककर्मोपस्थानमुच्यते ॥

९८ यजमानो गार्हपत्यमुपतिष्ठते । त्वमग्ने गृहपतिर्विशामसि । विश्वासां मानुषाणाम् । शतं पूर्भिर्यविष्ठपाह्यँहसः समेद्धारं शतँहिमाः । तं द्राविणं हार्दिवानम् । इहैव रातयः सन्तु । इति वदं प्रवर्ग्याङ्गगार्हपत्योपस्थानमुच्यते ॥

९९ प्रतिप्रस्थाता पत्न्यै वेदं प्रदर्श्य । त्वष्टीमतीते सपेय । सुरेता रेतो दधाना वीरं विदेय तव सन्दृशि । मा ऽहं रायस्पोषेण वियोषम् । इतीमं मन्त्रं वाचयति । अहर्ज्योतिः केतुना जुषतां सुज्योतिषा स्वाहा । इत्याहवनीये दक्षिणं रौहिणपुरोडाशं जुहोति । ज्योतिष इदं०म । इति त्यागो यजमानस्य । अयं दक्षिणरौहिणहोम इत्युच्यते ॥

१०० आपराह्णिके प्रवर्ग्ये तु होममन्त्रे अहःपदस्थाने रात्रिपदं बोध्यम् । ततो ऽध्वर्युः देवस्य त्वा स० माददे । इति मन्त्रेण रशनामादत्ते । अदित्यै रास्नाऽसि । इति तामभिमन्त्रयते । प्रतिप्रस्थाता कंसं पिन्वनं चाऽऽदाय होतुः पश्चिममार्गेण गच्छति । अध्वर्युः शालाया अन्तस्तिष्ठन् घर्मदुघां गामुपांशु त्रिराह्वयति । इड एहि । अदित एहि । सरस्वत्येहि । इति त्रिभिर्मन्त्रैः । दक्षिणद्वारेण शालातो बहिर्निष्क्रम्य । गङ्ग एहि । इति चिरुच्चैराह्वयति । तां गां तया रशनया बध्नाति । अदित्या उष्णीषमसि । इति । वायुरस्यैडः । इति वत्समभिमृशति । पूषा त्वोपावसृजत्वश्विभ्यां प्रदापय । इति पूर्वं स्थूणायां बद्ध-

वत्सं मुञ्चति। यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि। यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः। इति गोस्तनमभिमन्त्रयते। प्रस्नुतायां गवि उस्त्र-घर्मं शिंष्वोस्त्रघर्मं पाहि घर्माय शिंष्व। इति वत्समपनयति। बृहस्पतिस्त्वोपसीदतु। इति गां नियुज्य तत्समीपे दोहनार्थ-मुपविशति। दानवः स्थ पेरवो विष्वग्वृतो लोहितेन। इति गोस्तनान् स्वकरेण सम्मृशति। होत्रा आदशभिर्विवस्वत इ-त्यृच्युक्तायाम्। अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय पिन्वस्व पिन्वने गां दोहयते। अतिशिष्टं कंसे। प्रतिप्रस्थाता तूष्णीं स्वपिन्वने छागां दोहयते। रशनादानप्रभृतिरेतदन्तो विधिर्घ-र्मदुघादोहनप्रकार उच्यते॥

१०१ होत्रा उत्तिष्ठ ब्रह्मणस्पतइत्युक्ते ऽध्वर्युः प्रतिप्रस्था-त्रे गोपयः प्रदाय यथागततमागत्य शफोपयमनान्यादत्ते। तद्य-था। गायत्रो ऽसि। इति प्रथमं शफम्। त्रैष्टुभो ऽसि। इति द्वितीयम्। जागतमसि। इत्युपयमनम्। होत्रा उपद्रव पयसे-त्युक्ते प्रतिप्रस्थात्रा आह्रियमाणे पयसी अभिमन्त्रयते। स-होर्जो भागेनोपमेहीन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजतावट्। इतिमन्त्रेण। महावीरस्य पुरस्तात्प्रत्यङ्-मुख उपविश्य। स्वाहा। इति स्वपिन्वनेन गोपयो महा-वीरे गोपयः- प्रक्षेप उच्यते॥

१०२ मधु हविरसि सूर्यस्य तपस्तप। इति पयःप्रक्षेपान्नि-र्गतमूष्माणमन्वीक्षते। इदं घर्मोष्मान्वीक्षणमुच्यते॥

१०३ प्रतिप्रस्थाता स्वपिन्वनस्थं छागापयस्तूष्णीं महा-वीरे ऽवनयति। उभयोः पयसोः शेषमेकीकृत्याध्वर्युस्तती-यमवनयति। कंसस्थं गोपय उपयमने प्रत्यवनीयाङ्गारान्

प्रत्यूह्य द्यावापृथिवीभ्यां त्वा परिगृह्णामि । इति महावीरं शफाभ्यां परिगृह्णाति । इदं सिद्धघर्ममहावीरग्रहणमुच्यते ॥

१०४ सव्ये हस्ते शफाभ्यां महावीरं धृत्वा मौञ्जेन वेदेन दक्षिणहस्तेनाधस्तान्मार्जयित्वा। अन्तरिक्षेणोप वोपयच्छामि। इति उपयमनेनोपयच्छति । देवानां पितॄणामनुमतो भर्तुं शकेयम् । इत्यनेन महावीरमादायोत्तिष्ठति । इदं महावीरोत्थापनमुच्यते ॥

१०५ तेजोऽसि तेजोऽनुप्रेह्यग्निर्मा पृथिव्याः पातु वायुरन्तरिक्षात्सूर्यो दिवो दिविस्पृङ् मा मा हिंसीरन्तरिक्षस्पृङ् मा मा हिंसीः पृथिविस्पृङ् मा मा हिंसीः सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि । इत्यनेन मन्त्रेण महावीरं प्राङ्हरति । समुद्राय त्वा वाताय स्वाहा सलिलाय त्वा वाताय स्वाहा ऽनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा वसवे त्वा वाताय स्वाहा । यथोपपादं षट् मन्त्रानाह । अग्नये त्वा वसुमते स्वाहा । सोमाय त्वा रुद्रवते स्वाहा । वरुणाय त्वा ऽदित्यवते स्वाहा । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा । सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा । यमाय त्वा ऽङ्गिरस्वते पितृमते स्वाहा । प्रतिमन्त्रमवमानं यथोपपादमित्युच्यते ॥

१०६ एते षट् पूर्वोक्ताश्च सप्त मन्त्रा महावीरप्राङ्नयनमन्त्रा उच्यन्ते ॥

१०७ विश्वा आशा दक्षिणसत् । इति दक्षिणत आसीनं ब्रह्माणमीक्षते । विश्वान् देवानयाडिह । इति पश्चादासीनं होतारम् । स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना स्वाहा ऽग्नये यज्ञियाय शं यजुर्भिः । इति सव्येन पदा वेद्या दक्षिणतोऽत्याक्रामति । इदं घर्महोमार्थदक्षिणात्याक्रमणमित्युच्यते ॥

[illegible] ...म-

रनुवां द्यावापृथिवीमंस्साताम् । इति यजमानं वाचयति । उच्चैराश्राव्य आग्नीध्रेण प्रत्याश्राविते । घर्मस्य यज । इति होतारं प्रेष्यति । होत्रा वषट्कृते स्वाहेन्द्रावट् । इति पुनर्जुहोति । इन्द्राग्नेदं० मेति त्यागो यजमानस्य । घर्ममपातमश्विना हार्दिवानमहर्दिवाभिरूतिभिरनुवां द्यावापृथिवी अमंस्सातां तं प्राव्यं यथावण्नमो दिवे नमः पृथिव्यै दिविधा इमं यज्ञं यज्ञमिमं द्विविधा दिवं गच्छाऽन्तरिक्षं गच्छ पृथिवीं गच्छ पञ्च प्रदिशो गच्छ देवान् घर्मपान् गच्छ पितॄन् घर्मपान् गच्छ । इत्यध्वर्युर्यजमानं वाचयति । अयं घर्मयाग उच्यते ॥

१०९ प्रतिप्रस्थाता पिन्वनेनोपयमनादुपहृत्य महावीरं पूरयित्वा शफाभ्यां परिगृह्याध्वर्युप्रतिप्रस्थातारौ सहाहवनीये प्रतिमन्त्रं स्रावयतः । इषे पीपिहि । ब्रह्मणे पीपिहि । क्षत्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः पीपिहि । वनस्पतिभ्यः पीपिहि । द्यावापृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि । यजमानाय पीपिहि । उपांशु मह्यं उच्चैः । ज्यैष्ठ्याय पिपीहि । इदं उभयकर्तृकघर्मस्रावणमुच्यते ॥

११० अध्वर्युरेवाभिमुखं प्रदक्षिणं प्रागादिषु स्रावयति । त्विष्यै त्वा । द्युम्नाय त्वा । इन्द्रियाय त्वा । भूत्यै त्वा । इति क्रमेण चतुर्भिर्मन्त्रैः । इदमध्वर्युकर्तृकघर्मस्रावणमुच्यते ॥

१११ उपयमने महावीरस्थं पयो ऽवनीयोदङ्ङत्याक्रम्यान्तर्वेदि प्राग्बिलं महावीरं सादयति । प्रतिप्रस्थाता राजतं रुक्ममुद्वासनीये खरे उपगूहति । अध्वर्युस्तस्मिन्महावीरं सादयति । धर्मासि सुधर्मा मे ऽन्यस्मे ब्रह्माणि धारय नेत्वा-



वातः स्कन्दयात् । इति मन्त्रेण । इदमुद्वासनीये महावीर-सादनमुच्यते ॥

११२ ततः औदुम्बरशकलेनोपयमनादुपहत्याऽऽहवनीयस्य पूर्वार्धे क्षारयति । पूष्णे शरसे स्वाहा । पूष्णेशरस इ०मेति यजमानः । तच्छकलं घर्मसिक्तभागो यथान्तः स्यात्तथा मध्यमे परिधौ सादयित्वा द्वितीयेन शकलेनोपयमनादुपहत्य पूर्वार्धे क्षारयति । ग्रावभ्यः स्वाहा । ग्रावभ्य इदं० मेति यजमानः । अध्वर्युर्द्वितीयमपि शकलं प्रथमवत्सादयित्वा तृतीयेनोपहृत्य मध्ये प्रश्च्योतयति । प्रतिरेभ्य इदं०मेति याजमानम् । तथैव सादयित्वा चतुर्थेनोपहृत्याऽपरार्धे द्यावापृथिवीभ्या९ स्वाहा । द्यावापृथिवीभ्यामिद०ममेति यजमानः । तच्चतुर्थं शकलं उपरि सिक्तदेशं भस्मान्ते उपगूह्य पञ्चमेनोपहृत्य प्राचीनावीती भूत्वा आहवनीयस्य दक्षिणार्धे क्षारयति । पितृभ्यो घर्मपेभ्य इदम्० मेति याजमानम् । अध्वर्युर्यजमानावप उपस्पृशतः । इदं पञ्चमं शकलं बहिः सिक्तदेशं दक्षिणपरिधौ सादयित्वा षष्ठेन शकलेन महावीरपिन्वनकं सोपयमनलेपेषु सम्मृज्योत्तरार्धे क्षारयति । रुद्राय रुद्रहोत्रे स्वाहा । रुद्राय रुद्रहोत्रइदम्० मेति याजमानम् । इदं शकलक्षारणमुच्यते ॥

११३ अध्वर्युर्यजमानावप उपस्पृशतः । तत्षष्ठं शकलमुत्तरेणातीकाशान् अनन्वीक्षमाणो निरस्यति । पाप्मना सह निरयं गच्छ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । इति मन्त्रेण । अप उपस्पृश्य । ततः पञ्चशकलान् सिक्तदेशान् अद्भिः संस्पृश्याहवनीये ऽनुप्रहरति । इदं शकलानुप्रहरणमुच्यते ॥

११४ प्रतिप्रस्थातोत्तररौहिणं जुहोति । अहर्ज्योतिः केतुना जुषता९ सुज्योतिर्ज्योतिषा९ स्वाहा । इति मन्त्रेण ।

पूर्ववद्याजमानम् । आपराह्णिके तु प्रवर्ग्ये रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा । इति विशेषः अयमुत्तररौहिणहोम उच्यते ॥

११५ अध्वर्युः उत्पत्तिक्रमेणाग्नीन् परिषिञ्चति । सत्यन्त्वर्तेन परिषिञ्चामि । आपराह्णिके तु ऋतन्त्वा सत्येन परिषिञ्चामि । इति मन्त्रे विशेषः इदं गार्हपत्यादि परिषेचनमुच्यते ॥

११६ उपयमनं गार्हपत्ये नीत्वा ऽन्तरितमिति प्राकृतेन मन्त्रेण पर्यग्निं करोति । इदमुपयमनपर्यग्निकरणमुच्यते ॥

११७ सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो मा देवाः स्वस्ति सम्पारयन्तु पशुभिः । इत्युपयमनं सम्मृशति । आपराह्णिके तु अस्मिन्मन्त्रे प्रातर्यावपदस्थाने सायंयावपदस्योहः । नम ईशानाय प्रजाः पशवो मे वर्धन्तामहं यजमानो मारिषम् । गार्हपत्यस्य पश्चादुपसादनीयकूर्चे उक्तमन्त्रेण सादयति । दशहोतारं व्याचष्टे । भूर्भुवः सुवरुर्वन्तरिक्षमन्विह्यायं पन्था विततो देवयानो येनायन्नृषयः स्वर्गकामास्तेन गच्छामि परमे व्योमन् यथा न हीयेयꣳ सुकृताꣳ सकाशात् । अयमुपसादनाङ्गजप उच्यते ॥

११८ पुनः प्राङाद्रुत्य नम ईशानायेत्यादिमन्त्रेणाहवनीयस्य पश्चादुपसादनीयकूर्चे सादयति । वैकङ्कतीं समिधं तूष्णीमाहवनीये आदधाति । तया देवतयाङ्गिरस्वद् ध्रुवासीद । इत्येतेनयजुषा ताअस्य सूददोहस इत्यृचा च तां समिधमभिमृशति । इदं प्रवर्ग्योत्तरसमिदाधानमुच्यते ॥

११९ विद्युदसि विद्य मे पाप्मानम् । इत्यप उपस्पृशति । ततः प्रथमामाहुतिं जुहोति । भूः स्वाहा । इति । अग्नयहृदं० मेति याजमानम् । आपराह्णिके तु प्रवर्ग्ये । अपोपरो-





माहोरात्रियै मापास्योषा ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीः । इतिमन्त्रेण समिदाधानम् । समिदभिमर्शनं पूर्ववत् । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । इति प्रथमाहुतिः । त्यागः पूर्ववदिति विशेषः । द्वितीयादिदिनेषु पौर्वाह्णिके प्रवर्ग्ये तु । अपीपरो मारात्रिया अह्नो मा०माञ्जीः । इति समिदाधानम् । अभिमर्शनमन्त्रौ पूर्वोक्तौ । सूर्यो ज्योतिर्ज्योतिः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । इति होममन्त्रः । सूर्यायेदं०मेति याजमानम् । इति विशेषः अयं प्रवर्ग्योत्तरप्रथमाहुतिहोम उच्यते ॥

१२० उपयमनं सकृदतिवाल्यकूर्चे निधाय दक्षिणावृदावर्त्य । उपप्रेत सकुच्छध्वं मा भागिनां भागधेयं प्रमायि । समर्षीणा९ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धत्त । इति गार्हपत्यमीक्षते । इदं पूर्वाहुत्यङ्गगार्हपत्यावेक्षणमुच्यते ॥

१२१ एवं समिधि पूर्वाहुतिं हुत्वा तस्या आहुतेः पूर्वस्यां समिध्येव पूर्वाहुत्यपेक्षया ऽधिकद्रव्यां प्रत्यग्बिलया स्रुचा द्वितीयां जुहोति । प्रजापतये स्वाहा । इति । प्रजापतय इदं०मेति यजमानः । अयं द्वितीयाहुतिहोम उच्यते ॥

१२२ अध्वर्युः उपयमनं त्रिरतिवाल्यकूर्चे निधाय । वृष्टिरसि वृश्च मे पाप्मानम् । इत्यपःस्पृशति । ओषधीभ्यस्त्वौषधीर्जिन्व । इत्युपयमनलेपं कूर्चे उत्तरतो निमार्ष्टि । ओषधीभ्य इदमिति याजमानम् । प्राचीनावीती स्रुचो दक्षिणतः कूर्चे लेपमवमार्ष्टि । पितृभ्यस्त्वा पितॄन् जिन्व । इति । यजमानः प्राचीनावीती पितृभ्य इदं० मेत्याह । यज्ञोपवीत्यप उपस्पृशति । इदं कूर्चे लेपमार्जनमुच्यते ॥

१२३ उपयमनं होत्रे प्रदाय होत्रध्वर्युब्रह्मप्रतिप्रस्थातृप्रस्तोत्राग्नीध्रयजमानाः क्रमेण परस्परमुपहूयाऽऽग्नेग भक्षयन्ति ।

यजमानो होत्रादीनुपहूय प्रत्यक्षं भक्षयति । हुतᳬ हविर्मधु-हविरिन्द्रतमे ऽग्नौ पिता नो ऽसि मा मा हिᳬसीरश्याम ते देवघर्म मधुमतो वाजवतः पितुमतोऽङ्गिरस्वतः स्वधाविनो ऽशी-महि त्वा मा मा हिᳬसीः । इति । इदं घर्मभक्षणमुच्यते ॥

१२४ तत उच्छिष्टखरे आचामति । आग्नीध्र उच्छिष्टखरे उपयमनं प्रक्षाल्याऽऽहरति । अध्वर्युस्तदादाया ऽऽहवनीये निष्टप्याऽद्भिः पूरयित्वोदग्दिशि किञ्चिज्जलं प्रक्षिपति । सप्त-र्षीन् प्रीणीहि सप्तर्षीन् जिन्व सप्तर्षिभ्यः स्वाहा । इति । सप्तर्षिभ्य इदं० मेति याजमानम् । जघनेन गार्हपत्यं प्रक्षिप-ति । इदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहा । इति । अग्नये वैश्वानरायेदं० मेति याजमानम् । अन्तर्वेदि प्रक्षिप-ति । अक्षित्यामक्षिताहुतिं जुहोमि स्वाहा । इति । अक्षि-त्या इदं० मेति यजमानः । पूर्ववदग्नीन् परिषिञ्चति । वेदि-मध्ये प्राग्बिलमुपयमनं निधाय तस्मिन्सौवर्णराजतौ रुक्मौ प्रदत्तोश्चानीय हिरण्यवर्णाः शुचयः पावका इति चतसृभि-र्ऋग्भिस्ते मार्जयित्वा ऽपस्तत्रैव निनीया ऽऽज्यस्थाल्याः स्रुवे-णोपहत्य प्रतिमन्त्रं प्रायश्चित्ताहुतीर्जुहोति । प्राणाय स्वा-हा । व्यानाय स्वाहा । अपानाय स्वाहा । चक्षुषे स्वाहा । श्रोत्राय स्वाहा । मनसे स्वाहा । वाचे सरस्वत्यै स्वाहा । पूष्णे स्वाहा । पूष्णे शरसे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा । पूष्णे घृणये स्वाहा । पूष्णे नरु-णाय स्वाहा । पूष्णे साकेताय स्वाहा । नमस्ते घर्मभूपतये स्वाहा । नमस्ते घर्मभुवनपतये स्वाहा । नमस्ते घर्मभूतानां पतये स्वाहा । घर्माय स्वाहा । अश्विभ्याᳬ स्वाहा । इन्द्रा-य स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । यथालिङ्गत्यागो यजमानस्य । इति एते प्रवर्ग्यप्रा-



यश्चित्ताहुतिमन्त्रा उच्यन्ते ॥

१२५ ऋक्तो यजुष्टश्च भेषप्रायश्चित्तद्वयं दर्शपौर्णमासवद्धुत्वा सामतो यज्ञभेशप्रायश्चित्तं करिष्ये । इति यजमानेन सङ्कल्पे कृते ब्रह्मणा स्वः स्वाहेत्याहवनीये होमे कृते उपयमनमन्तर्वेदि प्राग्बिलं सादयित्वा परिघर्म्यमासन्द्यां निदधदाह । घर्मायोत्साद्यमानायानुब्रू३हि । अयं घर्मोत्सादनप्रैष उच्यते ॥

१२६ तत उपयमनं सम्राडासन्द्यां प्राग्बिलं सादयति । स्वाहा त्वा सूर्यस्य रश्मिभ्यः । इति । आपराह्णिके तु प्रत्यग्बिलं सादयति । स्वाहा त्वा नक्षत्रेभ्यः । इति । सर्वाणि घर्मपात्राणि संसाद्य । शन्नो वात इति शान्तिं जपन्ति । उपमनादीनि घर्मपात्राणि परिघर्म्यपदवाच्यानि ॥

१२७ महापुष्करं जुहूसदृशं महादण्डं पात्रमुपयमनमित्युच्यते ॥

१२८ यज्ञियकाष्ठनिर्मिते महावीरधारणार्थं मध्यभागे वर्तुले द्वे शफपदवाच्ये ॥

१२९ विकङ्कतकाष्ठनिर्मितं जुहूसदृशं पात्रं प्रचरणीपदेनोच्यते ॥

१३० गार्हपत्यस्योत्तरतः प्रादेशपरिमाणं सिकतानिर्मितं मण्डलं प्रवृञ्जनीयखर इत्युच्यते ॥

१३१ तथैवाहवनीयस्योत्तरतः कृतं मण्डलमुद्वासनीयखर इत्युच्यते ॥

१३२ यस्मिन्महावीरे घर्मः पच्यते स प्रचरणीयमहावीरपदवाच्यः ॥

१३३ उप समीपे शयाते इति व्युत्पत्त्या द्वौ महावीरावुपशयपदार्थौ ॥

१३४ तत उपसदिष्टिः। उपसदिष्ट्या यक्ष्ये। इति सङ्कल्पयति। अयमुपसदिष्टिसङ्कल्प उच्यते॥

१३५ अग्निः सोमो विष्णुरिति प्रधानदेवताः। आज्यं द्रव्यम्। अध्वर्युः स्फ्यमाददान आह। अग्नीन्मदन्तीरधिश्रय हविरधिश्रयैस्त्रुपसीद। अयं हविरधिश्रयणप्रैष उच्यते॥

१३६ अत्रेध्माबर्हिषोराहरणं नास्ति। शुल्बप्रभृति कर्म समन्त्रकं प्रकृतिवत्करोति। इध्मसम्भरणमन्त्रे ततस्त्वां चतुर्दशधेत्यूहः। वेदं परिभोजनीयांश्च कृत्वा कर्मणे वामित्यादि करोति। आतिथ्येष्ट्यन्त एव प्रस्तरे बर्हिः परिधिषु शाकलानीत्यादिमन्त्रवत्कृतं चेत्तदेदानीं पूर्वोक्तप्रैषमुक्त्वा कर्मणे वामित्यादि करोति। अग्निपरिस्तरणानन्तरं स्फ्यमग्निहोत्रहवणीं जुहूमुपभृतं स्त्रुवमाज्यस्थालीं स्त्रुवसंसादनार्थं पात्रान्तरं वेदं वेदाग्राणीति पात्राण्यासादयति। ब्रह्मोपवेशनम्। पृष्ट्यास्तरणम्। पवित्रकरणम्। यजमान वाचं यच्छेति प्रैषः। वेषाय त्वेत्यग्निहोत्रहवणीमादाय। प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इति प्रतितपति। अग्निहोत्रहवण्यां मदन्तीरानीय प्रोक्षणीवत्संस्कृत्य शुन्धध्वमित्यादिप्राकृतमन्त्रेणोत्तानानि पात्राणि प्रोक्ष्य आज्यस्थाल्यां प्राकृतमन्त्रेणाज्यमानीय तथैव पर्यग्नि कृत्वा अयं वेद इत्यादिना मन्त्रेण वेदमादाय प्रकृतिवद्वेदिं सम्मार्ष्टि। देवस्य त्वेत्यादिना स्फ्यमादाय इन्द्रस्य बाहुरसीत्यादिना सम्मृश्य पृथिव्यै वर्मासीत्यादिनाऽस्तीर्णबर्हिष उपरि दर्भं निधाय स्तम्बयजुर्हरति। नात्रमन्त्रेण वेदिखननम्। अतएव तन्मन्त्रोपि न। स्फ्यं प्रकृतिवत् स्तब्ध्वा। मदन्तीरासाद्येध्माबर्हिरुपसाद्य स्त्रुवं च सम्मृड्ढि हविषो देꣳहि। इतिसम्प्रेष्यति। आग्नीध्रः स्त्रुवं स्त्रुवमन्त्रेण सम्मृज्य स्त्रुचौ ध्रौवमन्त्रेण सम्मार्ष्टि। अध्वर्युः ध्रौवमन्त्र-

णाष्टकृत्वो जुह्वां गृह्णाति । उपभृति चतुर्वारम् । आज्यस्था-ल्याज्यं पात्रान्तरे ऽवनीय तस्यामाज्यस्थाल्यां सकृत् ध्रौव-मन्त्रेण गृहीत्वा पात्रान्तरं स्रुवं च वेद्याः पश्चान्निदधाति । ततो वेद्यां स्रुचौ स्वस्वमन्त्रेणासाद्य ध्रौवमन्त्रेण तूष्णीं वा ऽऽआज्यस्थालीमासादयति । एता असदन्निति मन्त्रे एते असदतमिति ता विष्णो इत्यत्र ते विष्णो इति चोहः । पात्रा-न्तरस्याज्येन स्रुवमभिपूर्य स्योनो मे सीदेत्यादिना स्रुवां दक्षिणतः स्थापनादि करोति । ऋषभो ऽसीत्यादिना आ-ज्यस्थाल्यामाज्यमवनयति । यजमानो यन्मे अग्न इत्यादि-मन्त्रं जपति । अध्वर्युः प्रदक्षिणमावृत्य जघनेन गार्हपत्य-मुपविश्य देवपत्नीर्व्याचष्टे । सेनेन्द्रस्य । धेना बृहस्पतेः । प-थ्या पूष्णः । वाग्वायोः । दीक्षा सोमस्य । पृथिव्यग्नेः । वसूनां गायत्री । रुद्राणां त्रिष्टुप् । आदित्यानां जगती । विष्णोरनुष्टुप् । वरुणस्य विराट् । यज्ञस्य पङ्क्तिः । प्रजापते-रनुमतिः । मित्रस्य श्रद्धा । सवितुः प्रसूतिः । सूर्यस्य मरीचिः । चन्द्रमसो रोहिणी । ऋषीणामरुन्धती । पर्जन्यस्य विद्युत् । चतस्रो दिशः । चतस्रो ऽवान्तरदिशाः । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च । आपश्चौषधयश्च । ऊर्क् च सूनृता च देवानां पत्नयः । एते मन्त्रा देवपत्नीसं-ज्ञकाः ॥

१३७ ततः अग्नये समिध्यमानायानुब्रूहि । इत्यादि । इध्मं सकृद्वा त्रिर्वा ऽभ्यादधाति ॥ समिधं न परिशिनष्टि । अनुयाजानामभावात् । वेदेनोपवाजयति । आज्यस्थाल्याः स्रुवेणाज्यमादायस्रौवाघारेण प्रचर्य आग्नीध्रं प्रेष्यति । अ-ग्नीदग्नीन् त्रिस्त्रिः सम्मृड्ढि । इति । नाऽत्र जौहव आघा-रो होता देवान्यजस्मीद होतः । इत्ययमत्र

अग्नये इत्युपांशु । अनुब्रूहि इत्युच्चैः । अत्याक्रम्याऽऽश्राव्य प्रत्याश्राविते अग्निं इत्युपांशु यज इत्युच्चैराह । होतुर्वषट्-कारे आहवनीयस्य पूर्वार्धेऽर्धमाज्यं जुहोति । तत्रैव स्थितः सन्नर्धेनाज्येन मध्ये सोमं यजति । उपभृत्स्थमाज्यं जुह्वां समावपमान आह । विष्णवे ऽनुब्रूहि । इति वषट्कृते प-श्चात्सर्वं जुहोति । सर्वत्र दृंहिधरसीत्यादिना यजमानोऽनु-मन्त्रयते । यथालिङ्गं त्यागं च पठति । उदङ्ङत्याक्रम्य यथा ऽयतनं स्रुचौ सादयति । इयमुपसदिष्टिरिति गीयते ॥

१३८ ततोऽग्नीन्मदन्त्यापाइः इत्यादि निह्नवान्तं पूर्व-वत् । ततः सव्यहस्ते प्रस्तरं धृत्वा आज्यस्थाल्याज्येन पूर्णं स्रुवं प्रस्तरोपर्यग्रभागे इषुवत् धृत्वा प्रथमामुपसद जुहोति । या ते अग्ने याशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधी-न्त्वेषं वचो अपावधीᳶं स्वाहा । इति । अग्नय इदं० मेति यजमानः । परिधिषु शकलानुपसङ्गृह्णाति । प्रस्तरे बर्हिर्या-वन्मात्रं सङ्गृह्णाति । तदुभयं स्यन्द्यया ऽभिग्रथ्या ऽऽहवनीये ऽतिबाल्याद्भिरभ्युक्ष्योत्तरतः सादयति । अयमुपसद्धोम उ-च्यते ॥

१३९ प्रथमायामुपसदि यत्र स्रुचः सादितास्ततः प्राक् द्वितीयायामुपसदि सादनीयाः । ततोऽपि प्राक् तृतीयायां त्वरमाणा इव ऋत्विज उपसद्भिः प्रचरेयुः । न कृताकृतमाद्रि-येरन् । अग्रेण शालां तिष्ठन् सम्प्रेष्यति । सुब्रह्मण्य सुब्रह्म-ण्यामाह्वय त्रिस्तनव्रतं प्रयच्छत । इति । अयं त्रिस्तनव्रत-प्रैषः उच्यते ॥

१४० प्रतिप्रस्थाता ऽध्वर्युरन्यो वा कश्चिद्यजमानाय व्रतं प्रयच्छति । यजमानो मध्यन्दिने परिश्रित्य व्रतयति ।



या ते अग्ने रुद्रिया तनूस्तया नः पाहि तयस्यास्ते स्वाहा इति । समानमन्यत् । स्थूणाशङ्कुनिखननमृदासन्द्यभ्रिखरकरणानि वर्जयित्वा । एवमापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्योपनिष्क्रम्य सम्प्रेष्यति सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिस्तनव्रतं दोहयत । इति अयं त्रिस्तनव्रतदोहनप्रैष उच्यते ॥

१४१ उपसमिन्धनवेलायामग्नीन् ज्योतिष्मत इत्यादि करोति । त्रिस्तनव्रतमर्धरात्रे प्रयच्छति । अपररात्रे सम्प्रेष्यति । द्विस्तनव्रतमर्धरात्रे प्रयच्छति । अपररात्रे सम्प्रेष्यति । द्विस्तनव्रतं दोहयत । इति । अयं द्विस्तनव्रतदोहनप्रैष उच्यते ॥

१४२ पुनरग्नीन् ज्योतिष्मतइत्यादि । उदितआदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । या ते अग्ने रजाशया तनू०वर्षीं२ स्वाहा । इति मध्यमामुपसदं जुहोति । अयं मध्यमोपसद्धोम उच्यते ॥

१४३ उपनिष्क्रम्य सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं प्रयच्छत । इति । कश्चिद्व्रतं प्रददाति । अथ महावेदिप्रकारः । आहवनीयपूर्वशङ्कोः सकाशात् षट् प्राञ्चि पदानि प्रक्रम्य शालामुखीयशङ्कुं निहन्ति । तस्माच्छङ्कोः सकाशात् षट्त्रिंशत्पदेषु यूपावटीयं शङ्कुं निहन्ति । शालामुखीयाद्दक्षिणोत्तरयोः पञ्चदशपदे क्रमेण शङ्कुं निहन्ति । तौ महावेद्याः श्रोणिस्थानम् । यूपावटीयात् द्वादशपदे दक्षिणोत्तरयोः क्रमेण द्वौ शङ्कू निहन्ति । तौ महावेद्या अंसस्थानम् । अक्ष्णयामानेन प्रमाय समन्तं स्पन्द्यया रज्ज्वा महावेदिं परिस्तनोति । प्राकृतवेदिवन्मध्यसूत्रं पृष्ठ्यासंज्ञकम् । इयं महावेदिरित्युच्यते ॥

१४४ यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्र-

पदानि प्रक्रम्य मध्यम औत्तरवेदिकः शङ्कुः । तस्मात्पञ्च दक्षिणा पञ्चोदञ्चि क्षुद्रपदानि प्रक्रम्य शङ्कू निहन्ति । तौ उत्तरवेद्याः श्रोणिस्थानम् । यूपावटीयात्प्रत्यगर्धं प्रक्रम्य चत्वार्युदञ्चि प्रक्रम्य तावंसौ । अरुणया प्रमायस्पन्द्यया परितनोति । इयं सौमिक्युत्तरवेदिरुच्यते ॥

१४५ मध्यमादौत्तरवेदिकात् षट् प्रत्यञ्चि पदानि प्रक्रम्य दक्षिणाग्रमं प्रक्रम्य तत्र स्फ्यं निदधाति । स देश उपरवाणां काल उच्यते ॥

१४६ महावेद्या उत्तरांसीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि पदानि प्रक्रम्य उदक् त्रयोदशं प्रक्रामति । स सौमिक उत्कर उच्यते ॥

१४७ एवं मीत्वा वेदादानवेदिसम्मार्जने केचिदिच्छन्ति । महावेदिं परिस्तीर्य उपरवाणां काले स्तम्बयजुर्हरति । पाणी संमृश्य स्फ्यादानादि पशुबन्धवत्करोति । महावेद्याः पूर्वं परिग्राहं परिगृह्णाति । इमां नराः कृणुत० मादित्यवतीं विश्वदेव्यावतीं बर्हिर्न्यु(?)च्छयेत् । महावेद्याः सकाशात् आग्नीध्रस्त्रिर्मृदं हरति । अथाग्रेण शालां तिष्ठन् सम्प्रैषमाह । वेदिकारा वेदिं कल्पयत प्रस्थलानि भिन्दत प्रतिनिम्नान् पूरयत किंशारूणि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठत । इत्ययं वेदिकारप्रैष उच्यते ॥

१४८ अध्वर्युपुरुषाः स्फ्यपरशवस्त्रादिभिस्तथा कुर्वन्ति । अध्वर्युर्महावेद्या उत्तरांसीयाच्छङ्कोः-सकाशाद्वेद्यन्तेन त्रीणि प्रत्यञ्चि पदानि प्रक्रम्योदगर्द्धे पदे प्रक्रामति । स देशश्चात्वालमध्य उच्यते ॥

उदगेकमेव चात्वालदक्षिणान्तो वा भवति । तच्चात्वालं परिलिखति । पशुवदुत्तरनाभिप्रच्छादनान्तं करोति ।

आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य उपनिष्क्रम्य सम्प्रेष्यति । सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयत । इति । तदर्धरात्रे प्रयच्छति । समानमन्यत् । अग्नीन् ज्योतिष्मत इत्यादि । अपररात्रे संशास्ति । एकस्तनव्रतं दोहयताग्नीन् ज्योतिष्मत इत्यादि । उदित आदित्ये उक्तप्रकारेण वाग्विसर्गानन्तरं उत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । या ते अग्ने हराशय तनू०वर्षी॰ स्वाहा । इत्युपसद्धोममन्त्रे विशेषः । शालाया अग्रे तिष्ठन् सुब्रह्मण्यामाह्वाऽर्धस्तनव्रतं प्रयच्छत इत्याह । कश्चिद्यजमानाय व्रतं प्रयच्छति । तदानीमेवापराह्णिके प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य । सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्यावृताप्रवर्ग्यं॰ सं॰सादयोद्वासनाय । इति । अयं प्रवर्ग्योद्वासनमेव उच्यते ॥

१५० पदं त्रेधा विभज्य नमो वाच इति शान्तिं पठन्ति । अयं प्रवर्ग्योत्तरशान्तिपाठ उच्यते ॥

१५१ ततः प्रतिप्रस्थाता ऽग्रेणाहवनीयं तृणानि संस्तीर्य तदुपरि परिघर्म्यं सादयति । तथाहि । प्रवृञ्जनीयोद्वासनीयौ खरौ पृथक् सतयोः स्थापनीयौ । आग्नीध्र स्तत्रैवोच्छिष्टखरं सतेस्थापयति । दक्षिणद्वारेण शालाया बहिर्गत्वा तं खरं मार्जालीयदेशे न्युप्य यथागतमेति । अध्वर्युः शालाया द्वाराणि परिश्रित्य प्राग्वंशएव पत्नीमुदग्दशेन वस्त्रेणाच्छाद्य अग्नीन् परिस्तीर्य दक्षिणतो ब्रह्मयजमानावुपवेश्य गार्हपत्ये आज्यं संस्करोति । प्रतिप्रस्थाता आहवनीये शलाकमिध्ममादीप्य मुखदघ्ने धारयन् पुरस्तात्प्रत्यङ्मुखस्तिष्ठति । अध्वर्युः पश्चात् प्राङ्मुखस्तिष्ठन् स्रुवाहुत्या ऽभिजुहोति । घर्म या ते दिवि शुग्या गायत्रे छन्दसि या ब्रा-

क्षेण या हविर्धाने तां तएतेनावयजे स्वाहा । इति । घर्माये॑दम्० मेति यजमानः । प्रतिप्रस्थाता तमिध्ममग्नौ प्रक्षिप्यान्यमिध्ममादीप्य नाभिदघ्ने धारयति । अध्वर्युः द्वितीयामाहुतिं जुहोति । घर्म या ते ऽन्तरिक्षे शुग्या त्रैष्टुभे छन्दसि या राजन्येया ऽग्नीध्रे तां तएतेनावयजे स्वाहा । इति । प्रतिप्रस्थाता तमिध्मं प्रक्षिप्याऽपरमादीप्य जानुदघ्ने धारयति । अध्वर्युः तृतीयामाहुतिं जुहोति । घर्म या ते पृथिव्याᳫ शुग्या जागते छन्दसि या वैश्ये या सदसि तां तएतेनावयजे स्वाहा । इति । उभयत्र त्यागः प्रथमवत् । प्रतिप्रस्थाता तमग्नौ प्रास्यति । अयं इध्मप्रदीपनहोम उच्यते ॥

१५२ ततो ऽध्वर्युर्द्वाराणि विवृत्य प्रावर्गिकं सर्वं सम्भारमादाय सर्वैः सह पूर्वया द्वारोपनिष्क्रामति । अनु नो ऽद्यानुमतिर्यज्ञं० शुषे मयः । अन्विदनुमते त्वं०तारिषः । इति मन्त्रद्वयमध्वर्युरेव पठति । अध्वर्युः महावेदिं पद्भ्यामवक्रम्य । प्रस्तोतः साम गाय । इति प्रेष्यति । प्रस्तोता साम गायति । निधनं सर्वे पठन्ति । दिवस्त्वा परस्पाया अन्तरिक्षस्य तनुवः पाहि पृथिव्यास्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे । इति महावेदिमभिक्रम्य मध्यभागे द्वितीयं निधनं पठन्ति । ब्रह्मणस्त्वा परस्पायाः क्षत्रस्य तनुवः पाहि विशस्त्वाधर्म्मणा वयमनुक्रामाम सुविताय नव्यसे कृत्युपरदेशं गत्वा तत्र तृतीयं निधनं पठन्ति । प्राणस्य त्वा परस्पायै चक्षुषस्तनुवः पाहि श्रोत्रस्य त्वा धर्मणा वयमनुक्रमाम सुविताय नव्यसे । इत्यभिक्रम्योत्तरवेदिसमीपे तिष्ठन्ति । इदं महावेदिगमनमुच्यते ॥

१५३ ततः प्रेष्यत्याग्नीध्रम् । अनेनोदकुम्भेन सन्ततया धारया त्रिःप्रदक्षिणं परिषिञ्चन् परीहि । इति । आग्नीध्रः



सप्रचरणीमुत्तरवेदिं परिषिञ्चन्नेत्रिः प्रदक्षिणं पर्येति । अध्वर्युः परिषेककाले यजमानं वाचयति । वल्गुरसि शंयुधाया शिशुर्जनधायाः शम्ब वक्षि परि च वक्षि । इति । आग्नीध्रः । कुम्भं निधाय यथेतन्त्रिः पर्येति । अध्वर्युः । चतुस्रक्तिर्नाभिर्ऋतस्य सदो विश्वायुः शर्मसप्रथाः । अपद्वेषो अपह्वरोऽन्यद्व्रतस्य सश्चिम । इत्युत्तरनाभिमभिमृशति । प्रवृञ्जनीयौ द्वौ खरावुत्तरनाभेरुत्तरतोऽवकीर्य धृष्टिभ्यां प्रागायतं तयोः खरं कृत्वा तत्र सुवर्णशकलं निधाय प्राग्ग्रीवमुत्तरलोम कृष्णाजिनं समास्तीर्य रौहिणपिष्टैर्मुञ्जप्रलवैः सिकताभिश्चानुप्रकीर्य प्रचरणीयं महावीरं शफाभ्यां परिगृह्य । घर्मैतत्ते ऽन्नमेतत्पुरीषं तेन वर्धस्व चाचचाप्यायस्व । वर्धिषीमहि त्वा वयमाचप्यासिषीमहि । इति मन्त्रेण मधुमिश्रेण दध्ना पूरयति । महीनां पयोऽसि विहितं देवत्राज्योतिर्मा असि वनस्पतीनामोषधीनाᳪं रसो वाजिनं त्वा वाजिनोवनयामः । इति पुनस्तेनैवाऽभिपूरयति । इदं प्रचरणीयमहावीरपरिपूरणमुच्यते ।

१५४ ततः ऊर्ध्वं मनः सुवर्गम् । इति प्रचरणीयं महावीरं खरस्य पूर्वार्धे सादयति । तं परितो घर्मपात्रैः परिचिनोति । तद्यथा । छिद्रवन्ति पात्राणि मधुमिश्रेण दध्ना पूरयित्वा । छिद्ररहितानि तु तेन द्रव्येण सम्मृज्य । वेदरज्जुदामासन्दीधवित्रादीनि विस्रस्य । आज्यस्थाल्या उपरि धवित्रम् । समिधो दश दश द्विवारं उपशयो महावीरौ शफाभ्यां परिगृह्य सादयति एतत् घर्मपात्रोत्सादनार्थं सादनमुच्यते ।

१५५ उपप्रचरणीं रुक्मौ पिन्वने मौञ्जमेव च । शफौ रौहिण हवनी समिधः कुशवेदकम् । स्थूणोपयमरज्जू च

परिष्यश्चौ च धृष्टिके । षाण्न समिधः स्थालीं पवित्रं च कपालके । स्रुवं कुशमयं वेदमासन्दीं मृदमेव च । इदं सार्ध-कारिकाद्वयं उत्सादनार्थं घर्मपात्राणामासादने क्रमप्रतिपादकम् । घर्मैतत्ते ऽन्नमेतत्पुरीषं तेन वर्धस्व चाचप्यायस्व च वर्धिषीमहि चाप्यासिषी-महि । इति मन्त्रेण मृदं सिकतामुञ्जरौहिणैरनुप्रकिरति । ततः सर्वाणि घर्मोपकरणानि प्राचीनग्रीवेणोत्तरलोम्ना कृष्णाजिनेनाऽऽच्छादयति इदं घर्मपात्राच्छादनमुच्यते ।

१५६ तदनन्तरम् । अयं यः पुरुषरूपो ऽसि स न आस्येन तिष्ठसि नोर्ध्वो न तिर्यङ्विधां ते ऽनुविहितोऽस्मि विधां मे ऽनुविहितो ऽस्मि स त्वं नाकमारोह सह यजमानेन साकम् । इत्यनेन मन्त्रेण आसादितघर्मोपकरणान्युपतिष्ठते । एतदासादितघर्मोपकरणोपस्थानमित्युच्यते ।

१५७ आस्कान्द्यौः पृथिवीमस्कानृषभो युवा गाः । स्कन्नेमा विश्वा भुवनास्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजन्यास्कन्नाज्जायते वृषास्कन्नात्प्रजनिषीमहि । दध्ना मधुमिश्रेण मुष्टिना ऽवोक्ष्य । प्रस्तोतर्वार्षाहरꣳ साम गायेष्टा-होत्रीयञ्च । इति प्रस्तोतारं प्रेष्यति । अयं घर्मोद्वासनसामप्रैष इत्युच्यते ।

१५८ अनेनोदकुम्भेनसन्ततया धारया त्रिःप्रदक्षिणं परिषिञ्चन् परीहि इत्याग्नीध्रं प्रेष्यति । आग्नीध्रः पूर्ववत्प्रदक्षिणं परिषिच्य कुम्भं निधाय त्रिरपसलैः पर्येति । तदानी-मध्वर्युर्यजमानं वाचयति । रन्तिर्नामासि दिव्यो गन्धर्वः । तस्य ते पद्वद्धविर्धानम् । अग्निरध्यक्षाः । रुद्रो ऽधिपतिः । समहमायुषा । सं प्राणेन । सं वर्चसा । सं पयसा । सं गौपत्येन । सꣳ रायस्पोषेण । व्यसौ । यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अचिक्रदद्वृषा हरिः । महान्मित्रो न दर्शतः । सꣳ सूर्येण रोचते ।



चिदसि समुद्रयोनिः । इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव आनिषत्तः । नमस्ते अस्तु मा मा हिंसीः । विश्वावसुं सोमगन्धर्वम् । आपो ददृशुषीः । तदृतेनाव्यायन् । तदन्ववैत् । इन्द्रो रारहाण आसाम् । परिसूर्यस्य परिधीं रपश्यत् । विश्वावसुरभितन्नो गृणातु । दिव्यो गन्धर्वो रजसो विमानः । यद्वा घासत्यमुत यन्न विद्म । धियो हिन्वानो धिय इन्नो अव्यात् । सस्निमविन्दच्चरणे नदीनाम् । अपावृणोद्दुरो अश्मव्रजानाम् । प्रासां गन्धर्वो अमृतानि वोचत् । इन्द्रो दक्षं परिजानादहीनाम् । यजमानो गार्हपत्यमुपतिष्ठते । एतत्त्वं देव घर्म देवो देवानुपागाः । इदमहं मनुष्यो मनुष्यान् । सोमपीथानुमेहि । सह प्रजया सह रायस्पोषेण । इति यजमानघर्मोपस्थानमित्युच्यते ।

१५९ ततोऽञ्जलिनाऽपो गृह्णाति । सुमित्रा न आप ओषधयः सन्तु । इति । दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । इति ता अपो नैर्ऋत्यां दिशि प्रक्षिपति । अप उपस्पृश्यादित्यमुपतिष्ठते । उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवन्देवत्रा सूर्यमगन्मज्योतिरुत्तमम् । इति । अध्वर्युः प्रवर्ग्यमवकाभारेण प्रच्छाद्य गोमारमादिशति । वयोभ्यो महावीरं गोपाय प्रस्तोतः श्यैतेनोन्वेहि । अयं प्रैषो गोमादेश इत्युच्यते ।

१६० ततो यथेतमेत्य गार्हपत्ये उदुत्यमिति चित्रमिति च द्वाभ्यामृग्भ्यां स्रुवाहुती हुत्वा । सर्वे शालामुखीयमुपतिष्ठन्ते । इम मूषुत्यमस्मभ्यंसनम् । अग्ने देवेषु प्रवोचः । इति आग्नीध्रीयदेशे उत्तरां शान्तिं पठति । इदमन्तिमप्रवर्ग्यसम्बन्धि शालामुखीयोपस्थानमुच्यते ।

१६१ इदं प्रवर्ग्यमित्युच्यते ।

१६२ अथाग्नीषोमीयः पशुः । तस्य निरूढपशुवद्देवतासङ्कल्पः । आतिथ्याबर्हिरेव पशुविधम् । तेनैव प्रस्तरेण सह शुल्वादि सम्भरति । ते एव विधृती प्रज्ञाते निधाय तैरेव परिधिभिरिध्मं सम्भरति । ततस्त्वां त्रयोविंशतिधेत्यूहः परिभोजनीयान् वेदं च कृत्वा महाबर्हिः सम्भृत्य अन्यानपि तत्तदर्थमुष्टीन् सम्भृत्य । निरूढपशुवदग्नीषोमीयस्य पशोः शाखां समन्त्रां तूष्णीं प्लक्षशाखाम् । एवं सवनीयस्य द्वे शाखे । दधिग्रहाय तूष्णीमेकां शाखां मैत्रावरुणार्थं समन्त्रामेकां शाखाम् । सवनीयाऽऽमिक्षार्थं समन्त्रां दधिघर्मार्थं शतातङ्क्यार्थमाशिरार्थं च तूष्णीम् । इत्यष्टौ शाखाः क्रमेण युगपद्वाऽऽहृत्य इषे त्वेत्यादि यजमानस्य पशून्पाहि इत्यन्तम् । ततः अभ्यादधाताध्वरमित्यादि अग्निप्रणयनम् । पदतृतीयं शालामुखीयनिकटे तृतीयमुपयमनीषु । तृतीयमञ्जनार्थं निदधाति । अग्निप्रणयनकाले कश्चिद्ग्रावाणमादायोत्तरतस्तिष्ठति । अग्नौ प्रणीते सति तेनैवागत्यासन्द्यां स्थापयति । ततः स्वयं होमान्तं करोति । ततो ब्रह्माणं दक्षिणत उत्तरवेदेर्मन्त्रेणोपवेश्य । अध्वर्युः पाणी सम्मृश्य उत्तरपरिग्रहादि करोति । उपरवदेशे स्फ्यं स्तब्ध्वा सम्प्रैषमाह । प्रोक्षणीरासादयेध्माबर्हिरुपसादय । इति । तत उपरवदेशे प्राकृतमन्त्रेण स्फ्यमुदस्यति । इदं महावेदिकरण मित्युच्यते ॥

१६३ आग्नीध्रः प्रोक्षणीरासाद्य महाबर्हिरुत्तरवेदिसमिन्धनार्थं लौकिकमिध्ममासादयति । अध्वर्युः आहृताभिः प्रोक्षणीभिर्महावेदिं बर्हिरिध्मञ्च तूष्णीं प्रोक्षति । अपूर्वबर्हिर्षुष्टिं प्रोक्ष्य तेन पृष्ठ्यां प्रच्छाद्य अनसी प्रक्षाल्य अन्तरेण

धात्वालोत्करौ प्रपाद्य महावेद्यां पृष्ठ्याया दक्षिणत उत्तरतश्च अरत्निमात्रं विहाय प्राचीस्थापयित्वा । उद्धृतफलकं दक्षिणम् । अनुद्धृतफलकं उत्तरं च शकटं प्रोक्षति । वैष्णवीविष्णवे शुन्धेयाम् । इति । एहि यजमान इति यजमानमामन्त्र्य पूर्वया द्वारा शालां प्रपाद्य शालामुखीयआज्यं विलाप्य उत्पूय युञ्जते मन इत्यृचा अन्वारब्धे यजमाने चतुर्गृहीतेनाहवनीये जुहोति । सवित्र इदं० अपरं चतुर्गृहीतं गृहीत्वा सस्रुवामाज्यस्थालीं स्फ्यमुदपात्रं बर्हिर्हिरण्यमादाय । एहि यजमानेति यजमानमामन्त्र्य अध्वर्युयजमानो ऽनूची पत्नी पदतृतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य दक्षिणस्यां वर्तन्यां स्फ्येनोद्धत्यावोक्ष्य हिरण्यन्तत्र निधाय परिस्तीर्य परिषिच्य चतुर्गृहीतमाज्यं इदं विष्णुरित्यृचा जुहोति । अयं होमो दक्षिणहविर्धानवर्तनीहोम इत्युच्यते ॥

१६४ पदपांसूनामधोन् पत्न्यञ्जलावोप्य संस्त्रावेणाभिघारयति । पत्नी प्राचोत्तानेन पाणिना दक्षिणमक्षधुरमनक्ति । आनो वीरो जायतां कर्मण्यो यꣳ सर्वे ऽनुजीवाम यो बहूनामसद्वशी । इदं दक्षिणधूरञ्जनमित्युच्यते ॥

१६५ अध्वर्युः अवरं चतुर्गृहीतं गृहीत्वा उत्तरस्य हविर्धानस्योत्तरस्यां वर्तन्यां स्फ्येनोद्धत्वाऽवोक्ष्य हिरण्यं निधाय परिस्तीर्य परिषिच्याऽभिजुहोति । इरावती धेनुमती हि भूतꣳ सूयवसिनीमनवे यशस्ये । व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहा । इति विष्णव इदमिति यजमानस्य त्यागः । अयमुत्तरहविर्धानोत्तरवर्तनीहोम इत्युच्यते ॥

१६६ ततः सर्वान् पदपांसूनध्वर्युः पत्न्यञ्जलावोप्याभिधारयति । पत्नी पूर्ववद्दक्षिणमनधुरमनक्ति । आनो वीरो जायतां कर्मण्यो यꣳ सर्वे ऽनुजीवाम यो बहूनामसद्वशी । इति । इदमुत्तरास्वधूरञ्जनमित्युच्यते ॥

१६७ ततोऽध्वर्युराज्यस्थाल्यादीनि प्रतिप्रस्थात्रे प्रदाय पत्नीं नयति । होतारं ह्वयन्ति । अथ हविर्धाने हस्ताभ्यां परिगृह्य सम्प्रैषमाह । हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि । इति । अयं हविर्धानप्रवर्तनप्रैष इत्युच्यते ।

१६८ होता प्रेषितः सम्नुवचनं पठति । तस्य प्रथमायामृचि त्रिरुक्तायां प्रवर्तयति । प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् । इति मन्त्रेण । हविर्धानयोः प्रवर्तनकाले अक्षशब्दे जाते सति जपति । सुवाग्देवदुर्याꣳ आवद देवश्रुतौ देवेष्वाघोषेथाम् । इति । अध्वर्युः प्रतिप्रस्थाता चोत्तरेण हविर्धाने परीत्य मध्यमादौत्तरवेदिकाच्छङ्कोस्त्रीन् प्रतीचः प्रक्रमान् प्रक्रम्योपस्तम्भनयोरुपरि अनसोरग्रे स्थापयतः । तत्र दक्षिणस्य हविर्धानस्याध्वर्युरुत्तरस्य प्रतिप्रस्थाता । अत्र रमेथां वर्ष्मन् पृथिव्याः । इति मन्त्रेण । इदमनसोरुपस्तम्भने स्थापनमुच्यते ।

१६९ अध्वर्युः । दिवो वा विष्णवुत वा पृथिव्यामहो वा विष्णवुतवाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात । इति दक्षिणतो मेथीं निहन्ति । विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि । यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः । इतिमेथीमनसा सह बध्नाति । एवमेव प्रतिस्थातोत्तरहविर्धानस्योत्तरतो मेथीं निहत्य एव मेव बध्नाति । इदं मेथ्यां हविर्धानबन्धनमित्युच्यते ॥

१७० अध्वर्युः दक्षिणहविर्धानस्याग्रभागादरत्निमात्रे गर्त्तं खात्वा तस्य दक्षिणोत्तरयोर्युगान्तार्जवेन गर्तद्वयं खनति । एवं प्रतिप्रस्थाता उत्तरहविर्धानस्योत्तरतो गर्तत्रयं खनति । एवं सति षट् गर्ताः सम्पद्यन्ते । एवमेव षट् पश्चात् हविर्धानयोः ततो द्वादशगर्ता भवन्ति । तेषु गर्तेषु प्राचीनकर्णाः स्थूणा उच्छ्रित्य तासु उदञ्चौ वंशौ प्रोह्य । विष्णो रराटमसि । इति पुरस्ताद्रराटीं बध्नाति । रज्जुर्विशेषो रराटीत्युच्यते ।

१७१ विष्णोः पृष्ठमसि । इति मध्यमं छदिरधिनिदधाति । विष्णो श्न्यप्त्रे स्थः । इति दक्षिणोत्तरयोर्द्वे छदिषी युगपन्निदधाति । ततश्चतुर्दिक्षु परिश्रित्य प्राचीं प्रतीचीं च द्वारौ कृत्वा दक्षिणे द्वार्बाहौ कुशमुष्टिमुपनिगृह्य । विष्णोः स्यूरसि । इति दर्भेण स्यन्द्यां निक्षिपति । विष्णोर्ध्रुवमसि । इति ग्रन्थिं करोति । तं विस्रस्य सम्प्रेष्यति । अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत । इति । प्रतिप्रस्थाता एवमुत्तरे द्वार्बाहौ करोति एवमपरद्वार्बाह्वोः अध्वर्युप्रतिप्रस्थातारौ कुरुतः । अयं हविर्धानगृहनिर्मितिप्रकार उच्यते ।

१७२ अध्वर्युः । वैष्णवे त्वा । इति हविर्धानमभिमृशति ।। इदं निर्मितं हविर्धानयोः स्थापनार्थंगृहं प्राक् प्रत्यग्द्वारं यत्तदपि हविर्धानमित्युच्यते ।

१७३ ततः शालामुखीयाच्छङ्कोरनुस्पन्द्यं षट् प्राचः प्रक्रम्य दक्षिणतः सप्तमं प्रक्रमं प्रक्रम्य अभ्रिमादत्ते देवस्य त्वेत्यादिमन्त्रेण अभ्रिरसि नारिरसीति मन्त्रेण तामभिमन्त्रयते । परिलिखितमित्यादिमन्त्रेण तया ऽभ्र्या औदुम्बर्यवटं त्रिःपरिलिखति । अप उपस्पृश्य सम्प्रेष्यति । उद्गातरेहीममौदुम्बर्यवटं खन प्राक् पुरीषमुद्वपतात् । इति अवमौदुम्बर्यवटखननप्रैष उच्यते ।

१७४ उद्गाता तथा करोति । शालामुखीयाच्छङ्कोरेकं प्रक्रमं त्यक्त्वा तत आरभ्य दशपदं पूर्वापरं अष्टादशारत्निदक्षिणोत्तरं दीर्घचतुरस्रं सदो विमाय त्रीणि गर्तान् खात्वा दक्षिणस्य हविर्धानस्य पुरोऽक्षमुपरवान् विमाय सम्प्रेष्यति । उन्नेतरेहीमानुपरवान् खनप्रादेशान्तरपादान् बाहुमात्रान्खातो ऽसम्भिन्दन्नुपरिष्टादधस्तात्संतृणत्तु । इत्ययमुपरवखननप्रैष उच्यते ।

१७५ उन्नेता यथोक्तं करोति । उपरवपुरीषं दक्षिणस्य हविर्धानस्य पुरस्तान्न्युप्य चतुरस्रं खरं सिकताभिराश्लिष्टं कृत्वा देवस्य त्वेत्यभ्रिमादाय अभ्रिरसीत्यादिना यूपावटं परिलिखितमित्यादिना परिलिख्य सम्प्रेष्यति । आग्नीदेहीमं यूपावटं खनोपरवसम्मितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमति खनतात् । इति । ततः प्रतिप्रस्थाता औदुम्बरीं स्थूणां निखातादूर्ध्वं यजमानेन समं विमायाधस्तात्परिवासयति । अच्छिन्नो रायः सुवीरः । इति । तां प्रक्षाल्य चात्वालोत्करयोर्मध्यमार्गेण प्रपाद्यावटात्पुरतः प्रागग्रां स्थापयति । अध्वर्युः । एहि यजमानेति यजमानमामन्त्र्य यवमतीः प्रोक्षणीर्बर्हिर्मुष्टिमाज्यस्थालीं स्रुवं मैत्रावरुणदण्डमुदपात्रं चादाय औदुम्बरीं स्थूणां पुरस्तादर्वाचीं प्रोक्षति । दिवे त्वा ऽन्तरिक्षाय त्वा पृथिव्यै त्वा । इति । शुन्धतां लोकः पितृषदनः । इत्यवटे ऽपो ऽवनयति । यवोसि यवयास्मद्द्वेषो यवयारातीः । प्राचीनावीती बर्हिर्हस्तं व्यतिषज्यावस्तृणाति । पितृणां सदनमसि । हिरण्यमन्तर्धाय स्रुवाहुत्या ऽभिजुहोति । पितृभ्यः स्वाहा । इति । पितृभ्य इदमिति यजमानस्य । अध्वर्युः उद्गात्रा औदुम्बरीमुच्छ्रयति । उद्दिवं स्तभानान्तरिक्षं पृण पृथिवीं दृंह । इति ॥

प्राचीनकर्णामिनोति । द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा । इति । प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं पर्यूहामि । इति । मैत्रावरुणदण्डेन संहन्ति । ब्रह्म दृंह क्षत्रं दृंह प्रजां दृंह रायस्पोषं दृंह । इति । अभ्यूढमनतिरिक्तं परिन्यह्योदपात्रमुपनिनीय विशाखे हिरण्यं निधाय स्रुवाहुत्याऽभिजुहोति । घृतेन द्यावापृथिवी आपृणेथां स्वाहा । इति । द्यावापृथिवीभ्यामिति यजमानस्य त्यागः । आन्तमन्ववस्रावयति । भूमिगते स्वाहाकारः । प्राचीनकर्णाः स्थूणा उच्छ्रित्य तासूदञ्चौ वंशौ प्रोक्ष्य इन्द्रस्य सदोऽसि । मध्यमं छदिरधिनिधाय अभितो द्वे द्वे निदधाति । विश्वजनस्य छाया । द्विर्मन्त्रः । दक्षिणोत्तरान् नवनवाधिषु तृणावर्तान् करोति । परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः । परिश्रित्य प्राचीं प्रतीचीं च द्वारं कृत्वा दक्षिणे द्वार्बाहौ कुशमुपनिगृह्य दर्भेण स्यन्द्यामवनयति । इन्द्रस्य स्यूरसि इति । इन्द्रस्य ध्रुवमसि । इति ग्रन्थिं करोति । विस्रस्य अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत । इति । एवमुत्तरे प्रतिप्रस्थाता । एवमपरद्वारबाह्वोः । इदं निर्मितं गृहं सदः पदवाच्यम् ।

१७६ अध्वर्युः ऐन्द्रमसीन्द्राय त्वा । इति मन्त्रेण सिद्धं सदोऽभिमृशति । इदं सदोऽभिमर्शनमित्युच्यते ।

१७७ महावेद्या उत्तरांसीयाच्छङ्कोर्वेद्यन्तेन दश प्रतीचः प्रक्रमान् प्रक्रम्य पञ्चारत्नि अन्तर्वेद्यर्धमर्धं बहिर्वेदि आग्नीध्रागारं कृत्वा परिश्रित्य दक्षिणतो द्वारं करोति । एतेन दक्षिणो मार्जालीयो व्याख्यातः तस्योदीचीं द्वारं कुर्वन्तीति विशेषः । इदं गृहं महावेद्या दक्षिणतो निर्मितं मार्जालीयपदेनोच्यते ॥

१७८ ततः अभ्रिं यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीं स्रुवं चर्मफलके षट् शङ्कून् ग्रावाणं हिरण्यमुदपात्रमादाय एहि यजमानेति यजमानमामन्त्र्य पूर्वया द्वारा हविर्धानं प्रविश्य दक्षिणस्य हविर्धानस्य नीडे चर्म इतराणि अक्षात्पुरतः सादयित्वा । देवस्य त्वेत्यभ्रिमादाय अभ्रिरसीत्यादिना ऽभिमन्त्र्य दक्षिणपूर्वादीनुपरवान् परिलिखितमित्यादिना त्रिः परिलिख्य क्रमेण खनति । रक्षोहणो वलगहनो वैष्णवान् खनामि । दक्षिणपूर्वस्मात्पांसूनादत्ते । इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो यो ऽसमानो ऽरातीयति गायत्रेण छन्दसा । यजमानस्याधस्पादं पात्रान्तरे पांसूनुद्वपति । अवबाढो वलगः । इति । पुनस्तथैव पांसूनादत्ते । तन्मन्त्रे गायत्रेणेत्यस्य स्थाने त्रैष्टुभेनेति विशेषः । ततस्तृतीयादादत्ते । तन्मन्त्रे तत्स्थाने जागतेनेत्यस्योहः । ततश्चतुर्थादादत्ते । तन्मन्त्रे आनुष्टुभेनेत्यूहः । पांसूनसञ्चरे परावपति । इदानीमत्र यजमानः पाप्मानं ध्यायति । उभावप उपस्पृशतः । अध्वर्युः पूर्वयोर्दक्षिणमभिमृशति । यजमान उत्तरमभिमृश्य पृच्छति । अध्वर्यो किमत्र । इति । अध्वर्युः भद्रमित्याह । यजमानः । तन्नौ सह । इत्याह । ततो ऽध्वर्युः यजमान किमत्र । इत्याह । यजमानः । भद्रम् । इत्याह । अध्वर्युः । तन्नौ सह इत्याह । ततो ऽध्वर्युर्दक्षिणयोरपरमभिमृशति । अत्राध्वर्युः प्रथमं पृच्छति । ततो यजमानः । ततोऽध्वर्युरपरयोरुत्तरमभिमृशति । दक्षिणं यजमानः । यजमानः प्रथमं पृच्छति ततो ऽध्वर्युः । तत उत्तरयोः पूर्वमध्वर्युरभिमृशति । अपरं यजमानः । अध्वर्युः प्रथमं पृच्छत्यथ यजमानः । यजमानः प्रथमो यजमान उत्तमः । ततो ऽध्वर्युः क्रमेणोपरवानभिमृ-

शति । विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासान्नाष्ट्राणां हन्ता । इति । सर्वत्रमन्त्रावृत्तिः । क्रमेणोपरवान् प्रोक्षति । रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान् । इति । मन्त्रावृत्त्या सर्वान् प्रोक्षति । रक्षोहणो वलगहनोऽवनयामि वैष्णवान् । इति । तथैव सर्वेष्वपोऽवनिनयति यवोसि यवयास्मद्द्वेषो यवयारातीः । इति क्रमेण सर्वेषु यवान् प्रस्कन्दयति । रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवान् । इति सर्वेषूपरवेषु बर्हिषाऽवस्तृणाति । रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवान् स्वाहा । इति सर्वेषूपरवेषु हिरण्यं निधाय तदुपरि क्रमेण स्रुवाहुत्याऽभिजुहोति । वैष्णवेभ्य उपरवेभ्य इदमिति यजमानः । अयमुपरवसंस्कार इत्युच्यते ॥

१७९ प्रत्येकं सार्धप्रादेशविस्तारे प्रादेशत्रयदीर्घे मिलिते समचतुरस्रे अधिषवणफलके आदाय । रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति संसृष्टे फलके तेषामुपरवाणामुपरि दधाति । तयोरनवसर्पणाय द्वाभ्यां शङ्कुभ्यां पुरस्तात्परिणिघ्नन्ति । द्वाभ्यां पश्चात । द्वाभ्यामभितः । एवं षड्भिः शङ्कुभिः परिणिहत्य । रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी । प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी । इति तयोरुपरि बर्हिषाऽवस्तृणाति । रक्षोहणौ वलगहनौ वैष्णवी । इत्यभिमृशति । एतावत्कर्म उपरवेषु फलकप्रतिष्ठापनमुच्यते ॥

१८० ततो यज्ञप्रतिष्ठेति मन्त्रेण तूष्णीं वा फलकयोरानडुहं चर्मास्तीर्य तिरश्चर्मन् फलके ग्राव्णोद्वादयति । बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद । इति । नीडे चर्मोत्सादयति । ग्रावस्तु ग्रावाणम् । दक्षिणस्य हविर्धानस्याग्रे

स्तोत्रोपाकरणाय बर्हिर्मुष्टीन् बध्नाति । ततः एहि यजमानेति यजमानमामन्त्र्य आग्नीध्रीयमध्ये स्फ्येनोद्धत्यावोक्ष्य तत्र चात्वालपुरीषसिकता न्युप्य अरत्निमात्रं परिमण्डलं खरं करोति । विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मामाहिंसीः । एतन्मन्त्रपाठस्तूभयोरध्वर्युयजमानयोः । एतदाग्नीध्रीयखरकरणमुच्यते ॥

१८१ अन्तः सदः प्राक् पदद्वयमवशेष्य पृष्ठ्यायान्तथैव होतुः खरं करोति । वह्निरसि हव्यवाहनो रौद्रेणा०हिंसीः इति । अयं होतृखरो होतृधिष्ण्यमित्युच्यते ॥

१८२ अपरेणाहवनीयं पर्याहृत्य होतृधिष्ण्याद्दक्षिणतो ऽरत्निमात्रे मैत्रावरुणस्य खरं करोति । श्वात्रोसि प्रचेता रौद्रेणा०सीः । इति अयं खरो मैत्रावरुणधिष्ण्यमित्युच्यते ॥

१८३ तस्य धिष्ण्यस्योत्तरतो ऽरत्निमात्रे ब्राह्मणाच्छंसिनः । तुथोऽसि विश्ववेदा रौद्रेणा०सीः । अयं खरो ब्राह्मणाच्छंसिधिष्ण्यमित्युच्यते ॥

१८४ तस्योत्तरतो ऽरत्निमात्रे पोतुः खरं करोति । उशिगसि कवीरौद्रेणा०सीः । इति । अयं खरः पोतृखर इत्युच्यते ॥

१८५ तदुत्तरतो ऽरत्निमात्रे नेष्टुः खरं करोति । अङ्घारिरसि बम्भारी रौद्रेणा०सीः । इति । अयं खरो नेष्टृधिष्ण्यमित्युच्यते ॥

१८६ तदुत्तरतो ऽरत्निमात्रे अच्छावाकस्य । अवस्यूरसि दुवस्वान् रौद्रेणा०सीः । इति अयं खरो ऽच्छावाकधिष्ण्यमित्युच्यते ॥

१८७ आग्नीध्रीयवन्मार्जालीये खरं करोति । शुन्ध्यूरसि

मार्जालीयो रौद्रेणा०सी: । इति अयं खरो मार्जालीयधिष्ण्-
यमित्युच्यते ॥

१८८ अवशिष्टचात्वालपुरीषसिकता आग्नीध्रीये तूष्णीं
निवपति । ततो ऽध्वर्युरौत्तरवेदिकमग्निमुपतिष्ठते । सम्रा-
डसि कृशानू रौद्रेणा०सी: । इति । तत आस्तावमुपतिष्ठते ।
परिषद्यो ऽसि पवमानो रौद्रेणा०सी: । इति । ततश्चा-
त्वालम् । प्रतक्वा ऽसि नभस्वान् रौद्रेणा०सी: । इति ।
पशुश्रपणमग्निं तत उपतिष्ठते । असम्मृष्टो ऽसि हव्यसूदो
रौद्रेणा०सी: । इति । सदस: पश्चिमद्वारे तिष्ठन् औदुम्बरी-
मुपतिष्ठते । ऋतधामा ऽसि सुवर्ज्योती रौद्रेणा०सी: । इति ।
ततो ब्रह्मसदनमुपतिष्ठते । ब्रह्मज्योतिरसि सुवर्धामा रौद्रे-
णा०सी: । इति । तत्रस्थ एव शालामुखीयम् । अजोऽस्येकपा-
द्रौद्रेणा०सी: । इति । ततो गार्हपत्यम् । अहिरसि बुध्नियो
रौद्रेणा०सी: । इति । इदं औत्तरवेदिकाद्युपस्थानमित्युच्यते ॥

१८९ इतः प्रभृत्यध्वर्यु: प्रत्यक् सदो नातीयात् । तत्रस्थ
एव सम्प्रेष्यति । स्तृणत बर्हि: प्रस्तरं यच्छत समपित्रनाहूय-
ध्वमास्तावं बहुलं स्तृणीतेत्येतदग्रेण वायव्यानि द्रोणकल-
शे दशापवित्रे समवधाय पत्नीशाले पत्नी: संनह्य आग्नीध्राद्य-
मधिश्रय प्रतिप्रस्थात: स्रुच: सम्मृड्ढ्याज्येनोदेहि पृषदा-
ज्याय दध्याऽऽहर । इति । अयं प्रैषो महावेद्यां बर्हिरासा-
दनादिप्रैष इत्युच्यते ॥

१९० दक्षिणे वेद्यन्ते महाबर्हिषो मुष्टिं स्तृणाति देव-
बर्हिरूर्णम्रदसन्त्वेति प्राकृतमन्त्रेण । महावेदिं बहुलां पुर-
स्तात्प्रतीचीं स्तृणाति । तूष्णीमर्धं स्तनव्रतं प्रददाति ।
उन्नेता पञ्च ग्राव्णः सप्तदश वायव्यानि प्रादेशमात्राणि उलू-
खलाकाराणि एकतोमुखानि दश चमसान् परिप्लुपात्रं अद-

यद्वं स्रुगाकारं द्रोणकलशं दशापवित्रं चतस्रः स्थालीः उपग्रहादि यदन्यदुपयुक्तं तत्सर्वं प्रक्षाल्य द्रोणकलशे दशापवित्रं विन्यस्य एतत्सर्वं प्राग्वंशे सादयति। वायव्यानां मध्ये औदुम्बरं चतुःस्रक्ति यत्तद्दधिग्रहपात्रमुच्यते ।

१९१ रास्नाचिह्नितं पात्रमैन्द्रवायवमित्युच्यते ।

१९२ पिलकाचिह्नितं मैत्रावरुणमित्युच्यते ।

१९३ द्विकोणं पात्रमाश्विनमित्युच्यते ।

१९४ बैल्वं पात्रं शुक्रपात्रमित्युच्यते ।

१९५ वैकङ्कतं श्लक्ष्णं मन्थिपात्रमित्युच्यते ।

१९६ औदुम्बरं श्लक्ष्णं अदाभ्यसंज्ञकम् ।

१९८ न्यग्रोधकाष्ठनिर्मितानि अतिग्राह्याणीत्युच्यन्ते ।

१९९ उभयतोमुखे द्वे पात्रे ऋतुपात्रसञ्ज्ञके ।

२०० इतराणि पात्राणि नैयग्रधान्यौदुम्बराणि वा भवन्ति। चमसा नैयग्रोधाः। चतुरस्रो ऽल्पदण्डो ब्रह्मचमस इत्युच्यते ।

२०१ मण्डलाकारः स दण्डो होतृचमस उच्यते ।

२०२ विस्तीर्णाग्रः स दण्डो यजमानचमसो भवति ।

२०३ त्रिकोणः स दण्ड उद्गातृचमसपदवाच्यः ।

२०४ अधोभागे वक्रः स दण्डः प्रशास्तृचमस उच्यते ।

२०५ उपरि वक्रः स दण्डो ब्राह्मणाच्छंसिचमसो भवति।

२०६ तथैव रास्नायुक्तः स दण्डो ऽच्छावाकचमसो भवति ।

२०७ तीक्ष्णाग्रः स दण्ड आग्नीध्रचमसो भवति ।

२०८ अध्वर्युः अग्नीषोमीयपशुशाखायाः पशुवत्पवित्रं करोति। ततः पशुकुम्भीं शाखापवित्रं वपाश्रपण्यौ रशने शूलं मैत्रावरुणदण्डं शालामुखीयस्योत्तरतो दर्भेषु सादयति ।

शुन्धध्वमिति प्राकृतमन्त्रेण प्रोक्षति । आग्नीध्रः पाणी सम्मृश्याग्नीन् प्रज्वाल्य परिस्तीर्य शालामुखीयस्याग्रे दर्भान् संस्तीर्य तेषु स्फ्यमग्निहोत्रहवणीं जुहूमित्यादि पशुवत्पात्राण्यासाद्य गार्हपत्यआज्यं विलापयति प्रतिप्रस्थाता पाणिसम्मर्शनं कृत्वा ब्रह्माणं दक्षिणत उपवेश्य शालामुखीयादारभ्योत्तरवेदिपर्यन्तं पृष्ठ्यां स्तीर्त्वा पवित्रे कृत्वा यजमान वाचं यच्छेति यजमानं सम्प्रेष्याग्निहोत्रहवणीं प्राकृतमन्त्रेणादाय तथैव प्रतितप्य प्रोक्षणीसंस्कारं कृत्वा पात्राणि प्राकृतमन्त्रेण प्रोक्ष्य आज्यं दधि च तथैव निरूप्य अधिश्रित्योभयं पर्यग्नि करोति । ततोऽध्वर्युः पाणी सम्मृश्य मन्त्रेण प्राकृतेन स्फ्यादानादि कृत्वा खरदेशे स्फ्यं स्तब्ध्वा सम्प्रैषमाह । प्रोक्षणीरासादयेत्यादि पशुवत् । आग्नीध्रः प्रोक्षणीः सादयति । अध्वर्युः स्फ्यं प्रकृतिवद्ददाति । प्रतिप्रस्थातोत्तरवेदिसमीपे इध्माबर्हिषी उपसादयति । आग्नीध्रः दक्षिणेन स्रुवं स्वाधितिं सव्येन हस्तेन वेदाग्राण्यादाय शालामुखीये अग्नेर्वामिति मन्त्रेण प्रतितप्य स्रुवमन्त्रेणैवोभयं सम्मृज्य प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता जुह्वादीन् पशुवत्प्रतितप्य सम्मृज्य वेदाग्राणि शालामुखीये प्रक्षिप्य पात्राणि अग्रेणोत्करं तृणेषु सादयित्वा पुनरादाय शालामुखीयसकाशे निदधाति । पत्नीं शालामुखीयमाज्यं चावेक्षयित्वा यजमानमाज्यमवेक्षयति । अध्वर्युः प्रोक्षणीनामुत्तरत आनीयाज्यं स्वयमवेक्ष्योत्पूय प्रोक्षणीश्चोत्पूयाज्यं दधि चादाय ब्रह्मयजमानाभ्यां सह प्राग्वंशं गत्वा वेद्यां स्रुक्षु पशुवदाज्यानि गृहीत्वा परिकर्मिभ्यः प्रदायाऽप उपस्पृश्य ब्रह्मणे सोमं राजानं ददाति । ब्रह्मा राजानमादाय शालामुखीयसमीपेण परिश्रित्योत्तरतो वस्त्रायाऽन्वग्निं नयति ।

अध्वर्युः शालामुखीये प्रणयनीयमिध्ममाधाय चात्वाला-दुपयमनीः कल्पयित्वा पुराणगार्हपत्यआज्यं विलाप्योत्पूय अध्वर्युं यजमानस्तं पत्नी तां पुत्राः तान् पौत्रास्तान् ज्ञातयश्चेति ज्येष्ठानुक्रमेण समन्वारब्धेषु सत्सु प्रचरण्यां चतुर्गृहीतं गृहीत्वा शालामुखीये जुहोति । त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरुयन्तासि वरूथं स्वाहा इति । सोमायेदमिति यजमानः । ततः स्रुवेण जुहोति । जुषाणो अप्तुराज्यस्य वेतु स्वाहा । इति । अग्नय इदमिति यजमानः । पुनश्चतुर्गृहीतं गृहीत्वा सम्प्रैषमाह । अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रू३हि । इति । अयमग्नीषोमप्रणयनप्रैष उच्यते ॥

२०९ होत्रा प्रथमायामृचि त्रिरुक्तायामिध्मं शालामुखीयादुद्यम्य पूर्वया द्वारोपनिष्क्रामन्ति । अन्वग्राजा चाज्यैश्चान्वक् ग्रावाणो वायव्यानि । अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रून् जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातौ । इतिमन्त्रेण । ततः उत्तरेण सदः परीत्याग्नीध्रागारे अग्निं निधाय परिस्तीर्य परिषिच्य चतुर्गृहीतेनाभिजुहोति । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम स्वाहा । इति । अग्नय इदमिति यजमानः । अत्रैवैतत् ग्रावाणो वायव्यानि सादयित्वा उत्तरेणाग्नीध्रीयं धिष्ण्यं राजा चान्यैश्च गत्वा । आहवनीये स्रुवाहुतिं जुहोति । उरुविष्णोविक्रमस्वाहा । इतिं विष्णव इदमिति यजमानः । ब्रह्मा राजानमन्यस्मै प्रदाय मन्त्रेणोपविशति । यजमानश्च स्वायतने । अध्वर्युः प्रोक्षणीरुन्महयन्नित्यादि यन्मे अग्न इत्यन्तं पशुवत्करोति । खरे प्रोक्षणादीनि करोति ।

महावेदिश्रोण्यां प्रोक्षणीर्निनयति । ब्रह्मायथागतमागत्य राजानमुपादत्ते । यजमानः अप उपस्पृश्य यथेतमेत्य ब्रह्मणः सकाशाद्राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति । सोमो जिगातु गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदम् । इति । अध्वर्युः अप उपस्पृश्य दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति । अदित्याः सदोऽसि । इति । यजमानस्तस्मिन् कृष्णाजिने राजानं सादयति । अदित्याः सद आसीद । इति । एष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभत् । इति राजानं देवताभ्यः प्रयच्छति । एतत्त्वं देव सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण । इति तं सोममुपतिष्ठते । नमो देवेभ्यः इति सोमस्योपरि प्राञ्चमञ्जलिं करोति । स्वधा पितृभ्यः इति तस्य दक्षिणतो न्यञ्चमञ्जलिम् । अप उपस्पृश्य । इदमहं निर्वरुणस्य पाशात् । इति ततो निष्क्रम्य । सुवरभिविख्येषं वैश्वानरं ज्योतिः । इत्याहवनीयमुपतिष्ठते । अध्वर्युः । अवान्तरदीक्षां विसृज । इति प्रेष्यति । ततो यजमानः । अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि । इत्याहवनीयमुपतिष्ठते । अध्वर्युः । स्रक्ष्णमेखलां प्रमुञ्चीन् वारय यजमान इति त्वा वदतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु । इति सम्प्रेष्यति । वपायागान्ते सुब्रह्मण्यः पिता पुत्रोयाह्वानं करोति । यूपावटान्तमिदानीमेव वा करोति । ततो यावतियवमतीरित्यादि यूपप्रक्षालनादि वपामार्जनान्तं पशुवत् । प्रकृतौ निरूढपशौ यत्रेन्द्राग्निपदं

तत्राग्नीषोमपदस्योहः कार्य इति विशेषः । आहूनायां पितापुत्रीयायां हृदं कुम्भमादायान्तरेण चात्वालोत्करावुदङ् उपनिष्क्रम्य स्रोतोऽभिमुखं स्थित्वा छायातपयोः सन्धौ वसतीवरीसंज्ञा अपो गृह्णाति । हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्मा५ आविवासति हविष्मा५ अस्तु सूर्यः । इति । सूर्ये त्वस्तङ्गते हिरण्यमन्तर्धाय गृह्णाति । आतपच्छायायां स्वदेहच्छायायां वृक्षच्छायायां वा गृह्णाति । इदं वसतीवरीग्रहणमित्युच्यते ॥

२१० ततः प्रदक्षिणमावृत्य वसतीवरीकुम्भं सव्ये निधायान्तरेण चात्वालोत्करावुत्तरेणाग्नीध्रीयं सदश्च गत्वा पूर्वयाद्वारा शालां प्रपाद्य शालामुखीयस्य पश्चात्संमृष्टाः सादयति । अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत । इति एतद्वसतीवरीसादनमुच्यते ।

२११ ततो ऽग्नीन्पुरोडाशमित्यादि स्वरुहोमवर्जमाज्येडान्तं पशुवत् । औपयजाऽङ्गारहरणमाग्नीध्रीयादिति विशेषः । वृत्रहाभूयासमिति पुरोडाशयागे यजमानस्यानुमन्त्रणम् । इन्द्रियावी भूयासमित्यङ्गयागे । आज्येडामार्जनान्ते उलूखले मुसलइत्येव हुत्वा ध्रुवामाप्याय्य प्रायश्चित्तानि जुहोति न वा । अथाग्नीषोमीय इत्यत आरभ्य एतदन्तं कर्म अग्नीषोमीयपशुरिति गीयते ।

२१२ हृदयशूलं प्रक्षाल्य स्थापयित्वा सम्प्रेष्यति । व्यपक्रामत मा वोऽभिपरिषम् । इति । अयं बहिर्वेदिभवनप्रैष उच्यते ।

२१३ ततः सर्वे बहिर्वेदि भवन्ति । वसतीवरीरादाय गार्हपत्यस्य पश्चान्मार्गेण नीत्वा दक्षिणया द्वारोपनिष्क्र-

स्य सव्यंसे निधाय दक्षिणेन मार्जालीयं सदश्च पर्याहृत्यो-दङ्मुखो दक्षिणतो यूपेन संस्पृष्टाः सादयति इन्द्राग्नियोर्भाग-धेयी स्थ । इति पुनरादायोदङ्ङावृत्य दक्षिणांसे निधाय यथेत-मेत्य शालामुखीयस्य पश्चात्संस्पृष्टाः सादयति मित्रावरुणयो-र्भागधेयी स्थ । इति । पुनरादाय दक्षिणेंऽसे निधाय पूर्वया द्वा-रोपनिष्क्रम्य उत्तरेण सद आग्नीध्रं च परीत्योत्तरतो यूपेन संस्पृष्टाः सादयति । विश्वेषां देवानां भागधेयी स्थ । इति पुनरादाय प्रदक्षिणमावृत्य सव्यंसे निधाय पुनस्तेनैव मार्गे-णागत्याग्नीध्रीयस्य निष्ण्यस्य पश्चात्संस्पृष्टाः सादयति । यज्ञे जागृत । इति । इदं वसतीवरीस्थापनमुच्यते ।

२१४ अथ सम्प्रेष्यति । या सम्राड् धुक् तस्यै दधि घर्माय दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या आशिरे पयश्च सक्तूंश्च कुरुत शृतातङ्क्यमादित्यग्रहाय दधि कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः कुरुत चतुरोऽश्मनां स्त्रीनुदङ्गनानयुज एकधनांस्त्र्यवमानेका-दश परमान् द्वे रशने द्वे वपाश्रपण्यौ एकतयमिध्माबर्हिरौ दुम्बरान्महापरिधीन् कुरुत सुब्रह्मण्यामाह्वयत । इति । अयं सुत्यासामग्रीसम्पादनप्रैष उच्यते ।

२१५ अध्वर्युपुरुषेष्वन्यतमः सवनीयातिरिक्तानां शाखा-नां क्रमेण पर्णानि छित्वा अग्रेण शालामुखीयं निधाय मूलतः परिवासोपवेषान् कृत्वा शालामुखीयस्य पश्चात् प्रज्ञाता-न्निधाय द्वितीयमन्त्यं च शाखापवित्रं मन्त्रेण प्राकृतेन कृत्वा-न्यानि षट् शाखापवित्राणि तूष्णीं कृत्वा गार्हपत्यादुत्तरतः षट् दोहनानि षट् शाखापवित्राण्यष्टौ स्थालीश्च सादयित्वा प्राकृतमन्त्रेण प्रोक्ष्य तत्तदुपवेषेणाङ्गारान्निरूह्य तत्तत्पवित्रं निधाय तेन तेन दोहनेन दोहयित्वा तप्त्वा सदगुह्यास्ताः

नक्ति । नाभ्यातनक्ति । अत्र द्वितीयोदोह ऐन्द्रः । षष्ठो दोहो मैत्रावरुणः अतस्तत्र विशेषो मन्त्रेषु भवति । स यथा । मित्रावरुणौ रमयतां गावः । मित्रावरुणाभ्याᳬ हविरिन्द्रियं इति । बहुदुग्धमित्रावरुणाभ्यां देवेभ्यो हविरिन्द्रियम् । इति । दोहानन्तरं तत्तदुपवेषान् शाखापवित्राणि मेक्षणानि दोहाश्च प्रक्षाल्यान्निधाय प्रातर्दोहस्यान्यौ चान्यत्र स्थापयित्वा दर्भैः प्रातर्दोहाय वत्सानपाकरोति । एतत्सौत्यसायन्दोहकरणमित्युच्यते ।

२१६ एतदनन्तरं वा सवनीयपशुशाखाद्वयमाहरति । ततः प्रकृतिवदसिदादानादि कृत्वा एकविधं बर्हिराश्ववालं प्रस्तरं ऐक्षवीविधृती च सम्भृत्य औदुम्बरैर्मेक्षापरिधिभिः सह विंशतिसमिधः ततस्त्वा त्रयोविंशतिधेत्यूहितमन्त्रेण सम्भरति । परिभोजनीयान्वेदं च करोति । इदं सौत्येध्माबर्हिः सम्भरणमित्युच्यते ॥

२१७ सुब्रह्मण्यायामाहूतायां यजमानः पशुदेवतामग्निं वनस्पत्यादि च सङ्कल्पयति । तद्यथा यः पुरस्तादिजपं प्रकृतिवत्कृत्वा सवनीयेन पशुना यक्ष्ये । पाशुकᳬ हविः । अग्निः प्रधानदेवता । वनस्पतिः पृषदाज्यस्येत्याद्युक्त्वा । इन्द्रो वसुमान् प्रातः सवनस्य देवता । इन्द्रो रुद्रवान्माध्यन्दिनस्य सवनस्य देवता ।-इन्द्र आदित्यवानृभुमान्वाजवान् बृहस्पतिवान्विश्वदेव्यावांस्तृतीयसवनस्य देवता । इत्यादि । अयं सुत्यासङ्कल्प इत्युच्यते ॥

२१८ अध्वर्युः उत्तरस्य हविर्धानस्य नीडे एकमम्भ्रणं स्थापयति । स आधवनीय इत्युच्यते ॥

२१९ तस्यैव प्रउगे द्वितीयमम्भ्रणं स्थापयति । स पूतभृत्पदवाच्यः ॥

२२० अनयोराधवनीयपूतभृतोरेकएवोदञ्चनो भवति । शकटे यदुपवेशनस्थानं तन्नीडपदवाच्यम् ॥

२२१ नीडस्य बहिर्भागः प्रउगपदवाच्यः ॥

२२२ बृहन्मुखा मार्तिकघटा अम्भृणपदवाच्याः ॥

२२३ अम्भृणेभ्यो जलोद्धरणार्थं यल्लघु मार्तिकपात्रं तदुदञ्चनपदवाच्यम् ॥

२२४ तृतीयमम्भृणमाग्नीध्रीये सोदञ्चनं स्थापयति । मार्जालीये सोदञ्चनं चतुर्थम् । एतदम्भृणसादनमुच्यते ॥

२२५ यजमान एतां रात्रीमाग्नीध्रीये संविशति । रक्षिणो हविर्धाने राजानं गोपायन्ति ॥

२२६ ततस्तस्या रात्र्यास्तृतीयभागे ऽवशिष्टे सति यजमानस्तत्पुरुषाश्च प्रबुध्याध्वर्य्वादीन् सर्वान् ऋत्विजश्चमसाध्वर्यून् पत्नीं परिकर्मिणोपि बोधयन्ति । न महारात्रे स्नान्ति । एतत्सुत्यार्थप्रबोधनमुच्यते ॥

२२७ यजमानो हस्तपादं प्रक्षाल्यान्तरेण चात्वालोत्करौ प्रविश्याग्नीध्रीये उपविशति । ऋत्विजोपि हस्तपादप्रक्षालनाचमनं कृत्वा यजमानसमीपे गच्छन्ति । अध्वर्युः अग्नीषोमीयपशुवत्सवनीयपशुशाखायाः पवित्रादिकुम्भ्यादि प्रोक्षणान्तं कृत्वा आग्नीध्रीयधिष्ण्ययोरन्तरतस्तिष्ठन् पाणिसम्मर्शनं कृत्वा तत्रैव तिष्ठन् सम्प्रैषमाह । उन्नेतर्ग्रावाणो वायव्यानि कलशौ दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोक्षमुत्सादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः सम्मृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहर । इति । अयं सुत्याप्रैष उच्यते ॥

२२८ उन्नेता ग्रावणो वायव्यानि चमसान् परिप्लुपात्रं प्रक्षालितोपरिस्थदशापवित्रं द्रोणकलशं च दक्षिणस्य हवि-

धानस्य पुरोक्षं सह संसादयति । एतद्धविर्धाने वायव्यादिसादनमुच्यते ॥

२२९ आग्नीध्रः पूर्वया द्वारा शालां प्रविश्य पाणी सम्मृश्य चतुरोऽग्नीन् प्रज्वाल्य परिस्तीर्य अग्नीषोमीयवदग्रेण शालामुखीयं पाशुकपात्राण्यासाद्य शालामुखीयआज्यमधिश्रयति । प्रतिप्रस्थाता तथैव प्रविश्य पाणी सम्मृश्य ब्रह्माणमुत्तरवेदेर्दक्षिणतो मन्त्रेणोपवेश्य शालामुखीयादुत्तरवेदिपर्यन्तं पृष्ठ्याँ स्तीर्त्वा पवित्रे कृत्वा यजमान वाचं यच्छेत्युक्त्वा प्राकृतमन्त्रेण अग्निहोत्रहवणीमादाय निरूप्य प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्याज्यं दधि च निरूप्याज्यमधिश्रित्योभयं पर्यग्नि करोति । अध्वर्युः मन्त्रेण प्रकृतिवत् स्फ्याद्यादानादि कृत्वोपरवदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा ऽग्नीषोमीयवत् प्रोक्षणीरासादयेत्यादिना सम्प्रेष्यति । तत आग्नीध्रेणाहृतासु प्रोक्षणीषु स्फ्यमुदस्य प्रकृतिवत्प्रक्षालयति । आग्नीध्र उत्तरवेदिसमीपे इध्माबर्हिरासाद्य पशुवत्स्रुवस्वधितिसम्मार्जनं प्रतिप्रस्थात्रे प्रयच्छति । प्रतिप्रस्थाता पशुवत् जुह्वादि सम्मृज्य उत्करस्याग्रे सर्वाणि संसाद्य पत्नीं गार्हपत्यमाज्यञ्चावेक्षयित्वा समिधमुपहृत्य दध्ना सहाज्यमाहृत्याहवनीये शालामुखीये वा ऽधिश्रित्य समिधमाधाय यजमानमवेक्षयित्वा ऽध्वर्यवे प्रयच्छति । अध्वर्युः उत्तरेण प्रोक्षणीरासाद्य स्वयमवेक्ष्योत्पूय प्रोक्षणीश्चोत्पूयाज्यग्रहणात्प्राक् पशुं सम्मृशति । अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेताँसि जिन्वति । इत्याग्नीध्रीयम् । विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितम् । इति हविर्धानम् । अयमग्निः सहस्रिण इत्युक्त्वा सर्वाः स्रुचः सम्मृशति । वायो शतं हरीणां युवस्व पोष्या-

णाम् । उत वा ते सहस्रिणो रथेन पृथुपाजसा । इति वायव्यानि चमसांश्च सम्मृशति । इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः । रथीतमँ रथीनां वाजानां सत्पतिं पतिम् । इति सदोभिमृशति । इदमाग्नीध्रीयादिपञ्चकसम्मर्शनमुच्यते ।

२३० ततो ब्रह्मयजमानाभ्यामाज्यदधिभ्यां च सहाग्नीध्रीयदेशं गत्वाऽग्नीषोमीयवत्पृषदाज्यसहितान्याज्यानि गृहीत्वा परिकर्मिभ्यः प्रदाय प्रोक्षण्युन्महनादि कृत्वा वेदिप्रोक्षणस्थाने खरस्योत्तरार्धे प्रोक्ष्य तत्रैवैकविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङ्भिस्त्र्यौदुम्बरान्महापरिधीन् परिधाय एता असदन्नित्यादिमन्त्रेण स्रुगभिमर्शनान्तं कृत्वा परिधीन् योगेन युनक्ति । युनज्मि ते पृथिवीं ज्योतिषा सह । इति मध्यमं परिधिम् । युनज्मि वाचँ सह सूर्येण ते । इत्युत्तरम् । सर्वाः स्रुचोऽभिमृशति । युनज्मि तिस्रो विपृचः सूर्य ते इति । इदं सौमिकपरिधिस्रुगभिमर्शनमित्युच्यते ॥

२३१ विष्णूनिस्थेत्यादिप्राकृतमन्त्रेण सर्वाण्याज्यान्यभिमन्त्र्य अग्नीषोमीयवत् स्रुवं ध्रुवायामवदधाति । यजमानः यन्मे अग्न इत्यादि पठति । अध्वर्युः अप उपस्पृश्य एहि यजमानेति यजमानमामन्त्र्य पूर्वया द्वारा हविर्धानं प्रपाद्य नीडे निहितं यच्चर्म तत्फलकयोः प्राचीनग्रीवमुत्तरलोम यज्ञ प्रतितिष्ठेति मन्त्रेण तूष्णीं वोपस्तृणाति । तस्मिन्नुपांशु सवनातिरिक्तांश्चतुरो ग्राव्णश्चतुर्दिक्षु परस्पराभिमुखाभिषवप्रदेशान् स्थापयित्वा ईषयोर्मध्यमार्गेण राजानमुपावहरन्ति । हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ । इति । सोमराजन्नवरोह माभेर्मा संविक्था मा त्वा हिँसिष प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु । इति इदं सो-

मराजोपावरोहणमुच्यते ॥

२३२ राजानं ग्रावणामुपरि निधाय उद्गातृभ्यः प्राह । उपावहृतः सोमः । इति । इदमुद्गातृनिवेदनमुच्यते ॥

२३३ ततो प उपस्पृश्य एहि यजमानेति यजमानमामन्त्य आग्नीध्रीयं गत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसा द्रुत्य यजमाने ऽन्वारब्धे जुहोति वाचस्पतये ब्रह्मण इदमिति यजमानः । अयं सवनीयपञ्चहोतृहोम उच्यते ॥

२३४ ततो ऽन्येन चतुर्गृहीतेन जुहोति । आसन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्याः स्वाहा । इत्ययमासन्यहोम उच्यते ॥

२३५ अग्नय इदमिति यजमानः । तूष्णीं घृतानुषिक्तं शकलमाहवनीये ऽभ्याधाय तत्रैव तिष्ठन् सम्प्रेष्यति । प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीत्सवनीयान्निर्वप प्रतिप्रस्थातः खरे पात्राणि युङ्ग्धि । इति । अयं प्रातरनुवाकादिप्रैष उच्यते ॥

२३६ प्रेषिता ऋत्विजो यथासम्प्रैषं कुर्वन्ति । पितापुत्रीयायां सुब्रह्मण्यायामाहूतायां आग्नीध्रः ऐन्द्रान् पुरोडाशान् शालामुखीये निर्वपति । तद्यथा । पाणी सम्मृश्याग्रेण शालामुखीयं तृणानि संस्तीर्य तेष्वेकादश पुरोडाशकपालानि द्वे भर्जनकपाले त्रीणि पात्राणि आमिक्षाकुम्भं द्वे मेक्षणे आमिक्षामेक्षणं मन्थनशलाकां शूर्पं कृष्णाजिनं शम्यामुलूखलं मुसलं दृषदमुपलां पिष्टोद्वपनीं मेक्षणं प्रणीताप्रणयनं पञ्चायतनां दारुपात्रीं प्राकृतया दारुपात्र्या सहान्यानि चत्वारि पात्राणि वा ऽजिनपात्रमुपवेषं मदन्तीं यानिचान्या-

न्युपय कानि तानि सर्वाणि द्वन्द्वं सादयति । इदं सौत्यपुरोडाशीयपात्रासादनमुच्यते ॥

२३७ ततः पवित्रकरणादि । उत्तरवेदिसमीपे प्रणीतासादनम् । ततो ऽग्निहोत्रहवण्यादानादि । निर्वापे विशेष उच्यते । पात्र्यां व्रीहीन् यवांश्च भेदेन प्रक्षिप्य पूर्वार्धमभिमृशति । द्वयोर्द्रव्ययोर्बीजे तृणकिंशारुनिरसनयोरावृत्तिः । देवस्य त्वा स० भ्यामिन्द्राय जुष्टं निर्वपामि । इति मन्त्रे विशेषः । पुरोडाशार्थं चतुरो व्रीहिमुष्टीन्निरूप्य धानार्थं करम्भार्थं च यवमुष्टीन् परिवापार्थं व्रीहिमुष्टीन्निर्वपति । ऐन्द्राण्येव सर्वाणि द्रव्याणि । निरुप्ताभिमर्शनातिशिष्टाभिमर्शनैकीकरणानामावृत्तिः । धान्यद्वित्वात् उर्वन्तरिक्षमन्वितम् । अदित्या वा मुपस्थे सादयामि । इत्यूहः । अयं सवनीयपरोडाशनिर्वाप उच्यते ॥

२३८ देवस्य त्वा स० भ्यामिन्द्राय वो जुष्टं प्रोक्षामि । इति भेदेनोभयोर्द्रव्ययोः प्रोक्षणम् । ततः कृष्णाजिनादानादि व्रीहीन् द्वेधा कृत्वैकं भागमवहन्ति । इदानीमेव हविष्कृदाह्वानम् । व्रीह्यवघातकाले पृथक् कृतान् व्रीहीन् यवांश्चोपोद्यच्छन्ते । तन्दुलप्रक्षालननिनयनान्ते पुनरग्नेस्तनूरसीत्यादिना यवानाम् । नात्र हविष्कृतमाह्वयति । परिवापव्रीहीनुपोद्यच्छन्ते । प्रक्षालननिनयनान्ते सायन्दोहवत्प्रातर्दोहः । उदगग्रेण शाखापवित्रेण । मात्रातञ्चनादि । अयं सवनीयप्रातर्दोह उच्यते ।

२३९ पुरोडाशीयाधिवपने इन्द्राय जुष्टमधिवपामीति विशेषः । पुरोडाशार्थमेकादशकपालान्युपधाय तदुत्तरत आदेवयजं वहेत्यङ्गारमानीय तदुपरि ध्रुवमसीत्यादिमन्त्रेण भर्जनकपालमुपदधाति । निर्दग्धमित्यादिमन्त्रेण प्रदक्षिणमङ्गारैः परिचिनोति । कपालस्यैकत्वाद्धूधर्म इत्यादि मन्त्रे

एकवचनान्तत्वम् । इदं धानाकपालोपधानमुच्यते ।

२४० तदुत्तरतस्तथैव द्वितीयं भर्जनकपालमुपदधाति । इदं परिवापकपालोपधानमुच्यते ।

२४१ तदुत्तरतस्तूष्णीमङ्गारमावर्त्य तिरः पवित्रं प्रातर्दोहमामिक्षाकुम्भ्यामानीय तां तूष्णीं तस्मिन्नङ्गारे अधिश्रित्य प्रातर्दोहं मेक्षणेनालोड्य श्रपयति । इदमामिक्षाकुम्भ्युपधानमुच्यते ।

२४२ ततः संवपनादि । इन्द्राय जुष्ट९ं संवपामीति ऊहः । पिण्डाभिमर्शने मन्त्रः इन्द्राय त्वेति । पुरोडाशं प्रथयित्वा यवान् परिक्षुद्य भर्जनकपाले निवपति । घर्मोः स्थ विश्वायुषः इति मन्त्रेण । एवमेव परिवापव्रीहीन् द्वितीये निवपति । अयं सौत्यपुरोडाशीयसंवाप उच्यते ।

२४३ तप्ते प्रातर्दोहे सायंदोहं दध्यानीयामिक्षावाजिने शीतले कृत्वा निदधाति । इदं सवनीयामिक्षावाजिनकरणमुच्यते ।

२४४ ततस्त्वचं गृह्णीष्वेत्यादि । शाखामुखीयस्य पश्चात्पुरोवान्येभ्योनिनयति ततो भ्रष्टान्यवानवतार्य द्विधा कृत्वा एकं भागमिन्द्राय व इति मन्त्रेणाभिमृश्य नवे पात्रे तिरः पवित्रं लौकिकमाज्यमानीय तस्मिन् तं भागमोप्य पुरोडाशादुत्तरतो भस्मभिश्रेष्वङ्गारेष्वधिश्रयति । इदं सवनीयधानाश्रपणमुच्यते ।

२४५ ततः कृष्णाजिनावधूननादि कृत्वा द्वितीयं भागं पेषयित्वा नवे पात्रे तथैवाज्यमानीय जातान् सक्तूनोप्य मन्थनशलाकया रज्ज्वादिना मथित्वा स्थाल्योष्ठलग्ना विप्रुषोन्तः क्षिप्त्वा इन्द्राय त्वेति मन्त्रेणाभिमृश्य धानानामु-

त्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। अयं पदार्थः करम्भ इत्युच्यते।

१४६ भृष्टान् व्रीहीनवतार्य वितुषीकृत्य नवे पात्रे पूर्ववदाज्यमानीयोप्य इन्द्राय त्वेति मन्त्रेणाभिमृश्य करम्भादुत्तरतो भस्ममिश्रेष्वङ्गारेष्वधिश्रयति। इदं परिवापश्रयणमुच्यते।

२४७ तदुत्तरतो भस्ममिश्रेष्वङ्गारेषामिक्षावाजिने अधिश्रयति। ततः पवित्रे प्रस्तरे विसृज्य शाखापवित्रं प्रस्तरे प्रज्ञातं निधाय उपवेषं चान्यत्र निदधाति। प्रतिप्रस्थाता स्रुचा दक्षिणतः पूर्वार्धे खरस्य मध्ये दक्षिणाशिरसमुपांशुसवनं ग्रावाणं निदधाति। तस्य दक्षिणतः संलग्नमुपांशुपात्रम्। तस्य उत्तरतोन्तर्यामपात्रम्। तस्य पश्चा दाश्विनपात्रम्। तस्य पश्चात्प्रबाहुक्दक्षिणं शुक्रपात्रम्। उत्तरं मन्थिपात्रम्। मन्थिपात्रस्याग्रे दक्षिणोत्तरे ऋतुपात्रे खरस्य पश्चार्धे मध्ये आग्रयणस्थालीम्। तदुपशयपात्रं च उत्तरस्या खरश्रोण्यां उक्थ्यस्थालीं तदुपशयपात्रं च। उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनं भूम्या ध्रुवस्थालीम्। पूतभृदाधवनीययोर्मध्ये चमसान् परिप्लुपात्रं च दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशम्। तस्मिन् दशापवित्रे। ऐन्द्रवायवस्य दक्षिणत आग्नेयम्। तस्य पश्चादैन्द्रम्। तस्य पश्चात सौर्यम्। एतानि त्रीणि पात्राण्यातिग्राह्याणीत्युच्यन्ते।

२४८ ऐन्द्रवायवस्योत्तरतो ऽदाभ्यपात्रम्। तस्य पश्चादंशुपात्रम्। अधस्तादुपरिष्टाद्रजतसुवर्णरुक्मवेष्टितं क्वचिद्धिग्रहपात्रम्। एवं पात्राणिसादयति। एतत् खरे ग्रहादिसादनमुच्यते।

२४९ अध्वर्युः। अग्निर्देवतागायत्री छन्द उपांशोः पात्रमसि। इत्युपांशु पात्रमभिमृशति। सोमो देवता त्रिष्टुप्

छन्दोन्तर्यामस्य पात्रमसि। इत्यन्तर्यामम्। इन्द्रो देवता। जगती छन्द इन्द्रवायुवोः पात्रमसि। इत्यैन्द्रवायवपात्रम्। बृहस्पतिर्देवता ऽनुष्टुप् छन्दो मित्रावरुणयोः पात्रमसि।

२४९। इति मैत्रावरुणम्। अश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि। इत्याश्विनम्। सूर्यो बृहती छन्दः शुक्रस्य पात्रमसि। इति शुक्रम्। चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि। इति मन्थिनम्। विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसि इत्याग्रयणम्। इन्द्रो देवता ककुत छन्द उक्थानां पात्रमसि। इत्युक्थ्यम्। पृथिवी देवता विराट् छन्दोध्रुवस्य पात्रमसि। इति ध्रुवस्थालीम्। एतद्ग्रहाभिमर्शनमित्युच्यते।

२५० ततो यत्कर्तव्यं तच्चिन्तयन्नास्ते। होतुः सकाशाद्भूदुषेति श्रुत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा आहवनीये जुहोत्यन्वारब्धे यजमाने। शृणोत्वग्निः समिधा थियं मे शृण्वन्त्वापो धिषणाश्च देवीः। शृणोत ग्रावाणो विदुषो नुयज्ञं शृणोतु देवः सविता हवं मे स्वाहा। इति। अयमपोनप्त्रीयारम्भकहोम उच्यते।

२५१ अग्न्यब्ग्रावदेवसवितृभ्य इदमिति यजमानः। अपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय सम्प्रैषमाह। अपश्च्यहोतमैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन एतनेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन च वावसतीवरीभिश्चचात्वाले प्रत्युपलम्बस्व। इति। अयमपोनप्त्रीयानुवचनप्रैष इत्युच्यते।

२५२ यथासम्प्रैषं ते कुर्वन्ति। नेष्टा पत्नेजनीकलशहस्तां पत्नीमानयति। प्रेत्युदेत्यृतस्य वामीरन्वग्नि स्तेग्रं नयत्वदितिर्मध्यं ददतां रुद्रावसृष्टासि युवानामनामा हिंसीः।

इति । इदं पन्नेजनीग्रहणार्थपत्न्यानयनमित्युच्यते ।

२५३ प्राग्वंशस्य पूर्वया द्वारोपनिष्क्रम्योत्तरेण सद आग्नीध्रीयं धिष्ण्यं अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तत्र गच्छन्ति । अध्वर्युः । अप्सु बर्हिष एकदेशं प्रास्य तस्योपरि सशेषं जुहोति । देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मादिन्तमस्तं देवेभ्यो देवत्राधत्तशुक्रँ शुक्रपेभ्यो येषां भागस्थ स्वाहा । इति । अदूभ्यइदमिति यजमानः । अयं एकधनाग्रहणार्थहोम उच्यते ।

२५४ अध्वर्युः अप्सु हुतमाज्यं मैत्रावरुणचमसेनोपप्लावयति । कार्षिरस्यपापां मृध्रम् । इति । बर्हिषीअन्तर्धाय मैत्रावरुणचमसं पूरयति । समुद्रस्य वोक्षित्याउन्नये । इति । इदं मैत्रावरुणचमसपूरणमुच्यते ॥

२५५ त्रिषु कलशेषु बर्हिषी अन्तर्धाय एकधनान् गृह्णाति । इन्द्राय वो जुष्टान् गृह्णामि । इति । इदमेकधनग्रहणमुच्यते ॥

२५६ इमा गृहीता आप एकधनपद्वाच्याः ॥

२५७ प्रतिकलशं ग्रहणमन्त्रस्यावृत्तिः । एकधनान् परिकर्मिभ्य एकधनिभ्यो दत्वा पत्नी कलशं गृहीत्वा बर्हिषी अन्तर्धाय पन्नेजनीर्गृह्णाति । वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पन्नेजनीर्गृह्णामि । इति । इदं पन्नेजनीग्रहणमुच्यते ॥

२५८ अत्र गृहीता आपः पादप्रक्षालनार्थत्वात्पादयोर्नेजन्य इति समासे पन्नेजनीपद्वाच्याः ॥

२५९ ततः पन्नेजनीकलशं पत्न्यै प्रदाय यथेतं मङ्गलवाद्यघोषयुक्ताश्चात्वालदेशं प्रतियन्ति । आग्नीध्रः चात्वालदेशे होतृचमसं वसतीवरीश्च सादयति । अध्वर्युः होतृचमसं

वसतीवरीभिः सम्मृश्य पूरयति अन्वारब्धे यजमाने । होतृचमसात्तथैव मैत्रावरुणचमसे बिन्दुं प्रस्कन्दयति । होतृचमसं वसतीवरीमैत्रावरुणचमसमिति त्रयं संस्पृष्टं निधाय सकृद्वा प्रत्येकं मन्त्रं वक्ष्यमाणमुक्त्वा क्रमेण होतृचमसादिषु सशेषं प्रचरणीशेषमाज्यमानयति । सं ज्योतिषा ज्योतिरंक्तां सं शुक्राः शुक्रेण सं हविषा हविः सं यज्ञपतिराशिषा । इति । इदं होतृचमसादिषु प्रचरणीशेषानयनमुच्यते ॥

२६० पत्नी यथेतमेत्य वेद्यां शालामुखीयस्य पश्चात्तेन संस्पृष्टाः पन्नेजनीः सादयति । एतद्वेद्यां पन्नेजनीसादनमुच्यते ॥

२६१ अध्वर्युः होतृचमसं वसतीवरीमैत्रावरुणचमसं एकधनांश्चादाय होतुः सकाशमेति । अवेरपोऽध्वर्यो३ इति होत्रा पृष्टः सन् प्रत्याह । उतेमन्नमुरुतेमाः पश्य । इति । इदमपानयननिवेदनमुच्यते ॥

२६२ यमग्ने पृत्सु मर्त्यमावो वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः स्वाहा । इति प्रचरणीशेषेणाज्येनाहवनीये जुहोति । अयं क्रतुकरणहोम उच्यते ॥

२६३ अगन्नयइदमिति यजमानः । होतृचमसं वसतीवरीमैत्रावरुणचमसं च दक्षिणेन होतारं पर्याहृत्य पूर्वया द्वारा हविर्धानं प्रपादयति । तथैव दक्षिणेन होतारं पर्याहृत्याऽपरया द्वारैकधानान् हविर्धानं प्रपादयति । इदं वसतीवर्यादिहविर्धानप्रवेशनमुच्यते ॥

२६४ होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे नीत्वा नीडे सादयति । तत्रत्यमाधवनीयमुत्तानं कृत्वा मैत्रावरुणचमसीया अपः पर्यस्यति । वसतीवरीणां तृतीयं भाग-

भानयति । तथा तृतीयं भागमानयति । तथा तृतीयमेकधनानाम् । अवशिष्टा वसतीवरीरुत्तरस्य हविर्धानस्य पुरोक्षं सादयति । शिष्टानेकधनान् पश्चादक्षं सादयति । इदं हविर्धाने वसतीवर्यादिसादनमुच्यते ॥

२६५ ततो हविर्धानयोर्मध्ये उपविश्य दधिग्रहपात्रमादाय तस्मिन् बर्हिषी अन्तर्धाय तदीयं दधि गृह्णाति । उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः । अपोधृत्य बर्हिषी ग्रहमादायोत्तिष्ठति । दिवे त्वाऽन्तरिक्षायत्वा पृथिव्यै त्वा इति । अपेन्द्रद्विषतोमनोऽपजिज्यासतोजह्यपयोनोऽरातीयति तं जहि । इति पूर्वया द्वारोपनिष्क्रामति । पृष्ठ्यायाः दक्षिणतः प्राङ्मुख उपविश्याहवनीये जुहोत्यन्वारब्धे यजमाने । प्राणाय त्वाऽपानायत्वा व्यानायत्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहा । इति । प्रजापतय इदमिति यजमानः । अध्वर्युः दधिग्रहपात्रसंक्षालनं जलमन्तः परिधि निनीयपात्रमग्नावनु प्रहरति अयं दधिग्रहप्रचार इत्युच्यते ॥

२६६ ततो यजमानः । अध्वर्यो धेनुं ते ददामि । अध्वर्युर्धेनुं प्रतिगृह्य दधिग्रहशाखां मेक्षणं च तूष्णीमनुप्रहरति । यजमानः प्रकृतिवदुपवेषमुद्वासयति । अध्वर्युः होतृचमसीया दक्षिणस्य हविर्धानस्येषयोर्मध्येनावतार्य चर्माणि निधाय ताः प्रेक्षमाणं यजमानं वाचयति । निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयताऽपानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं

मे तर्पयताऽऽत्मानं मे तर्पयताऽङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गृहान्मे तर्पयत गणान्मे तर्पयत सर्वगणं मा तर्पयत तर्पयत मा गणामे मा वितीतृषन् । इति । इदं होतृचमसीयाप्रेक्षणवाचनमुच्यते ॥

२६७ वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसा ऽग्नेः प्रियं पाथ उपेहि । इत्युपनद्धस्य राजखोनंशूनाकृष्य गृह्णाति । तत्रोक्तमन्त्रेण प्रथमम् । रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रिय० पेहि । इति द्वितीयमंशुम् । आदित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि । इति तृतीयम् । अंशूनङ्गुल्यवकाशे कृत्वा होतृचमसीयाः पात्रान्तरे निधाय होतृचमसे आधवनीया ऽपो गृह्णाति । ता अपस्तैरशुभिर्द्वादशभिर्मन्त्रैराधूनोमि । मान्दासुते शुक्रशुक्रमाधूनोमि भन्दनासु ते शुक्र०मि । कोतनासु ते० । नूतनासु ते० । रेशीषु ते० । मेषीषु ते० । वाशीषु ते० । विश्वभृत्सु ते० । माध्वीषु ते० । ककुहासु ते० । शक्वरीषु ते० । शुक्रासु ते शुक्रशुक्रमाधूनोमि । एते मन्त्रा द्वादश आधावसंज्ञकाः ॥

२६८ ततः अदाभ्यपात्रमधस्तादुपरिष्टाद्रजतसुवर्णरुक्माभ्यां क्रमेणावेष्ट्य तस्मिन्नंशून्निधाय होतृचमसीया अपो गृह्णाति । शुक्र ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत । इति । एतददाभ्यग्रहणमुच्यते ॥

२६९ ककुहꣳ रूपं वृषभस्य रोचते बृहत । इति ग्रहमादायोपोत्तिष्ठति । सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः । इत्याहवनीयसकाशमेति । वषट्कारपथस्य दक्षिणतः प्राङ्मुखस्तिष्ठन् अन्वारब्धे यजमाने सर्वं जुहोति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ।

इति । सोमायेदमिति यजमानः । अध्वर्युः प्रदक्षिणमावृत्य राजन्यंशून् प्रक्षिपति । उशिक् त्वं देव सोम गायत्रेण छन्दसा ऽग्नेः प्रियं पाथो अपीहि । इति प्रथममंशुं प्रक्षिपति । वशी त्वं देवसोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीहि । इति द्वितीयम् । अस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहि । इति तृतीयम् । अयमदाभ्यग्रहहोम उच्यते ॥

२७० ततः पात्रान्तरे ऽवनीता होतृचमसीया होतृचमसे आनीय यजमानाय दत्त्वोपांशुसवनं ग्रावाणं देवस्य त्वेत्यादिमन्त्रेणाऽऽदत्ते । ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिम् । इत्यभिमन्त्रयते । उपांशुसवनं चर्मणः पूर्वार्धे प्रागायतं निधाय राजानं विस्रस्य उपांशु सवनस्योपरि मिमीते । इन्द्राय त्वा वृत्रघ्ने । इन्द्राय त्वा वृत्रतुरे । इन्द्राय त्वा ऽभिमातिघ्ने । इन्द्राय त्वादित्यवते । इन्द्राय त्वा विश्वदेव्यावते । इत्येकैकेन मन्त्रेण क्रमेण । तत्र प्रथममङ्गुष्ठयुक्तया प्रदेशिन्या । द्वितीयमंगुष्ठयुक्तयोपकनिष्ठिकया । तृतीयं तथैव प्रदेशिन्या । चतुर्थं तथै कनिष्ठिकया । पञ्चमं तथैव मध्यमया । एवं मित्वाय पञ्चकृत्वस्तूष्णीं मिमीते । अंगुष्ठयुक्तया कनिष्ठिकया प्रथमम् । तथैव कनिष्ठिकया तृतीयम् । तथैव प्रदेशिन्या चतुर्थम् । महानाम्न्या तथैव पञ्चमम् । एवं दशकृत्वो मिमानो ऽर्धं राजानं मिमीते । इदं प्रातःसवनार्थसोममानकरणमुच्यते ॥

२७१ अवशिष्टं राजानमुष्णीषेण विग्रथ्य ईषयोर्मध्येन नीत्वानीडे सादयति । मितं राजानं होतृचमसीयाभिः सिञ्चति । श्वात्राः स्थ वृत्रतुरो राधो गूर्ता अमृतस्य पत्नी-

स्तादेवीर्दैवत्रेमं यज्ञं यत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳसोमः पिबतु । इति । इदमभिषवार्थसेचनमुच्यते ।

२७२ तत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरुरायाकृध्यधिदात्रेऽवोचः । इति राजानमुदकेन मिश्रयति । इदं होतृचमसीयामिश्रणमुच्यते ।

२७३ धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं माꣳहिꣳसिष मा मा हिꣳसिष्टम् । इतिचर्मान्तर्हिते फलके अभिमृशति । इदमभिषवार्थफलकाभिमर्शनमुच्यते ।

२७४ ततो यजमानं वाचयति । अवावृधं वो मनसा सुजाता ऋतप्रजा ता भगवद्धः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनुमन्यन्ताꣳसवनाय सोमम् । इति । इदं वृद्धिवाचनमित्युच्यते ।

२७५ प्रतिप्रस्थाता राज्ञः षडंशूनादाय सव्यपाण्यन्तरालेषु द्वौ द्वौ कृत्वा सव्येनैव पाणिनोपांशु पात्रमादत्ते । अध्वर्युः प्रेष्यति । प्रतिप्रस्थातरुदकꣳसेनवोदचमसेन वा जघनेनाहवनीयं प्रत्युपलम्बस्व । स तथा करोति । अध्वर्युः हिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ कृत्वा राजानं विस्त्रस्योपांशुसवनेन सकृत्प्रहृत्य अंशुपात्रमादाय कया न इति वामदेव्यं साम अनवानं गायन्यानि वा पठन्नंशुमात्रेण रसं गृह्णाति । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तिष्ठन्नाहवनीये जुहोति । प्रजापतये स्वाहा । इति । यथालिङ्गं त्यागो यजमानस्य । हिरण्ये प्राणयव्याभिति । आनः प्राण एतु परावत आन्तरिक्षाद्दि- वस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणायत्वा । इति । इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना । दधन्वे वा यदीमनु वोचद्ब्र-

त्राणि वेत्तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् । इति द्वाभ्यां यजमानः पूर्वाह्नाभिराङ्गमोजयते । तच्छतमानं हिरण्यमध्वर्यवे ददाति । शतमानं रजतं ब्रह्मणे । अथांशुपात्रहोम उच्यते ।

२७६ अध्वर्युरुपांशुसवनेनाभिषुणोति । एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त अष्टौ इत्यष्टकृत्वः सङ्ख्याय अभिषुणोति । सोमवल्ल्याः जलेन कुट्टनं अभिषवणमुच्यते ।

२७७ अंशौ स्कन्ने सति यजमानं वाचयति । आ मा स्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः । अभिषुतं सोममञ्जलिनैकीकृत्य गृह्णाति । प्रतिप्रस्थाता ऽङ्गुल्यन्तरालधृताभ्यां प्रथमाभ्यामंशुभ्यामुपांशुपात्रमन्तर्दधाति । अध्वर्युः वाचस्पतये पवस्व वाजिन् । इति पात्रे रसमानयति । प्रतिप्रस्थाताऽंशू यथास्थानं स्थापयति । इदमुपांशुपात्रे प्रथमरसग्रहणमुच्यते ।

२७८ अध्वर्युः पुनर्होतृचमसीयाऽऽभिषुणादि वृत्तिवाचनान्तं कृत्वोपांशुसवनेन एकमित्यादि एकादशेत्यन्तं सङ्ख्यायाभिषुणोति । नात्रांशौ स्कन्ने वाचनम् । पूर्ववदङ्गुलिनापहन्ति । प्रतिप्रस्थाता मध्यमाभ्यामंशुभ्यां पात्रमन्तर्दधाति । अध्वर्युः । पात्रे आनयति । वृषा वृष्णो अंशुभ्यां गभस्तिपूतः । इति प्रतिप्रस्थाताऽंशू यथास्थानं स्थापयति । इदं द्वितीयरसग्रहणमुच्यते ॥

२७९ द्वितीयवत्तृतीयं द्वादशकृत्वः सङ्ख्यायाऽभिषुणोति । नात्रांशौ स्कन्ने वाचनम् । उत्तमाभ्यामंशुभ्यामन्तर्धानम् । देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा । इति पात्रे रसानयनम् । इदं तृतीयरसग्रहणमुच्यते ।

२८० अध्वर्युः उपांशुसवनं दशापवित्रे च परिसृज्य यथास्थानं

निदधाति। उपांशुप्रभृतीनां सर्वेषां ग्रहाणां ग्रहणं पुरस्तादुपरिष्टाच्चोद्बुध्नता आबिलात्। ग्रहाणामुपयामेत्येतद्घटितेन मन्त्रेण ग्रहणम्। अनादिष्टश्रपणानां हिरण्येन श्रपणम्। दधिग्रहभिन्नानां तिष्ठद्धोमः। अध्वर्युः स्वांकृतोसि इति। मन्त्रेण प्रतिप्रस्थातुः सकाशात् उपांशु पात्रमादत्ते। मधुमतीर्न इषस्कृधि। इत्यवेक्षते पात्रम्। इदं ग्रहावेक्षणमुच्यते।

२८१ सव्येन धृत्वा दक्षिणेनोर्ध्वमुन्मार्ष्टि। विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः। इति। इदं ग्रहोन्मार्जनमुच्यते।

२८२ मनस्त्वाष्टु। इत्युत्तिष्ठति उर्वन्तरिक्षमन्विहि। इत्याहवनीयसमीपं गच्छति। स्वाहा त्वा सुभवः सूर्याय स्वाहा इत्यन्वारब्धे यजमाने आहवनीये जुहोति। सूर्यायेदमिति यजमानः। अयमुपांशुपात्रहोम उच्यते।

२८३ अनुप्राप्य यजमानं वाचयति। भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि। इति। बिलादारभ्याधः प्रदेशादर्वाचीनं ग्रहस्य बहिष्ठ रसमवमृज्य प्रत्यगग्रेणाधोमुखेन पाणिना मध्यमे परिधौ निमार्ष्टि। देवेभ्यस्त्वा मरीचिपेभ्यः। इति देवेभ्यो मरीचिपेभ्य इदमिति यजमानः। इदं ग्रहरसावमार्जनमुच्यते।

२८४ अध्वर्युः प्रदक्षिणमावृत्याऽऽग्रयणस्थाल्यां ग्रहस्य संस्रावमवनयति। एष ते योनिः। इति। उपांशुपात्रे राज्ञोंशुं प्राच्ययपास्थाने निदधाति। प्राणाय त्वा। इति। इदमुपांशुसवनप्रत्यभिमर्शनमुच्यते।

२८५ प्रतिप्रस्थाता ग्रहणक्रमेणाभिषुते राज्ञि द्वौ द्वावंशू प्रक्षिपति। यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम

सोमाय । इतिमन्त्रस्य त्रिरावृत्तिः । अध्वर्यु: राज्ञः पश्चात्प्राङ्मुख उपविशति । तस्य दक्षिणत उदङ्मुखो यजमानः । प्रतिप्रस्थाता च उत्तरतो दक्षिणामुखः । आग्नीध्रः पुरस्तात्प्रत्यङ्मुखः । नेष्टा दक्षिणत उदङ्मुखः । ब्रह्मा अभिषोतॄन् परीत्य दक्षिणत उदङ्मुख आस्ते । इदमभिषवार्थोपवेशनमुच्यते ।

२८६ ततो ऽध्वर्युरुन्नेतारमाह । आहरोपसृज । इति । उन्नेता आधवनीयादुदञ्चनेन होतृचमसमपूरयँ करोति । अध्वर्युप्रतिप्रस्थात्राग्नीन्नेष्टारो होतृचमसे राजांशून् परिप्लावयन्ति । प्रागपागुदगधराक्कासर्वादिश आधावन्त्वस्व निष्वर । इति । इदमंशुपरिप्लावनमुच्यते ।

२८७ होतृचमसादंशूनादाय चर्मणि निधाय राजानं होतृचमसोदकेनोपसिच्य प्रत्यात्मानं सर्वे विभज्य अंशूनाकृष्य यावद्रसनिस्रावमभिषुण्वन्ति । आहरोपसृजेत्याद्यं तदन्तं त्रिवारं समन्त्रकं कृत्वा चतुर्थं आहरोपसृजेति प्रैषमात्रं अन्यत्तूष्णीम् । ततो राजानं हस्तेन निष्पीड्य सम्भरणीयकलशे रसं गृहीत्वा अध्वर्युरन्तरेणोपे उन्नेत्रे प्रयच्छति । उन्नेता आधवनीयस्था अपो ऽन्यस्मिन्नम्भृणे ऽवनीयाधवनीये पवित्रं वितत्य सम्भरणीमवनयति । एष एकः पर्यायः । अयं सोमाभिषवप्रथमपर्याय उच्यते ॥

२८८ तत आहरोपसृजेत्यादि त्रिवारं समन्त्रकं सकृत्तूष्णीं च कृत्वा अम्भृणान्तरस्था आधवनीया अप उपसृजति सम्भरणीमवनयतीत्यन्तं करोति । एष सोमाभिषवद्वितीयपर्याय उच्यते ॥

२८९ एवमेव तृतीयः पर्यायः । तृतीये अम्भृणे आधव-

नीयापोवनयतीति विशेषः । एष सोमाभिषवतृतीयपर्याय उच्यते ॥

२९० ततः ऋजीषं दशापवित्रेण परिवेष्ट्य अन्तरेणेषे उन्नेत्रे प्रयच्छति । उन्नेता मर्दयित्वा आधवनीये निष्पीड्य तेनैव मार्गेणाध्वर्युः ऋजीषं चर्मणि निधाय पूर्ववत्सम्मुखान् ग्राव्णः कृत्वा ग्रावमुखेषु ऋजीषं चतुर्धा कृत्वा व्यपोहति । उद्गातृभ्यः प्राह । सोमो ऽभिषुतः । इति । इदमभिषुतसोमनिवेदनमुच्यते ॥

२९१ उद्गातृभिर्द्रोणकलशे ऋजीषस्योपरि निहिते दशापवित्रे वितते उदिते आदित्ये ऽनुदिते वा उन्नेत्रा आधवनीयादुदञ्चनेन दशापवित्रे ऽवनीयमानं सोममन्तर्यामपात्रेणाधोधारायां गृह्णाति । उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षं सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व । इति । इदमन्तर्यामरसग्रहणमुच्यते ।

२९२ स्वां कृतोसि । इति धारातो ग्रहमपकर्षति । मधुमतीरित्यादिमन्त्रेणेक्षते । उपांशु पात्रवन्मन्त्रेणोन्मार्ष्टि । तथैवादायोपोत्थाया ऽऽहवनीयसमीपमेत्योपांशुपात्रहोममन्त्रेण जुहोति । अपान्य यजमानं वाचयति । धृरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि । इति । अयमन्तर्यामपात्रहोम उच्यते ।

२९३ ग्रहस्य बहिष्ठं रसं मूलादारभ्य बिलपर्यन्तं दक्षिणेन पाणिनोर्ध्वमुन्मृज्य प्राचोत्तानेन पाणिना मध्यमे परिधौ उक्तमन्त्रेणोन्मार्ष्टि । ग्रहस्य यथास्थानसादनान्तं प्रत्यभिमर्शनान्तं च समन्त्रकमुपांशुपात्रवत् । तत उन्नेतारमाह ।

अप्रमत्तः सन्ततमानयोपांशुग्रहान् ग्रहोष्यामि । इति अयं ग्रहेषु रसानयनप्रैष उच्यते ।

२९४ उन्नेता पूर्ववदाधवनीयादुदञ्चनेन सन्ततां सोमधारां दशापवित्रेऽवनयति । ध्रुवस्थाल्यां ग्रहणपर्यन्तं अध्वर्युः ऐन्द्रवायवपात्रेण धारायां गृह्णाति । एतदादीनाग्रयणान्तान् मन्द्रापेक्षया नीच स्वरेण गृह्णाति । आवायोभूषशुचिपा उपनः सहस्रं ते नियुतो विश्ववार । उपोतेअन्धोऽपेयम् । उपयामगृहीतोऽसिवायवे त्वा जुष्टं गृह्णामि । इति किञ्चित् गृहीत्वा धारातो ग्रहमपनीय पुनर्गृह्णाति । इन्द्रवायू इमे सुताउपप्रयोभिरागतमिन्दवो वामुशन्तिहि । उपयामगृहीतोसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामि । दशापवित्रेण परिमृज्य मन्त्रेण यथा स्थानं निदधाति । एष ते योनिः सजोषाभ्यां त्वा । इत्यैन्द्रवायवपात्रे रसग्रहणमुच्यते ।

२९५ मैत्रावरुणपात्रे गृह्णाति । अयं वां मित्रावरुणाऽसुतः हवम् । उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि । इति । बर्हिषी अन्तर्धाय पयसा श्रीत्वा अपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य यथास्थानं सादयति । एष ते योनिर्ऋतायुभ्यां त्वा । इति । इदं मैत्रावरुणपात्रे रसग्रहणमुच्यते ॥

२९६ शुक्रपात्रेण गृह्णाति । अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायूरजसो विमाने । इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोसि शण्डाय त्वा जुष्टं गृह्णामि । परिमृज्य सादयति । एष ते योनिर्वीर तां पाहि । इति । इदं शुक्रपात्रे रसग्रहणमुच्यते ।

२९७ मन्थिपात्रे गृह्णाति । तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषद स्वर्विदम् । ०रोचनम् । उपयाम-

गृहीतोऽसि मर्काय त्वा जुष्टं गृह्णामि । इति । बर्हिषी अन्तर्धाय सक्तुभिः श्रीत्वाऽपोद्धृत्य बर्हिषी परिमृज्य सादयति । इदं मन्थिपात्रे सोमग्रहणमुच्यते ।

२९८ आग्रयणस्थं सोमं पात्रान्तरेऽवनीय तेनोदञ्चनेन च द्वयोरियोरधस्तादाग्रयणं गृह्णाति । ये देवा सो० मञ्जुषध्वम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि । इति । ततो मन्द्रेण हिं हिं हिं सोमः पवते सोमः पवते स्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्यै विशे पवतइषे पवतऊर्जे पवतेऽद्भ्यः पवतओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवतेऽस्मै सुन्वते यजमानाय पवते ज्यैष्ठ्याय पवते । अविच्छिद्योपरिमन्त्रं वदति । आग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवनापाहि विष्णुस्त्वां पातु विश्वं त्वं पाहीन्द्रियेण । परिमृज्य सादयति । एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति । इदमाग्रयणस्थाल्यां सोमग्रहणमुच्यते ।

२९९ एतदन्तान् उपांशु गृहीत्वाऽत ऊर्ध्वं सवनस्वरेण गृह्णाति । आग्नेयपात्रेण गृह्णाति । अग्नआयूंषि० दुच्छुनाम् । उपयामगृहीतोस्यग्नये त्वा ज्योतिष्मते । जुष्टं गृह्णामि । परि०यति एष ते योनिरग्नये त्वा तेजस्वते । इति । इदमाग्नेयपात्रे सोमग्रहणमुच्यते ।

३०० ऐन्द्रपात्रेण गृह्णाति । उत्तिष्ठन्नोजसा० चमूसुतम् । उपयामगृहीतोसीन्द्राय त्वौजस्वते जुष्टं गृह्णामि । इति । इदमैन्द्रपात्रे सोमग्रहणमुच्यते ।

३०१ सौर्यपात्रेण गृह्णाति । तरणिर्वि०रोचनम् । उपयामगृहीतोसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामि । परि०-

यति । एष ते योनिः सूर्याय त्वा भ्राजस्वते । इति । इदं परियति । एषते योनिरिन्द्रा यत्वौजस्वते इति । इदमैन्द्रपात्रे सोमग्रहणमुच्यते ।

३०२ तत उक्थ्यस्थाल्याम् । उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वत उक्थाऽयुवेयत्तइन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामि । इति । परि०मति । एष ते योनिरिन्द्राय त्वोक्थायुवे । इति । इदमुक्थ्यस्थाल्यां सोमग्रहणमुच्यते ।

३०३ ततो ध्रुवस्थालीं गृहीत्वाऽऽह । ये पूर्वया द्वारा प्रापत्स्यन्तः प्राञ्चस्ते निष्क्रामन्तु ये परया प्रत्यञ्चस्ते मा वो ऽभिपरिह्वारिषम् । ध्रुवस्थालीं सोन्नेतृकानभिषोतॄंश्च जघनेनाभिपरिहृत्योत्तरतो धारायां गृह्णाति । मूर्धानं दिवो०यन्त देवाः । उपयामगृहीतोस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामि । इति उपर्यविच्छिद्य मन्त्रं वदति । ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोच्युतानामच्युतक्षित्तमः । इति । ततः परिमृज्य यथाहृतं परिहृत्य यथास्थानं सादयति । एष ते योनिरग्नये त्वा वैश्वनराय । इति । इदं ध्रुवस्थालीसोमग्रहणमुच्यते ।

३०४ ततउन्नेता आधवनीयादुदञ्चनेनोपर्यर्धं द्रोणकलशं पूरयति अध्वर्युस्तस्मिन् पयः सक्तून् हिरण्यं च प्रक्षिप्य मिश्रीकृत्य परिप्लुपात्रं चमसास्य द्रप्सानुमन्त्रयते । द्रप्सश्चस्कन्द० सप्तहोत्राः । यस्ते द्रप्सः स्कन्दति०तं जुहोमि । यो द्रप्सो अंशुः ०तं जुहोमि । यस्ते द्रप्सो म० तं जुहोमि । इति चतसृभिः । इदं सोमद्रप्सस्कन्दनानुमन्त्रणमुच्यते ।

३०५ उन्नेतारमाह । अरिक्तं पूतभृतं कुरु पवमानस्य

ग्रहान् ग्रहीष्यामि । अयं पूतभृत्पूरणप्रैष उच्यते ।

३०६ उन्नेता पूतभृतो बिले दशापवित्रं वितत्याधवनीयात् द्वौ त्रीन्वो दश्चनानयति । अध्वर्युः द्रोणकलशमभिमृशति । उपयामगृहीतोऽसि प्रजापतये त्वा । तत आधवनीयम् । उप०सीन्द्राय त्वा । पूतभृतं उप०सि विश्वेभ्यस्त्वा देवेभ्यः । उन्नेतार माह । उन्नेतः प्रांचं राजानं पूतभृतमभिसंपवयतादृशाभिराधवनीयं मृष्ट्वा न्युब्जतात् । अयमाधवनीयन्युब्जकरणप्रैष उच्यते ॥

३०७ उन्नेता अत्रकाशचरणानन्तरं तथा करोति । अध्वर्युः अप उपस्पृश्योपस्तंभनबर्हिर्मुष्टे र्वर्हिर्द्वयमादायोपनिःसर्पति । तं निःसर्पन्तमन्वारभतउद्गाता । उद्गातारं प्रस्तोता । तं प्रतिहर्ता । तं यजमानः । तं ब्रह्मा । तं प्रतिप्रस्थाता मैत्रावरुणो वा । एवमन्वारब्धेषु अध्वर्युराहवनीये स्रुवाहुतिं जुहोति । अग्निः प्रातः सवने०मत्ताः स्याम स्वाहा । इति । एतयैवर्चा प्रतिप्रस्थाता । यथावेदमितरे । आश्वलायनयजमानस्य द्रप्सश्च स्कन्दयस्ते द्रप्स इति द्वाभ्यां होमः । सचान्वारम्भक्रमेण । अयं बहिष्पवमानारम्भकहोम उच्यते ॥

३०८ अध्वर्युर्बर्हिषी धून्वानो बहिष्पवमानायोद्गास्तावं प्रतिसर्पति । वागग्रेगा०यजमाने च । इति । आस्तावे यथाऽऽयतनमुपविश्य प्रस्तोत्रे बर्हिषी प्रयच्छति । ऋक्सा०प्रजात्यै । इति । जपति । वायुर्हिङ्कर्ता० बृहस्पतिःघत्वों-स्तुध्वम् । इति । इदं बहिष्पवमानस्तोत्रोपाकरणमुच्यते ॥

३०९ बहिष्पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति श्येनोऽसि०संपारय । इति । इदं बहिष्पवमानारम्भकवाचनम् ॥

३१० दशहोतारं व्याख्याय समाप्ते साम्नि यजमानं वाचयति । स्तुतस्य०रयीणाम् । इति । एवं सर्वस्तोत्रेषु । इदं स्तोत्रानन्तरवाचनम् ।

३११ अग्नीदग्नीन् विहर बर्हिः स्तृणाहि पुरोडाशाँ अलङ्कुरु प्रतिप्रस्थातः पशुरन्तिकेऽस्तु । इति । अयमग्निविहरणादिप्रैषः ॥

३१२ अप उपस्पृश्य । एहि यजमानेत्यामन्त्र्य । यजमानेन सह पूर्वया द्वारा हविर्धानं प्रविश्य । विष्णो त्वं नो०अग्नि । इतीदं सर्वपात्रस्थसोमोपस्थानम् ॥

३१३ आश्विनपात्रमादाय द्रोणकलशात्परिप्लुपात्रेण गृह्णाति । यावांकशा०तम् । उप०स्यश्विभ्यां त्वा०मि । परिमृ यति । एष ते योनिर्माध्वीभ्यां त्वा । इदमाश्विनपात्रे सोमग्रहणम् ॥

३१४ अप०स्पृश्य । एहि त०त्र्य । आहवनीयसमीपं गत्वा प्रचरण्यां स्रुचि चतुर्गृहीतं गृहीत्वा यजमाने ऽन्वारब्धे सप्तहोतारं मनसाद्रुत्याहवनीये जुहोति । यजमानो ऽध्वर्युश्च सर्वपात्रस्थं सोममुपतिष्ठते । परिभूरग्निं० सुन्मृजे । उपांशुपात्रम् । प्राणाय मे०पवस्व । उपांशुसवनं । व्याना०वस्व । ऐन्द्रवायवम् । वाचे मे०स्व । मैत्रावरुणं । दक्षक्रतुभ्यां मे०स्व । आश्विनम् । श्रोत्राय मे०स्व । युगपच्छुक्रामन्थिनौ । चक्षुर्भ्यां मे०स्व । आग्रयणम् । आत्मने मे०स्व । अतिग्राह्यान् क्रमेण । वीर्यायमेस्व । मन्त्रावृत्तिः । उक्थ्यम् । अङ्गेभ्यो मे०स्व । ध्रुवम् । आयुषे मे०स्व । द्रोणकलशम् । विष्णोर्जठरमसि वर्चो०स्व । आधवनीयम् । इन्द्रस्य जठरमसि वर्चो० स्व । पूतभृतम् । विश्वेषां देवानां जठर०स्व । सर्वपात्रस्य-

म् । को ऽसि को नाम०मुन्मृजे । इदं सर्वपात्रस्थसोमानां प्रत्येकमुपस्थानम् ॥

३१५ उन्नेता पूतभृति दशापवित्रं वितत्याधवनीयस्थं सोमं तस्मिन्नवनीय दशापवित्रेणाधवनीयं मृष्ट्वोत्तरस्य हविर्धानस्य नीडे ऽधोबिलं सादयति । इदमाधवनीयस्य हविर्धाननीडे सादनम् ॥

३१६ अध्वर्युः प्रचरण्यां नवकृत्व आज्यं गृह्णाति । आग्नीध्रः आग्नीध्रीयादङ्गारानादायाग्नीध्रीये होत्रीये चैकं विहृत्य । स्वयं बहिर्गच्छन् यूपाहवनीययोर्मध्येन नीत्वा प्रशास्त्रीये विहृत्य यथेतमेत्य ब्राह्मणाच्छंसीये पोत्रीये नेष्ट्रीये ऽच्छावाकीये च विहृत्य पुनस्तथैव गत्वा मार्जालीये विहृत्य यथेतमेत्याग्नीध्रीये ऽतिशिष्टान् विहरति । इदं धिष्ण्येष्वङ्गारविहरणम् ॥

३१७ अध्वर्युः पुरस्तात्प्रत्यङ्मुख उपविश्य विहृतान् धिष्ण्यान् न्युप्तमिवाऽऽघारयति । विभूरसि०सोः स्वाहा । इत्याग्नीध्रीये । वह्निरसि०हा । प्रशास्त्रीयम् । तुथो०हा । इति ब्राह्मणाच्छंसीयम् । उशि० स्वाहा । पोत्रीयम् । अङ्घारिनेष्ट्रीयम् अवस्यु०हा । अच्छावाकीयम् शुन्ध्यू०हा । मार्जालीयम् । समुद्र इत्यृचा पुनराग्नीध्रीये जुहोति । उत्तरस्य हविर्धानस्य चुबुके प्रचरणीं सादयति । इदं धिष्ण्याघारणम् ॥

३१८ आग्नीध्रः शालमुखीयादाहवनीयपर्यन्तं प्राकृतमन्त्रेण पृष्ठ्याँस्तृणाति । इदं सवनीयपृष्ठ्यास्तरणम् ॥

३१९ अध्वर्युः यूपरशनामादाय यूपसमीपमागत्य स्वरुं गृहीत्वा पूर्वां रशनामुद्गृह्य परिव्ययणादि प्रवरान्तमग्नीषोमीयवत्करोति । तत्र विशेषः मन्त्रेषु देवतास्थाने अग्निश-

ठद् कश्यः । होतृप्रवरान्तरम् । अश्विनाऽध्वर्यू आध्वर्यवात् । अहं चामुकशर्मा मानुषौ इति प्रतिप्रस्थातुर्नाम गृह्णाति । होत्रा हुते सकृद्गृहीतेन प्रवृताहुतीर्जुहोति । जुष्टो वाचो० स्यै स्वाहा । ऋचास्तो० नि स्वाहा । मूर्धा मा० ते स्वाहा । एवं प्रतिप्रस्थाता । अध्वर्युः पुनरुत्करं गत्वा । मित्रावरुणौ प्रशास्तारौ प्रशास्त्रात् । अमुकशर्मा मानुष इति मैत्रावरुणस्य नाम० ति । इन्द्रो ब्रह्मा ब्राह्मणात् । पूर्ववद्ब्राह्मणाच्छंसिनो ना० ति । मरुतः पोत्रात् । इति पोतुः । ग्रावो नेष्टात् । नेष्टुः । अग्नीमाग्नीध्रात् । इत्यग्नीधः । सर्वप्रवरात्पूर्वमाश्रावणप्रत्याश्रावणे भवतः । तत्र आश्राव्य प्रत्याश्राविते । अग्निर्होता देवीनां विशां पुरएतायां सुम्नन्यजमानो मनुष्याणां तयोरस्थूरिगार्हपत्यं दीदयच्छतं हिमाद्वायगधा सीत्संपृञ्चानावपृञ्चानौ तन्वः इत्याह । इदं सवनीयाङ्गमैत्रावरुणादिप्रवरणम् ॥

३२० आश्वलायनो यजमानः स्रुवेण प्रवृताहुतीर्जुहोति । अग्नीषोमीयवत्सवनीयपशुवपाप्रचार ऊहेन । अयं सवनीयपशुवपाप्रचारः ॥

३२१ पशुपुरोडाशनिर्वापप्रैषानन्तरं आग्नीध्रो माध्यन्दिनीयैः सवनीयैः सह निर्वपति । अयं सवनीयैः सह पशुपुरोडाशनिर्वापः ॥

३२२ कुम्भ्यावदाननिक्षेपानन्तरं उत्करे स्फ्यादीन् विधायाभिधाय यजमानमुपस्थापयति । स्फ्यः स्वस्ति० ह्वयन्ताम् । इति यजमान आहवनीयमुपतिष्ठते । नमो ऽग्नये म० र्यात् । नेनोऽरु० पाहि । इत्याग्नीध्रीयम् । सदसः पूर्वद्वारि प्रत्यङ्मुखस्तिष्ठन् होत्रीयम् । नम इन्द्रा० र्वधीः । इति सव्यमावृत्य प्राङ्मुखो जपति । दृढे स्थः शि० भ्येभ्यः । इति । प्रद-

क्षिणमावृत्य सदसः पूर्वे द्वार्बाहू युगपदभिमृशति । देवी० म्म् । इति । सदः प्रविशति । नमः सद० धि०ये । इति । मैत्रावरुणधिष्ण्यस्य दक्षिणतः स्वायतनाद्बहिः सदसस्तृणं नैर्ऋत्यां दिशि निरस्यति । अहे०तरः । इति अप० स्पृश्योदङ्मुख उपविशति । वसो० गेषम् । इति । पृथिवीं दृष्ट्वा द्यामीक्षते । पातं०हुः । इति । प्राचीनावीती दक्षिणार्धमीक्षते । आगं० यास्त । इति । अप उपस्पृश्य तूष्णीमुत्तरार्धं परीक्षते । इदं यजमानस्य सदस्युपवेशनम् ॥

३२३ अध्वर्युप्रतिप्रस्थातारौ आहवनीयोपस्थानाद्येवदन्तं कुरुतः । अध्वर्युर्दक्षिणद्वार्बाहुमूले प्रत्यङ्मुख उपविशति । उत्तरे प्रतिप्रस्थाता । इदं सदसि प्रसर्पणम् ॥

३२४ एवं सम्प्रसृप्तेषु आग्नीध्रः पञ्चायतनायां पात्र्यां मध्ये पुरोडाशं पूर्वस्यां धानादक्षिणतः करम्भं पश्चात्परिवापं उत्तरत आमिक्षा प्रकृतिवद्यथार्थोहसहितैर्मन्त्रैरुपस्तरणादि कृत्वोद्वास्य कपालोद्वासनान्तं कृत्वा हवींषि परिगृह्य पूर्वद्वारा निष्क्रम्योत्तरेण सद आग्नीध्रीयं धिष्ण्यं चाहृत्य पूर्वद्वारा हविर्धानं प्रपाद्यस्रुचां पश्चात् खरे सादयति । उत्करे विशये वा वाजिनम् । इदं खरे सवनीयासादनम् ॥

३२५ ऐष्टिकपाशुकानुष्ठानकाले ब्रह्मयजमानावाहवनीयस्य दक्षिणत उपविशतः तथा द्विदेवत्यप्रचारे । सौमिके तु सदसि पूर्वो यजमानोऽपरो ब्रह्मा । आग्नीध्र उत्करे । सौमिके त्वाग्नीध्रीये । अध्वर्युर्जुहूपभृतोरुपस्तृणान आह । प्रातः सावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रू३हि । इति । अवदानादिप्रत्यञ्जनान्तं कृत्वा जुहूपभृतावादाय

पृष्ठ्याया दक्षिणतः प्राङ्मुखस्तिष्ठन्नाह । प्रातःप्रातःसावस्येन्द्राय पुरोडाशानप्रस्थितान्प्रे३ष्य । इति । आमिक्षाया-स्तूष्णीमिडायामवदानम् । अयं प्रातःसवनीयप्रचारः ॥

३२६ होतृसकाशे इडां स्थापयित्वा प्राङायन्नाह । वायव इन्द्रवायुभ्यामनुब्रू३हि । इति प्रतिप्रस्थाता आदित्यस्थाल्या औपशयं पात्रमादाय तस्मिन् द्रोणकलशात्परिप्लुवापात्रेण गृह्णाति । उप०ताभ्यां गृह्णामि । इत्यैन्द्रवायवे सोमग्रहम् ॥

३२७ सव्येन प्रतिनिर्ग्राह्यं दक्षिणेनैन्द्रवायवमादाय निष्क्रामति । अध्वर्युस्तथैव प्रतिप्रस्थातुर्ग्रहावादाया ऽपरेण परिक्रम्य पृष्ठ्याया उत्तरतः प्राङ्मुखाय तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छति । सव्येन ग्रहं धृत्वा दक्षिणेनाज्यस्थाल्याः स्रुवेणोपहत्य प्राञ्चं तिर्यञ्चं वा आघारयति । अध्वरो यज्ञो०सोम स्वाहा । इति । अत्याक्रम्य । वायवइन्द्रवायुभ्यां प्रेष्य । वषट्कृते जुहोति । द्वितीयवषट्कारे ऽध्वर्युप्रतिप्रस्थातारौ जुहुतः । अध्वर्युर्यजमानं वाचयति । योन०श्चेतयानि । इति । प्रतिप्रस्थाता प्रतिनिर्ग्राह्य संस्रावमध्वर्युपात्रे ऽवनयति । अध्वर्युः उभयोरर्धं प्रतिप्रस्थातुः पात्रे । प्रतिप्रस्थाता प्रत्यगावृत्या ऽध्वर्योर्दक्षिणेन पात्रमाहृत्य स्वयमुत्तरेण हविर्धानं प्रविश्य तदादित्यस्थाल्यामवनयति । देवेभ्यस्त्वा । इति । अयमैन्द्रवायवग्रहप्रचारः ॥

३२८ आज्यपुरोडाशपश्वाऽऽमिक्षाचमसाहुतयो मध्ये । अभितो ग्रहाहुतयो धारया पात्रमुखेन सर्वत्र । अध्वर्युः प्रदक्षिणमावृत्य हविर्धानं प्रविश्य प्रतिप्रस्थातुर्दक्षिणेन पात्रं

हृत्वा स्वयमुत्तरतो गत्वा होत्रे पात्रं प्रदाय प्राङायन्नाह । मित्रा वरुणाभ्यामनुब्रू३हि । इति । प्रतिप्रस्थाता तथैव मैत्रावरुणस्य प्रतिनिर्ग्राह्यं गृह्णाति । उपयाऽस्पृत०मि । ऐन्द्रवायववदादाय निष्क्रामति । पूर्ववत्प्रतिनिर्ग्राह्यं प्रदायाऽऽश्राऽयाऽऽह । मित्रावरुणाभ्यां प्रेष्य । इति । वषट्कृते सहोभौ जुहुतः । यज०वाचयति नमो मित्रा०याणि इति । प्रतिप्रस्थाता संस्रावं पूर्ववदवनयति । अध्वर्युः उभयोरर्धं प्रतिप्रस्थातुः पात्रे । स तदादित्यस्थाल्यामवनयति । विश्वेदेवेभ्यस्त्वा इति अयं मैत्रावरुणप्रचारः ॥

३२९ अध्वर्युः होत्रे पात्रं प्रदाय प्राङायन्नाह । अश्विभ्यामनुब्रू३हि । इति । उभौ सह जुहुतः । यज०यति० योनो श्विना०याणि । इति प्रतिप्रस्थाता पूर्ववत्संस्रावमवनयति तस्य पात्रे ऽध्वर्युस्तदर्धं पूर्ववत् । स तदादित्यस्थाल्याम् । विश्वेभ्यस्त्वा देवेभ्यः । इति अयमाश्विनप्रचारः ॥

३३० द्रोणकलशादादित्यस्थालीमुपयंधां कृत्वोपशयपात्रेणाऽपिदधाति । विष्णु०रुयत् । इति द्विदैवत्यप्रचारः ॥

३३१ अध्वर्युः पूर्ववद्धोत्रे पात्रं प्रदाय प्राङायन्नाह । उन्नीयमानेभ्यो ऽनुब्रू३हि होतुश्चमसमनून्नयध्वमुभयतः शुक्रान् कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा तु स्वमुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताऽप्रोक्षितैः प्रत्युपलक्षस्व । इति । होतृब्रह्मयजमानोद्गातृहोत्रकचमसानच्छावाकचमसरहितान् स्रुचां पश्चात्सादयित्वा उन्नेत्रा द्रोणकलशात् पूतभृतो द्रोणकलशाच्च क्रमेणाहूतेन सोमेन क्रमेण स्वं स्वं चमसमुन्नीयोत्तरवेद्यां सादयन्ति । इदं चमसोन्नयनमुच्यते ॥

३३२ प्रतिप्रस्थाता द्वौ प्रोक्षितौ द्वावप्रोक्षितौ शमिच्छकलावादाय प्रोक्षिताऽप्रोक्षितौ द्वौ शकलावध्वर्यवे प्रयच्छति । अध्वर्युः शुक्रमादत्ते । प्रतिप्रस्थाता मन्थिनम् । दक्षिणेन प्रोक्षिताभ्यामपिधायाऽप्रोक्षिताभ्यामधस्तात्सव्येनोपयच्छतः । इदं शुक्रामन्थिग्रहणम् ॥

३३३ अध्वर्युः दक्षिणं द्वारबाहुं निश्रयमाणो निष्क्रामति । प्रतिप्रस्थातोत्तरम् । आयुःसं०तम् । प्राणꣳसं०तम् । अपानꣳसं०तम् । व्या०तम् । चक्षुः०तम् । श्रो०तम् । एतैः षड्भिर्मन्त्रैः प्रतिमन्त्रं वोत्तरवेद्याः पश्चाद्ग्रहौ सन्धत्तः । अध्वर्युः दक्षिणेनोत्तरवेदिं परिक्रामति । स्तुतो०चिषा । इति । उत्तरेण प्रतिप्रस्थाता । स्तुतो० चिषा । इति । उभौ पुरस्तात्प्रत्यङ्मुखौ उत्तरवेदिमारोहतः । इति इदमुत्तरवेद्यारोहणम् ॥

३३४ इन्द्रेण स०यासम् । इति आयुरस्य०धत्तम् । एतैः षड्भिर्मन्त्रैः यूपाहवनीययोर्मध्ये ग्रहौ सन्धत्तः । उत्तरवेद्या अवरोहतः । तौदे०ने च । इति इदमुत्तरवेद्यवरोहणम् ।

३३५ अध्वर्युर्यजमानस्य पाप्मानं मनसा ध्यायन् अप्रोक्षितं शकलं बहिर्वेदि निरस्यति । निर०श्मना । इति । एवं प्रतिप्रस्थाता । नि०ना । इति अप्रोक्षितशकलनिरसनम् ।

३३६ अध्वर्युः अप उपस्पृश्य प्रोक्षितशकलमभ्यादधाति । शुक्रो०हा इति । एवं प्रतिप्रस्थाता । मन्थि०हा । इति । इदं प्रोक्षितशकलाऽभ्याधानम् ।

३३७ यमसाध्वर्यवश्चमसानुपोद्यच्छन्ते । अध्वर्युः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नाश्रा०याऽऽह । प्रातः प्रातः सावस्य

शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य। इति । अयं चमसानयनप्रैषः ।

३३८ उभौ वषट्कारे जुहुत० सम्र०जुहोमि स्वाहा । चमसाध्वर्यवश्चमसान् सकृज्जुह्वति । अनुवषट्कारे पुनरुभौ। चमसाध्वर्यवश्च । अध्वर्युराह । प्रैतु होतुश्चमसः प्रब्रह्मणः । प्रोद्गातुः प्रयजमानस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृद् द्रोणकलशादभ्युन्नीयोपावर्तध्व९ होतुश्चमसाध्वर्यवुपरमेहि प्रतिप्रस्थातरुत्तरार्धआहवनीयस्य मन्थिनः स९स्रावंजुहुधि । इति । प्रदक्षिणमावृत्य होतुश्चमसे ग्रहस्य संस्रावमवनयति । हुतं०मनुष्येभ्यः । इति । प्रतिप्रस्थाता आहवनीयस्योत्तरार्धे उपविश्योत्तरार्धे मन्थिनः संस्रावं जुहोति । एष ते रु०हा । इति । यजमानप्रतिप्रस्थातारौ अप उपस्पृशतः । प्रतिप्रस्थाता ऽध्वर्युः शुक्रपात्रमादाय स्वीयं मन्थिपात्रं च खरे सादयति । अयं शुक्रामन्थिप्रचारः ।

३३९ होतृब्रह्मोद्गातृयजमानानां चमसान् चमसाध्वर्यवः सदसिनयन्ति । प्रशास्त्रादीनां चमसाध्वर्यवः सर्वेषांश्चमसान् द्रोणकलशादभ्युन्नीयोपावर्तन्ते । इदं सदसि ब्रह्मादिचमसनयनम् ।

३४० अध्वर्युः मैत्रावरुणचमसमादायाऽऽश्राव्याऽऽह । प्रशास्तर्यज । इति । वषट्कारानुवषट्कारयोर्होमौ । ब्राह्मणाच्छंसीयच०ह । ब्रह्मन्यज । इति । पोतृच०ह । पोतर्यज । इति । नेष्टृच०ह । नेष्टर्यज । इति । आग्नीध्रच०ह । अग्नीद्यज । इति । अयं प्रस्थितयाज्याप्रचारः ।

३४१ । ततो होतुरग्रे उपविशति । प्रशास्त्रादीनां चम-

साध्वर्यवः सदसि चमसान्नयन्ति । इदं प्रशास्त्रादिचमसनयनम् ।

३४२ होत्रा अयाडग्नीदिति पृष्टे ऽध्वर्युरयाडग्नीदित्याह । होत्रा आत्तमैन्द्रवायवपात्रमध्वर्यु प्रतिप्रस्थातारावन्वारभेते । होत्रा भक्षिते तस्मिन्नन्वारब्धे अध्वर्युः होतरुपह्वयस्व । प्रतिप्रस्थातरुपह्वयस्व । इति तावुपहूय नासिकयोरुपरि निग्राहं भक्षयति । मयि०पाहि । इति । प्रतिप्रस्थाता होतारमध्वर्युञ्चोपहूयोक्तमन्त्रेण भक्षयति । पुनर्होत्रा भक्षिते तथैवाध्वर्युः प्रतिप्रस्थाता च मन्त्रेण ऐन्द्रवायववन्मैत्रावरुणपात्रस्य भक्षः । चक्षुषोरुपरि निग्राहं भक्षणम् । मयि०पाहि । इति विशेषः । होत्राऽऽश्विनपात्रे भक्षिते ऽपि तथैव भक्षः श्रोत्रयोरुपनिग्राहं सर्वतः परिहारं भक्षणम । मयि०श्रोत्रं मे पाहि । इति । विशेषः । इदं द्विदेवत्यग्रहभक्षणम् ।

३४३ अध्वर्युरप उपस्पृश्य हौत्रङ्गुलिपर्वाञ्जनादि करोति । इडोपह्वानकाले चमसिनश्चमसानुपगृह्णन्ति । उपहूतायामिडायां पुरोडाशशकलमैन्द्रवायवपात्रे आमिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्रे प्रास्यैतानि गृहीत्वा पूर्वद्वारा निष्क्रम्याऽपरद्वाराहविर्धानं प्रपाद्य दक्षिणहविर्धानस्योत्तरचक्रमार्गे सादयत्यातृतीयसवनात् । यथेतमेत्याग्नीध्रे षडवत्तमादधाति । प्रशास्तृसहिताः षट् सशेषामिडां भक्षयित्वा मार्जयन्ते । इदं सवनीयेडाभक्षणम् ॥

३४४ प्राशित्रपरिहरणम् । शाखापवित्रप्रहरणम् । वाजिनप्रचारः । अयं सौमिकवाजिनप्रचारः ॥

३४५ तत्र सवनीयवद्वाजिनस्यासादनम् । सदसि इडोपहूतांश्चमसान् भक्षयन्ति । तद्यथा । होताऽध्वर्यु प्रतिप्रस्था-

तारं चोपहूय स्वचमसं भक्षयति। अध्वर्युस्तं प्रतिप्रस्थातारं चोपहूय भक्षयति। भक्षेहि मा०यामि। इति। एवं प्रतिप्रस्थाता तौ उपहूय। होता ब्रह्माणमुपहूय तच्चमसम्। तथैव यजमानचमसम्। प्रशास्त्रादिचमसांस्तु चमसिनमध्वर्युं प्रतिप्रस्थातारं चोपहूय क्रमेण। प्रशास्त्रा होत्रध्वर्युप्रतिप्रस्थातॄनुपहूय स्वचमसम्। अध्वर्युः प्रशास्तारं होतारं प्रतिप्रस्थातारं चोपहूय। प्रतिप्रस्थाता प्रशास्तृहोत्रध्वर्यूनुपहूय। एवमन्येषां होत्रकाणां चमसान् भक्षयित्वा होतृचमसं पूर्ववद्भक्षयन्ति। ब्रह्मा होतारमुपहूय स्वचमसम्। यजमानो भक्षेहि इत्यादिमन्त्रेण तथैव स्वचमसम्। पूर्ववत् त्रयो होत्रकचमसान्। इदं चमसभक्षणम्॥

३४६ तत आत्मानमभिमृशन्ते। हिन्व०तिगाः। इति अपः स्पृष्ट्वा एकधनाभिः स्वस्वचमसानाप्याययन्ति। आप्या० गथे। इति। इदं चमसाप्यायनम्॥

३४७ चमसाध्वर्यवो होतृचमसादीन् दक्षिणहविर्धानस्य पश्चादक्षस्याप्यधः सादयन्ति। इदं नाराशंससादनम्॥

३४८ अध्वर्युः सदसः पुरस्तादासीनस्याऽच्छावाकस्य हस्ते सवनीयशेषान्महत्पुरोडाशशकलमादधदाह। अच्छावाक वदस्व यत्ते वाद्यम्। इति। अयमच्छावाकवादनप्रैषः॥

३४९ उपो अस्मानित्यच्छावाकस्य श्रुत्वा होतारमाह। होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्व इति। प्राङायन्नाह। उन्नीयमानेभ्योऽनुब्रूह्यच्छावाकस्य चमसाध्वर्यवुन्नयस्वोभयतः शुक्रं कुरुध्व। इति अयमच्छावाकचमसोन्नयनप्रैषः॥

३५० सत्तु चां पश्चाच्चमसं निधाय। द्रोणकलशात्पूतभृतो

द्रोणकलशादित्युन्नीयोत्तरवेद्यां सादयति । अध्वर्युः अच्छावाकचमसमादायाऽऽश्राव्याह । अच्छावाक यज । इति । वषट्कृतानुवषट्कृतयोर्हुत्वा चमसं हृत्वा भक्षणं न कुर्यात् । चमसमाप्याय्य पूर्ववत्सादयति । आह । अच्छावाकसीदनेष्टः पत्नीमुदानयाग्नीदच्छावाकं मे सन्नं प्रब्रूतात् इति । नेष्टा पत्नीजनीहस्तां पत्नीमानयति । प्रेद्ध०सी । इति पत्नीजनीसहितपत्न्यानयनम् ।

३५१ पूर्वद्वारा निष्क्रम्याऽपरया द्वारा सदः प्रपाद्य पत्नीजनीरादाय स्वस्य धिष्ण्यस्य पश्चादसञ्चरे उद्गातृदर्शनमार्गे सादयति । आग्नीध्रः । सन्नो ऽच्छावाको ऽच्छावाकॅ सन्नमुपपत्नीजनीरसीषदन् । यजमानः आग्नीध्रे हविः शेषान् भक्षयति । पत्नी स्वशालायां हविष्यम् । इदं हविःशेषादिभोजनम् ।

३५२ अध्वर्युर्दक्षिणमृतुपात्रमादत्ते । प्रतिप्रस्थातोत्तरम् । अध्वर्युः परिप्लुपात्रेण द्रोणकलशात् गृह्णाति । उपयामग०मि इति प्रतिप्रस्थाता । उप०माध०मि इति अध्वर्युर्दक्षिणं द्वार्बाहुं संश्लिष्य निष्क्रामति । प्रतिप्रस्थातोत्तरं द्वार्बाहुं संश्लिष्य हविर्धाने तिष्ठति । होमार्थं गच्छन्तमागच्छन्तं चाध्वर्युं स्वपात्रेण परिगृह्णाति । अध्वर्युः प्रतिप्रस्थातारं ऋतुना प्रेष्य । वषट्कृते सशेषं जुहोति । होमाय निष्क्रामति प्रतिप्रस्थाता । प्रविशत्यध्वर्युः । स गृह्णाति । उप०शुक्रामि । प्रतिप्रस्थाता ऽध्वर्युर्वजति । निष्क्रामत्यध्वर्युः प्रविशति प्रतिप्रस्थाता स गृह्णाति । उप०शुचये०मि । अध्वर्युः पूर्ववद्यजति । निष्क्रा०स्थाता प्रवि०ध्वर्युः । स०ति । उप०नभा०मि प्रति०ज०ति निष्क्रा०ध्वर्यु । प्रवि०स्थाता स०ति उप०नभस्या०मि । अध्वर्युर्यजति । निष्क्रा०स्थाता ।

प्रवि०ध्वर्युः । स पात्रमुखं विपर्यस्य गृह्णाति । उप०सीषा-य०मि । प्रतिप्रस्थाता पूर्ववद्यजति । निष्क्रामत्यध्वर्युः । प्रवि०स्थाता । स विपर्यस्य गृह्णाति उप०स्यूर्जो०मि । इति । अध्वर्युः । ऋतुभिः प्रेष्येति यजति । निष्क्रामति०स्थाता । प्रवि०ध्वर्युः । स०ति उ०सहा०मि । इति । प्रति०ताध्व०व-द्यजति । नि०र्युः प्र०ता । स०ति उ०सहस्या०मि । इति । अ० पूर्व०ति नि०ता प्र०र्युः । स विपर्यस्य०ति उ०तपाय०मि । इति । प्रति०पू०ति । नि०त्यध्वर्युः । प्रवि०ता । अध्वर्यु-स्तमाह । प्रतिप्रस्थातरुपैतेन पात्रेण रम । इति । अयमृतु-याजविरामप्रैषः ।

३५३ ऋतुना प्रेष्येति यजति । प्रशास्त्रा ऽध्वर्यू यजत-मित्युक्ते आह । होतरेतद्यजेति । वषट्कारे जुहोति । हवि-र्धानं प्रविशति । प्र०ता विपर्यस्य०ति । उ०व० सर्पो०मि । इति । ग्रहमादाय दक्षिणद्वार्बाहुं निश्रयमाणो निष्क्रामति । उत्तरं प्र० ता । ऋतुना प्रेष्य । गृहपते यजेति प्रशास्त्रोक्ते यजमानः होतरेतेन । इत्याह । सहोभौ जुहुतः । प्र०ताऽ-ध्वर्युपात्रे संस्रावमवनयति । अयमृतुयाजप्रचारः ।

३५४ अध्वर्युस्तमाह । प्र०तरे तेन पात्रेणैन्द्राग्नं ग्रहं गृहाण इति । प्र०ता द्रोणकलशात्परिप्लुपात्रेण०ति । इन्द्रा० पिता । उप०सीन्द्रा०मि । इति इद मैन्द्राग्नग्रहणम् ।

३५५ अध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुद्रुत्य होतृपोतृनेष्ट्रा-ग्नीध्रब्राह्मणाच्छंसिमैत्रावरुणैः सह स्वपात्रं प्रथममुखेन भक्ष-यति । वसु०मि । इति । तथा प्र०ता । त्रयाणां परस्पर-मुपहवः । विपर्यस्य पात्रं होत्रा पोत्रा नेष्ट्रा अच्छावाकेन सहोभौ । ऋतुभिः पीतस्येति विपर्य्यस्य द्विर्होत्रौभौ । ऋतुना पीतस्येति । अथ वा होत्राध्वर्युः पोत्रा प्र०ता नेष्ट्रा ऽध्वर्युः ।

अग्नीधा प्र०ता ब्रा०सिना ऽध्वर्युः। मै०ता। विपर्यस्य ऋतुभिर्होत्रा ऽध्वर्युः। पोत्रा प्र०ता। नेष्ट्रा ऽध्वर्युः। अच्छावाकेन प्रति०ता। विपर्यस्य ऋतुना होत्रा ध्वर्युः। होत्रध्वर्युप्रतिप्रस्थातारः परस्परमुपहूय च द्विदेवत्यपात्रभक्षणम्।

३५६ अध्वर्युर्होतारं पृच्छति। प्रणवमुपा० शुशा० स० शा० सिष्यसी३विग्राहा३म् इति। अयं शंसनार्थाध्वर्युप्रश्नः।

३५७ होता यथाशंसिष्यन् भवति तथा प्रत्याह। अध्वर्युः पात्रं नीचैरवष्टभ्य सव्यमावृत्य प्राङ्मुखउपविश्ये-डाजपं कृत्वा ऽपसव्यमावृत्य होतुरग्रे प्रत्यङ्मुखः प्रह्वस्तिष्ठन् प्रतिगृणाति। आहावे शों३सामो दैव। तूष्णीं शंसे प्रणवान्ते उपांशु ओथामो दैवों३ प्रणवे ओ३थामो दैव। अवसाने ओथामो दैव। शस्त्रमध्याहावे। ओं३ ओं३ थामो दैव। शस्त्रान्ते। ओं३। इति प्रतिगीर्य। अयं प्रतिगर इत्युच्यते।

३५८ प्रातः सवने शस्त्रान्ते। उक्थशाः इत्युक्त्वा यजमानं वाचयति। शस्त्रस्य०रयीणाम् इति। इदं शस्त्रान्तेवाचनम्।

३५९ सदसि पात्रं निधाय प्राङेत्यापूर्वोज्यात्स्रुवेण प्रचरण्या वा यन्मआत्मन इति द्वाभ्यां व्याहृतिभिश्च जुहोति। इदं शस्त्रप्रायश्चित्तम्।

३६० ऐन्द्राग्नं ग्रहमुपोद्यच्छते। चमसाध्वर्यवो नाराशंसान्। अध्वर्युर्होतारं प्रेष्यति। उक्थशा यज सोमस्य इति। वषट्कारानुवषट्कारयोर्जुहोति। चमसाध्वर्यवश्च-मसान् द्विरनुप्रकम्पयन्ति न जुह्वति। ग्रहमादाया ऽध्वर्युः। सद आगच्छति। चम० ध्वर्यवश्चान्०। होत्रा भक्षिते तमुप-

हूय भक्षयति । वसु० इन्द्राग्निभ्याम्०मि । इति । होत्रोभा-वुपहूय भक्षिते तं प्र०तारं चोपहू०ति । नरा०मि । इति प्र०ता तावुपहूय । ब्रह्मादयो होतारमुपहूय स्वस्वचमसान्नराशंसपीतेन । हिन्वमङ्गत्यात्मानं प्रत्यभिमृश्याप्यायस्वेति चमसानाप्याय्य पूर्ववत्सादयन्ति अयमाज्यशस्त्रोत्तरभक्षः।

३६१ तत्रैव पात्रं निधाय शुक्रपात्रमाददान आह। उन्नेतर्यदेमं वैश्वदेवं ग्रहं गृह्णाम्यथोदञ्चं राजानं पूतभृतमभिमन्यवयताद्दशाभिर्द्रोणकलशं सृष्ट्वा न्युब्जतात् इति । द्रोणकलशात्परिप्लुपात्रेण वैश्वदेवं गृह्णाति । उपयाम०मि इति परिमृज्य सादयति । ए०भ्यः । इति । इदं वैश्वदेवग्रहे सोमग्रहणम् ।

३६२ उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशस्थं सोममवनीय दशापवित्रेण द्रोणकलशं सृष्ट्वा ग्रावसु न्युब्जति । अध्वर्युपदुपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङाद्रुत्य स्तोत्रमुपाकरोति । ऋ०त्यै इति । इदं द्वितीयस्तोत्रोपाकरणम् ।

३६३ पूर्ववज्जपति । स्तोत्रे प्रक्रान्ते । अग्नीत्सवनीयान्निर्वप । इत्याह । आग्नीध्रः प्रथममाग्नेय मेकादशकपालं पुरोडाशं सवनीयांश्चामिक्षावर्जं तन्त्रेण निर्वपति । अयं माध्यन्दिनसवनीयनिर्वापः ।

३६४ प्रस्तोत्रा एषोत्तमेत्युक्ते ऽध्वर्युः प्राङ्मुख उपविश्येहाजपं कृत्वा शस्त्रं प्रतिगीर्य प्रायश्चित्तं हुत्वा वैश्वदेवमादायाऽऽह उक्थ०स्य । इति । पूर्ववज्जुहोति । चमसाननुप्रकम्पयन्ति । अयं वैश्वदेवग्रहप्रचारः ।

३६५ होत्रा भक्षिते तमुपहूयाध्वर्युः । वसु०विश्वै०मि । इति । होतृचमसं होत्रध्वर्युप्रतिप्रस्थातारः पूर्ववत् । ब्रह्मा-

दयो होतारमुपहूय स्वस्व चमसान् । चम०र्यवश्चमसान्मार्जालीये प्रक्षाल्य मैत्रावरुणचमसादीन् उदीचः स्रुचां पश्चात्सादयन्ति । अध्वर्युराह । प्रतिप्रस्थातरिमे ऋतुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपि सृज । इति । अयमृतुपात्रादिप्रक्षालनप्रैषः ।

३६६ प्र०ता तथा करोति । अध्वर्युः प्राञ्चायन्नाह । मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय । इति । चम०र्यवः उन्नेत्रा हृतेन पूतभृत्सोमतृतीयेन क्रमेण चमसानुन्नीयोत्तरवेद्यां सादयन्ति । अध्वर्युरुक्थ्यस्थाल्या औपशये पात्रे उक्थ्यतृतीयं गृह्णाति । उप०देवेभ्य०मि । इति । स्थालीमभिमृशति । पु०मि । इति । प०ति । एष०त्वा । इति । इदमुक्थ्यप्रथमांशग्रहणम् ।

३६७ उपाकरणादिप्रायश्चित्तहोमान्तम् । आह । उ०सोमानाम् । इति । पूर्ववज्जुहोति । च०वश्चमसान् जुह्वति । पूर्ववन्मैत्रावरुणचमसे संस्रावम०ति । उत्तरखरश्रोण्यां पात्रं निधाय चमसं मैत्रावरुणाध्वर्यु प्र०तारोभ०ति । वसु०मित्रा०मि । इति । मै०णो ब्रह्मादिचमसास्तं चमसिनमुपहूय । तच्चमसं त्रयः पुनः पूर्ववत् । ब्रह्मादयो मै०णमुपहूय । इदं मैत्रावरुणचमसादिभक्षणम् ॥

३६८ प्रत्यभिमृश्य माप्याययन्ति प्रक्षाल्य ब्राह्मणाच्छंसिचमसादीन्सादयति । अध्वर्युः । प्रतिप्रस्थातर्ग्रहैः ते प्रचर । इति । अयं ग्रहप्रचारार्थप्रतिप्रस्थातृप्रैषः ॥

३६९ प्र०ता प्राञ्चायन्नाह । ब्राह्मणाच्छंसिनश्चमस०य । इति । पूर्ववत्पूतभृतो ऽर्धेन चमसानु०सा०ति । प्रति०त उक्थ्यस्थाल्यौपशयपात्रे उक्थ्यसार्धं गृह्णाति । उप०इन्द्रा०मि । इति । पूर्ववदभिमृश्य सादयति । इदं द्वितीयोक्थ्यग्रहणम् ॥

३७० स्तोत्रोपाकरणादि । ब्राह्मणाच्छंसिशस्त्रं प्रतिगीर्य ग्रहमादायाऽऽह । उक्थशा यज सोमानाम् । इति पूर्ववत् हुत्वा हुतेषु चमसेषु संस्रावमवनयति पूर्ववत् । पात्रं निधाय ब्राह्मणाच्छंसिचमसं पूर्ववत् त्रयो भक्षयन्ति । ब्राह्मणाच्छंसी ब्रह्मादीनुपहूय तच्चमसान् । पुनस्त्रयः पूर्ववत् । ब्रह्मादयस्तमुपहूय स्वस्वचमसान् । मन्त्रे इन्द्रेण पीतस्येति विशेषः । प्रत्यभिमर्शनम् । नाप्यायनम् । इदं ब्राह्मणाच्छंसिचमसप्रभृतिभक्षणम् ॥

३७१ पूर्ववत्प्रक्षाल्याच्छावाकचमसादीन् सादयन्ति । प्रति०ता प्राह० । अच्छावाकचमसमनूयध्वमुन्नेतः सर्वश एव सोमं राजानं प्रभावय मातिरीरिचः, इति । अध्वर्युः प्रतिप्रस्थातरुपैतेन पात्रेण एमैहि यजमान इति । यजमानेन सह हविर्धानं गत्वा द्रोणकलशं दक्षिणहविर्धानस्य पश्चादक्षं निधाय ग्रावणः पृथक् कृत्वा नीडे कृष्णाजिने अभीषमन्तरेणेषे निधाय । अधिषवचर्मफलकयोः प्राचीनग्रीवमुत्तरलोमः यज्ञ प्रतितिष्ठेति मन्त्रेणोपस्तृणाति । तस्मिन् पूर्ववत् ग्रावणः कृत्वा पूर्ववन्मन्त्रेण राजानमुपावहरन्ति । पूर्ववदुद्गातॄन्प्रत्युक्त्वा आधवनीये वसतीवरीणामेकधनानां चार्धमानीय ता एकधना वसतीवरीश्च यथास्थानं सादयन्ति । चमसाध्वर्यव उन्नेत्राऽऽहूतेन सर्वशः पूतभृत्सोमेनाच्छावाकचमसमुख्यान् उन्नीय सादयन्ति । प्रतिप्रस्थाता पूर्ववदौपशयपात्रे उक्थ्यस्थालीस्थं सर्वं राजानं गृह्णाति । उप०इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामि, इति । नोक्थ्यस्थालीमभिमृशति । मुष्ट्वा न्युब्जति । ग्रहं परिमृज्य सादयति । एष० ग्निभ्यां त्वा, इति । इदमुक्थ्यतृतीयग्रहणम् ।

३७२ दशापवित्रं द्रोणकलशे निधाय स्तोत्रोपाकर-

पादि । अच्छावाकश्चात्र प्रतिगीर्य पूर्ववत् जुहोति । चमसां-श्च । ब्राह्मणाच्छंसिचमसवदच्छावाकचमसभक्षणम् । मन्त्रे इन्द्राग्निभ्यां पीतस्येति विशेषः । इदम् अच्छावाकचमस-प्रभृतिभक्षणम् ।

३७३ चमसप्रक्षालनानन्तरं तान् पूतभृदाधवनीययोर्मध्ये परिप्लुना सह निदधाति । इदं परिप्लुसहितचमसनिधानम् ।

३७४ अध्वर्युः अग्निर्मूर्द्धा दिव इत्येकामाहुतिं हु भिन्दाहुती व्याहृतीश्च हुत्वा ऽऽह । प्रशास्तः प्रब्रूहि । तेन सर्प-तेत्युक्ते सर्वे यथाप्रसृप्तं निःसर्पन्ति । समाप्तमेते प्रातः सवनम् । अथ प्रातः सवनमित्यारभ्यैतदन्तं कर्म प्रातः सवनमित्युच्यते ।

३७५ अथ माध्यन्दिनम् । उत्तरार्धे तृणान्ते । अध्वर्युः प्रा-ञ्चायन्नाह । अभिषोतार एतदाह्वयत ग्रावस्तुतमेहि यजमान । अयं ग्रावस्तुत्प्रैष उच्यते ॥

३७६ यजमानाभिषोतृभिश्च सह पूर्वया द्वारा हवि-र्धानं प्रविश्य होतृचमसे आधवनीयापोवनीय चर्मणि नि-धाय ताः प्रेक्षमाणं यजमानं वाचयति । निग्राभ्यास्थेत्यादि पूर्ववत् । ता यजमानाय प्रदाय चतुर्णामन्यतमं ग्रावाणमा-दत्ते । देवस्य त्वेत्यादिमन्त्रेण ग्रावासीत्यादिमन्त्रेणाभिम-न्त्रयते । इदं माध्यन्दिनसवनीयप्रेक्षणवाचनादि ॥

३७७ ग्रावाणां चर्मणि प्राक्शिरसं निधाय ग्राव्णा उपरि राजानं विस्रस्य प्रातःसवनवन्मिमीते । इन्द्राय त्वेति पञ्च-भिः पञ्चकृत्वस्तूष्णीम् । एकैकयोत्सर्गं दशकृत्वो मिमानो राजानं सर्वं मिमीते । इदमवशिष्टसोमार्धमानम् ॥

३७८ अद्भिरभ्युक्ष्य ग्रावस्तुते राज्ञ उष्णीषं ददाति । इदं ग्रावस्तुते उष्णीषदानम् ॥

३७९ यजमानः अद्भिरभ्युत्य राजवासो ऽध्वर्यवे प्रयच्छति । अध्वर्युः पूर्ववदुपसृजति । सम्प्रयौति । तिरश्चर्मफलके अभिमृशति । यजमानं वृष्टीर्वाचयति । अभिषोतारः प्रातःसवनवत्पर्युपविशन्ति । अध्वर्युः आहरोपसृज, इत्याह । उपर्यर्धे होतृचमसेंऽशून् परिप्लावयन्ति । प्रागपागित्यादिमन्त्रेण । अंशूंश्चर्मणि निधाय होतृचमसस्था अपो राज्ञि प्रक्षिप्य राजानं विभज्याकृष्या । इहा३ इहा३ इत्युक्त्वा यावद्रसनिस्रावमपरिमितमभिषुण्वन्ति । आहरोपसृजेत्यादि । उन्नेता आधवनीयादुदञ्चनेन सम्भरणीये उपसृजति । प्रागपागित्यादिसम्भरणीयेंऽशून् परिप्लावयन्ति । अंशून्निधाय सम्भरणीयजलेन राजानमुपसिच्य विभज्याऽऽकृष्याह । इहा३ इहा३ इहा३ इत्युक्त्वा ग्रावाणमूर्ध्वमुत्क्षिप्य नीचैः पातयन्तीत्यादिक्रीडारूपेणाभिषुण्वन्ति अपरिमितं यावद्रसनिस्रावम् । पुनराहरोपसृजेत्यादि होतृचमसे तूष्णीं अंशून् परिप्लावयन्ति । अभिषुत्य राजानं हस्तेन निष्पीड्य सम्भरणीये राजानं सम्भृत्यान्तरेणेषे उन्नेत्रे प्रयच्छति । उन्नेता आधवनीयापोम्सृणान्तरेऽवदीया ऽऽधवनीये पवित्रं वितत्य सम्भरणीमवनयति । एष एकः पर्यायः । अम्भृणान्तरस्था आधवनीयापो होतृचमसे ऽवनीय श्वात्रास्थेत्यादि । एवं द्वितीयमेवं तृतीयम् । तृतीयपर्यायस्य तृत ये ऽभिषवे इहा३ इत्यस्य स्थाने बृहत् बृहत् बृहत् ऋजीषं चर्मणि निधाय सम्मुखान् ग्राव्णः कृत्वा ग्रावमुखे ऋजीषं चतुर्धा कृत्वा उपोहति । उद्गातृभ्यः प्राह । सोमोऽभिषुतः इति । अयं माध्यन्दिनसवनीयाभिषवः ॥

३८० तैर्द्रोणकलशे निहिते दशापवित्रे वितते । उन्नेतार-

माह । अप्रमत्तः सन्ततमानयोपांशुग्रहान् ग्रहीष्यामि इति । उक्थ्यग्रहणपर्यन्तं स तथा करोति । अध्वर्युः शुक्रपात्रमादाय धारायां गृह्णाति । अयं वेन० रिहन्ति । उपयामगृहीतो० सि । इति । परिमृज्य सादयति । एष ते योनिर्वीरतां पाहि । इति । तथा मन्थिपात्रे पूर्ववत् । बर्हिषी अन्तर्धाय सक्तुभिः श्रीत्वाऽपोद्धृत्य बर्हिषी परिमृज्य सादयति पूर्ववत् । दक्षिणर्तुपात्रे गृह्णाति । मरु० हुवेम । उप० मरुत्वते० सि, इति । सादयति । एष० निरिन्द्राय त्वा मरुत्वते । उत्तरर्तुपात्रे० ति । इन्द्र म० सुयज्ञाः । उप० सि । इति । परि० यति । एष० त्वते । इति । आग्रयणस्थं सोमं पात्रान्तरेऽवनीय तेनोदञ्चनेन चोपरिष्टाद्दशापवित्रेऽवनीय तिसृणां धाराणामधस्तादाग्रयणं गृह्णाति । पूर्ववत् सादयति । इदं ग्रहेषु माध्यंदिनीयसोमग्रहणम् ॥

३८१ द्रोणकलशमुपर्यर्द्धं कृत्वा पयसा हिरण्येन सक्तुभिः क्रमेण श्रीत्वा परिप्लुपात्रं प्रास्य द्रप्सानुमन्त्रणम् । उन्नेतारमाह । अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् गृहीष्यामि । इति । उन्नेता पूतभृति पवित्रं विततयाऽऽधवनीयाद् द्वौ वा त्रीन्वोदञ्चनानयति । अध्वर्युः । अरिक्तौ पूतभृदाधवनीयौ पयसा सक्तुभिर्घृतेन च श्रीत्वा द्रोणकलशमभिमृशति । उप० सीन्द्राय त्वा, इति । अनेनैव मन्त्रेणाधवनीयं पूतभृतं च । उन्नेतारमाह । उन्ने० न्युब्जमात् । इति । उन्नेता ऽवकाशोपस्थानान्ते तथा करोति । अध्वर्युः अप उपस्पृश्य बर्हिषी आदाय निःसर्पति । उद्गात्रादिषु प्रातःसवनवत्समन्वारब्धेषु आहवनीये स्रुवाहुतिं जुहोति । विश्वे देवा मरुत० स्मान स्वाहा । इति । यथावेदमितरे । द्रप्साहुतौ प्रातःसवनवत्समानः । एतयैव प्रतिप्रस्थाता । अध्वर्युः पूर्ववत्पवमानार्थं सदः सर्पति । इदं माध्यन्दिनपवमानार्थसदःप्रसर्पणम् ॥

३८२ पूर्ववत् बर्हिषी प्रयच्छति । पूर्ववदुपाकरणं जपति पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति । सुपर्णोऽसि०त्य, इति । चतुर्होतारं व्याख्याय समाप्ते साग्नि सम्प्रैषमाह । अग्नीदग्नीन्विहर बर्हिस्तृणाहि पुरोडाशाँ अलङ्कुरु प्रति प्रस्थातर्दधिघर्माय दध्याहर । इति । अयं दधिघर्मार्थदध्याहरणप्रैषः ॥

३८३ अथ उपस्पृश्य । एहि यजमान । तेन सह पूर्वया द्वारा हविर्धानं प्रविश्य समस्तं राजानं प्रातःसवनोक्तमन्त्रेणोपतिष्ठते । ततः प्रातःसवनवद्बकाशैरुपतिष्ठेते अध्वर्युयजमानौ । उन्नेता प्रातःसवनवत्पूतभृति राजानमवनीयाधवनीयं न्युब्जति । प्रातःसवनवत् धिष्ण्यव्याघारणं पृष्ठ्यास्तरणं च । अध्वर्युः दधिघर्मस्यादौ घर्मोक्तां पूर्वां शान्तिं पठति । ततो हविर्धानयोर्मध्ये उपविश्य प्रतिप्रस्थात्रा दधिघर्मार्थमाहृतं दध्यवेक्षते । ज्योति०दुग्धम् । इति इदमाहृतदध्यवेक्षणम् ॥

३८४ ततो बर्हिषी अन्तर्धाय दधि गृह्णाति । यावती०न्धस्तृतम् । इति । अपोद्धृत्य बर्हिषी दध्यवेक्ष्य मन्त्रं पठति । वाक् च त्वा०शृतं कृणु । इति । होतारमाह । होतर्वदस्व यत्ते वाद्यम् । इति । अयं होतृवाद्यप्रैषः ॥

३८५ ततस्तमादाय उपोत्तिष्ठन्नाह । आतꣳ हविः । इति । अत्याक्रम्याश्राव्याह । दधि घर्मस्य यज । इति । वषट्कृते जुहोति । यमिन्द्रमा०तेभ्यः स्वाहा । इति । अयं दधिघर्मप्रचारः ॥

३८६ अनुवषट्कारे हुत्वा शेषं होत्रे हरति । होत्रध्वर्युप्रतिप्रस्थात्राग्नीत्प्रस्तोतृयजमानाः क्रमेण परस्परमुपहूय प्राशनं भक्षयन्ति । मयि त्य०यामि । इति । यजमानः प्रत्यक्षम् । अयं दधिघर्मभक्षः ॥

३८७ निर्णिज्य पात्रं प्रयच्छति । तूष्णीं शाखां मेक्षणं च प्रहृत्योपवेषं निरस्यति । आग्नीध्रः भिन्नपात्र्यां पुरोडाशं पूर्ववत्सवनीयांश्चोद्वास्य खरे सादयति । अध्वर्युः यजमानेन । आसन्नाभिमर्शने कृते आग्नेयेन पशुपुरोडाशेन प्रचर्य जुहूपभृतोरुपस्तृणान आह । माध्यन्दिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि । इति सवनीयायां द्विर्द्विरवद्यति । अभिघारयति । प्रत्यनक्ति । उपभृति पुरोडाशस्यावदाय सवनीयानामवद्यति । द्विरभिघारयति । न प्रत्यनक्ति । प्रथमं जुहूपभृतोरुपस्तीर्य पुरोडाशस्योपभृत्याप्युपस्तीर्य नाभिघार्यैष्वा तस्योपरि सवनीयानामवदानं जुह्वामुपस्तरसं वा । माध्यं०डाशान्प्रस्थितान् प्रेष्य इति प्रेष्यति । ततः स्विष्टकृतं हुत्वा प्रातः सवनवद्धोतुरग्रे इडापात्रं निदधाति । अयं माध्यन्दिनसवनीयप्रचारः ।

३८८ सर्वेषां सवनीयानां प्रातःसवनएव निर्वापे पशुपुरोडाशेनप्राशित्रान्तेन प्रचर्य माध्यन्दिनीयैः प्रचर्य प्राकाय-म्नाह । उन्नी० हि होतुश्चमसमनून्नयच्चमुन्नयतः शुक्रान् कुरुध्वमच्छावाकस्य चमसाध्वर्योऽपि त्वं चमसमुन्नयस्व प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताऽप्रोक्षितैः प्रत्युपलम्भस्व । इति । अयं माध्यं० नीयचमसोन्नयनप्रैषः ।

३८९ पूर्ववच्छुक्रामन्थिप्रचारः । सर्वांश्चमसानुन्नयन्ति । आह । माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो०प्रेष्य । इति । अयं माध्यं०नीयशुक्रामन्थिप्रैषः ।

३९० नेष्टृचमसहोमानन्तरं अच्छावाकचमसहोमः । अयं माध्यं०नीयप्रस्थितयाज्याप्रचारः ।

३९१ षड्ढोत्राः संयाज्याग्रेण होतारमुपविश्याऽयाडग्निरित्यादि । इडो पह्वानानन्तरं प्राशित्रहरणं तूष्णीमन्तर्वेदि

प्रणीतानिनयनम्। इडोपहूतांश्चमसान् भक्षयन्ति। नेष्टृवन्तरमच्छावाकः। प्रातः- सवनवत्। भक्षेहीति मन्त्रे रुद्रवद्गणस्येति माध्यन्दिनस्य सवनस्य त्रिष्टुप् छंदस इति यथास्थानमूहः। प्रातः सवनवन्नाराशंससादनं यजमानस्य हवि शेषप्राशनं पत्न्या हविस्यभोजनम्। अध्वर्युः स्रुवामपूर्वाज्यस्थालीं स्रुचं वासस्तस्यान्तिमायां दशायां ग्रथितं हिरण्यशकलं चादाय यजमानमामन्त्र्य चात्वालोत्करयोर्मध्येन प्रविश्य यजमानेन सहोत्तरेणाग्नीध्रीयं सदश्च परीत्य पूर्वद्वारा शालां प्रविश्य शालामुखीयमाज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा ज्ञातिषु समन्वारब्धेषु वाससा सम्प्रच्छन्नेषु वैसर्जनवद्वसनस्यान्तं स्रुग्दण्डे उपसङ्गृह्य हिरण्यं स्रुग्बिले धारयन् शालामुखीये जुहोति। उदुत्यमित्यृचा। पुनर्गृहीत्वा चित्रमित्यृचा। पुनर्गृहीत्वा अग्ने नयेत्यृचा आग्नीध्रीये। स्रुग्बिलाद्धिरण्यमुद्गृह्णाति। दिवं गच्छ सुवःपत। इति। अयं दक्षिणारम्भकहोम उच्यते।

३९२ पूर्वमेव चात्वालोत्करयोर्मध्येन प्रवेश्य सदो दक्षिणभागे दक्षिणास्थापिता भवन्ति। सदः शालामुखीययोः आग्नीध्रीययोश्चात्वालोत्करयोश्च मध्येनोदीचीं नीत्वा तत्रैकत्र स्थापयति। एतद्दक्षिणानयन मुच्यते।

३९३ ततो यजमानस्ताः प्रदक्षिणं पर्येति। रूपेणवो० वयः। इति। स्वीयकृष्णाजिनपुच्छेन दक्षिणाभूता गास्त्रासयित्वा विभजति तुथोवो० अधिनाके। इति। तत्र वर्गप्रधानानामृत्विजां द्वादश द्वादश। द्वितीयानां चतस्रश्चतस्रः। तुरीयाणाम्। तिस्रस्तिस्रः। निष्क्रयस्याप्येवमेव विभागः। इदं दक्षिणाविभजनम्।

३९४ ततः सदसि गच्छति। एतत्ते अग्ने राध०नयन्तीः।

इति । सदसः पुरस्तादासीनमात्रेयं ब्राह्मणं प्रत्येति । ब्राह्मणमद्य० दधातु दक्षिणम् । इति । किंस्वित् किंस्विद्गृहीत्वा तं पृच्छति त्रिः । क आत्रेय इति । तदृषिकारं अयमहमिति वदति । तृतीये त्वहमित्येव । यजमानस्तं समुपेत्य हस्ते तस्मै हिरण्यं ददाति चन्द्रमग्न्वृह । इति यथासम्भवं वस्त्रादि च ददाति । आग्नीध्रीयं गत्वाऽग्नीधे हिरण्यं दक्षिणाभागं ददाति । अग्नीदेषा भागं दक्षिणां ते ददामि इति । एवं सदसि गत्वा ब्रह्मणे होत्रे उद्गात्रे च । हविर्धाने गत्वाऽध्वर्यवे प्रतिप्रस्थात्रे च । च मध्याध्वर्युभ्यस्तु क्रतुदक्षिणाभिन्नां यथासम्भवं दक्षिणां ददाति । पुनः सदो गत्वा प्रस्तोत्रे मैत्रावरुणाय ब्राह्मणाच्छंसिने ऽच्छावाकाय नेष्ट्रे उन्नेत्रे सुब्रह्मण्याय च दत्वा प्रसर्पकेभ्यो विद्याविशेषानुरूपां क्रतुदक्षिणाभिन्नां दक्षिणांशं तदीयं ददाति । प्रकृतिवदेवैं प्रतिगृह्णन्ति प्रतिग्रहमन्त्रे रुद्राय गा इत्यूहो विशेषः । इदं सौमिकदक्षिणादानमित्युच्यते ।

३९५ अध्वर्युः यजमानमामन्त्र्य तेन सहाग्नीध्रीयं गत्वा चतुर्गृहीतेन स्रुचा आग्नीध्रीये जुहोति । यज्ञपतिमृषय० सृजतु विश्वकर्मा स्वाहा । इति । पुनस्तथैव जुहोति । घोरा ऋषयो०पास्त्वस्मान् स्वाहा । इति । पुनर्जुहोति । अन्यान् तस्मा०स्वस्तये स्वाहा । इति । ये भक्षयन्तो०विश्वकर्मा स्वाहा । इति । नमः पितृभ्यो०यिष्ट स्वाहा । इति अयं दक्षिणोत्तरवैश्वकर्मणहोम उच्यते ।

३९६ शालामुखीयं गत्वा यजमाने ऽन्वारब्धे तथैव जुहोति । ये देवा यज्ञहनो०गच्छेम सुकृतो वयं स्वाहा । इति । ये देवा यज्ञमुषो०वयं स्वाहा । इति । तत्र आग्नीध्रीयं गच्छति । आयन्त मित्रावरुणा०रोचने दिवः । इति

तत्र ये देवा इत्यादि होमद्वयं तत्र पृथिव्यामित्यस्य स्थाने-
ऽन्तरिक्षे इत्यूहः। तत आग्नीध्रसमीपं गच्छति। यास्ते
राजो० नक्षत्रेष्वि इति तत्रापि ये देवा इति होमद्वयं
भवति। मन्त्रे पृथिव्यामित्यस्य स्थाने दिवीत्यूहः। तत
आहवनीयमुपतिष्ठते। येनेन्द्राय० आवेशयेनम्। इति। इदं
दक्षिणोत्तराग्निहोमोपस्थानमित्युच्यते।

३९७ अध्वर्युर्यजमानं प्राङ्मुखमीक्षयति। विष्णुः पश्य
त्वन्तरिक्षम् इति सदस्सु प्रवेशयति। यतस्सदस्यैः। इति
यजमानो दक्षिणाः समनुदिशति। अस्मद्राता देवत्रा० तस्मः
संस्कृतम्। इति। अयं दक्षिणासमनुदेशः।

३९८ अध्वर्युः प्राञ्जायन्नाह। इन्द्राय मरुत्वते ऽनुब्रूहि
इति। प्रतिप्रस्थाता मरुत्वतीयौ ग्रहावादाय निष्क्रामति।
अध्वर्युर्दक्षिणेन प्रथमं सव्येन द्वितीयं ग्रहमादायोत्तरतस्ति-
ष्ठते प्रति प्रस्थात्रे द्वितीयं प्रदाया ऽऽश्राव्या ऽऽह। इन्द्राय
मरुत्वते प्रेष्य इति। वषट्कारे ऽनुवषट्कारे चोभौ जुहुतः।
प्रतिप्रस्थाता ऽध्वर्युपात्रे ग्रहस्य संस्रावमवनयति। अयं
मरुत्वतीयग्रहद्वयप्रचारः।

३९९ अध्वर्युस्तमाह। प्रतिप्रस्थातरेतेन पात्रेण तृतीयं
मरुत्वतीयं ग्रहं गृहाण इति। प्रतिस्थाता तस्मिन् द्रोण-
कलशात्परिप्लुपात्रेण गृह्णाति। मरुत्वां इन्द्र वृ०प्रदिवः
सुतानाम्। उप०मरुत्वते०मि। इति पूर्ववत्सादयति। इदं
तृतीयमरुत्वतीयपात्रे सोमग्रहणम्।

४०० द्विदेवत्यग्रहोत्रगमने पात्रपरिहरणम्। अध्वर्युर्होत्रे
पात्रं प्रदाय तेन भक्षिते तं प्रतिप्रस्थातारं चोपहूय भक्ष-
यति। भक्षणमन्त्रे रुद्रवद्गणस्येति वसुमद्गणस्येत्यस्य स्थाने
एवं तावुपहूय प्रतिप्रस्थाता। अध्वर्युः पात्रं निगृह्या ऽऽह

स्येडाजपं कृत्वा शस्त्रं प्रतिगीर्य शस्त्रसमाप्तौ माध्यन्दिन- सवने सर्वत्रोक्थं वाचीति वदति । तत्रैव पात्रं निधाय शस्त्रप्रायश्चित्तानि हुत्वा तृतीयं मरुत्वतीयमुपोद्यच्छते । चमसाध्वर्यवो नाराशंसान् । आश्राव्याह । उक्थशा यज सोमस्य । इति वषट्कारेऽनुवषट्कारे च जुहोति । चमसा- ध्वर्यवश्चमसाननुप्रकम्पयन्ति । अयं मरुत्वतीयग्रहप्र- चारः ॥

४०१ अध्वर्युः होत्रे पात्रं प्रदाय तेन भक्षिते उक्तम- न्त्रेण भक्षयति । होतृचमसं होत्रध्वर्युप्रतिप्रस्थातारो नरा- शंसपीतेन भक्षयन्ति । ब्रह्मादयो होतारमुपहूय नराशंसपी- तेन स्वस्वचमसम् । आत्मानमभिमृश्याऽऽप्याय्य नाराशं- सान् सादयन्ति । इदं माध्यन्दिनसवनीयनाराशंससाद- नम् ॥

४०२ अध्वर्युः तत्रैव पात्रं निधाय प्राङेत्य शुक्रपात्र- माददान आह । उन्नेतर्यदेनं माहेन्द्रं ग्रहं गृह्णाम्यथोदश्ँ्ँ राजानं पूतभृतमभिसंपवयताद्दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्ज- तात् । इति । द्रोणकलशात्परिप्लुपात्रेण शुक्रपात्रे माहेन्द्रं गृह्णाति । महाँ इन्द्रो० वावृधे । उप०महेन्द्राय०मि । इति । परिमृज्य सादयति । एष ते योनिर्महेन्द्राय त्वा । इति । माहेन्द्रग्रहग्रहणम् ॥

४०३ उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशमव- नीय मृष्ट्वा न्युब्जति । अध्वर्युः अप उपस्पृश्य बर्हिषी आ- दाय वाचंयमः प्रत्यङ्ङाद्रुत्य स्तोत्रमुपाकरोति । इदं माध्य- न्दिनपवमानस्तोत्रोपाकरणम् ॥

४०४ समाप्ते साम्नि सम्प्रैषमाह । अभिषोतारोऽभिषु- णुताग्नीदाशिरं विनयोलूखलमुद्वास्य प्रतिप्रस्थातर्वारुणमेक- कपालं निर्वप सौम्यस्य विद्धि ॥ अयमभिषवप्रैष उच्यते ॥

४०५ प्रतिप्रस्थातृनेष्ट्रादयो ऽभिषोतारश्चर्मणि ग्रावभिः शुष्काभिषवं कुर्वन्ति स्तोत्रसमाप्तिपर्यन्तम्। तथा आग्नीध्रो मुसलेनोलूखलमुच्चैर्वादयति। अध्वर्युः। अग्नीत्सवनीयान्निर्वप। इत्याह। स्तोत्रसमाप्त्यनन्तरं आग्नीध्रः प्रातःसवनवदामिक्षावर्जं सवनीयान्निर्वपति। अध्वर्युः इडाजपं कृत्वा शस्त्रं प्रतिगीर्य प्राङेत्य माहेन्द्रं ग्रहमुद्गृच्छते। चमसाध्वर्यवो नाराशंसान्। पूर्ववदाश्रावणाद्यं वषट्कारहोमान्तम्। अयं माहेन्द्रग्रहप्रचारः॥

४०६ प्रतिप्रस्थाता आग्नेयमतिग्राह्यं होष्यन्नवेक्षते। अग्ने तेजस्विन् तेजस्वी०मनुष्येषु कुरु। इति। जुहोति। दीक्षायै च त्वा० ॥ तेजसे जुहोमि स्वाहा। इति। यजमानं वाचयति। तेजोविदसि०तेजो हासीत्। इति। अयमाग्नेयातिग्राह्यग्रहप्रचारः॥

४०७ नेष्टा ऐन्द्रमादायावेक्षते। इन्द्रौजस्वि०कुरु। इति। जुहोति ब्रह्मणश्च त्वा०स्वाहा। इति वाचयति। ओजो विद्०मोजो हासीत्। इति। अयमैन्द्रातिग्राह्यग्रहप्रचारः॥

४०८ उन्नेता सौर्यमादायावेक्षते। सूर्यभ्राजस्वि०कुरु। इति। जुहोति। वायोश्च त्वा०स्वाहा। इति। वाचयति। सुवर्विदसि०- सुवर्हासीत्। इति। अयं सौर्यातिग्राह्यग्रहप्रचारः॥

४०९ अध्वर्युः अनुवषट्कृते पुनर्माहेन्द्रं जुहोति। चमसाध्वर्यवश्चमसाननुप्रकम्पयन्ति। एतत्पात्रं नाराशंसा अतिग्राह्याश्चान्वायन्ति। अध्वर्युः होत्रे पात्रं प्रदाय तेन भक्षिते मन्त्रेणोक्तेन भक्षयति। होतृचमसं नराशंसपीतेन त्रयः। ब्रह्मादयो होतारमुपहूय नराशंसपीतेन स्वस्वचम-

सान् । यजमानोऽध्वर्युमुपहूय आग्नेयं भक्षयति । मयि मेधां मयि० स्तेजो दधातु । इति । तथैवैन्द्रम् । मयि० यीन्द्र इन्द्रियं०तु । इति । तथा सौर्यम् । मयि०सूर्यो भ्राजो०तु । इति । इदमतिग्राह्यभक्षणमुच्यते ॥

४१० आत्मानमभिमृशते । चमसाप्यायनं न भवति । तान् प्रक्षाल्य स्रुचां पश्चात् मैत्रावरुणचमसप्रमुखान् सादयन्ति । अध्वर्युः । प्रतिप्रस्थातरिमे चतु०पात्रेष्वपि सृज । इति वदति । प्रतिप्रस्थाता ऋतुपात्रे शुक्रपात्रमतिग्राह्यांश्च मार्जालीये प्रक्षाल्य स्वस्थाने सादयति । मैत्रावरुणचमसमित्यादिग्रह उक्थ्यपर्यायाः प्रातः- सवनवत् । सर्वत्र ग्रहेषु सोमग्रहणे मन्त्रे इन्द्राय त्वा जुष्टं गृह्णामि । इति । सादनमन्त्रः एष ते योनिरिन्द्राय त्वा । इति । भक्षणमन्त्रे इन्द्रेण पीतस्येति । यजमानेन सह हविर्धानं गत्वा आहवनीयमुत्तानं कृत्वा तस्मिन् सर्वा वसतीवरीरेकधनाश्चानीय मृष्ट्वा यथास्थानं न्युब्जति । सवनप्रायश्चित्ते अग्निर्मूर्धेत्यस्य स्थाने भुवो यज्ञस्य रजसश्च नेतेत्यृचा होमः । प्रशास्तः प्रसुहीत्युक्ते यदुक्तं तत् पूर्ववत् । अयं माध्यन्दिनं सवनमित्यारभ्य एतदन्तं कर्म माध्यन्दिनं सवनमित्युच्यते ॥

४११ अथ तृतीयसवनम् । देवीर्द्वारावित्याद्युत्तरावेक्षणान्तं पूर्ववत् । अध्वर्युः प्राकाशावाहृ । अग्नीत्परिश्रयणमाहर प्रतिप्रस्थातराशिरमानय श्रृतातङ्कमादित्यग्रहाय दध्याहरेहि यजमान । इति । अयं तृतीयसवनारम्भकप्रैषः ॥

४१२ यथाक्रममेव ते कुर्वन्ति । यजमानेन सह हविर्धानं प्रविश्योपांशुपात्रस्थमंशुं माध्यन्दिनीयऋजीषे प्रक्षिप्य होतृचमसे आहवनीयापोऽवनीय चर्मणि निधाय निग्राभ्यास्थेत्यादिमन्त्रेण यजमानाय दत्त्वा देवस्य त्वेत्यादिमन्त्रेण

कमपि ग्रावाणमादायाऽभिमन्त्र्य श्वात्रास्थेत्यादिमन्त्रेण आ-जीषं होतृचमसीयाभिरुपसृज्य यत्ते सोमेत्यादिमन्त्रेण संप्र-युत्य, धिषणेवीडू इत्यादिमन्त्रेण चर्मान्तर्हिते फलके अभि-मृश्य वृद्धोर्वाचयित्वा आहुरोपसृजेत्यादि। उपर्यधे होतृ-चमसे आजीषं परिस्रावयति। प्रागपागित्यादिमन्त्रेण। आजीषं चर्मणि निधायाध्वर्युरेव यावद्रसनिस्रावमभिषुणोति। आहुरोपसृजेत्यादि। एवं द्वितीयमेव तृतीयम्। निग्राभवर्जं चतुर्थम्। राजानं हस्तेन निष्पीड्य सम्भरणीये सम्भृत्य पूर्ववदुन्नेत्रे प्रयच्छति। उन्नेता पूर्ववद्वनयति। एष एकः पर्यायः। एवं द्वितीयमेवं तृतीयम्। पूर्ववद्धोतृचमसे ऽवनीय श्वात्रा इत्यादि। आजीषं दशापवित्रेण परिवेष्ट्यान्तरेणेषे उन्नेत्रे प्रयच्छति उन्नेता तदाधवनीये विक्षाल्य प्रपीड्यान्त-रेणेषे उपरि नीत्वा प्रातःसवनीयआजीषे निक्षिपति। अयं तृतीयसवनसम्बन्ध्यभिषवः॥

४१३ अध्वर्युः परिश्रयणीयवासोभ्यां हविर्धानद्वारौ परि-श्रित्यादित्यस्थाल्या औपशयपात्रे तस्याः सकाशात्तृतीयांशं गृह्णाति कदाचनस्त०पृच्यते। उप०स्यादित्येभ्य०मि। इति। बर्हिषी अन्तर्धाय शृतातङ्क्यमानयति। कदाचन प्र०तं दिवि। इय०मि। इति। अपोद्धृत्य बर्हिषी आदित्यस्थाल्या अधं गृह्णाति। यज्ञो देवानां०रासत। उप०मि। इति। इदमा-दित्यग्रहे शृतातङ्क्यग्रहणम्॥

४१४ उपांशुसवनस्य स्थूलप्रदेशेन ग्रहमालोडयति। वि-वस्वआदित्यै० श्रीणामि। इति। उपांशुसवनमुद्गृह्णाति।

तस्य यदि शीघ्रं सोमबिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरं तर्ह्यवर्षुकः । ग्रहमनासादयन् उपांशुसवनं दशापवित्रेण परिवेष्ट्य यथा सोमस्योर्मिर्भवति तथा पात्रस्याधस्तात् द्विस्त्रिर्वा सोमं पातयन्नुद्धन्ति । आसमुद्रादान्तरिक्षात्ऽऽतिम् । इति । उपांशुसवनं दशापवित्रेण परिमृज्य प्रक्षिप्य द्वारौ विवृत्य बर्हिर्मुष्टिना ग्रहमपिधायोत्तिष्ठन्नाह । आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्योमहस्स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योनुब्रू३हि । इति । अयमादित्यग्रहप्रचारप्रैषः ॥

४१५ अत्याक्रम्याश्राव्याह । आदित्येभ्यः प्रेष्य । इति । वषट्कृते बर्हिर्मुष्टिमग्नौ प्रक्षिप्यादित्यं जुहोति । नान्वीक्षते । पर्यावृत्तस्य प्रतिप्रस्थाता पात्रमादत्ते । उपवेषनिरसनान्ते प्रतिहर्त्रा पूतभृति पवित्रे वितते उन्नेता आधवनीयात् द्वौ त्रीन्वोदञ्चनान् तस्मिन्नवनयति । अध्वर्युः आग्रयणस्थं सोमं पात्रान्तरेऽवनीय तदादत्ते । प्रतिप्रस्थाता सोपशयामादित्यस्थालीम् । उन्नेत्रा उदञ्चनादिचतुष्टयमुपर्यवनीय चतसृणां धाराणामधस्तादाग्रयणं प्रातःसवनवद्गृहीत्वा ऽभिहिङ्कृत्याधिवदनं कृत्वा परिमृज्य सादयति । इदमाग्रयणे तृतीयसवनीयसोमग्रहणम् ॥

४१६ पूतभृतो बिलाद्दशापवित्रमपनीय बर्हिषी अन्तर्धायाग्नीध्रा विलोडितं सशेषमाशिरं पूतभृत्यवनयति । अन्वारब्धायां पत्न्यां प्रत्यृचं सर्वान्ते वा । ताश्चर्चः अस्मे देवासो वपुषे चिकित्सतेत्यादयश्चतस्रः । ततो बर्हिषी अपो

हृत्य परिप्लुपात्रं पूतभृति प्रास्य पूर्ववत् द्रप्साननुमन्त्रयते । तत आधवनीयाभिमर्शनादि तन्नं तृप्रैषान्तम् । अध्वर्युर्बर्हिषी आदायोपनिःसृप्य प्रातः सवनवत्समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति । इदं तृतीयꣳसवनं नयन्तु स्वाहा । इति । अयं तृतीयसवनीयहोमः ॥

४१७ अध्वर्युर्माध्यन्दिनसवनवत् स्तोत्रमुपाकृत्य पवमानस्य नवम्यां प्रस्तुतायां वाचयति । मघाविऽपारय । इति । पञ्चहोतारं व्याख्याय समाप्ते साम्नि सम्प्रैषमाह । अग्नीच्छालाकान् विहरऽपशौ संवदस्व । इति । पूर्ववद्धविर्धानं प्रविश्य समस्तसोममुपतिष्ठते । विष्णो त्वन्न इत्यादिना । प्रातः सवनवच्छालाकान्विहृत्य धिष्ण्यव्याघारणं पृष्ठ्यास्तरणं च । अध्वर्युः अग्नीदुत्तर बर्हिरित्यादि अग्नीषोमीयवद्ध्रुवः परिहरणान्तम् । आग्नीध्रः प्रातःसवनवदाभिहारहितान् सवनीयान् सादयति । अध्वर्युस्तैः प्रचरति । अयं तृतीयसवनीयप्रचारः ।

४१८ होतृसकाशे इडापात्रं निधाय प्राड्आवन्नाह । उन्नीमानेभ्योऽध्वं तीव्राँ आशीवतः कुरुध्वमुन्नेतः ऽय । इति । चमसाध्वर्यवः पूर्ववच्चमसानुन्नीय तेषु किंचित्किंचिदाशिरमवनीयोत्तरवेद्यां सादयन्ति अध्वर्युर्होतृचमसमादायाऽऽह । तृतीयस्य सवनस्यर्भुमतो विभुवतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राँ आशीर्वत इन्द्राय सोमाऽऽप्य । इति । वषट्कृते जुहोति । श्येनाय पत्वने स्वाहा । इति । अनुवषट्कृते होमः । तृप्यंऽस्वाहा । इति । द्विः

सर्वांश्चमसान् जुहुति । अयं तृतीयसवनीयहोतृचमसप्रचारः ।

४१९ अध्वर्युः सम्प्रैषमाह । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्र यन्तु सदस्यानां होत्राणां चमसाध्वर्यवः उपावर्त्तध्वं शंयोरावहत शुक्रस्याभ्युन्नीयोपावर्त्तध्वम् । इति । यन्तिहोत्रादिचमसाः । चमसाध्वर्यवो होत्रकचमसान् सशेषान्पूलभृतोऽभ्युन्नीयोपावर्तन्ते अध्वर्युमैत्रावरुणचमसादीन् क्रमेणाऽऽदाय पूर्ववत्प्रस्थितया ज्याभिर्यजति । प्रशास्त्रा वषट्कृते । विष्णो०हा । इति जुहोति अनुवषट्कृते तृप्यन्तामित्यादिमन्त्रेण चरणारमपि । ब्राह्मणाच्छंसिचमसे । परिधये०हा । इति । पोतृचमसे । ऊर्जे०हा । इति । नेष्टृचमसे । पयसे०हा । इति अच्छावाकचमसे । प्रजा०हा । इति । आग्नीध्रचमसे । ऋतस्पृ०हा । इति । अयं तृतीयसवनीयप्रस्थितयाज्याप्रचारः ।

४२० प्रदक्षिणमावृत्य होतुरग्रे उपवेशनादि इडोपहूतचमसभक्षान्तम् । भक्षमन्त्रे आदित्यवद्गणस्येति तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्येत्यूहः । नाराशंसनादनान्तरं ब्रह्मादयः सर्वे प्राचीनावीतं कृत्वा स्वस्वचमससमीपे त्रींस्त्रीन्पुरोडाशशकलान्प्रक्षिपन्ति । अध्वर्युप्रतिप्रस्थातारौ होतृचमससमीपे । स्वस्थाने उपविश्यानुमन्त्रयन्ते । अत्र पितरो यथाभागं मन्दध्वम् । इति । अध्वर्युरत्रस्य एव । इदं सौमिकपुरोडाशशकलदानम् ।

४२१ यजमानो हविः शेषं पत्नी हविष्यं चाश्नाति । अध्वर्युर्हविर्धानात्प्राक्चायन्नाह । देवाय सवित्रे ऽनुब्रू३हि प्रतिप्रस्थातरन्तर्यामपात्रेण साविस्माग्रयणाद्ग्रहं गृहीत्वो

पास्व मासीषद्:। इति। प्रतिप्रस्थाता तथा गृह्णाति यामऽस्याम। उप०मि देवाय त्वा सवित्रे। इति। हुत्वा सशेषे वैश्वदेवं पूतभृतः परिप्लुता गृह्णाति। सुश०मि। इति। सदो गत्वा होत्रा समीक्ष्य शस्त्रं प्रतिगृणाति। प्रतिप्रस्थाता। होतुरेकया च दशभिश्चेति श्रुत्वा द्विदेवत्यपात्राणि मार्जालीये प्रक्षाल्य निदधाति। अध्वर्युः प्रद्यावा यज्ञैरित्यादियावदाहावं अवसाने ओथामो दैवेति प्रणवे च मदामो दैवेति। तद्राधो अद्येत्यादियावदाहावं अवसाने प्रणवे च मदामो दैवेति। शस्त्रान्ते तृतीयसवने उक्थं वाचीन्द्रा येत्याह। शस्त्रप्रायश्चित्तान्ते वैश्वदेवअदायाह उक्थशायज सोमस्य इति। वषट्कृते ऽनुवषकृते च जुहोति। अयं वैश्वदेवग्रहप्रचारः।

४२२ चमसाननुप्रकम्पयन्ति। एतत्पात्रं नाराशंसा अन्वायन्ति। पूर्ववत् भक्षः। स्रुचां पश्चाच्चमसादनानन्तरं प्रतिप्रस्थाता तूष्णीं समन्त्रकं वा शालामुखीये निरुप्य सौम्यं चरुं श्रतमिदानीमभिघार्योद्वास्य सादयति यन्मे अग्नइत्यादिमन्त्रेण यजमानेनाभिमन्त्रिते ऽध्वर्युर्होतारं पृच्छति। पर्यक्षि सौम्याम्३। न पर्यक्षयसी३। इति। सन्नं सौम्यमागत्य ध्रुवाज्याच्चतुर्गृहीत्वा ऽऽश्राव्याह। घृतस्य यज। इति। वषट्कृते जुहोति। पुन रुपस्तीर्य द्विश्चरोरवदायाभिघार्य न प्रत्यनक्ति। पूर्ववदाश्राव्याह। सौम्यस्य यज। इति। वषट्कृते प्राचीनावीत्याग्नेय्यां जुहोति। अयं घृतयाज्यासम्पुटितसौम्यचरुयागः।

४२३ मेक्षणानुप्रहरणान्ते पुनश्चतुर्गृहीतं गृहीत्वाऽऽह। घृत०मा इति। पूर्ववज्जुहोति। अपर्यागेस्रुवा हुत्वा भिजु-

होति विष्णो त्वं न इत्यृचा। ततश्चरुमध्ये गर्तं कृत्वा प्रभूतमाज्यं लौकिकमानीयोद्गातृ व्यतिरिक्ताः स्वशरीरच्छायां तस्मिन्नवेक्षन्ते। यन्मे मनः०मयि। इति। च रुमुद्गातृभ्यो दत्वा प्राश्नयन्नाह। प्रतिप्रस्थातरुपांशुपात्रेण पात्नीवतमाग्रयणाद्ग्रहं गृहीत्वा सदः। इति। प्रतिप्रस्थाता तथा गृह्णाति। उप०यि बृहस्पतिसुतस्यत इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाना३इ पत्नीवा३। बर्हिषी अन्तर्धाय घृतेन श्रीणाति। अहं पुर०सनानाम्। इति। इदं पात्नीवतग्रहणम्।

४२४ बर्हिषी अपोद्धृत्य परिमृज्यानासादितमेवादाय आ२ह अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा सख्याप उपप्रव०मान इति। पूर्वद्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति। भूतव्यासम्। इति। चम०र्यंवः सर्वेण सोमेन होतृचमसादींश्चमसान् अभ्युन्नीय सादयन्ति। होतृचमसे त्वमुन्नयन्ति। अध्वर्युः स्तोत्रोपाकरणादि कृत्वा सप्तहोतारं व्याचष्टे। नेष्टा पत्नीमुद्गात्रा लक्षयित्वा वाचयति। विश्वस्यते०ईडिताः। इति। यदोद्गाता संज्ञां करोति तदा पत्नी दक्षिणमूरुमपसार्योरुमूलात्पन्नेजनीः स्रावयति। इदं पन्नेजनीजलस्रावणम्।

४२५ आपोहिष्ठीयशंसनान्तमास्ते। अध्वर्युः स्वादुष्किलायमिति चतस्र उभयतोमोदं प्रतिगृणाति। तदीयाहावे मोदामो दैवोंशोंसामोदैवेति। प्रति०ता तन्तु तन्वन्निति जुत्वा ध्रुवं हस्ताभ्यां सुष्टु गृह्णाति। द्यावा०नि। इति।

स्थानाच्चालयति इति। विश्वे० यन्तु इति। आहरति दि-वि०पार्थिवान्। इति। होतृचमसे ऽवनयति। ध्रुवंरसन् इति। अध्वर्युः पूर्ववद्धोतृचमसमादायाऽऽह। उक्थ०सोमानां इति पूर्ववज्जुहोति। चमसानपि पूर्ववच्चमसभक्षणम्। मन्त्रे अग्निना वैश्वानरेण मरुद्भिरित्यूहः। आहवनीयस्योत्तरतः पूर्ववच्चमससादनम्। आश्विरोपवेषनिरसनान्ते अध्वर्युः जुहोति। अनस्य गोपा०शुचिः स्वाहा। इति। यन्मआत्मन इत्यादि समानम्। सर्वेषु चमसेषु त्रींस्त्रीन् दूर्वाग्रन्थीनेकैकं दर्भपिञ्जूलं च प्रशास्तः प्रसुहीति प्रेष्य प्रसर्पतेत्युक्ते सर्वे यथाप्रसृप्तं निःसर्पन्ति। अथ तृतीय सवन मित्यारभ्यैतदन्तं कर्म तृतीयसवनमुच्यते।

४३६ सङ्कल्पप्रभृति सर्वं कर्म अग्निष्टोम इत्युच्यते।

समाप्तोऽयङ्ग्रन्थः शुभम्भूयात्।

